करशाखार्पितमुद्रिकचामीकरकण्ठसूत्रिकाभरणः ।
परिमृष्टगात्रकुङ्कुमकिञ्चित्पिञ्जरितवसनसंवीतः ॥ ६३ ॥
प्रविलम्बिकुसुमदामकगलमण्डनजातरूपकृतशोभः ।
अन्तर्निविष्टसिक्थकतौरुष्किकखुम्भिकादिचरणत्रः ॥ ६४ ॥
नानावर्णविवेष्टितबहलदशापाशबद्धततकेशः ।
एकस्मिन् दलवीटकमपरस्मिन् सीसपत्रकं कर्णे ॥ ६५ ॥
उच्चण्डकनकगर्भितकुङ्कुमपिञ्जरितवसनपरिधानः ।
स्थूलतरकाचवर्तकमालां च गले दधानेन ॥ ६६ ॥

---

[ तेन ] घटितः सुभगः, दन्तपङ्क्तिः कंकतिका [ तदाकारो भूषणविशेषः; ] [ वस्तुतस्तु दन्तपङ्क्तिः दन्तनिर्मिता पङ्क्तिः, पङ्क्तिश्च भूषणविशेषस्य नाम, तस्याः महाव्युत्पत्तिसंज्ञकबौद्धकोशरूपग्रन्थे अलंकारवर्गे पठितत्वात् । ] ॥ ६२ ॥ [ करशाखा अंगुलिः । ] चामीकरं सुवर्णम् । परिमृष्टं कृतोद्वर्तनम् । पिञ्जरितं [ पीतरक्तीकृतं ] पिशङ्गवर्णम् ॥ ६३ ॥ जातरूपं सुवर्णम् । सिक्थं मधूच्छिष्टं, [ मीण–मोम–इति प्रसिद्धम् । ] तच्च मार्दवाद्यर्थमन्तः पूर्यते । [ “ सिक्थः पुलाके मदने क्लीबेथो वर्णकम्बले । द्वयोर्दर्भेषु च, कुथः सक्तूनां द्रवताविधौ ॥ ” इति मङ्खकोशः ( ॥३७॥ ) [ सिक्थ ] “ पुलाके ओदननिष्पत्तिपरीक्षा । “ अन्तर्निविष्टसिक्थितततौरुष्किकखुशिकादिचरणत्रः ” । इत्यादौ मदने नपुंसकम् । एतत्तु मचनमिति वैद्याः । मच मुचि कल्क इति धात्वर्थानुगुण्यमस्मिन्नेव पक्षे दृश्यते” इति मंखकोशटीकायाम् । ] तौरुष्ककं तुरुष्कदेशसंबन्धि । [ तुरुष्कः शिलारस इति प्रसिद्धं शिह्लकं, तेन निर्मितं लेपनद्रव्यं तौरुष्किकम् । यद्वा, तुरुष्कः महाव्युत्पत्तिग्रन्थे पठितः धूपविशेषः, तेन निर्वर्तितं लेपनद्रव्यं तौरुष्किकम् । ] खुम्भिका नालकं लोहपट्टिका । [ चरणत्रः चरणं त्रातीति उपानत् । ] ॥६४॥ नानावर्णेन, विवेष्टितेन ग्रथितेन, बहलदशापाशेन भास्वरस्वर्णप्रान्तभागेन सूत्रेण, बद्धाः संयताः, तताः दीर्घाः, केशा यस्य । दलवीटकं पल्लवान्तःस्थितताम्बूलम् [ तत्सदृशं भूषणविशेषोऽपि दलवीटकम्, ] सीसपत्रकं भूषणविशेषः । दधानेन इत्यनेनान्वयः ॥ ६५ ॥ उच्चण्डेत्यादि । विद्योतमानसुवर्णसूत्रनि-

---

६३ शाखाश्रित ( प ) । पिञ्जरितसर्वाङ्गः ( गो २ का ) । ६४ खुंभिकादिचरणवः ( प ) सिक्थस्तौरुष्किकखुम्भिकादिचरणान्तः ( कापा ) अन्तर्निविष्टसिक्थितततौरुष्किकखुशिकादिचरणत्रः ( मंखकोशटीका पाठः । ) ६५ विचेष्टित ( प. कापा ) । नतकेशः ( प ) ६६ काचचर्चक ( का )

वृश्चिकरञ्जितकररुहकरमूलनिबद्धशङ्खचक्रेण ।
प्रथमवयस्त्वं भजता ताम्बूलकरङ्कवाहिनाऽनुगतः॥६७॥(कुलकम्)
श्रेष्ठिवणिग्विटकितवप्रधानरङ्गस्य सुमहतो मध्ये ।
शूलापालस्थापितकतिपयबद्धोरुपीठिकासीनः ॥ ६८ ॥
उत्सङ्गार्पितखड्गैरयथातथभाषिभिर्मदौद्धत्यम् ।
बिभ्राणैरनुजीविभिरधिष्ठितः पञ्चषैः पुरुषैः ॥ ६९ ॥
चतुरतरसेवकार्पितपृष्ठपरिक्षिप्तपूर्वदेहार्धः ।
अन्तर्धृतताम्बूलप्रोच्छूनकपोलकलितकरपर्णः ॥ ७० ॥
अनपेक्षितप्रसङ्गः पुनः पुनः पठति सोन्नतभ्रूकः ।
गाथाश्लोकप्रायं भावितचेता यथातथाऽधीतम् ॥ ७१ ॥

---

मितप्रान्तमध्यभागकाश्मीररञ्जितदुकूलधारीत्यर्थः । काचवर्तकाः काचमणयः ॥ ६६ ॥ वृश्चिकः कुरबकः, [ रक्तपुनर्नवा वा, यस्याः पत्रपुष्पाणि रक्तवर्णानि भवन्ति, "वृश्चिकस्तु द्रुणे राशौ शूककीटे तथौषधे। " इति विश्वः ।] शङ्खचक्रादि च हीनदृष्ट्याद्यवरोधाय धार्यते ॥ ६७ ॥ [ इतः षडशीतितम्यार्यापर्यन्तं भट्टपुत्रस्य नानाविधचेष्टावर्णनेन तस्य मौर्ख्यमिथ्याभिमानभीरुत्वादयो वर्ण्यन्ते ते यथायथमूह्याः । ] श्रेष्ठी धनिकः, [ विटः कामतन्त्रकलाकोविदः, यद्वा विट् शब्दे इति धातोः नायकनायिकयोः सन्देशं परस्परं विटति कथयति इति विटः । कितवः द्यूतकृत् धूर्तो वा । ] श्रेष्ठ्यादयः प्रधाना अधिका यत्र तादृशस्य रङ्गस्येत्यर्थ । रङ्गः [ रज्यते जनोऽस्मिन् इति ] नृत्यशाला । शूलापाला वेश्याध्यक्षाः । [ शूलपालः इत्यपि शब्दः; तथा च वासवदत्तायां विन्ध्याटवीवर्णने " शूलपालचित्तवृत्तिमिव फलितगणिकारिकां " इति प्रयोगः शिवरामादिभिः कैश्चित् टीकाकारैः गृहीतः । ] कतिपयैः द्वित्रैः, बद्धा आनीय धृता, उरुपीठिका विपुलं आसनम् ॥६८॥ [ अनुजीविभिः सेवकैः । ] पञ्च वा षड् वा पञ्चषाः, तैः रक्षाधिकृतैः, अधिष्ठितः अनुगतः ॥ ६९ ॥ [ पृष्ठं पश्चाद्भागावष्टंभार्थं तूलादिमयः वस्तुविशेषः, (तकिआ) इति भाषायाम् । ] प्रोच्छूने प्रोत्फुल्ले, कपोले, कलितं परामृष्टं, करपर्णं करपल्लवो येन; कलितं धृतं करे पर्णं येन इति वा ॥ ७० ॥ अनपेक्षितप्रसङ्गः

---

६८ कतिपयबध्नोरु ( प ) बन्धोरु ( गो २ ) ६९ महौद्धत्यम् ( प ) ७० पूर्वदेहांशः ( गो. का. ) । ताम्बूलश्चोच्छून ( गो. का. ) ताम्बूलः प्रोत्फुल्लकपोलगलित ( गो २ ) ताम्बूलप्रोत्फुल्लकपोलगलित ( काप ) । ७१ सोन्नतिभ्रूकः ( प ) । गाथां श्लोकप्रायां··· धीताम् ( गो. का. ) । यथायथाधीतम् ( प. )

विस्मयलोलितमौलिः पार्श्वगतांस्ताडयन् रसावेगात् ।
हा कष्टु साध्विति वादैरन्तरयति परसुभाषितश्रवणम् ॥ ७२ ॥
इदमुक्तो रहसि रुषा तातेन नृपो, नृपेण तातोऽपि ।
इति पितुराविष्कुरुते महीभृतः प्रणयविश्वासौ ॥ ७३ ॥
पत्रच्छेद्यमजानञ्जानन् वा कौशलं कलाविषये ।
प्रकटयति जनसमाजे बिभ्राणः पत्रकर्तरीं सततम् ॥ ७४ ॥
'ब्रह्मोक्तनाट्यशास्त्रे गीते मुरजादिवादने चैव ।
अभिभवति नारदादीन् प्रावीण्यं भट्टपुत्रस्य ॥ ७५ ॥

---

अनालोकितावसरः [ अप्रस्तुतं इति यावत् , ] ' ( गाथां ) श्लोकप्रायां ' [ इति पाठे ] श्लोकबहुलं वृत्तगन्धि वा । [ गाथा-संस्कृते या आर्या सा प्राकृते गाथा, ] भावितचेताः आनन्दपरिपोषितमनाः । [ यथातथा अशुद्धत्वेन पठति इत्यन्वयः ] ॥ ७१ ॥ रसावेगात् आनन्दानुभूतिपारवश्यात् , [ वादैः उक्तिभिः ] ॥ ७२ ॥ इदमिति । अनेन रहस्यालापप्रकाशनेन तातनृपयोः परस्परं सौहार्दातिशयं बोधयति, [ तेन अस्य स्वतः पराक्रमशून्यत्वं व्यज्यते ] ॥ ७३ ॥ पत्रच्छेदः [ पत्रच्छेद्यं नाम कलाविशेषः, येन भूर्जपत्रादीनां स्वाभिप्रायद्योतनाय तत्तदाकृत्या कर्तनं क्रियते । ] [ वा इति विकल्पेन तस्य यत्किञ्चिज्ज्ञत्वं सूचितम् । ] पत्रकर्तरी पत्राकारा कर्तरी पत्रसहिता वा । [ वस्तुतस्तु लघुकर्तरी या पत्रच्छेदे उपयुज्यते । ] [ सततं हस्ते कर्तरीधारणेनैव पत्रच्छेद्यकलायां स्वकौशलमस्तीति सूचयति, न तु क्रियया प्रकटयति अज्ञानात् इति भावः । ] ॥७४॥ [ इतः षट्सु तत्सेवकैः कृतायाः भट्टपुत्रस्य व्याजस्तुत्याः अनुवादः, तद्द्वारा च तत्रतत्र अज्ञानेऽपि तस्य मिथ्याभिमानिता दर्शिता । ] भट्टपुत्रस्य तस्य, प्रावीण्यं अभिज्ञता कर्तृ, नाट्यशास्त्रपरमाचार्यनारदादीनपि अभिभवति, केवलमभिमानवशात् स्वस्मिंस्तथाऽभिमन्यते इत्यर्थः ॥ [ नाट्यशास्त्रस्य ब्रह्मा आद्याचार्यः, तदुक्तं भरतेनैव नाट्यशास्त्रे " नाट्यशास्त्रं प्रवक्ष्यामि ब्रह्मणा यदुदाहृतम् ॥ " ( अ. १ श्लो. १ ) " श्रूयतां नाट्यवेदस्य संक्षेपो ब्रह्मनिर्मितः ॥ ७ ॥ " इत्यादि च । " नाट्यभेदान् ददौ पूर्वं भरताय चतुर्मुखः । " इति स्कन्दपुराणे च । नारदः गान्धर्वशास्त्रप्रणेता, तथाहि " नारदीयप्रभृतिषु गान्धर्ववेदविशेषेषु " इति कादंबर्यां चंद्रापीडविद्याग्रहण-

---

७४. जानस्वाकौशलं ( ? ) ( प )

वसुनन्दचित्रदण्डकमुक्तायुधखड्गधेनुबन्धेषु ।
त्यजति पुरतोऽस्य नियतं भार्गवतां परशुरामोऽपि ॥ ७६ ॥
वात्स्यायनमयमबुधं बाह्यान्दूरेण दत्तकाचार्यान् ।
गणयति मन्मथतन्त्रे पशुतुल्यं राजपुत्रं च ॥ ७७ ॥
यः प्रार्थितोऽपि यत्नात् कवचं राधासुतो ददाति स्म ।
अविचिन्तितवसुवर्षस्त्यागगुणं हसति तस्यायम् ॥ ७८ ॥
अपलायनैकहृदये यो विक्रममातनोति हरिणेऽपि ।
सिंहस्य तस्य शौर्यं त्रपाकरं भवति भट्टपुत्रस्य ॥ ७९ ॥
आखेटकेऽपि कौतुकमस्त्येव, जयश्च चञ्चले लक्ष्ये ।
भट्टभयेन न खेलति भट्टसुतः किन्त्वतिप्रकटम् ॥ ८० ॥

प्रस्तावे । ] ॥ ७५ ॥ वस्वादीनि परिक्रममण्डलविशेषनामानि । [ यद्वा, वसुः नन्दः चित्रश्च चारीभेदाः, दण्ड एव दण्डकः युद्धे व्यूहविशेषः, मुक्तायुधानि चक्रादीनि, धेनुः छुरिका, खड्गादीनि अमुक्तायुधानि, तेषां बन्धेषु प्रयोगेषु । ] परशुरामोऽपि भार्गवतां आयोधनासाधारण्यं सर्वश्रैष्ठ्यप्रसिद्धिं जहातीत्यर्थः ॥ ७६ ॥ कामसूत्रकर्ता वात्स्यायनः [ मल्लनागनामा ], [ पाटलिपुत्रिकाणां गणिकानां नियोगात् ] कामशास्त्राङ्गभूतस्य वैशिकसंज्ञकस्य षष्ठाधिकरणस्य पृथक्कर्ता [ माथुरो ] दत्तकाचार्यः । दत्तिलाचार्यान् इति पाठान्तरम् । [ तदशुद्धं, दत्तिलस्य गानाचार्यत्वात् ] । तन्त्रं शास्त्रम् । पशुतुल्यं मुग्धम् । राजपुत्रः कश्चन पुरातनः कामशास्त्राचार्यः, [ कस्यचित् कलाशास्त्रविषयकग्रन्थस्य च कर्ता, स्मृतश्चायं पालकाप्यीये हस्त्यायुर्वेदे ( ३।८।९९। ) ] ॥ ७७ ॥ राधासुतः कर्णः । [ अविचिन्तिता न गणिता, वसोः धनस्य, वर्षा वर्षणं, येन सः; अविवेकेन प्रभूतधनव्ययकर्ता इत्यर्थः । ] [ 'वसुवर्ष्मा' इति पाठे ] वसु धनं, वर्ष्म शरीरम् । त्यागो दानम् । [ तस्य बहुप्रार्थनया कवचमात्रस्य दातुः । ] ॥ ७८ ॥ त्रपाकरं लज्जाकरम् । पलायनप्रसक्तेऽपि हरिणे विक्राम्यतः सिंहस्य शौर्यं श्रुत्वा लज्जते स्वयं( स्य? ) तादृग्दीनपरिरक्षकत्वाभिमानात् । [ अनया व्याजस्तुत्या तस्य भीरुत्वं ज्ञापितम् । ] ॥ ७९ ॥ [ आखेटकः मृगया, 'शिकार' इति भाषा-

७६ धेनुकाबन्धे ( प )। °स्य नित्यं ( का ) ७७. बाह्यं दूरेण दत्तिलाचार्यं ( प )। दन्तिलाचार्यान् ( कापा ) ७८. [अयं श्लोकः का.पुस्तकेषु भ्रष्टः ।] वसुवर्ष्मा ( गो ) ७९ °करं भट्ट° ( प ) ८० जयश्च चललक्ष्ये ( का )। भट्टतनयेन खेलति ( का ) [ अपार्थकोयं पाठः ] । किं न्वति ( गो २. कापा ) पाठः ।

इति निजसेवकनिगदितरामणिक्यवचनजनितपरितुष्ट्या।
अन्तर्मुदितो ब्रूते मामेष खलीकरोतीति ॥ ८१ ॥ (कुलकम्)
'कतमत् कतमल्लग्नं प्रस्थानं, का च नर्तकी भद्रा।
विटखटके का नृत्यति कोहलभरतोदितक्रियया ॥ ८२ ॥

याम्। चललक्ष्यवेधनं दुष्करं कर्म, तत्र जयः। किन्तु पितुर्भयेनैव स न मृगयाक्रीडनं करोति इत्यर्थः। ] ॥ ८० ॥ [ एषः निजसेवकः प्रस्तोता। ] खलीकरोतीति नाहं तादृग्गुणः, केवलं त्वया श्लाघा क्रियते इत्यादि सौजन्येन [ विनयेन वा ] वक्तीत्यर्थः। [ अत्र रामणिक्य इति प्रयोगः चिन्त्यः। ] [ अनेन कुलकेन भट्टपुत्रः दानवीरः कलावीरः गानवीरः अहिंसावीरः—इत्यादिवीरनायकसमष्टित्वं व्याजेन सूचितम्। ] ॥ ८१ ॥ लग्नं परिज्ञातम्। प्रस्थानं नाट्यादिशास्त्रदुर्गमविषयः। [ नर्तकीलक्षणं भारतीये नाट्यशास्त्रे चतुर्विंशतितमे अध्याये—" यौवनादिगुणोन्मत्ता नृत्तगीतविचक्षणा। सदा प्रगल्भा च तथा त्यक्तालस्या जितश्रमा ॥ ३३ ॥ समागतासु नारीषु रूपयौवनकान्तिषु। न दृश्यते गुणैस्तुल्या नर्तकी सा प्रकीर्तिता ॥ ३४ ॥ " इति। भद्रा श्रेष्ठा साध्वी। विटखटके विटानां खटके, खट आकाङ्क्षायां इति धातोः खटके तैः आकाङ्क्षिते द्रष्टुं अभिलषिते तत्तन्नर्तनभेदे। ] [ विटलक्षणं नाट्यशास्त्रे—" वेश्योपचारकुशलो मधुरो दक्षिणः कविः। ऊहापोहक्षमो वाग्मी चतुरश्च विटो भवेत् ॥ " ( २४।१०४ ) इति। ] ' शृङ्गटके का नृत्यति ' [ इति पाठे ] अप्रतिरुद्धगमनागमनस्थाने सर्वाभिज्ञजनदृष्टिगोचरेऽपि देशे अतिप्रावीण्येन अस्खलितं नर्तितुं का कुशलेत्यर्थः; " शृङ्गाटकचतुष्पथे " इत्यमरः, छन्दोऽनुरोधात् [ अत्र ] मध्यह्रस्वत्वम् ॥ ' विटखटके ' इति पाठे खटसदृशत्वात् खटकः खटोऽन्धकूपः , " खटस्तृणे कफे। टङ्केऽन्धकूपे प्रहारे " इति हैमः; तथा च विटानां तदभिज्ञजनानां अपि इत्यर्थः, अन्धकूपवत् दुर्गमे विषयेऽपि नर्तितुमभिज्ञा केति कथञ्चिदर्थकल्पना ॥ कोहलभरतौ नाट्याचार्यौ, [ तत्र कोहलः भरतपुत्रः कोहलरहस्यकर्ता। तदुक्तं तत्रैव—" सुखोपविष्टं वरदं कोहलं भरतात्मजम्। कृताञ्जलिपुटो भूत्वा मतङ्गः परिपृच्छति ॥ " इति। अपि च " आत्मोपदेशसिद्धं हि नाट्यं प्रोक्तं

८१. रामणिका ( गो ) रमणीयवचःश्रवणपरितुष्टा ( का ) [ असम्बद्धः पाठः ] अन्तर्मुदिता ( का )। मामेव ( का )। संदानितकम् ( गो. का ) ८२. कतमे कत ( प )। प्रस्थाने ( का )। भर्ता ( का )। शृंगटके ( गो ) पिंगटके ( प )।

कीदृक् त्वं न(ल?)यमार्गे धेनुकरचिते च तालके कीदृक् ।'
प्रेङ्खणकादावेवं पृच्छति नृत्योपदेशकं यत्नात् ॥ ८३ ॥
सुमनोमालां कण्ठात् सादरचेता ददाति नर्तक्यै ।
अपनीय सताम्बूलामनवसरे साधुवादं च ॥ ८४ ॥
'भुजवलनगात्रसंस्थितिलालित्योद्वहनपार्श्ववलितानि ।
अनयैव निर्मितानि स्थानकशुद्धिश्च चातुरस्र्यं च ॥ ८५ ॥

---

स्वयंभुवा । शेषः प्रस्तारतन्त्रेण कोहलः कथयिष्यति ॥ " इति भारतीयनाट्यशास्त्रे (३७।१८) ] ॥ ८२ ॥ बन्धादिविशेषस्य धेनुकसंज्ञा । प्रेङ्खणकम् उपरूपकविशेषः, " गर्भावमर्शरहितं " इत्यादि तल्लक्षणं साहित्यदर्पणे । [ अत्र तालकपदसन्निधानेन ' नय ' स्थाने ' लय ' इति पाठ उचितः स्यात् " नृत्तं ताललयाश्रयम् " इति दशरूपकोक्तेः । लयश्च नृत्यगीतवाद्यानां साम्यम्; यद्वा " तालान्तरालवर्ती यः कालोऽसौ लय ईरितः । " इति, " तालकालान्तरस्थायी द्रुतमध्यविलम्बितः । त्रिधा लय इति प्रोक्तो बदरामलविल्ववत् ॥ " इति च लक्षितः, चञ्चत्पुटचाचपुटादिभेदवान् ॥ ताल एव तालकः, स तु नर्तनगलवादनक्रियाणां कालेन मानम् । धेनुकरचितः धेनुकनाम्ना केनचित् वाग्गेयकारेण कल्पितः, यथा सङ्गीतरत्नावलिकर्त्रा सोमकीर्तिनामा, संगीतरत्नाकरकारेण निःशङ्कलीलश्च कल्पितः, तथा ॥ प्रेङ्खणकशब्दो यद्यपि उपरूपकविशेषे रूढः तथापि नृत्ये तस्याप्रस्तुतत्वात् यौगिकोऽर्थोऽत्र ग्राह्यः, स च प्रपूर्वक–इखिधातोः प्रकर्षेण चलनार्थकात् नृत्यं इति । ' नयमार्गे ' इति पाठे ' नृत्यस्य ' इति पदं अध्याहृत्य तस्य नीतौ अभिनये इत्यर्थः । कीदृक् कीदृशं ते प्रावीण्यं इत्यर्थः । ] ॥ ८३ ॥ अपनीय अपवार्य । अनवसरे गुरुजनादिसमक्षतायां लज्जादिना दातुमयोग्ये समये । साधुवादः प्रशंसा ॥ [ यद्वा कण्ठादपनीय स्वकण्ठादुत्तार्य । अनवसरे प्रशंसोचितकालमुल्लंघ्य यत्रकुत्रापि । अनेन तस्य संगीतशास्त्राज्ञानं ध्वन्यते ॥ ] ॥ ८४ ॥ तमेव भुजइत्यादिद्वाभ्यां दर्शयति । [ भुजवलनं नृत्ते हस्तयोः प्रकारविशेषैः चालनम् । तच्च सप्तविधं संगीतरत्नाकरे प्रोक्तम् । ] ' भुजपतनं ' [ इति पाठे ] नृत्यपूर्वावस्थासु कटिभागतो बाह्वोः स्खलनं, भावाभिव्यञ्जकतया चालनं च । गात्रसंस्थितिः सामग्र्यवधानार्थमङ्गलतिकायाः सरलमव-

---

८३. कीदृक्षो ( का ) ईदृक्षे ( कापा ) कीदृगियं लयमार्गे धवलुकरचिते च भाणके कीदृक् । प्रेक्षणकादा' ( युग्मम् ) ( प ) । तानके ( गो २. कापा ) ८५. भुजपतन ( गो ) पतनमात्र ( का ) । अनघैव ( प ) । चातुरस्यं ( प. कापा )

प्रविभक्तैर्भावरसैरभिनवभङ्ग्या परिक्रमैश्चित्रैः ।
रम्भामप्यतिशेते किमुतेतरमर्त्यनर्तकीलोकम् ॥' ८६ ॥
इत्यपसारकविरतावचिरतमुच्छलितकण्ठमत्युच्चैः ।
वर्णयति भावितात्मा लक्षितपदमात्रया पात्रम् ॥ ८७ ॥
प्रायेण भट्टतनयो भवतीदृशवेषचेष्टितो भद्रे ।
तं मदनवागुरान्तः पातयसि यथा तथा ब्रूमः ॥ ८८ ॥
चतुरा प्रागल्भ्यवती परचित्तज्ञानकौशलोपेता ।
योज्या तस्मिन् दूती वक्रोक्तिविभूषिता प्रयत्नेन ॥ ८९ ॥
स उपेत्य तथाऽवसरे ताम्बूलं सुमनसश्च दत्त्वेत्थम् ।
अभिधातव्यः सुन्दरि मकरध्वजदीपकैर्वचनैः ॥ ९० ॥

---

स्थापनम् । स्थानकशुद्धिः—तत्तदग्रे क्रियमाणकौशलप्रदर्शनेषु असंकीर्णतादोषनिरासश्च । चातुरस्त्र्यं चतुरस्त्रता, सर्वत्र कौशल्यं, अभिज्ञता । [ भुजवलनादिषु तादृशं नैपुण्यमस्या येन तानि सर्वाणि अनयैव प्रथमं उद्भावितानि इति वक्तुमुचितं इति भावः । ] ॥ ८५ ॥ प्रविभक्तैः पृथक्पृथगभिव्यक्तैः । [ भावाः रत्यादयो मानसविकाराः । रसाः शृंगारादयः प्रसिद्धाः । भङ्ग्या रचनया । परिक्रमाः नृत्ते चारीति प्रसिद्धा गतिविशेषाः ॥ ८६ ॥ ] [ अपसारकः नृत्तावसाने नर्तक्याः निर्गमनसूचकं गीतवादनं स्यात्, तत्समाप्तौ । उच्छलितः उच्चैःकृतः । भावितात्मा नृत्तेन वासितान्तःकरणः । लक्षितपदमात्रया—पदधृता मात्रा पदमात्रा, लक्षिता चासौ पदमात्रा पदा कालमानं तया तन्मात्रेण, न तु कौशल्यग्रहणात्, वर्णयति गुणवर्णनं करोति । पात्रं नर्तकी, "पात्रं स्यान्नर्तनाधारो नृत्ते प्रायेण नर्तकी" । ( ७।१२३४ ) इति सङ्गीतरत्नाकरेदि- ॥ ८७ ॥ ] [ वागुरा मृगादिबन्धनसाधनम् । ] ॥ ८८ ॥ [ इतः करालिका वर्णितस्य भट्टपुत्रस्य वशीकरणोपायान् क्रमेण वर्णयति । तत्रादौ दूतीयोजनमाह चतुरेति । चतुरेत्या- दिगुणवर्णनं दूत्या योग्यताद्योतनार्थम् । प्रागल्भ्यवती धृष्टा । ] [वक्रोक्तिः कुटिलवचनं,] विभूषिता निपुणा । [ तदुक्तम्—"पटुता धृष्टता चेतीङ्गितज्ञत्वं प्रतारणम् । देशकालज्ञता चैव दूतीकृत्ये गुणा मताः ॥" इति । ] ॥ ८९ ॥ मकरध्वजः कामः ॥ ९० ॥

---

८६. अभिनय ( प. गो २. का ) । भक्त्या ( गो २. का ) । °तरनर्तकी° ( का ) । लोकः ( प ) ८७. विरताद ( गो. का. ) । °रतमुत्सनाथुकण्ठ° ( प. गो २ ) । पातम् ( गो २. का ) यातम् ( गोपा. कापा ) ८८. वेषवेष्टितो वत्से ( प ) । तथा कुर्मः ( प ) ९०. समुपेत्य ( का ) । दत्त्वेदम् ( कापा ) ।

'जन्मसहस्रोपचितैः पुण्यचयैरद्य फलितमस्माकम् ।
यस्त्वं नयनानन्दन नयनावसरं समेतोऽसि ॥ ९१ ॥
चाटुक्रममनुरागं प्रणयरुषौ विरहजनितशोकार्तिम् ।
प्रकटयति वाररमणी नटीव शिक्षाभियोगेन ॥ ९२ ॥
प्रवयसि यौवनशालिनि हीनकुले सत्कुलप्रसूते च ।
रोगवति दृढशरीरे समचित्ता योगिनश्च गणिकाश्च ॥ ९३ ॥
उपचरिताऽप्यतिमात्रं पण्यवधूः क्षीणसंपदः पुंसः ।
पातयति दृशं व्रजतः स्पृहया परिधानमात्रेऽपि ॥ ९४ ॥
इत्थं दृढतरवासितमनसां पुंसामसाम्प्रतं पुरतः ।
वेशविलासवतीनामशरीरशरव्यथाकथनम् ॥ ९५ ॥ ( कुलकम्

---

उपचितैः संपादितैः । नयनावसरं लोचनविषयत्वं, प्राप्तोऽसि इत्यर्थः, दृष्टोऽसि इति याव ॥ ९१ ॥ नटीव नर्तकीव, वाररमणी वेश्या, शिक्षाभियोगेन शिक्षणप्राप्तकौशलसम्बन्धे (कार्यवशादवसरेषु,) चाटुक्रमं प्रशंसापुरस्कृतं, अनुरागं आसक्तिं, प्रणयरुषौ स्नेहक्रोधं विरहजनितं शोकं दुःखं, तत्सहितामार्तिं मनोव्यथां च, केवलं प्रकटयति अभिनय मात्रम्, न तु तस्यास्ते मानसतो भवन्ति ॥ तथा च मया वस्तु सदेव प्रतिपाद्यते,न शङ्कास्पदं किञ्चित् इति उदासीनताप्रकाशनप्रवीणा दूती विधेयेति ॥ ९२ ॥ [ प्रवय वृद्धे । ] योगिनो ब्रह्मज्ञानिनो, गणिका वेश्याश्च, समचित्ताः तुल्यदर्शनाः इत्यर्थ एकत्र ज्ञानसारत्वात्, अपरत्र द्रविणप्रवणत्वात् । [ अत्यन्तविरुद्धयोगिसादृश्यप्रदर्श स्तुतिद्वारा निन्दा अभिव्यञ्जिता ] ॥ ९३ ॥ उपचरिताऽपि पूर्वं द्रव्यादिभिः सेविताऽ पण्यवधूः वेश्या, परिधानमात्रेऽपि केवले दुकूलवसनेऽपि, दृशं पातयति जिघृक्ष इत्यर्थः ॥ ९४ ॥ [ इत्थं पूर्वश्लोकत्रयवर्णितप्रकारेण, ] दृढतरं वासितं संस्क राधिष्ठितं मनो येषां तेषां पुरतः असाम्प्रतम् अप्राप्तप्रसरत्वात् अस्थाने । [ वेशेन अ करणेन विलासः विलसनं तद्वती वेशविलासवती वेश्या । ] अशरीरः कामः, त

---

९२. चाटूक्ति सानुरागं ( गो २. कापा ) । प्रणयरुषो ( प ) । विदधाति ( गो कापा ) । शिष्याभियोगेन ( प ) ९३. गणिका च ( कापा ) ९४. मात्रं प्रकटवधूः ( प ९५. युक्तं हृ ( कापा ) । सांप्रतं कुरुते ( कापा )

केवलमगणितलाघवदूरपरित्यक्तधीरताभरणा ।
मुखरयति मां दुराशा दग्धसखी, तेन कथयामि ॥ ९६ ॥
हृदयमधिष्ठितमादौ मालत्याः कुसुमचापबाणेन ।
चरमं रमणीवल्लभ लोचनविषयं त्वया भजता ॥ ९७ ॥
क्षणमुत्कण्टकिताङ्गी, क्षणमुल्वणदाहवेदनावस्था ।
क्षणमुपजातोत्कम्पा, स्वेदार्द्रवपुः क्षणं भवति ॥ ९८ ॥
मुहुरविभावितहास्या, मुहुरुज्झितधीरभावमत्युच्चैः ।
रोदिति, गायति च पुनः, पुनश्च मौनावलम्बिनी भवति ॥९९॥
पतति मुहुः पर्यङ्के, मुहुरङ्के परिजनस्य, मुहुरवनौ ।
किसलयकल्पिततल्पे मुहुरम्भसि मुहुरनङ्गसंतप्ता ॥ १०० ॥

---

रव्यथा तदाक्रान्तिः ॥ ९५ ॥ अगणितं अविचारितं, लाघवं अपकर्षः । [ दुराशा दुष्पूरा आशा, दग्धसखी—वक्त्र्याः प्रोत्साहकत्वात् सखित्वं, दुष्पूरत्वाच दग्धत्वम् । ] ॥ ९६ ॥ [ इतः १०५ श्लोकाङ्कं यावत् नायिकाविरहवर्णनम् । ] [ चापश्च बाणाश्च चापबाणाः, कुसुमान्येव चापबाणा यस्य स कुसुमचापबाणः मदनः; " कुसुमेषुरनन्यजः । पुष्पधन्वा रतिपतिः । " इति अमरः । चरमं पश्चात् । ] भवति लोचनगोचरत्वे संपन्ने तत्समकालमेव सा कामपरवशा जाता इत्यर्थः । [ अत्र कार्यकारणपौर्वापर्यविध्वंसरूपोऽतिशयोक्त्यलङ्कारभेदः । ] [ तेन भट्टपुत्रेण शीघ्रं मालतीहृदयमाक्रान्तमिति ध्वन्यते । ] ॥ ९७ ॥ [ इतः अष्टभिः तस्याः अभिलाषापरनामकपूर्वानुरागजन्यां विप्रलम्भावस्थां वर्णयति क्षणमिति । उत्कण्टकिताङ्गी संजातपुलका । उल्वणा स्पष्टा । अत्र पुलकादयोऽनुभावाः ] ॥ ९८ ॥ [ अथ त्रिभिः विरहजन्याश्चेष्टा वर्णयति मुहुरिति । अविभावितं अदृश्यमानम् । ' दूरविभावितकार्श्या ' इति पाठे तु । ] दूरविभावितं—दूरं अतिशयेन, विभावितं लोकलोचनगोचरीभूतं, परां काष्ठामारुढम् इति यावत्, कार्श्यं यस्याः ॥ [ मुद्रितपाठे हास्यस्यापि रुदनादिवत् वदनधर्मत्वात् न प्रक्रमभङ्गो दोषः, ' मुहुः ' पदपुनरुक्तिश्च अर्थस्य पुष्टिदा । ] [ अनेन उद्वेगावस्था सूचिता । ] ॥ ९९ ॥

---

९६. दग्धवती ( का ) ९७. त्वया व्रजता ( गो २. कापा ) ९८. वेदनायत्ता ( प. का ) । °मुपयाताकंपा ( प ) ९९. दूरविभावितकार्श्या मुहु० ( गो. का. ) । गायति हृष्यति मुह्यति च स्तम्भिनी भवति ( गो. का. ) [ मूलपाठः प पुस्तके, तत्रत्यभेदः गो २ कापा इत्यत्र पाठान्तररूपः । ]

महिषीव पङ्कदिग्धा, हंसीव मृणालवलयपरिवारा ।
सुभग, मयूरीवासौ भुजङ्गविद्वेषिणी जाता ॥ १०१ ॥
कदली चन्दनपङ्कः पङ्केरुहनीरहारघनसारम् ।
सुन्दर शशधरकान्तं नो शान्त्यै मदनहुतभुजस्तस्याः ॥ १०२ ॥
अपसारय घनसारं, कुरु हारं दूर एव, किं कमलैः ।
अलमलमालि मृणालैरिति वदति दिवानिशं बाला ॥ १०३ ॥
संकल्पैरुपनीतं त्वामन्तिकमुल्लसन्मनोवृत्तिः ।
दृढमालिङ्गति, पश्चात् स्वभुजापीडेन याति वैलक्ष्यम् ॥ १०४ ॥
कुसुमामोदी पवनः, पिककूजितभृङ्गसार्थरसितानि ।
इयमियती सामग्री घटिता विधिनैव तद्विनाशाय ॥ १०५ ॥
अबलां बलिना नीतां दशामिमां मकरकेतुना रक्ष ।
आपत्पतितोद्धृतये भवति हि शुभजन्मनां जन्म ॥ १०६ ॥

---

पङ्कदिग्धा संतापापनयनाय लिप्तकर्पूरचन्दनादिशीतपदार्थद्रवा, संतापव्यथिततया धूलिधूसरिता वा, पक्षे जातिस्वभावात् सुखार्थं कर्दममग्नतया तल्लिप्तशरीरा । वलयं कटकः, पक्षे समूहः । परिवारः समीपवर्ती । भुजङ्गा विटाः, तद्विद्वेषिणी त्वय्येवासक्तत्वात्; अन्यत्र भुजङ्गाः सर्पाः ॥ १०१ ॥ हारः पुष्पमौक्तिकादीनाम् । घनसारः कर्पूरः, समाहारैकवचनम् । शशधरकान्तं चन्द्रमणिः ॥ १०२ ॥ [ तस्याः प्रलापावस्थां वर्णयति अपेति । अपसारय दूरीकुरु । अलंअलं इति द्विरुक्तिः अवधारणार्थम् । आलि सखि । अत्र रकारलकारयोरावृत्त्या वृत्त्यनुप्रासः शब्दालङ्कारः । स च तयोः विप्रलम्भशृङ्गारगतमाधुर्यव्यञ्जकत्वात् विप्रलम्भशृङ्गाररसमुपकरोति ॥ १०३ ॥ ] [ प्ररूढरागातिशयमाह सङ्कल्पैरिति । ] स्वभुजापीडेन बाह्वोः परस्परं संघट्टनेन । वैलक्ष्यं लज्जां विस्मयं वा ॥ [ संकल्पैरुपनीतं ध्यानबलात् साकारीव कृतम् । लब्धस्यापि आश्लेषानुपलब्ध्या विशेषोक्तिः अलंकारः । तेन च कारुण्यं व्यज्यते ॥ १०४ ॥ ] कुसुमामोदी अत्यन्तचित्तसमाकर्षिसुगन्धवाही । [ पिकः कोकिलः । ] [ समुच्चयालंकारः । तेन विरहपीडाया अत्यन्तदुःसहत्वं व्यज्यते ] ॥ १०५ ॥ [ अतः साम्ना जीवरक्षणं

---

१०२ कदलीचम्पकचन्दनपङ्को॰ ( गो. का )। नीरघनसारम् ( का ) साराः ( कापा ) १०५. घटिता कामेन ( गो २ ) ॰दैवेन ( कापा ) १०६. आपद्यबलोद्धृतये ( गो. का ) [ अस्मिन्पाठेऽर्थान्तरन्यासस्य न बलवत्प्रतीतिः । ]

नो गृह्णन्ति यथार्थां अर्थिजनैर्निगदिता गिरः प्रायः ।
मालत्या गुणलेशं शृणु धृष्टतया तथापि कथयामि ॥ १०७ ॥
आस्फालयतो नूनं धनुरतनोः कौसुमं रजः पतितम् ।
संगृह्य सा सुगात्री विश्वसृजा निर्मिता तेन ॥ १०८ ॥
उपहसति गिरिसुताया लावण्यं, येन सततलग्नेन ।
न द्रवतामुपनीतं भोगीन्द्रविभूषणस्य देहार्धम् ॥ १०९ ॥
शशधरबिम्बार्धगतां छायामिव सैंहिकेयवदनस्य ।
अलिपटलनीलकुटिलामलकावलिमलिकसन्निधौ वहति ॥ ११० ॥

---

प्रार्थयते अबलामिति । अर्थान्तरन्यासालंकारः । तेन सामान्येन समर्थनात् प्रस्तुतस्य अवश्यकरणीयत्वं व्यज्यते ] ॥ १०६ ॥ [ स्वार्थपरायणाः इष्टसिद्ध्यर्थं अलीकपि वदन्तीति लोकव्यवहारं समालोच्य स्वस्या अर्थित्वेन संभाव्यमानं मिथ्याभाषित्वारोपं निवारयितुं मालत्याः प्ररोचकगुणवर्णनरूपं दानप्रयोगं चतुरा दूती करोति इतः ऊनविंशतिभिः आर्याभिः । ] [ 'यथार्थान्' इति पाठे ] अर्थिजनैः निगदिता उक्ताः, गिरो वाचः कर्त्र्यः; प्रायो यथार्थान् वास्तविकार्थान् नो गृह्णन्ति, तेषां स्वार्थप्रवणत्वात् तदुच्चरितवाचो बहुशः संवादिन्यो न भवन्ति इत्यर्थः । यद्यपीत्थं स्थितिः तथापि मया वर्णयिष्यमाणो गुणौघः तात्त्विक एव इति समर्थयितुमयमुपक्रमः । [ धृष्टतया निर्लज्जतया, यतः स्वसख्युः स्वमुखेन प्रशंसाऽनुचितेति । ] ॥१०७॥ अतनुः कामः । [ नूनपदमत्र उत्प्रेक्षाद्योतकम् । ] ॥१०८॥ [ लावण्यं स्त्रीणां गुणविशेषः, तच्च—"मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥" इति लक्षितम् । न द्रवतामुपनीतं लयं न गमितं, ] भोगीन्द्रविभूषणः शिवः, [ तस्य देहस्य शेषं अर्धं अविकृतं इति गौरीलावण्यं मालती उपहसति । ] ॥ १०९ ॥ [ इतः तस्याः शोभनावयवान् वर्णयति शशेति । ] सैंहिकेयो राहुः, तस्य तमोरूपत्वात् तद्वदनच्छायाऽतिश्यामा भवति इति वदनशशधरबिंबसंनिहित(संनिधान?)संभावितया अतिश्यामचूर्णकुन्तललावण्यायास्तदु-

---

१०७. यथार्थान् ( गो. का ) १०८. संहृत्य ( कापा ) । सुमध्या ( प. कापा ) । [ शरीरैकदेशव्यंजकत्वादयं पाठो न समीचीनः । ] °तानेन ( प ) ता जगति ( गो २ कापा ) ११० बिम्बाधिगतां ( प )

सरसिजमस्थिरशोभं, विभ्रमरहितं च मण्डलं शशिनः ।
केन समेतु समत्वं हृदयप्रिय मालतीवदनम् ॥ १११ ॥
अलिरुपरि तदीक्षणयोर्भ्रान्त्वा सौगन्ध्यसूचितविशेषः ।
निपतति कर्णाम्बुरुहे, निर्गुणताऽप्यवसरे साध्वी ॥ ११२ ॥
बिभ्राणेऽरुणिमानं सहजं जितबन्धुजीवरुचिमधरे ।
यदलक्तकविन्यसनं तत्तस्या मण्डनक्रीडा ॥ ११३ ॥
चित्रमिदं यत् कृशता तस्या बलिपरिगृहीतमध्यस्य ।
अथवा नो विधिविहिता महताऽप्यपनीयते तनुता ॥ ११४ ॥
आस्तामपरस्तावत्तस्याः स्मरवसतिपृथुतरनितम्बः ।
श्लथयति कपिलमुनेरपि दृक्पथपतितः समाधानम् ॥ ११५ ॥

पमानकत्वम् । अलिकं ललाटम् ॥ ११० ॥ मालतीवदनस्य स्थिरशोभत्वात् विलास-विभासित्वाच्च [ तत् ] तादृशोपमम् इति असंभवः। [ अत्र उपमानयोः निन्दया प्रतिक्षेपेन निन्दोपमा, यद्वा व्यतिरेकालंकारः, तेन उपमेयस्य सातिशयत्वं व्यज्यते ] ॥ १११ ॥ अलिः इत्यादि । भ्रमरस्यापि भ्रम इति सर्वथा कमलतुल्ये तदीक्षणे इति बोधितम् । [ विशेषः भेदः । ] साध्वी हितकारिणी, भ्रमरभयस्य तदानीं वारणात् । [ पादत्रये उन्मीलितालंकारः, "भेदवैशिष्ट्ययोः स्फूर्तावुन्मीलितविशेषकौ ।" इति कुवलयानन्दीयलक्षणात्, समग्रे तु अर्थान्तरन्यासः, अतः तयोः अत्र सङ्करः ] ॥ ११२ ॥ [ बन्धुजीवः रक्तपुष्पो वृक्षविशेषः, दोपहरिया बपोरिया वा इति भाषायां प्रसिद्धः, तत्पुष्पमपि बन्धुजीवम् । अधरस्य रक्ततापादनाय तत्र पादे इव अलक्तकं दीयते । ] मण्डनक्रीडा तदधरस्य स्वभावसुन्दरत्वात् केवलं शोभार्थं विन्यासविलासः [ तथा च सुरथोत्सवकाव्ये—"विद्रुमादपि निसर्गसुन्दरे दन्तवाससि विशालचक्षुषः । मण्डनैकरसया वयस्यया यावकः स्थितिरिति न्यधीयत ॥ " ( ६।६५ ) इति । ] ॥ ११३ ॥ बलयः त्रिवलयः, बली बलवांश्च । [ अत्र आक्षेपार्थान्तरन्यासालंकारयोः सङ्करः, 'अथवा' इत्यनेन पूर्वोक्तचित्रत्वस्य विचारणात् निषेधात्, पूर्वार्धे विशेषस्य उत्तरार्धे सामान्यस्य च न्यासात् ] ॥ ११४ ॥ अपरः अन्योऽवयवः । समाधानम् समाधिम् ॥ ११५ ॥

११२. विशेषे ( गो २ ) ११३ विन्यासः ( गो २ ) ११४. निहिता ( कापा )

तस्या रम्भावपुषो रम्भोपममूरुयुगलमवलोक्य।
मकरध्वजोऽपि सहसा निजसायकलक्ष्यतां याति ॥ ११६ ॥
जघनभरालसयाता नायाता सा विलोचनावसरम्।
तिष्ठति तेन मनोहर शरजन्मा ब्रह्मचर्येण ॥ ११७ ॥
यदि कथमपि मधुमथनः पश्यति तामसमबाणसर्वस्वम्।
तद्सारभारभूतामिव लक्ष्मीमुरसि विनिहितां मनुते ॥ ११८ ॥
यदि पतति सा कथञ्चिद्वीक्षणविषये हरस्य तदवश्यम्।
त्रिभुवनमशिवं कुरुते वामेतरदेहभागमासाद्य ॥ ११९ ॥
सौन्दर्यं तत्तादृशमशेषयोषिद्विलक्षणं सृजतः।
यन्निष्पन्नं धातुस्तन्मन्ये काकतालीयम् ॥ १२० ॥

---

[ इतो देवानामपि मोहकारिणी सेति किमु त्वादृशामिति वर्णयति । तत्रादौ जगज्जेतुः कामस्यैव तद्वशित्वमाह तस्या इति। रम्भावपुषः] रम्भा काचन रूपिणी स्वर्गाङ्गना, तस्या वपुरिव वपुर्यस्याः सा; रम्भोपमं कदलीतुल्यम्। मकरध्वजः कामः। निजसायकलक्ष्यतां वशीभावम् ॥ ११६॥ [अथ देवेषु ब्रह्मचर्यत्वेन प्रसिद्धस्य कार्तिकस्वामिनोऽवस्थामाह।] [ जघनभरेण अलसं मन्दमन्दं यातं गमनं यस्याः सा। ] शरजन्मा कार्तिकेयः ॥ ११७ ॥ [क्रमेण सपत्नीकदेवेषु प्रमुखाणां तद्दर्शनजं विकारमाह।] मधुमथनो नारायणः। असमबाणः पञ्चबाणः। [ पश्यति पश्येत्, तत् तदा, मनुते मन्वीत। अत्र कार्यनिबन्धनः अप्रस्तुतप्रशंसालंकारः ज्ञेयः, नायिकासौन्दर्ये वर्णनीयत्वेन प्रस्तुते लक्ष्मीपतेः तन्मूलकगर्वशान्तिरूपकार्यस्य संभवाभिधानत्वात् ] ॥ ११८ ॥ वामेतरो दक्षिणः, वामस्य पार्वतीरुद्धत्वाद्दक्षिणस्य [ सौन्दर्यवत्त्वात् शिवेन पार्वतीवत् तस्याः स्वीकरणे ] तया रोधे, प्रतिपाद्यं [ शिवलयरूपं ] सुलभं। [अत्र पूर्वस्मिन् श्लोके च कुवलयानन्दानुसारेण संभावनालंकारः, “ संभावना यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धये।” इति तल्लक्षणात्। काव्यप्रकाशानुसारेण यद्यर्थातिशयोक्तिः।] ॥ ११९॥ काकतालीयम् आकस्मिकघटनं। [ अत्र प्रत्ययार्थोपमा कुवलयानन्दमतेनं। “ काकागमनमिव तालपतनमिव इत्येवं काकागमनतालपतनसदृशार्थक–इवार्थविषयात् काकताल–इति समासात्, “ समासाच्च

---

११७ नो याता ( प. काशा ) विलोचनप्रसरम् ( प. गो २) ११८ भारभूतं लक्ष्मीवपुरुरसि विनिहितं ( प. गो २ ) तदसारभूतमेव स लक्ष्मीवपुरुरसि...तं ( कापा ) ११९. विषयं ( प. कापा )

सहजविलासनिवासं तस्या वपुरनभिवीक्षमाणस्य ।
मन्ये नाकाधिपतेः सहस्रमपि चक्षुषां विफलम् ॥ १२१ ॥
शिथिलयतु कुसुमचापं, क्षिपतु शरान्बाणधौ मनोजन्मा ।
संसारसारभूता विलसति भुवि मालती यावत् ॥ १२२ ॥
वात्स्यायनमदनोदयदत्तकविटपुत्रराजपुत्राद्यैः ।
उल्लपितं यत्किञ्चित् तत्तस्या हृदयदेशमध्यास्ते ॥ १२३ ॥
भरतविशाखिलदन्तिलवृक्षायुर्वेदचित्रसूत्रेषु ।
पत्रच्छेदविधाने भ्रमकर्मणि पुस्तसूदशास्त्रेषु ॥ १२४ ॥

---

तद्विषयात् ” इत्यनेन इवार्थे छप्रत्यये काकतालीयं इति रूपम् ” इति काकतालीयवादे । ] ॥ १२० ॥ [ नाकाधिपतिः स्वर्गाधिपः इन्द्रः । ] ॥ १२१ ॥ [ बाणधिः तूणीरम् । अत्र प्रतीपालंकारः, उपमेयभूतायाः मालत्या एव उपमानप्रयोजनधूर्वहत्वात् । लक्षणभेदेन तु आक्षेपालंकारः । ] ॥ १२२ ॥ वात्स्यायनादीनि कामशास्त्राचार्यनामानि, [ तत्र वात्स्यायनः कामसूत्रप्रणेता, मदनोदयः एतन्नामकग्रन्थात् प्रसिद्धस्तत्कर्ता, मदनोदयात् समुद्धृत एकः श्लोको राघवभट्टेन शाकुंतलटीकायाम् ( १।२६ ) । दत्तकः वैशिकशास्त्रकर्ता । ] तदाद्यैर्यत् किञ्चित् अखिलमुल्लपितं स्वबुद्धिवैभवेन शास्त्रेषु निबद्धं तत्सर्वं तस्याः स्वभावत एव मानसविलासशीलम् ॥ १२३ ॥ [ न केवलं सा कामशास्त्र एव प्रवीणा किन्तु नानाकलास्वपि विचक्षणा इति द्वाभ्यामाह भरतेति । तदुक्तं कामशास्त्रे (१।३)–“ आभिरभ्युच्छ्रिता वेश्या शीलरूपगुणान्विता । लभते गणिकाशब्दं स्थानं च जनसंसदि ” ॥ इति । भरतः रागमालानाट्यशास्त्रयोः कर्ता, तेन गीते वाद्ये नृत्ये इति कलात्रये सा निपुणा इति लभ्यते । एवमग्रेऽपि । विशाखिलः कलाशास्त्रकर्ता, तदुक्तं काव्यालंकारवृत्तौ (१।३।७) “ विशाखिलादिप्रणीतानि कलाशास्त्राणि ” इति । दन्तिलः कोहलशिष्यः सङ्गीताचार्यः । चित्रं आलेख्यकला । सूत्रं सीव्यं, सूचीवान कर्म; यद्वा सूत्रक्रीडा–अंगुलिन्यासात् सूत्रेण नानाकारप्रदर्शनम् । पत्रच्छेदविधानं पत्रच्छेद्यं पूर्वं व्याख्यातम् । भ्रमकर्म ऐन्द्रजालिकम् यानविधिः वा । पुस्तं काष्ठपुत्तलिकादिरचनं, तदुक्तं–“ मृदा वा दारुणा वाऽथ वस्त्रेणाप्यथ चर्मणा । लोहरत्नैः कृतं वाऽपि पुस्तमित्यभिधीयते ” ॥ इति अमरव्याख्यासुधायाम् । सूदशास्त्रं नलादिपाकशास्त्रम् ॥ ]

---

१२२ विचरति ( प. का ) १२३. उच्छ्वसितं ( प. गो २ ) १२४ दत्तिल ( प )

आतोद्यवादनविधौ नृत्ते गीते च कौशलं तस्याः ।
अभिधातुं यदि शक्तो वदनसहस्रेण भोगिनामीशः ॥ १२५ ॥
( युगलम् )

परिगलदालोलांशुकमपयन्त्रणमुरासि मालती रभसात् ।
निपतति नापुण्यवतां रतिलालसमानसा रहसि ॥ १२६ ॥

रतिरसरभसास्फालनचलवलयनिनादमिश्रितं तस्याः ।
तत्कालोचितमणितं श्रुतिपथमुपयाति नाल्पपुण्यस्य ॥' १२७ ॥

इत्थमाभिधीयमानः शुभमध्ये यदि भवेदुदासीनः ।
एवं ततोऽभिधेयः संदर्शितकोपया दूत्या ॥ १२८ ॥

'किं सौभाग्यमदोऽयं यौवनलीलाभिरूपतादर्पः ।
सहजप्रेमोपनतां मालतिकां न बहु मन्यसे येन ॥ १२९ ॥

न गणयति या कुलीनान् द्रविणवतः शास्त्रवेदिनः प्रणतान् ।
सा भवदर्थे शुष्यति, कुस्थाननिवेशितं धिगनुरागम् ॥ १३० ॥

कमलवनी तीव्ररुचौ, बहुभस्मनि शंभुशिरसि शशिलेखा ।
सा च त्वयि पशुकल्पे, यदभिरता तेन मे कुशता ॥ १३१ ॥

---

॥ १२४ ॥ वीणामुरजवंशीकांस्यादि चतुर्विधवाद्यं आतोद्यम् । [ आतोद्यादित्रयेण तौर्यत्रिकं संपूर्णं सङ्गीतशास्त्रमुक्तम् । ] भोगिनामीशः [ सर्पराजः ] शेषः । [ वदन-सहस्रपदेन काव्यलिङ्गालंकारः, यदीत्यादिना संभावनालङ्कारश्च ] ॥ १२५ ॥ अपय-न्त्रणं विश्रब्धं अपशङ्कम् । [ रभसात् वेगेन । रतिलालसमानसा इत्यनेन रत्यावेगात् नायिकायाः स्वयमभिसारो द्योतितः, स च कामुकप्रार्थनातो वरः ।] ॥१२६॥ रसोऽति-प्रीतिः । [ आस्फालनं परस्परसंघट्टः । ] मणितं रतिकूजितम् । पुण्यवतैव श्रूयते इत्यर्थः ॥ १२७ ॥ [ दानप्रतिनिधौ प्रलोभने निष्फले दण्डप्रतिरूपोपालम्भप्रयोगं उपदिशति इत्थमिति । उदासीनः अधिकृतः ] ॥ १२८ ॥ ' यौवनशील ' इति पाठे सम्बुद्धि-र्बोध्या । [ अभिरूपता रम्यता । दर्पः गर्वः अहङ्कारः सर्वाधिकत्वधीः । ] ॥१२९॥ शुष्यति ताम्यति । [ अत्र अर्थान्तरन्यासः । ] ॥ १३० ॥ [ पूर्वोक्तमेव समुच-

---

पुस्तशा॰ ( प ) । युग्मम् ( प ) । १२६. ॰णमुपरि ( प. कापा ) १२७. भणितं ( गो२. कापा ) रणितं ( कापा ) १२९. यौवनशीला ( गो २ ) १३०. शास्त्र ( का ) । प्रण-यान् ( गो २ ) प्रयतान् ( प ) १३१ कमलवती ( प. का )

असरलमरसं कठिनं दुर्ग्रहमस्निग्धमाश्रिता खदिरम् ।
यदुपैति वाच्यपदवीं मालतिका तत्किमाश्चर्यम् ॥ १३२ ॥

अथवा कः खलु दोषो, यदतुल्यतयोपजनितवैलक्ष्यः ।
स्वाधीनामपि सरसां परिहरति मृणालिकां ध्वाङ्क्षः ॥ १३३ ॥

माऽत्र करिष्यसि खेदं निष्ठुरमुक्तोऽसि यन्मया सुभग ।
यूनां हि रक्ततरुणीसुहृदभिहितपरुषमाभरणम् ॥ १३४ ॥

---

यालंकारद्वारा समर्थयति कमलेति । तल्लक्षणं तु—"तत्सिद्धिहेतावेकस्मिन्यत्रान्यत्तत्करं भवेत् ।" इति काव्यप्रकाशे । 'कमलवती' [ इति पाठे ] कमलिनी । तीव्ररुचिः सूर्यः । पशुकल्पे पशुतुल्ये परव्यथानभिज्ञे इत्यर्थः । तेन तज्जन्यशोकेन । [ अपि च अत्र कोमलानां कमलवन्यादीनां अननुरूपैः तीक्ष्णकरादिभिः वस्तुगत्या सत्थायाः घटनायाः वर्णनात् विषमालंकारः, तेन स्वस्य कार्श्यस्य समर्थनात् काव्यलिङ्गश्च, त्रयाणामत्र सङ्करः ॥ कार्श्याभावेऽपि एवमुक्तिः दूतीधौर्त्यम् । ] ॥ १३१ ॥
असरलम् अनृजुप्रकृतिकम्, अरसं प्रीतिविवर्जितम्, अस्वादं च; कठिनं कर्कशम्, दुर्ग्रहं युक्तयाऽनुकूलयितुं दुःशकम्, अस्निग्धं रूक्षम् । [ खदिरः वृक्षविशेषः 'खेर' इति भाषायां प्रसिद्धः । मालतिका मालती जातिः 'चंबेली' इति भाषायां प्रसिद्धा लता । ] तथा च खदिरतुल्यम् त्वामाश्रिता, वाच्यपदवीं निन्दापरंपरां यत् सहते तत्स्वकृतापराधफलत्वात्, [ यद्वा अनिष्टयोगेन तदनुरूपफलप्राप्त्या, ] अद्भुतं न भवति । [ अत्र वाच्येन अप्रस्तुतेन मालतीलतावृत्तान्तेन सादृश्यात् प्रस्तुतं मालतीनायिकादशाविशेषः व्यङ्ग्यं, तेन अत्र अप्रस्तुतप्रशंसालंकारः स च अत्र श्लिष्टविशेषणादिनिबन्धनः सन् कामपि विच्छित्तिं बिभर्ति ] ॥ १३२ ॥ [ अतुल्यता इयं मत्तः अधिकरूपगुणवती इति असमानता । वैलक्ष्यं विस्मयभावः । मृणालिका कमलिनी । ध्वाङ्क्षः काकः ॥ अत्र पूर्वं उक्तं मालतीदोषवत्त्वं निषिध्य अप्रस्तुतप्रशंसामुखेन नायकदोषविधानात् तद्घटित आक्षेपालंकारः । स च "आक्षेपः स्वयमुक्तस्य प्रतिषेधो विचारणात् ।" इति कुवलयानन्दे । एतेन भट्टपुत्रः अरसिकः पशुतुल्यः नायकगुणहीनश्च इति व्यञ्जितम् ] ॥ १३३ ॥ [ अत्र मालतीसंबन्ध्यनुरागविषये । रक्ता अनुरक्ता । तरुणीसुहृत् सखी । ] ( अभिहित )परुषं कर्कशोक्तिः ॥ [ प्रकारान्तरेण पुनरपि आक्षिपति मा इति । अत्र

---

१३२. °मलसं ( कापा )

चन्द्रमसेव ज्योत्स्ना, कंसासुरवैरिणेव वनमाला।
कुसुमशरासनलतिका कुसुमाकरवल्लभेनेव॥ १३५॥
मदलीला हलिनेव, स्तनयुगलेनेव हारलता।
रम्याऽपि सा सुगात्री रम्यतरा भवतु सङ्गता भवता॥' १३६॥
(युग्मम्)
किं बहुना, यदि यूनामुपरि विधातु समीहसे चरणम्।
तत्कुरु रमणीरत्नं प्रेमोज्ज्वलमङ्कतस्तूर्णम्॥ १३७॥
अथ तद्वचनश्रवणप्रविजृम्भितमदनभट्टदायादः।
उपचरणीयः सुन्दरि निजवसतिमुपागतस्त्वयाऽप्येवम्॥१३८॥
दूरादभ्युत्थानं, प्रणमनमात्मासनप्रदानं च।
प्रविधेयमञ्चलेन प्रस्फोटनमाङ्घ्रियुगलस्य॥ १३९॥

---

आक्षेपरूपकदृष्टान्तालंकाराणां समुच्चयः।]॥ १३४॥ [एवं सामादि उपायत्रयं प्रयुज्य बहूपमासङ्गताशीरलंकारेण युग्ममाह चन्द्रेति। ज्योत्स्ना चन्द्रिका। कंसासुरवैरी कृष्णः। वनमाला "आपादपद्मं या माला वनमालेति सा मता।" इति, यद्वा "पत्रपुष्पमयी माला वनमाला प्रकीर्तिता।" इति, सा च कृष्णवक्षसि नित्यं वर्तते।] कुसुमाकरवल्लभः [वसन्तप्रियः] कामः॥ १३५॥ हली बलरामः॥१३६॥ [उपसंहरति] किमिति। मालतीप्रीतिपात्रतया निखिलतरुणमण्डलीशेखरीभवितुं यदि वाञ्छसि इत्यर्थः। [रमणीरत्नं सुन्दरीषु श्रेष्ठा, "जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते"। इति उक्तेः। तथा च वराहमिहिरः—"स्त्रीणां गुणा यौवनरूपवेषदाक्षिण्यविज्ञानविलासपूर्वाः। स्त्रीरत्नसञ्ज्ञा च गुणान्वितासु, स्त्रीव्याधयोऽन्याश्चतुरस्य पुंसः॥" (बृहत्संहितायां ७७।१२) इति।] अङ्कतः अङ्के [सार्वविभक्तिकः तसिल्।] तूर्णम् शीघ्रम्॥ १३७॥ अथ इति। तस्या वचनश्रवणेन, प्रविजृम्भितः उद्दीपितो, मदनो यस्य सः; भट्टस्य दायादः [दायं पैतृकं धनं आदत्ते इति दायादः] सुतः। उपचरणीयः स्वागतादिविधानेन सेव्यः ॥१३८॥ [वशीकार्यस्य गृहागमने शुश्रूषाप्रकारं युग्मेनोपदिशति दूरादिति।] उपचारानेव दर्शयति दूरात् इत्यादि। [अञ्चलेन परिहितवस्त्रप्रान्तेन।] प्रस्फोटनं प्रोञ्छनम्

---

१३६. हारलतिका च (कापा)। साधुगात्री (कापा) १३७. प्रेमोज्ज्वलसंगतं (का) १३८. श्रवणात् परिचुम्बितमदन° (कापा)। सुस्तनि (गो २)

ईषदयत्नप्रकटितकक्षोदरबाहुमूलकुचयुगलम् ।
संदर्श्य झटिति यास्यसि नायकदृग्गोचरात्तूर्णम् ॥ १४० ॥
अथ पर्यङ्कसनाथं दीपोज्ज्वलकुसुमधूपगन्धाढ्यम् ।
विततवितानकरम्यं प्रवेशितो वासकागारम् ॥ १४१ ॥
माता ते गुरुजघने सादरमवतारणादिकं कृत्वा ।
अभिनन्दनीय एभिर्वचनविशेषैः प्रयत्नेन ॥ १४२ ॥
( युगलकम् )
' अद्याशिषः समृद्धाः, परितुष्टा इष्टदेवता अद्य ।
कल्याणालंकारो यदलंकृतवानिदं वेश्म ॥ १४३ ॥
अनुरूपपात्रघटनं कुर्वाणस्यात्र कुसुमबाणस्य ।
सुचिराद्धत संजातः शरासनाकर्षणश्रमः सफलः ॥ १४४ ॥
विन्यस्य शिरसि चरणं सुभगा गणिकाजनस्य सकलस्य ।
सौभाग्यवैजयन्तीं सम्प्रति वत्सा समुत्क्षिपतु ॥ १४५ ॥
दुहितर एव श्लाघ्या धिग्लोकं पुत्रजन्मसंतुष्टम् ।
जामातर आप्यन्ते भवादृशा यदभिसम्बन्धात् ॥ १४६ ॥

---

॥ १३९ ॥ [ ईषत् रागवर्धनार्थम् । अयत्नं अनिच्छितमिव । ] ' युगलान्तम् ' प्राण्यङ्गत्वात् एकवद्भावः । १४० ॥ [ इतः तन्मातृकार्यमाह अथेति । ] [ वितानकं उल्लोचः ' चंदरवा ' इति भाषायाम् । वासकागारं वासगृहं रतालयम्, " भोगावासो वासगृहम् । " इति हारावली । ] ॥ १४१ ॥ [ माता जननी, यद्वा मातृस्थानीया वृद्धा समयमातृका । ] अवतारणादिकं [ अर्चनादि, ] स्वागतविधानलोककुदृष्ट्यवरोधकनीराजनादिकरणम् ॥ १४२ ॥ कल्याणालङ्कारः मङ्गलस्यापि कान्तिदायकः । ] अलंकृतवान् [ स्वागमनेन शोभितवान्, ] समागत इत्यर्थः ॥ १४३ ॥ [ अनुरूपपात्रेण योग्यभाजनेन, घटनं संयोजनम् । ] ॥ १४४ ॥ [ " सर्वोन्नतत्वं सौभाग्यं तद्वान् सुभग उच्यते । " इति दिवाकरः, स्त्री सुभगा । ] वैजयन्तीं पताकां, समुत्क्षिपतु समुल्लासयतु: सर्वेष्वपि गणिकागणेषु सौभाग्यभाजनं भवतु इत्यर्थः ॥ १४५ ॥ [ अत्र

---

१४०. प्रकटं क ( प )। कुचभागम् ( प. कापा )। गोचरा तूर्णम् ( कापा ) १४१ वासकावासम् (प. कापा) १४३ निमं देशम् (गो २) १४४. घटनां (प. कापा)। अचिरात् (कापा)। सनस्य श्रमः (कापा) १४६. जनन (गो २)। परितुष्टम् ( कापा )

दृढपरिचया गुणज्ञा भवद्विधा मानदा यदपि ।
तदपि हृदयाभिनन्दन दुहितृस्नेहादहं वच्मि ॥ १४७ ॥
सहजप्रेमोपनता न्यस्ता त्वयि मालती, तथा कार्यम् ।
न यथा भवति वराकी त्वद्विप्रियजन्मनां शुचां वसतिः ॥' १४८
मृदुधौतधूपिताम्बरमग्राम्यं मण्डनं च बिभ्राणा ।
परिपीतधूपवर्तिः स्थास्यसि रमणान्तिके सुतनु ॥ १४९ ॥
सस्नेहं सव्रीडं ससाध्वसं सस्पृहं च पश्यन्ती ।
किञ्चिद्दृश्यशरीरा प्रविरलपरिहासपेशलालापा ॥१५०॥ (युग्मम्)

---

अनिष्टसाधनतया प्रतीयमानस्य दुहितृजन्मदोषस्य तादृशजामातृलाभरूपेष्टसाधनत्वावगमेन अनुमत्या अनुज्ञालंकारः । तल्लक्षणं—"दोषस्याभ्यर्थनाऽनुज्ञा तत्रैव गुणदर्शनात् ।" इति कुवलयानन्दे ॥ १४६ ॥ मानदाः अप्रार्थिता अपि उचितं सन्मानादिकं कुर्वन्ति । तदपि तथापि, सुतास्नेहो मुखरयतीति वच्मि इति भावः ॥ १४७ ॥ ] न्यस्ता त्वद्धस्तार्पिता । अत्यन्तं कृपाकुलकलितान्तःकरणतया स्नेहभाजनत्वसूचनाय वराकी इति उक्तम्, अनुकम्पापात्रं इत्यर्थः । त्वद्विप्रियं अनिष्टम्, वियोग इति यावत्; [ यद्वा जाते स्खलनेऽपि त्वया तथा करुणया वर्तितव्यं यथा तस्याः शोको न उद्भवेत् इति भावः । ] ॥ १४८ ॥ [ एवं मात्रा प्रस्तावे कृते इतः १६४ आर्यापर्यन्तं वेश्यायाः रतप्रपञ्चमाह, तत्रादौ नायकोपसर्पणप्रकारं द्वाभ्यामुपदिशति मृदु इति । तत्रादौ परिधानीयं वस्त्रं विशिनष्टि— मृदु कोमलं, स्पृष्टं सत् सुखावहम्; धौतं अत एव निर्मलम्; धूपितं अतः सुवासितम् । मण्डनं भूषणं, अग्राम्यं सूक्ष्मशिल्पनिर्वर्तितम् । परिपीतधूपवर्तिः मुखसौगन्ध्यप्रतिपादनार्थं परि सामस्त्येन पीता गृहीता धूपवर्तिः द्रव्यविशेषो यया सा; 'धूमवर्तिः' इत्यपि शब्दः, तथा च हरविजये—" किं धूमवर्तिमिव तामपि कालरात्रिमेकः पिबामि भवतामधुना पुरस्तात् ।" ( ३५ । ४८ । ) इति । धूपवर्तिः नानाविधा, तासु एका यथा नागरसर्वस्वे—" कर्पूरागुरुचंदनमुस्तकपूतिप्रियङ्गुवालं च । मांसी चेति नृपाणां योग्या रतिनाथधूपवर्तिरियम् ॥ " ( ४ । १६ । ) इति ॥ ] १४९ ॥ [ पूर्वेण वेषादिकं उक्त्वा अनेन चेष्टामाह सस्नेहमिति । स्नेहः अनुरागः, व्रीडा लज्जा, साध्वसं भयं, स्पृहा तृष्णा अभिलाषा । अनेन भाववाही दृष्टिचारः उक्तः । भारतीये नाट्यशास्त्रे अष्टमाध्याये तासां लक्षणानि, यथा—" व्याकोशमध्या मधुरा स्मितताराऽभिलाषिणी । सानन्दभ्रूकृता

---

१४७. 'धा नार्थनार्हा य' (प) । 'पि च नयनानंदन (कापा) । वक्ष्ये (गो.का.) । १४८. प्रेमोपहृता (प) १४९ वर्ति (प)

मातरि निर्यातायां, परिजनमुक्ते च वासकस्थाने ।
अभियुञ्जाने रमणे, क्षमाचरणं क्षणं कार्यम् ॥ १५१ ॥
रतिसङ्गरनिहितमतावाकर्षति रभसतः पुरस्तस्मिन् ।
कुट्टमितमाचरन्ती जनयिष्यसि किञ्चिदङ्गसङ्कोचम् ॥ १५२ ॥
प्रारब्धे सुरतविधौ क्रमदर्शितचित्तयोनिसंवेगा ।
अपशङ्कमर्पयिष्यसि निर्व्याजं पुत्रि गात्राणि ॥ १५३ ॥
यद्यद्वाञ्छति हन्तुं यद्द्रष्टुं यच्च विलिखितुं गात्रम् ।
तत्तदपसारणीयं सावेगं, ढौकनीयं च ॥ १५४ ॥
दंशे सव्यथहुंकृतिमामर्दे विविधकण्ठरसितानि ।
नखविलिखने च सीत्कृतिमाघातेषूल्बणं क्वणितम् ॥ १५५ ॥

---

दृष्टिः स्निग्धैवं रतिभावजा ॥ ५३ ॥ किञ्चिदञ्चितपक्ष्माग्रा पतितोर्ध्वपुटा ह्रिया । त्रपाधोगततारा च दृष्टिर्लज्जान्विता तु सा ॥ ६३ ॥ विस्फारितोभयपुटा भयकम्पिततारका । निष्क्रान्तमध्या दृष्टिस्तु भयभावे भयान्विता ॥ ५८ ॥" इति । ] स्नेहादयः तात्कालिकविधेयाः । [ अतिहासे ग्राम्यत्वं स्यात् इति तदभावसूचनाय प्रविरलेत्याद्युक्तं तेन पेशलो मनोज्ञः आलापो यस्याः सा, यद्वा मध्ये मध्ये नर्मवाक्यं प्रयुञ्जाना । " सहास्यवचनप्रायं नर्मेच्छन्ति मनीषिणः । " इत्युक्तेः ॥ ] ॥ १५० ॥ [ इतः १६४ आर्यापर्यन्तं वेश्योचितं रतक्रमं समुपदिशति मातरीति । ] [ परिजनः दास्यादिः । ] अभियुञ्जाने विलासार्थं उपक्रममाणे । वामाचरणं [ प्रतीपाचरणं, स्वाङ्गसमर्पणप्रातिकूल्यम्, ] उद्दीपनाय अनुज्झितरसं निषेधादि । [ क्षणं न तु दीर्घकालम् । ] ॥ १५१ ॥ [ रतिसङ्गरः रतियुद्धं संभोगः । रभसतः हर्षात् वेगात् वा । पुरः अग्रतः । ] कुट्टमितं संभोगसामयिकोऽङ्गना[ शृंगार ]चेष्टाविशेषः, [ स्वभावजभावेषु एकः । ] " केशस्तनाधरादीनां ग्रहे हर्षेऽपि संभ्रमात् । प्राहुः कुट्टमितं नाम शिरःकरविधूननम् ॥" इति साहित्यदर्पणे ॥ १५२ ॥ चित्तयोनेः कामस्य, [चित्तस्य योन्याश्च इति शब्दसूचनम्,] [ चित्तं च योनिश्चेति द्वन्द्वो वा । ] संवेगोऽभिनिवेशावेशः । निर्व्याजं अकपटम् ॥ १५३ ॥ हन्तुम् उपपीडयितुम् । विलिखितुं नखरादिभिः इति शेषः । ढौकनीयं साम्मुख्यं नेयम् ॥ १५४ ॥ उल्बणम् अधिकतरम् । हुंकृतिप्रभृतयो—मणितपर्याया

---

१५१ °णं त्वया ( प ) १५२ विहित ( प. का ) । पुनः ( प. कापा ). १५३ °यो-निसंयोगा ( प. कापा ) १५५. लिखनेषु ( गो २ ) । सीत्कृत° ( प ) । नखरक्षतेषु सीत्कृत० ( कापा )

ह्रस्वायासश्वासान् मुञ्चन्ती पुलकदन्तुरशरीरा ।
स्विद्यत्सकलावयवा प्रकरिष्यसि रागवृद्धये पुंसाम् ॥ १५६ ॥
( युग्मम् )

अव्यक्तध्वनयः । [ दंशे दशनैः इति शेषः दशनच्छेदे । तत्स्थानानि तु—" कक्षोदरस्तनयुगं च कपोलभागौ । कण्ठं च दन्तपरिपीडनसत्पदानि ॥ " ( २ । ७३ ) इति शृंगारदीपिकायाम् । नायकेन तत्प्रयोगे नायिकाया हुंकृतिः स्वभावतो भवति । तथा च अनङ्गरङ्गे—" हिंकारसीत्कारविशेष उक्तो दन्तार्पणे कामकलाविदग्धैः ॥" इति ( ९ । ३० ) । आमर्दे स्तनादीनां बलात् निष्पीडने, यथायोग्यं नानाप्रकाराणि कण्ठशब्दितानि, तानि च " परभृतलावक " ( १५७ ) इत्यादिना स्वयमेव वक्ष्यति ॥ नखविलिखने नखक्षते । तत्स्थानानि तु—"कक्षाकण्ठकपोलं च नाभिः श्रोणिकुचौ तथा । भगस्कन्धौ कर्णमूले त्रयोदश नखालयाः ॥" इति स्मरदीपिकायाम् । नखक्षता रागाधिक्ये प्रायः नायकेनैव क्रियन्ते । तत्र नायिकायाः सीत्कृतिः—नखजपीडानुभवसूचकं सीच्छब्दाभिनेयं शब्दितं । सीत्कृतिहुंकृतीत्यादिशब्दाः तत्तद्ध्वनीनां अनुकाराः । सूक्ष्मेक्षिकावद्भिः तेषां भेदाः प्रतिपादिताः । हुंकृतिः प्रतिषेधार्थिका कपोतरुतवच्च, तथा च नैषधीयचरिते—" आलीव पश्य प्रतिषेधतीयं कपोतहुंकारगिरा वनाली ॥ " ( ३ । १४ ) इति; यद्वा भृङ्गगुञ्जावत्, यथा " क न भ्रमरयोषितां गलदहंकृतिर्हुंकृतिः । " ( १०६ ) इति शंभुकृतान्योक्तिमुक्तालतायाम् । सीत्कृतविषयं कस्यचित् पद्यं, " समादिष्टं शिष्टैरसमभिह यन्निर्वृतिपदं, पुनर्दग्धोऽप्याशु प्रभवति यतो मन्मथतरुः । श्रुते यस्मिन्कामी भवति कृतकृत्यो रतिमुखे, स सीत्कारः पायादमृतविजयी सुन्दरदृशाम् ॥" इति । सीत्कृतिलक्षणं तु—"यूनोः प्रहणनाज्जातपीडाव्यक्तिकृते भवेत् । गलादिजातो यः शब्दविशेषस्तद्धि सीत्कृतम् ॥ " इति रतिरत्नप्रदीपिकायाम् । तच्च हिंकृतादिभेदेन सप्तदशधा तत्र कथितम् ॥ यद्वा, "वंशविस्फुटनवच्च सीत्कृतम् ।" इति रतिरहस्ये ( १० । ५६ ) । आघातेषु—स्कन्धौ शिरः स्तनान्तरं पृष्ठं जघनं पार्श्वे इति तत्स्थानानि, तत्र अपहस्तकादिचतुर्विधभेदेन प्रहणनेषु ताडनेषु; उल्बणं स्फुटं, क्वणितं नूपुराणामिव ध्वनिः, यथा विद्धशालभञ्जिकायां—" अमन्दमणिनूपुरक्वणनचारुचारीक्रमम् " इति । १५५ ॥ ] [ ह्रस्वान् लघून् वारंवारमित्यर्थः, ] आयासः श्रमः, तदभिव्यञ्जकश्वासान् । ] दन्तुरं व्याप्तम् । अवयवा अङ्गानि । [हुंकृत्यादेः प्रक-

१५६. प्रभविष्यसि ( गो )

परभृतलावकहंसकपारावततुरगहृदयनिःस्वनितम् ।
अनुकार्यमुचितकाले कलकण्ठि रुतैस्त्वया रसतः ॥ १५७ ॥
'मामा मामतिपीडय, मुञ्च क्षणमदय, नो समर्थोऽस्मि ।'
इति गद्गदास्फुटाक्षरमभिधातव्यस्त्वया कामी ॥ १५८ ॥
अनुबन्धमानुकूल्यं वामत्वं प्रौढतामसामर्थ्यम् ।
सुरतेषु दर्शयिष्यसि कामुकभावं स्फुटं बुद्ध्वा ॥ १५९ ॥

---

रिष्यसि इत्यत्रान्वयः । ] ॥ १५६ ॥ परभृतादिस्वनितानि उद्दीपकानि भवन्ति इति रसतः प्रीतिप्रदर्शनपुरःसरं कर्तव्यत्वेन विहितानि । [ परभृतः कोकिलः, ] लावकः [ चित्रदेहः ] लावाख्यः पक्षी, अन्ये प्रसिद्धाः । [ " तिरश्चां वाशितं रुतम् । " इति अमरः।][ अन्यत्रापि–"लावकोकिलकपोतहंसिकानीलकण्ठरुतसन्निभात् क्रमात्। संदधाति किल हिंक्कृतादिकं चित्रभोगसमये विलासिनी ॥" इति अनङ्गरङ्गे (१०।४९) ] "तत्र ( समतलकरताडने ) लावकहंसकूजितं त्वरयैव" ( २ । ७ ) इति वात्स्यायनः । अन्येषां प्रकाराणां एवमेव विवेक ऊह्यः ॥ अत्र कुट्टनीमते अश्वहेषाध्वनिः कव्यनुभवमूलकः ज्ञेयः, अन्यत्रानुल्लेखात्, यद्वा तत् अभ्रस्तनितस्थानीयम्; तच्च सबलायाः चण्डवेगायाः संभवति ॥ ] [ पूर्वोक्त( १५५ )सीत्कृतादितः रुतानां भेद एव। तदुक्तं वात्स्यायनेन–"पारावतपरभृतहारीतशुकमधुकरदात्यूहहंसकारण्डकलावकविरुतानि सीत्कृतभूयिष्ठानि विकल्पशः प्रयुञ्जीत ॥ " इति । तत्र जयमङ्गलः–" सीत्कृतं हि स्वरान्तरसंश्लिष्टं मनोहारि स्यात्, विभागश्लिष्टगीतवत् । " इति । अत्र स्वरान्तरं रुतम् ] ॥ १५७ ॥ [ इदं " यदा रागस्योद्रेकात् नायकः पौनःपुन्येन प्रहरेत् तदा वारणार्थानां प्रयोगो युक्तः···सह खिन्नाभ्यां श्वसितरुदिताभ्यां वर्तते यत्र स्तनितं तेन योजितः " इति जयमङ्गलोक्तिसमानम् । गद्गदास्फुटाक्षरं इत्यनेन श्वसितरुदिते लक्ष्येते ॥ तथा च गूर्जरेश्वरमहामात्यवसन्तपालविरचिते नरनारायणानन्दकाव्ये— 'अलमलमिति वाचमाचरन्त्यो, रभसं तु प्रसभं रते वहन्त्यः । कृतकरुदितचञ्चवोऽपि चञ्चचटवो यूनि मुदं ददुस्तरुण्यः ॥ " ( ६ । ४८ । ) इति । १५८ ॥ ] अनुबन्धं अनुरागं, [ आनुकूल्यं प्रियस्य सुरताङ्गकर्मजनकव्यापारवत्ता, तथा च माघः—" यद्यदेव रुरुचे रुचिरेभ्यः सुभ्रुवो रहसि तत्तदकुर्वन् । आनुकूलिकतया हि नराणामाक्षिपन्ति हृदयानि तरुण्यः ॥ " ( १० । ७९ ) इति । ( क्वचित् ) वामत्वं प्रतिकूलत्वं निषेधवत्त्वं, [ तदुक्तं शृङ्गारतिलके " वामता दुर्लभत्वं च स्त्रीणां या च

---

१५७ कण्ठरुतैः ( प ) १५९ अनुरागमा० ( गो २) भावं स्वयं ( गो. का. )

असमञ्जसमश्लीलं दूरोज्झितधैर्यमविनयप्रसरम् ।
व्यवहारमाचरिष्यसि वृद्धिमुपेते रतावेगे ॥ १६० ॥
अविचेतितनखरक्षतिरामीलितलोचना निरुत्साहा ।
नायककार्यसमाप्तौ स्थास्यसि शिथिलीकृतावयवा ॥ १६१ ॥
झटिति नितम्बावरणं, निःसहतनुतां, स्मितं सवैलक्ष्यम् ।
खेदालसां च दृष्टिं, जनयिष्यसि मोहनच्छेदे ॥ १६२ ॥

---

निवारणा । तदेव पञ्चबाणस्य मन्ये परममायुधम् ॥ " ( २ । ३० ) इति ] [ प्रौढता प्रागल्भ्यं, असामर्थ्यं अशक्तिमत्ता असहिष्णुता वा । ] भावः अभिप्रायः । [ स्फुटं व्यक्तम् । ] [ 'स्वयं' इति पाठे स्वत एव, तथा च नरनारायणानन्दकाव्ये— " रुचितमभितेषु यद्यदासीत्प्रमदास्तत्तदनुक्तमेव चक्रुः । हृदयमपि विदन्त्यमूर्यदेषां नियतं सन्ततमन्तरा वसन्त्यः ॥ " ( ६ । ४४ ) इति । ] ॥ १५९ ॥ [ रतकाले नायकवेगे वृद्धिमाप्ते तद्रञ्जनार्थं कर्तव्यविशेषमाह असमञ्जसमिति । असमञ्जसं अनुचितं असङ्गतं वा, अश्लीलं व्रीडादिसम्पादकं, दूरोज्झितधैर्यं विलम्बाद्यसहत्वं, अविनयप्रसरं स्वापकर्षभावरहितं, व्यवहारं वाचि क्रियायां च । अत्र "शास्त्राणां विषयस्तावद्यावन्मन्दरसा नराः । रतिचक्रे प्रवृत्ते तु नैव शास्त्रं न च क्रमः ॥ " इति वात्स्यायनोक्तेरेव ( २।२ ) विस्तरः; वात्स्यायने ' नराः ' इति स्त्रीणामप्युपलक्षणम् ॥ असमञ्जसं यथा विपरीतरतादि; अश्लीलं–तदधिकृत्य उक्तं काव्यप्रकाशे सप्तमोल्लासे–" अश्लीलं क्वचिद्गुणः; यथा सुरतारम्भगोष्ठ्यां, " द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु " इति कामशास्त्रस्थितौ ।" इति, यद्वा यथा साधनचुम्बनादि च; दूरोज्झितधैर्यं यथा रतयाचनादिकं; अविनयप्रसरं यथा प्रिये ताडननखक्षतादिकरणम् । अन्यदा यदसमञ्जसादिकं गण्यते तत् सुरते तादृक् न । तथा च माघकाव्ये–" अन्यदा भूषणं पुंसः क्षमा लज्जेव योषितः । पराक्रमः परिभवे वैयात्यं सुरतेष्विव ॥ " ( २।४४ ) इति, वैयात्यं धार्ष्ट्यम् ॥ कविश्च स्वयमेव अत्र हारलतासुरतवर्णने–" अविनय एव विभूषणमश्लीलाचरणमेव बहुमानः । निःशङ्कतैव सौष्ठवमनवस्थितिरेव गौरवाधानम् ॥ " ( ३७६ ) इति व्याकरोति । ] ॥ १६० ॥ अविचेतिता ज्ञाताऽप्युपेक्षिता । नायककार्यसमाप्तौ रतावसाने । [ तदुक्तं रतिरहस्ये ( १० । ४४ ) " स्रस्तता वपुषि, मीलनं दृशोः, मूर्छना च रतिभावलक्षणम् ॥ " इति; रतिभावः सुरततृप्तता । ] ॥ १६१ ॥ [ निःसहतनुता खिन्नाङ्गता । सवैलक्ष्यं सव्रीडम् । ] [ खेदालसां मुकुलिताम् । तथा च

---

१६० रसावेगे (गो २ का) रताधीरा (प) रतावसरे (कापा) १६१ अविदितनखर० (गो २) अवेदितनखर (प. कापा) । समाप्त्यै (कापा) १६२ झगिति (प. ग)

वृत्ते रताभियोगे, स्पृष्ट्वा सलिलं विविक्तभूभागे ।
प्रक्षाल्य पाणिपादं, स्थित्वा क्षणमासने, समूह्य कचान् ॥१६३॥
उपयुक्तवदनवासा शय्यामारुह्य दर्शितप्रणया ।
इति वक्ष्यसि तं रमणं दृढतरमालिङ्ग्य रभसतः कण्ठे ॥१६४॥
(युग्मम्)

'भट्टसुत नूनमिष्टा तव जाया यदनुरक्तहृदयस्य ।
जनयति परितुष्टिमलं, नापररामापरिष्वङ्गः ॥ १६५ ॥
सफलं तस्या जन्म, स्पृहणीया सैव सकलललनानाम् ।
गौरी तयैव महिता, सुभगङ्करणं तपस्तया चरितम् ॥ १६६ ॥
सैवैका गुणवसतिस्तस्या एवान्वयः सदा श्लाघ्यः ।
यस्याः शुभशतभाजः पाणिग्रहणं त्वया विहितम् ॥ १६७ ॥
(युग्मम्)

तिष्ठतु सा पुण्यवती वंशद्वयभूषणं वरारोहा ।
या नापयाति भवतो लक्ष्मीरिव नरकवैरिणो हृदयात् ॥१६८॥

---

भरतः—"रतान्ते च श्रमे चैव सुखसंभोगभावने । गन्धे स्पर्शे च हर्षे च मुकुला दृष्टिरिष्यते ॥" इति ] ॥ मोहनं सुरतम्, [ तस्य च्छेदे समाप्तौ । ] ॥ १६२ ॥ [ सुरतावसानिकं कृत्यान्तरमुपदिशति । वृत्ते इति । ] विविक्ते पूर्वमनधिष्ठिते पूतभूभागे, [ यद्वा विजने एकान्ते इत्यर्थः । ] समूह्य संयम्य ॥ १६३ ॥ [ वदनवासः ताम्बूलादिभिः मुखस्य सुगन्धीकरणम् । ] 'उपयुक्तरदनवासा' [ इति पाठे ] वासयोगाधिवासितरदना इत्यर्थः । [ रभसात् वेगात् हर्षात् वा, "रभसो वेगहर्षयोः" इति विश्वः । ] ॥ १६४ ॥ [ "तत्र अनुकूलाभिः कथाभिरनुवर्तेत ।" इति वात्स्यायनोक्तं ( २ । १० ) प्रस्तुते प्रपञ्चयति । तत्रादौ आकर्षणार्थं रागविवृद्ध्यर्थं च सेर्ष्योक्ति अनुवदति पञ्चभिः भट्टेति । जाया परिणीता । अलं पर्याप्तं अव्ययम् । ] परितुष्टिं सन्तोषम् । [ अपरा च त्वया न सेव्यते इत्यर्थः । ] ॥ १६५ ॥ महिता पूजिता । सुभगङ्करणं सौभाग्यजनकम् ॥ १६६ ॥ अन्वयो वंशः । [ शुभशतं बहुपुण्यम् । ] पाणिग्रहणम् विवाहः ॥ १६७ ॥ तिष्ठतु आस्ताम् [ दूरे तस्याः वार्ता ] । [ पितृवंशः मातृवंशश्च इति

---

१६३ विकृष्टभूभागे ( प. कापा ) । समार्थं कचान् ( प. कापा ) १६४ युक्तरदन ( गो. का. ) । इत्थं वक्ष्यसि रमणं (गो २ )१६८ तिष्ठति ( कापा )

पातयसि कुवलयनिभे कौतुकमात्रेण लोचने यासु ।
ता अपि सत्यं सुन्दर हर्षोच्छलिता न मान्ति गात्रेषु ॥१६९॥
(संदानितकम्)

तनुरपि नाथप्रणयः प्रायो मुखरीकरोति लघुमनसः ।
स्वार्थनिवेशितचित्ता करोमि तेऽभ्यर्थनां तेन ॥ १७० ॥
तीव्रस्मरतारुण्याच्चापलतः कौतुकेन घृणया वा ।
भद्भाग्यसंपदा वा दूत्या वा कौशलात् स्वभावाद्वा ॥ १७१ ॥
योऽयं प्रेमलवांशः प्रदर्शितोऽस्मासु जीवनोपायः ।
बाधा नात्र विधेया गणिकाजनभावमन्यथा बुद्ध्वा ॥ १७२ ॥
(युग्मम्)

येन स्नेहः क्रोधः शाठ्यं दाक्षिण्यमार्जवं व्रीडा ।
एतानि सन्ति तास्वपि जीवद्धर्मोपनीतानि ॥ १७३ ॥

---

वंशद्वयम् । वरः सुन्दरः आरोहो नितम्बः यस्याः सा वरारोहा । ] नरकवैरी [ नरको निरयः यद्वा तन्नामको दानवः, तस्य वैरी ] नारायणः ॥ १६८ ॥ पातयसि प्रक्षिपसि, कुवलयाभ्यां तुल्ये कुवलयनिभे, कौतुकमात्रेण केवलं कुतुकात्, न तु आसक्त्यादिना । उच्छलिताः परिपूर्णाः, गात्रेषु न मान्ति उल्लङ्घितमानमानसोल्लासहासा भवन्ति इत्यर्थः । [ संदानितकं—चतुर्भिः वृत्तैः एकान्वयसम्बन्धेन भवति, चतुःश्लोकसम्बद्धगुच्छकः, अस्यैव चक्कलकं इत्यपि संज्ञा कश्मीरेषु । ] ॥१६९॥ [ प्रणयः प्रीतिः । ] लघुमनसः [ लघु निःसारं मनः चेतः येषां ते, निकृष्टा इत्यर्थः, प्रस्तुते ] अनुकंपनीयाः याः । [ अभ्यर्थनां प्रार्थनाम् । ] ॥ १७० ॥ तीव्रः स्मरः कामो यस्मिन् तस्मात् तारुण्यात्, [ चापलतः चित्तचाञ्चल्येन, कौतुकेन कुतूहलात्, ] घृणया निःसीमानुजिघृक्षया अनुकम्पया, [ भाग्यसंपदा पूर्वतनसुकृतसमृद्ध्या, दूत्याः पूर्वं स्वप्रेषितायाः कौशलात् चातुर्यात्, स्वभावात् निसर्गतः । ] ॥ १७१ ॥ [ प्रेमलवांशः अल्पमात्रं प्रेम, स एक एव तस्या जीवनोपायः प्राणधारणसाधनम् । बाधा कदापि निषेधः । अत्र प्रेमविषये । भावं चित्ताभिप्रायम् । ] अन्यथा केवलस्वार्थप्रवणतादिरूपम् ॥१७२॥ [ येन यतः, शाठ्यं धौर्त्य, दाक्षिण्यं परच्छन्दानुवर्तित्वं, आर्जवं सरलाशयत्वं । यथा गणिका-

---

१६९ हर्षोल्लसिता ( गो. प. कापा) १७० करोति (प) १७१ कौतुकेन प्रणयाद्वा । ( कापा ) १७२ जनवृत्तमं ( गो २ ) जनहृदयमं ( कापा )

निर्व्याजसमुत्पन्नप्रबलप्रेमाभिभूतहृदयानाम् ।
दयितविरहाक्षमाणां गणिकानां तृणसमाः प्राणाः ॥ १७४ ॥
अत्राकर्णय साद्भुतमाख्यानं वर्णयामि यद्वृत्तम् ।
अद्यापि बिभर्ति वटो विशेषणं यदभिसम्बन्धात् ॥ १७५ ॥
'अस्ति महीतलतिलकं सरस्वतीकुलगृहं महानगरम् ।
नाम्ना पाटलिपुत्रं परिभूतपुरन्दरस्थानम् ॥ १७६ ॥
त्रिभुवनपुरनिष्पादनकौशलमिव पृच्छतो विरिञ्चस्य ।
दर्शयितुं निजशिल्पं वर्णकमिव विश्वकर्मणा विहितम् ॥१७७॥

---

न्ययोषित्सु तथा तासु गणिकासु अपि । गणिका-भर्तृत्वेन गणः समुदायोऽस्ति अस्याः इति सा वेश्या । ] जीवतां धर्मेण सन्निसर्गेण ( उपनीतानि ) संपादितानि स्नेहादीनि तासामपि भवन्ति, तेन ताः सर्वाः केवलं द्रविणप्रवणाः एव भवन्ति इति न शङ्कनीयं इत्यर्थः । [ एतेषां गुणदोषाणां स्त्रीसामान्यत्वात् गणिकासु दृश्यमाना गुणा न सर्वथ कपटमूलाः, दोषाश्च क्षम्या इति भावः । ] ॥ १७३ ॥ [ तास्वपि कंचिद्विशेषं दर्शयति निर्व्याजेति । निर्व्याजं निरुपधि निष्कपटं,] अभिभूतम् आक्रान्तम् । तृणसमा इति प्रियप्रेम्णोऽग्रे प्राणानपि गणिका न गणयन्ति इत्यर्थः ॥ १७४ ॥ [ साद्भुतं आश्चर्ययुक्तम् । वटः न्यग्रोधवृक्षः वड इति प्रसिद्धः । ] विशेषणं तदाख्यायिकोपज्ञं स्मारकाभिज्ञापनं व्यपदेशं [ 'वेश्यावट' इति विशिष्टं नाम ] बिभर्ति ॥ १७५ ॥ [ नायकमनःसमाधानार्थं मालती हारलतोपाख्यानमारभते । तत्रादौ तन्नायकनिवासस्थलं पाटलिपुत्रं नाम नगरं वर्णयति १९२ आर्या यावत् । ] [ महीतलतिलकं महीतलस्य तिलकं तिलकमिव, यथा स्त्रियः ललाटे तिलकं विशेषकं तद्वत्; यद्वा, महीतले तिलकं श्रेष्ठम्, " तिलकं द्रुमभेदे च···ललामेऽस्त्री तु चित्रके । " इति विश्वलोचने । ] सरस्वतीकुलगृहं विद्यानित्यनिवासस्थानम् । [ महानगरं शाखानगरयुक्तं पत्तनम् । पाटलिपुत्रं अधुना पत्तनशब्दात् 'पटना' इति प्रसिद्धम्, प्राचीनकाले गङ्गाशोणयोः सङ्गमे स्थितम्; तन्निर्माणकथा च कथासरित्सागरे तृतीयतरङ्गे द्रष्टव्या । परिभूतं विजितं, पुरन्दरस्थानं अमरावती । ] ॥ १७६ ॥ विरिञ्चस्येति सम्बन्धसामान्यविवक्षया षष्ठी, [ यद्वा उद्देश्यविधेयभावरूपसम्बन्धे षष्ठी, ] पृच्छते विरिञ्चाय ब्रह्मणे दर्शयितुं इत्यर्थः । वर्णकं [ अनुकरणार्थं मूलभूतं ] चित्रकम् । [ उक्तं च—" रूपातिशयकर्तृणां

---

१७७ विरञ्चस्य ( प )

अश्रेयोभिरनाश्रितमभिभूतं नाभिभूतिदोषेण ।
न स्वीकृतमुपसर्गैः, कलिकालमलैरनालीढम् ॥ १७८ ॥
पातालतलं भोगिभिरम्भोधिर्विविधरत्नसंघातैः ।
सुरसदनं विबुधगणैर्द्रविणोपचयैः पुरं कुबेरस्य ॥ १७९ ॥
महिलाभिरसुरविवरं कटकं हि हिमाचलस्य गन्धर्वैः ।
हरिनगरं क्रतुयूपैः, शमविभवैर्मुनिजनस्थानम् ॥ १८० ॥

---

प्रतिच्छन्दो हि कारणम् ॥ " इति । ] [ विश्वकर्मा सुराणां शिल्पी, शिल्पं च आलेख्यं लेख्यं दारुकर्म चितिकर्म पाषाणकर्म रौप्यकर्म देवकर्म चित्रकर्म इति भेदैः अष्टविधम् । ] ॥ १७७ ॥ [ अश्रेयः अमङ्गलम् । अभिभूतिः पराभवः । ] उपसर्गैः उत्पातैः, " अजन्यं क्लीब उत्पात उपसर्गः समं त्रयम् । " इति अमरः । [ मलम् दोषः, ] अनालीढम् अस्पृष्टम् अव्यातम् ॥ १७८ ॥ [ इतो द्वाभ्यां हेतुरूपकालंकारमुखेन तन्निवासिनः तत्समृद्धिं च वर्णयति पातालेति । ] भोगिभिः इत्यादौ उपलक्षणे तृतीया, तथा च तत्सहितं पातालतलम् इत्याद्यर्थः । [ भोगिभिः विलासिभिः, पक्षे सर्पैः । सुरसदनं अमरावती, " विबुधः पण्डिते देवे " इति विश्वलोचनः । कुबेरस्य पुरं अलका । ] ॥ १७९ ॥ महिलाभिः [ मह्यन्ते पूज्यन्ते कामिजनेन इति, महेला इत्यपि शब्दः, ताभिः ] अङ्गनाभिः । असुरविवरं अतलं भूविवरविशेषः, [ अतलादिषु सप्तसु अपि पातालेषु प्रत्येकं ' पुरसहस्राणि नागदानवरक्षसाम् ', तेषु असुरवर्गवसतिप्रवेशार्थो भूगर्भमार्गः असुरविवरं, तत्तत्पुरेषु च महिलानां सुन्दरीणामेव प्राचुर्यम् । अत एव हर्षचरिते चतुर्थोच्छ्वासे चक्रवर्तिदर्शनार्थं आगच्छन्ति सामन्तान्तःपुरसहस्राणि " असुरविवराणीव अपावृतानि " इत्युत्प्रेक्षितं भट्टबाणेन । पुनश्च स एव तत्र षष्ठे गजाध्यक्षस्कन्दगुप्तविज्ञप्तौ प्रमाददोषाभिषङ्गोदाहरणेषु—" असुरविवरव्यसनिनं चापजन्हुरपरिमितरमणीमणिनूपुरझणझणाह्लादरम्यया मागधं गोधनसुरुङ्गया स्वविषयं मेकलाधिपमन्त्रिणः । " इति । एतदाद्यनुसारेण ' असुरविवर ' शब्दः तत्रतत्र व्याख्येयः; यथा तत्रैव प्रथमे बाणसुहृत्सहायपरिगणने " असुरविवरव्यसनी लोहिताक्षः, " इति, तृतीये च स्थाण्वीश्वराख्यजनपदवर्णने—" असुरविवरमिति वातिकैः, शाक्याश्रम इति शमिभिः, " इति, तत्र वातिकैः वातविशेषगृहीतैः असुरविवरान्वेषणग्रहिलैः इत्यर्थः; अतः हर्षचरितसङ्केते " वातिकैर्विवरव्यसनिभिराचार्यैः " इति शङ्करकृतव्याख्यानं उपेक्षणीयम् ॥ एवमेव कादंबरीकथायां जरद्द्रविडधार्मिकवर्णने

---

१७८ नाभिभुवि ( प ) १८० कटकं हेमा° ( प )

तिष्ठन्तु सकलशास्त्रव्यालोकनविमलबुद्धयो विप्राः ।
सदसद्गुणनिर्णीतौ ललना अपि निकषभूमयो यत्र ॥ १८१ ॥
कलिकालोदितभीत्या क्रतुहुतवहधूमकम्बलावरणः ।
तिष्ठन्निभृतोऽपि वृषश्चरितैरनुमीयते यत्र ॥ १८२ ॥
अपहरति पिधातुमिव स्वकलङ्कं शशधरः प्रसार्य करान् ।
रात्रौ यत्र वधूनां लावण्यं वदनकोशेभ्यः ॥ १८३ ॥

---

" लग्नासुरविवरपिशाचेन " इत्यस्यार्थः उन्नेयः । ] कटकं मध्यभागः, [ गन्धर्वैः गायकैः । ] हरिनगरं हरिद्वारनगरं, [ यद्वा रामाभिधानस्य हरेः नगरं अयोध्या, तत्रैव बहुभिः सूर्यवंश्यै राजभिः कृतासंख्ययज्ञत्वात् ; क्रतुयूपः क्रत्वर्थं यज्ञार्थं यूपः यज्ञियपशु-बन्धनार्थं दारुनिर्मितः कीलविशेषः । शम एव विभवः धनं येषां ते शमविभवाः मुनीन्द्राः तैः, मुनिजनस्थानं बदरिकाश्रमः ॥ अत्र श्लोकद्वये विविधारोपात् मालारूपकं, प्रस्तुतनगरं च पातालतलादि कथं भवतीति विरोधालंकारः, प्रस्तुतस्य नानाविधसमृद्धि-मत्त्वख्यापनपरिणामाच्च व्यङ्ग्य उदात्तालंकारः ] ॥ १८० ॥ [ निकषः सुवर्णादि-कषपाषाणः । ] निकषभूमयः परीक्षणस्थानानि [ इत्यर्थः । ] [ अत्र आक्षेपालंकारो व्यंग्यः उक्तार्थस्य प्रतिषेधाभावात् ॥ कालिदासोक्तिस्तु—" तं सन्तः श्रोतुमर्हन्ति सदसद्व्यक्तिहेतवः । हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकाऽपि वा ॥ " इति रघु-वंशे ( १ । १० ) ] १८१ ॥ क्रतु इत्यादि—यज्ञीयवैश्वानरधूम एव कम्बलतुल्यं आवरणं प्रावारो यस्य, ततश्च कलिना द्रष्टुमपि अशक्य इत्यर्थः । निभृतः गुप्तः । वृषः धर्मः । चरितैः अनुमीयते—धर्मः स्वरूपतोऽदृश्योऽपि कलिभीत्या मन्ये यज्ञी-यधूमाच्छन्नः सम्पन्नो निभृतश्चरति, जनसदाचारैश्च निश्चीयते । तत्रत्याः सर्वे धार्मिकाः इत्यर्थः । [ अत्र व्यंग्योत्प्रेक्षारूपकालंकाराभ्यामनुप्राणितः अनुमानालंकारः । न च अनु-मानस्य अनलंकारत्वं शङ्कनीयम्, कविप्रतिभोत्थापितस्य शब्दार्थरचनावैचित्र्यस्य वक्रो-क्त्यपरनाम्न एव काव्यालंकारबीजभूतत्वात् । शास्त्रीयानुमाने तु न वैचित्र्यस्य अवकाशः । काव्येषु एतादृशस्थलेषु विशेषेण अलंकारान्तरेण प्रयोजितेषु अनुमानेषु तत्सत्त्वं स्फुटमेव ॥ ] १८२ ॥ [ पिधातुं अपवरितुम् । ] कराः किरणाः हस्ताश्च । [ "मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु लावण्यं तदिहोच्यते ॥ " इति लक्षितं रसार्णवसुधाकरे । कोशः, कोष इति मूर्धन्यान्तोऽपि अयं, अर्थसङ्ग्रहः । अपहरति इव इत्यन्वयः । अत्र श्लेषमूलिका क्रियोत्प्रेक्षा । रात्रौ निशि, सा च चौर्यानुकूलसमयरूपा

---

१८१ शुद्धबुद्धयो ( कापा ) १८२ क्रतुहुतवहधूम ( प ) । तोऽपि कृतश्च ( प )

तिमिरपटलासिताम्बरमपहरदभिसारिकाजनौघस्य ।
निजतनुकान्तिवितानं वल्लभसंभोगविहितये यत्र ॥ १८४ ॥
यत्र नितम्बवतीनां विचलन्नयनान्तशितशरैर्व्रणितः ।
शिथिलयति पथिकलोकः स्वकलत्रसमागमोत्कण्ठाम् ॥ १८५ ॥
यत्र च कुलमहिलानामल्पत्वं वचसि पाणिपादे च ।
स्वच्छत्वमाशयेषु व्यालोलविशालनेत्रे च ॥ १८६ ॥

---

इति साभिप्रायत्वात् काव्यलिङ्गालंकारश्च ] ॥ १८३ ॥ तिमिर इत्यादि—निजतनोः [ कान्तातनोः ] कान्तेः, वितानं [ विस्तारः ] समूहः कर्तृ, [ " मन्मथोन्मेषणा शोभा विस्तृता कान्तिरुच्यते । " इति कान्तिः, ] तिमिरपटलं [ एव ] असिताम्बरं [ कृष्णवर्णांशुकं ] कर्म, प्रियसंभोगस्य विहितये विधानाय, तत्साहाय्येन निःशङ्कं सङ्केतगमनादिसिद्धेः इति भावः । [ तनुकान्तिः रात्र्यन्धकारे मार्गदर्शिका भवति इत्यर्थः । अभिसारिका—" उद्दाममन्मथमहाज्वरवेपमाना रोमाञ्चकण्टकितगात्रलतां वहन्ती । निःशङ्किनी व्रजति या प्रियसङ्गमाय सा नायिका निगदिता त्वभिसारिकेति ॥ " इति भरतकारिकायां लक्षिता । 'विहतये' इति पाठे तु कान्तिना अन्धकारावरणनाशे प्रियगृहं प्रकाशं गन्तुं न पार्यते अतः वल्लभसंयोगाभावरूपं अनिष्टं जायते इति भावार्थः । अस्मिन् पाठे कान्तिगुणस्य दोषत्वकल्पनात् लेशालंकारः । मूलपाठे तु वल्लभसंभोगकार्यस्य स्वतनुकान्त्यैव सौकर्यात् समाधिः अलंकारः । ] ॥ १८४ ॥ [ शितः तीक्ष्णः, ] व्रणितः आहतः । स्वकलत्राणि स्वस्त्रियः । तथा च तासामेव नितम्बवतीनां वश्यः पान्थलोकः संपद्यते इति भावः ॥ १८५ ॥ [ इतः त्रिभिः अल्पत्वस्वच्छतादयः केचन गुणाः न केवलं शरीरे एव, अपि तु तन्मानसेऽपि इति तासामुत्कर्षो ध्वन्यते । ] वचसि अल्पत्वेन वाचाटत्वाभावबोधनपूर्वकं वाग्मित्वं, पाण्योः पादयोश्चाल्पाकारत्वेन सौलक्षण्यं प्रतिपाद्यते । [ पाणिपादे इत्यत्र ] प्राण्यङ्गत्वादेकवद्भावः । 'आशये च' इति [ पाठे] अत्र चोऽप्यर्थे, तथा च अन्तःकरणे सर्वत्र च निष्कलङ्कत्वं, न तु बहिः सदाचारदर्शनेऽपि कुटिलाशयत्वम् । 'विशालनेत्रे च' इत्यत्र 'च' एवार्थे, तथा च लोचनयोरेव विशालत्वं, तेनान्यत्र चाञ्चल्यं वार्यते । " स्तनादीनां द्वित्वविशिष्टा जातिः प्रायेण " इति वामनोक्तौ [ काव्या० सू० ५ । १ । १७ ] 'प्रायेण' इत्युक्तत्वात् जातिविव-

---

१८४ विहतये (कापा) १८५ विगलन् (प)। नयनांशु (प. कापा) १८६ °शये च व्यालोलत्वं विशा° (गो. का.)

स्तनजघनचिकुरभारे घनता जीवेशसहजरागे च ।
कुलदेवतार्चनविधौ बलिशोभा मध्यभागे च ॥ १८७ ॥
गम्भीरता स्वभावे चेतोभवबाणतूणनाभौ च ।
विस्तीर्णता नितम्बे गुरुजनपूजानुरक्तचित्ते च ॥ १८८ ॥
हरिणायतेक्षणानां विच्छित्तिः, कोशहरणमस्त्रेषु ।
कुटिलत्वमलकपङ्क्तौ, बालानां कामचेष्टितं यत्र ॥ १८९ ॥
संयमनमिन्द्रियाणामिनोपघातग्रहस्तमिस्रस्य ।
स्तब्धत्वं तालतरौ, हारलतास्तरलसङ्गता यस्मिन् ॥ १९० ॥

---

क्षयाऽत्र एकवचनम् । [ इतः १९१ आर्यापर्यन्तं पूर्ववत् परिसंख्यालंकारः, प्रायः श्लेषमूलकः । ] ॥ १८६ ॥ घनता निबिडत्वं सान्द्रत्वं च । [ जीवेशसहजरागे प्राणप्रिये नैसर्गिकप्रीत्याम् । ] बलिः उपहरणीयद्रव्यम्, बलयस्त्रिवलयः । [ मध्यभागः कटिः ] ॥ १८७ ॥ गम्भीरता गूढता निम्नता च । चेतोभवस्य बाणानां तूणः इषुधिः—तत्स्वरूपे तदुपमे इत्यर्थः—नाभौ तुन्दकूपिकापदवाच्याङ्गविशेषे । नाभेः उद्दीपकत्वात् कामबाणेषुधित्वरूपणम् । विस्तीर्णता विशालता, विपुलभक्तिशालिता च ॥१८८॥ हरिणेति । हरिणस्य आयते दीर्घे ईक्षणे इव ईक्षणे यासां तासाम् । [ अनेन हरिणाक्षी इति लुप्तोपमायां आयतत्वं समानधर्मत्वेन कविसम्मतं इति बोध्यम् । ] विच्छित्तिः शोभातिशयः, न तु अन्यत्र अन्तःकरणादीनां विच्छेदः खण्डनम् । कोशस्य शस्त्राधानस्य हरणं शस्त्रतः पृथक् स्थापनं, न तु अन्यधनापहारः । कुटिलत्वं वक्राकारत्वम् अलकेषु, न तु अन्यत्र खलत्वम् । कामचेष्टितं यथेष्टं क्रीडा, बाल्यावस्थायाः तत्प्रधानत्वात्, [बालानां शिशूनां, ] न तु जनानां [ यथेच्छाचारः; ] यद्वा बालानां स्त्रीकेशानां कामोद्दीपकत्वं इत्यर्थः ॥ १८९ ॥ संयमनं विषयेभ्यो निग्रहः, न तु अपराधे बन्धः । इनः सूर्यः, [ तदुपघातः ] तदवरोधः तदाच्छादनं, तद्रूपो ग्रहः उपरागः, तमिस्रस्य राहोः, न तु स्वामिप्रातिकूल्याचरणाग्रहः कस्यचन । " इनः सूर्ये प्रभौ " इति, " उपरागो ग्रहः " इति च अमरः । स्तब्धत्वं सरलप्रांशुत्वं, तालतरौ, न तु अन्यत्र प्रतिकूलवृत्तिः, [ पक्षे स्तब्धत्वं भयविषादादिजन्यं निश्चेष्टत्वम् । ] तरलेन मध्यनायकेन [ मध्यमणिना, सङ्गताः ] सहिताः, हारलताः, न तु कश्चन चञ्च-

---

१८७ पीनपयोधरभारे ( प. कापा ) । मध्यदेशे ( कापा ) १८९ °हरणमब्जेषु ( प. कापा ) १९० सालतरौ ( प. गो २ ) । लता त° ( प. गो २ )

भुजगाः पररन्ध्रदृशः, खण्ड्यन्ते प्रियतमाधरा यत्र ।
सूचीव्यथानुभूतिर्नृत्याभ्यासप्रवृत्तानाम् ॥ १९१ ॥
नतवपुरप्यतिसरला, मन्थरगमनाऽपि नर्मदा यस्मिन् ।
गुरुजनशास्त्ररताऽपि स्वभावमुग्धाऽङ्गनाजनता ॥ १९२ ॥
तस्मिन्मखशतपूतः पुरुहूत इव द्विजन्मनां प्रवरः ।
गुरुरिव विद्यावसतिर्वसति स्म पुरन्दरो नाम्ना ॥ १९३ ॥
धर्मात्मजस्य सत्यं, त्रिपुररिपोर्विजितकुसुमचापत्वम् ।
हरिनाभिपङ्कजभुवो नियतेन्द्रियतां जहास यः सततम् ॥१९४॥

---

लसहचारी । "तरलो हारमध्यगः" इत्यमरः ॥१९०॥ रन्ध्रं सुषिरं, तद्दर्शिनः सर्पाः, न तु केचन कस्यचित् प्रमादतः सदाचारस्खलनप्रदर्शिनः । अधराः ओष्ठाः, रतौ दन्तैः खण्ड्यन्ते [ दश्यन्ते ], न तु केचन निराक्रियन्ते । सूच्याम् आङ्गिकाभिनयविशेषे, व्यथायाः शिक्षणव्यथायाः, अनुभवः, तत्र प्रवृत्तानां, न तु सूचीतुल्यपापकणिकादुःखानुभवः कस्यचित् । "सूची तु सीवनद्रव्येऽप्याङ्गिकाभिनयान्तरे ।" "स्त्री सूचिर्नृत्यभेदे च व्यधनीशिखयोरपि ।" इति मेदिनीरत्नकोशौ । [ नृत्ये पदार्थानां आङ्गिकाभिनये या करवर्तना ( करचालनं ) भावि वाक्यं उपजीव्य प्रक्रियते सा भाव्यर्थसूचनात् सूची, तदुक्तं सङ्गीतरत्नाकरे—"वर्तना सा भवेत् सूची भाविवाक्योपजीवनात् ।" ( ७ । २७ ) इति । नृत्यलक्षणमपि तत्रैव—"आङ्गिकाभिनयैरेव भावानेव व्यनक्ति यत् । तन्नृत्यं मार्गशब्देन प्रसिद्धं नृत्यवेदिनाम् ॥" ( ७ । २८ ) इति । नृत्यस्यैव मार्ग इत्यपरं नाम । नृत्तं तु अभिनयवर्जितं गात्रविक्षेपमात्रम् ॥ ]॥ १९१ ॥ नतवपुः निम्नोन्नतशरीरा, अपि, सरला ऋजुः, अपिः विरोधे; अर्थान्तरे नतवपुः सुशोभनलक्षणाङ्गविन्यासवती । मन्थरं मन्दं गच्छति सा, कथं नर्मदा तन्नामसरितः तीव्रप्रवाहत्वात् इति; अर्थान्तरे नर्मदा परिहासप्रवीणा इत्यर्थः; "द्रवकेलिपरीहासाः क्रीडा ली(खे)ला च नर्म च ।" इति अमरः । गुरुजनानां शास्त्रेषु [ यद्वा, गुरुजनेषु शास्त्रेषु च, ] रता प्रीताऽपि, कथं मुग्धा बालिशा, अर्थान्तरे मुग्धा सुभगा; "मुग्धः सुन्दरमूढयोः" इति कोशः । गुरवः श्वशुरादयोऽपि, शास्त्रं शासनमपि । [अङ्गनाजनता ललनासमूहः । विरोधालंकारः श्लेषमूलकः । ] ॥ १९२ ॥ [ उपाख्याननायकस्य पितरं अष्टकेन वर्णयति तस्मिन्निति । ] मखो यज्ञः, शतं बहुसंख्या । पुरुहूतः इन्द्रः । पक्षे शतं शतसंख्या, [ शताश्वमेधी इन्द्रपदं प्राप्नोति इति । ] [ द्विजन्मनां ब्राह्मणानाम् ] । गुरुः बृहस्पतिः ॥ १९३ ॥ धर्मात्मजो युधिष्ठिरः । त्रिपुररिपु शिवः ।

---

१९२ मर्मदा (प) । भावसुभगा (कापा) १९३ प्रथमः ( कापा ) १९४ चरितेन

न्यक्कृतवृष इति शर्वे, याचक इति कौस्तुभाभरणे ।
पीडितवसुधासुत इति कपिले, न बभूव यस्य बहुमानः ॥१९५॥
मार्गानुगतौ लुब्धो यः प्राणिवपुर्विनाशविमुखोऽपि ।
परिहृतपरदारोऽपि स्वाकाङ्क्षितगुरुजनप्रमदः ॥ १९६ ॥

---

हरिनाभिपङ्कजभूः ब्रह्मा । तत्तुल्यसत्यादिशीलत्वात् तान् जहास । [ अत्र हसतेः सादृश्यसूचकत्वात् आर्थी मालोपमा ॥ वस्तुतस्तु, सत्यत्वेन प्रसिद्धः युधिष्ठिरः अश्वत्थामनामकहस्तिवधे एकदा "नरो वा कुञ्जरो वा" इतिरूपं अर्धसत्यं उवाच, कामदाहकः शिवः पार्वतीं अर्धाङ्गीकृतवान्, संयमी ब्रह्मा स्वपुत्रीं सरस्वतीं कामितवान् इति स्वधर्मे तेषां स्खलनैः तान् जहास, स्वस्मिन् तादृशस्य एकस्यापि स्खलनस्य अभावात् इति व्यतिरेकध्वनिः ॥ ]॥ १९४ ॥ न्यक्कृतः पीडितः, आरोहार्थं अधः कृतश्च, वृषो धर्मो नन्दीश्वरश्च; [ शर्वः शिवः । ] कौस्तुभाभरणो नारायणः, स हि [ वामनस्वरूपेण ] बलिं वसुधां याचितवान्, अयं तु न याचक इति । कपिलो नारायणावतारो मुनिसत्तमः; [ यद्वा कपिलः इन्द्रः " कपिलः कपिलो वर्णः कपिलः पाकशासनः । " इति वैजयन्ती । ] कदाचिदिन्द्रो मखसम्बन्ध्यश्वमपहृत्य तत्समीपे बबन्ध, तमन्वेषमाणाः सगरात्मजा वसुधां न्यखनन्, तत्समीपेऽश्वं दृष्ट्वा तमेवापहर्तारं शङ्कमानाः तत्क्रोधदृष्ट्या भस्मीभूताः इति पौराणिकी कथा । [ तथा च श्रीरामायणे बालकाण्डे—"तस्य कोपाग्निना दग्धा भविष्यन्ति नृपात्मजाः ॥ ३ ॥ पृथिव्याश्चापि निर्भेदो दृष्ट एव सनातनः । सगरस्य च पुत्राणां विनाशो दीर्घदर्शिनाम् ॥ ४ ॥ " ( सर्ग ४० ) इति । ] तथा च वसुधा सगरसुताश्च तेन पीडिताः, अयं तु न तथा इति तत आधिक्यम् । यद्वा, वसुधासुतो मङ्गलग्रहः, मङ्गलेन च सुखं लक्ष्यते; तथा च तेन सुखस्यापि ज्ञानिनां परिहरणीयताभिधानात् कथञ्चित् प्रतिपाद्यनिष्पत्तिः । शब्दमात्रसाम्येऽपि तत्त्वव्यवहारस्य साहित्यमर्यादासिद्धत्वात् केवलं बुद्धिपाटवेन तेभ्य आधिक्यं प्रतिपादितम् । [ अत्रापि पूर्ववत् आर्थी मालोपमा व्यतिरेकध्वनिश्च । ] ॥ १९५ ॥ मार्गस्य मृगसमूहस्य, वेधार्थं अनुगमने, लुब्धो व्याधः; पक्षे—मार्गस्य सदाचारस्य आचरणे समासक्तः । [ प्राणिनां सजीवानां वपुषां देहानां विनाशः हिंसा । ] स्वाकाङ्क्षिताः [ स्वेन ] अभिलाषविषयीकृताः, गुरुजनानां, प्रमदाः स्त्रियः, येन; परिहारे—स्वाकाङ्क्षितः [ स्वेन ] आशंसितः, गुरुजनानां, प्रमदः हर्षो येन, गुरुभक्तत्वात् ॥ [ अत्रापि श्लेषमूलको विरोधालं-

---

पंकजभुवो जितेन्द्रियत्वं ( कापा ) १९६ मार्गानुसृतौ ( प. कापा )

यस्यान्वये महीयसि सरसीव समस्तसत्त्वनिजवसतौ ।
सच्चरितजन्मभूमौ, विनिवारितकलिमलप्रसरे ॥ १९७ ॥
पितृतर्पणप्रसङ्गे खङ्गग्रहणं न शौर्यदर्पेण ।
त्रुटनं मेखलिकानां वटुकजने, नो रताभिसंमर्दे ॥ १९८ ॥
श्रुतिभेदेषु विवादो, नो रिक्थविभागमन्युना कलितः ।
तेजस्विता हविर्भुजि, न शमैकरतेषु भूमिदेवेषु ॥ १९९ ॥
जरतामेव स्खलनं, जपतामेवाधरस्फुरणम् ।
यजतामेव समिद्रुचिरैणाजिन एव कृष्णसंपर्कः ॥ २०० ॥
तस्याभूत् सकलकलोद्भासितपक्षद्वयस्य सुत एकः ।
नाम्ना सुन्दरसेनः कच इव वचसामधीशस्य ॥ २०१ ॥

---

कारः । ] ॥ १९६॥ सत्त्वं गुणः, सत्त्वाः प्राणिनः च; ते च जलाश्रयेण तिष्ठन्ति, [ इति श्लेषोपमा । ] ॥ १९७ ॥ [ इतः त्रिभिः श्लोकैः परिसंख्यालंकारद्वारा तद्वंशस्य अन्येभ्यो व्यतिरेकः उत्कर्षश्च सूच्येते । ] खङ्गस्य [ गण्डकस्य गेंडा इति भाषायां प्रसिद्ध-नाम्नः प्राणिनः, तत्र उद्भिन्नशृंगिणः खङ्गाः, त एव बालाः गण्डाः इति विवेकः, तस्य खङ्गस्य शृङ्गेण निर्मितपात्रस्य ] खङ्गपात्राख्यद्रव्यविशेषस्य शृङ्गादिखङ्गस्य वा ग्रहणं, केषुचित् तत्समयेषु [ पितृतर्पणे वा ] तद्ग्रहणनियमात्; न तु शौर्याभिमानेन शस्त्रग्रहणम् । मौञ्जीनां मेखलानां जीर्णतावस्थासु, वटुकजने ब्रह्मचारिजने, त्रुटनं भङ्गः; न तु सुरतसंमर्दप्रसङ्गे रशनानाम् [ अनेन तद्वंश्यानां वशित्वं सूचितम् । ] ॥ १९८ ॥ श्रुतिभेदेषु वेदाक्षरविपर्यासादिषु, विवादः प्रमाणनिर्वचनादिरूपः शास्त्रार्थः; न तु वित्तविभागग्रहणार्थं क्रोधान्धतया राजद्वारे व्यवहारः । [ " रिक्थमृक्थं धनं वसु " इति अमरः । ] तेजस्विता प्रकाशनशीलता कोपाक्रान्तिश्च; [ शमः अन्तरि-न्द्रियनिग्रहः, ] भूमिदेवा ब्राह्मणाः ॥ १९९ ॥ जरतां वृद्धानामेव, वयःकृतं स्खलनं पादादीनां; न तु सर्वेषां शास्त्रादिषु अपभ्रंशः । जपशीलानामेव, मन्त्राक्षरोपांशूच्चारणे अधरोष्ठस्फुरणं, न तु रोषावेशतः । यागशीलानामेव, समिद्रुचिः समिधां तत्रोपयोगात्; न तु प्रजानां वैमनस्यादिना, समिति युद्धे, रुचिः; " इध्ममेधः समित् स्त्रियाम्, " " समित्याजिसमिद्युधः " इत्युभयत्र चामरः । मृगाजिने कृष्णस्य श्यामतायाः रोमसु संबन्धो, न तु जनाचरिते श्यामिकासम्पर्कः ॥ २०० ॥ [ इतो नवभिः तत्सुतस्य

---

१९८ दर्पे च ( प. का ) १९९ °मन्युना जनितः (प) । विभागजनितमन्यूनाम् ( कापा ) २०० °लनं पठतामेवा° ( कापा )

पशुपतिनयनहुताशनभस्मितमवधार्य यं वपुष्मन्तम् ।
अपरमिव कुसुमचापं रतिरतये निर्ममे धाता ॥ २०२ ॥
तिष्ठन्तु तावदन्याः कुललनना यस्य रूपमवलोक्य ।
साऽपि महामुनिदयिता कृच्छ्रेण ररक्ष चारित्रम् ॥ २०३ ॥
कलधौतफलकशोभां बिभ्राणं यस्य पृथुतरं वक्षः ।
दृष्ट्वा, चिराय लक्ष्मीर्हरिहृदये दुःस्थितिं मेने ॥ २०४ ॥
कथमीदृग्यदि न कृतः शशिशकलैरथ कृतः कथं व्यथकः ।
इत्थं यमीक्षमाणो निर्णयमगमन्न कामिनीसार्थः ॥ २०५ ॥
यो जग्राह हिमांशोः प्रसन्नमूर्तित्वमचलतः स्थैर्यम् ।
जलधरत उन्नतत्वं, गाम्भीर्यं यादसां पत्युः ॥ २०६ ॥

---

उपाख्याननायकस्य रूपगुणान् वर्णयति तस्येति । ] सकलाभिः कलाभिः विद्याविशेषस्वरूपाभिः, [ पक्षे षोडशभिः ] प्रभाशाल्यंशैश्च, प्रकाशितं, पक्षद्वयं मातापितृकुलद्वयं शुक्लकृष्णाभिधमासार्धभागद्वयं च, येन तस्य; बृहस्पतेः कचाभिधानसुत इव, तस्य द्विजपुङ्गवस्य सुन्दरसेनाभिधः एकः सुतोऽभवत् ॥ २०१ ॥ [ वपुष्मन्तं अपरं कुसुमचापमिव इति अत्र स्वरूपोत्प्रेक्षा । इवशब्दोपादानाच्च नात्र अधिकताद्रूप्यरूपकम् । ] ॥ २०२ ॥ महामुनिपदेन वसिष्ठोऽत्रिर्वा ग्राह्यः, [ तस्य दयिता अरुन्धती अनसूया वा । चारित्रं प्रकृते सतीत्वरूपम् । ] ॥ २०३ ॥ कलधौतं सुवर्णं, [ फलकं पट्टिका । अस्य वक्षःस्थलस्य विशालतां दृष्ट्वा लक्ष्मीः विष्णुवक्षसि स्वस्थितिं दुःस्थितिं अल्पावकाशत्वात् कष्टं मेने इत्यर्थः । अत्र उपमा व्यज्यते । ] ॥ २०४ ॥ [ यदि अयं सुन्दरसेनः, शशिशकलैः चन्द्रखण्डैः धात्रा न रचितः तर्हि स कथं ईदृक् चन्द्रवत् नेत्राह्लादजनकस्वरूपः, तेन तैरेव कृतश्चेत् अथ कथं स व्यथकः मदनपीडाजनकत्वेन तापदः, इति विचारप्रकारेण कामिनीनां ' अयं शशिशकलैः कृतो न वा ' इति निर्णयः निश्चयो नाभूत् इत्यर्थः । अत्र विकल्पालंकारः, " विरोधे तुल्यबलयोर्विकल्पालंकृतिर्मता ।" इति कुवलयानन्दे तल्लक्षणात् ॥ ] [ ' कथमार्द्रता दिनकृतः । इति पाठे तु ] तेजस्वितया सूर्यत्वेन भानं, चन्द्राननसुन्दरत्वेन कलाधरकलानिर्मिततया भानं; तत्र सरसस्वभावत्वात् अप्राप्त्या संतापकत्वाच्च सूर्याचन्द्रमसोः स्वरूपत्वं विशयविषयीकृतम् इति, तस्य विलक्षणरूपेणैव कामिनीकदम्बस्य भानम् । [ अस्मिन् पाठे ससन्देहालंकारः । ] ॥ २०५ ॥ [ तस्य सात्त्विकान् गुणान् वर्णयति य इति । प्रसन्नमू-

---

२०४ शकलशोभां (कापा)। मनुते (कापा) २०५. कथमार्द्रता दिनकृतः (गो. का)

यो विनयस्य निवासो, वैदग्ध्यस्याश्रयः, स्थितेः स्थानम् ।
प्रियवाचामायतनं, निकेतनं साधुचरितस्य ॥ २०७ ॥
यो मदनः प्रमदानां, तुहिनकरः साधुकुमुदखण्डस्य ।
निकषोपलो गुणानां, मार्गतरुः पथिकलोकस्य ॥ २०८ ॥
सज्जनगोष्ठीनिरतः, काव्यकथाकनकनिकषपाषाणः ।
प्रणयिजनकल्पवृक्षो, लक्ष्मीलीलाविहारभूमिश्च ॥ २०९ ॥
जलधिरिव तुहिनभासः सहवृद्धिपरिक्षयः सुहृत्तस्य ।
सकलोपधाविशुद्धो बभूव गुणपालितो नाम्ना ॥ २१० ॥
तेन समं स कदाचित् तिष्ठन् रहसि प्रसङ्गतः पतिताम् ।
केनापि गीयमानामशृणोदार्यामिमां सहसा ॥ २११ ॥

---

तित्वं माधुर्यं, हिमांशुः चन्द्रः । अचलः पर्वतः, स्थैर्यं "धर्मार्थकामसंयुक्ताच्छुभाशुभसमुत्थितात् । व्यवसायादचलनं स्थैर्यमित्यभिसंज्ञितम् ॥" इति भरतोक्तम् (२२।३५)। उन्नतत्वं उच्चैरवस्थानम् । गाम्भीर्यं "यस्य प्रभावादाकारात्क्रोधहर्षभयादयः । भावस्था नोपलभ्यन्ते तद्गाम्भीर्यमिति स्मृतम् ॥" इति भरतोक्तम् (२२ । ३६) ।] यादसां [जलानां] पतिः समुद्रः । [अत्र उपमालङ्कारो व्यङ्ग्यः ।] ॥ २०६ ॥ [विनयः महाजनसन्निधौ स्वोत्कर्षाननुसन्धानरूपा नम्रता। वैदग्ध्यं चातुर्यम्। स्थितिः न्याय्यपथ स्थितिः, "संस्था तु मर्यादा धारणा स्थितिः ।" इति अमरः । प्रियवाक् हृद्यवचनम् । साधुचरितं सत्कर्म ।] ॥२०७॥ [तुहिनकरः शीतगुः चन्द्रः । मार्गे स्थितः तरुः मार्गतरुः। अत्र मालारूपकम्।] ॥२०८॥ [गोष्ठी सभा । निरतः आसक्तः । काव्यं पद्यमयं, कथा गद्यमयी, तत्परीक्षाकर्मणि कुशलः । प्रणयिजनः प्रेमपात्रीभूतः याचको वा। लक्ष्मीः रूपगुणादिप्रकारा सर्वविधा लक्ष्मीः शोभा, तस्या लीलायै खेलार्थं, विहारभूमिः विनोदाय भ्रमणस्थानम् ।] [एताभिः नवभिः आर्याभिः सुन्दरसेनस्य अनेकगुणसम्पत्तिवर्णनेन तस्य उत्तमनायकत्वं व्यञ्जितम् । तथा च दशरूपके—"नेता विनीतो मधुरस्त्यागी दक्षः प्रियंवदः । रक्तलोकः शुचिर्वाग्मी रूढवंशः स्थिरो युवा ॥ (२।१) बुद्ध्युत्साहस्मृतिप्रज्ञाकलामानसमन्वितः । शूरो दृढश्च तेजस्वी शास्त्रचक्षुश्च धार्मिकः ॥" (२।२) इतिं । प्रकृते ते यथायथमूह्याः ॥२०९॥ [तन्मित्रं नायकसहायं एकेन वर्णयति जलधिरिति ।] सकलासु उपधासु शीलादिपरीक्षोपायेषु, परीक्षया विशुद्धः शीलादिसंपन्नतया परिज्ञातः। "उपायपूर्वं आरम्भ उपधा" इति अमरः॥२१०॥ [रहसि एकान्ते।]

---

२०७ श्रयस्थितेः (प) २०९. कथासार (प. काप)

'देशान्तरेषु वेषस्वभावभणितानि ये न बुध्यन्ते ।
समुपासते न च गुरून् विषाणविकलास्त उक्षाणः ॥' २१२ ॥
आकर्ण्याथ तमूचे वचनमिदं सुन्दरः सुहृन्मुख्यम् ।
शोभनमेतद्गीतं गुणपालित साधुनाऽनेन ॥ २१३ ॥
साधूनामाचरितं खलचेष्टां विविधलोकहेवाकान् ।
नर्म विदग्धैर्विहितं कुलटाजनवक्रकथितानि ॥ २१४ ॥
गुरुगूढशास्त्रतत्त्वं विटवृत्तं धूर्तवञ्चनोपायान् ।
वारिधिपरिखां पृथ्वीं जानाति परिभ्रमन् पुरुषः ॥ २१५ ॥
(युगलकम्)
अत उज्झित्य गृहस्थितिसुखलेशं विविधलाभपरिणामे ।
स्थापय गमनारम्भे वयस्य हृदयं मया सहितः' ॥ २१६ ॥
इत्थं निगदितवन्तं सुहृदुत्तरलाभलालसात्मानम् ।
ऊचे सुन्दरसेनं लज्जित इव सहचरो वचनम् ॥ २१७ ॥
'अभ्यर्थनानुबन्धो लज्जाकर एव मादृशां किन्तु ।
आकर्णय कथयामः पथिकानां यानि दुःखानि ॥ २१८ ॥

---

सहसा अकस्मात् ॥ २११ ॥ भणितानि सरसोक्तयः । विषाणविकलाः शृङ्गविहीनाः, उक्षाणो वृषभाः । [ अत्र न्यूनाभेदरूपकालंकारः । ] ॥ २१२ ॥ २१३ ॥ [ युगलकेन प्रवासलाभानाह साधूनामिति । ] हेवाकः उत्कण्ठा [ अभिलाषो वा ]। नर्म [अग्राम्यः] परिहासः । [ कुलटा असती, वक्रकथितं व्यङ्ग्योक्तिः । ] ॥२१४॥ [गुर्विति—गुरौ गूढं गुरुगम्यं गुरुणैव प्रकाश्यं यत् शास्त्रतत्त्वं रहस्यम् । विटवृत्तं कामतन्त्रकोविदानां चरितम् । वारिधिपरिखां समुद्रखेयाम् । ] ॥ २१५ ॥ गृहस्थितौ संजायमानं सुखस्य लेशं लवं, उज्झित्य । विविधो लाभो यस्मिन् तादृशः परिणामः फलावस्था यस्य तस्मिन् गमनारम्भे इति ॥ २१६ ॥ [ सुहृदुत्तरेति मित्रोत्तराभिलाषिणम् । लज्जित इव मन्दंमन्दं इत्यर्थः । ] २१७ ॥ अभ्यर्थनानुबन्धो यद्भवतोक्तं तदनुकूलवाक्यपरम्पराप्रयोगः ॥ [यद्वा अभ्यर्थनायाः प्रार्थनायाः, अनुबन्धः

---

२१३ स ऊचे ( गो. कापा ) २१४ लोकविन्यासान् ( कापा ) २१५ गुरुगूढशास्त्रचर्चो ( प ) गुरुगेहशास्त्रचर्चो ( गोर. ) गुरुगेहशास्त्रचर्यो ( कापा ) २१६ अत उत्सृज्य ( प. कागा ) २१७ सुहृदुत्तम° ( प. ) २१८ कथयामि च ( कापा )

कर्पटकावृतमूर्तिर्दूराध्वपरिश्रमावसितशक्तिः ।
पांसूत्करधूसरितो दिनावसाने प्रतिश्रयाकाङ्क्षी ॥ २१९ ॥
मातर्भगिनि दयां कुरु, मामैवं निष्ठुरा भव, तवापि ।
कार्यवशेन गृहेभ्यो निर्यान्ति भ्रातरश्च पुत्राश्च ॥ २२० ॥
किं वयमुत्पाट्य गृहं प्रातर्गन्तारं ईदृगेव सताम् ।
भवति निवासो यस्मिन्निज इव पथिकाः प्रयान्ति विश्रामम् ॥२२१॥
अत्र रजनीं नयामो यथाकथञ्चित् तवाश्रमे मातः ।
अस्तं गतो विवस्वान्, वद संप्रति कुत्र गच्छामः ॥ २२२ ॥
इति बहुविधदीनवचाः प्रतिगेहद्वारदेशमधितिष्ठन् ।
निर्भर्त्स्यते वराको गृहिणीभिरिदं वदन्तीभिः ॥ २२३ ॥
( कुलकम् )

---

अनुवर्तनं वारंवारं कथनं, मादृशां सुहृदां, लज्जाकरः त्रपावह एव, सुहृदा सकृदुक्तेऽपि मित्रेण तस्य अवश्यकरणीयत्वात्; तथापि किमपि यत् कार्यं तत् तद्गुणदोषान् विमृश्य करणीयं इति, त्वया प्रवासगुणे उक्तेऽपि तद्गतदोषान् मया अवश्यंवाच्यान् शृणु इत्यर्थः; यद्वा, अभ्यर्थनायां प्रार्थितविषये, अनुबन्धः दोषोत्पादः, ततश्च तदनङ्गीकारः, इत्यादि; " दोषोत्पादेऽनुबन्धः स्यात्प्रकृत्यादिविनश्वरे । मुख्यानुयायिनि शिशौ प्रकृतस्यानुवर्तने ॥ " इति अमरः । पथिकानां प्रवासिनाम् ।] ॥ २१८ ॥ [इतः रसमयैः द्वादशभिः तानि पथिकदुःखानि वर्णयति, तत्रादौ पञ्चभिः कुलकं, तत्र मध्यत्रये कुत्रापि निवासस्थानं याचमानानां दीनवचनानुवादः ।] अवसिता ध्वस्तप्राया । [पांसुः धूलिः, ] उत्करः समूहः । प्रतिश्रयो निवासस्थानम् ॥ २१९ ॥ [ मातः वृद्धस्त्रीणां सम्बोधने, भगिनि समवयस्कस्त्रीणां सम्बोधने । " आत्मवत्सर्वभूतेषु यः पश्यति स पश्यति ।" इति सत्सरणेः स्मरणमनुसंदधाति तवापीति । ] ॥ २२० ॥ [तदनादृत्य प्रतीकारे किमित्यादि क्रोधोक्तिः, सा च गन्तारइत्यन्ता लोकोक्तिः। ईदृगेवेत्यादिसदाचरणकथनेन यूयं असज्जनाः इति सूच्यते । निजे स्वीये गृहे । 'विश्रामः' इति अपाणिनीयमपि रूपं कालिदासभवभूत्यादिमहाकविभिः प्रयुक्तत्वात् प्रयुक्तम् । द्विरूपकोशे तु–" विश्रामो विश्रमश्च " इति उभयम् । ] ॥ २२१ ॥ [ अत्रेत्यादि दैन्यवचनम् । ] ॥ २२२ ॥ निर्भर्त्स्यते वाग्बाणैः तिरस्क्रियते । वराकः दीनां अवस्थां

---

२२२ अद्य ( प. का ) । तवाश्रये ( प. गो २ ) °चिद्विदाशु हे° ( कापा ) २२३ प्रतिगेहे ( प )

न स्थित इह गेहपतिः, किं रटसि वृथा, प्रयाहि देवकुलम् ।
कथितेऽपि नापगच्छति, पश्य मनुष्यस्य निर्बन्धम् ॥ २२४ ॥
अथ यदि कथञ्चिदपरः पुनःपुनर्याचितो गृहस्वामी ।
निर्दिशति सावधीरणमत्र स्वपिहीति जीर्णगृहकोणे ॥ २२५ ॥
तत्र कलहायमाना तिष्ठति गृहिणी विभावरीं सकलाम् ।
अज्ञाताय किमर्थं वासो दत्तस्त्वयेति सह भर्त्रा ॥ २२६ ॥
ईदृगयं सरलात्मा किं कुरुषे भगिनि तावको भर्ता ।
स्थास्यसि गेहेऽवहिता, भ्रमन्ति खलु वञ्चका एवम् ॥ २२७ ॥
इति भाजनादियाच्ञां बुद्धौ विनिधाय निकटवर्तिनो गेहात् ।
नारीजनः समेत्य ब्रूते तामाप्तभावेन ॥ २२८ ॥ ( युग्मम् )
गृहशतमधिकमटित्वा कलमकुलत्थाणुचणमसूरादि ।
एकीभूतं भुङ्क्ते क्षुधोपतप्तोऽध्वगो भैक्षम् ॥ २२९ ॥
परवशमशनं, वसुधा शयनीयं, सुरनिकेतनं सद्म ।
पथिकस्य विधिः कृतवानुपधानकमिष्टकाखण्डम् ' ॥ २३० ॥

---

आपन्नः ॥ २२३ ॥ [ रटसि उच्चः वदसि, वृथा निष्फलम् । ] देवकुलं देवमन्दि-रम् । निर्बन्धः आग्रहातिशयः ॥ २२४ ॥ [ सावधीरणं सतिरस्कारम् । ] ॥ २२५ सकलां विभावरीं—अत्र अत्यन्तसंयोगे द्वितीया, तेन क्षणैकमपि कलहतो न अतिचारः ततः प( तः? )त्रागारेऽपि न स्वापोपलब्धिः इति । अज्ञाताय इत्यनेन मुख्यं कलहे कार प्रदर्शितम् ॥ २२६ ॥ अवहिता सावधाना । [ वञ्चकः धूर्तः । ] ॥२२७॥ [ आ यथार्थवक्ता । ] ॥ २२८ ॥ [ अटित्वा भ्रान्त्वा । कलमः शालिः, कुलत्थः धान् विशेषः ' कलथी ' इति भाषायाम् । ] अणुः व्रीहिविशेषः; [ चीना इति ख्यातः इ अमरसुधा । ] [ मसूरः व्रीहिभेदः । अध्वगः पथिकः । ] भैक्षं भिक्षासमूहरूपम् ॥ २२९ शयनीयं शय्या । सुरनिकेतनं देवमन्दिरम् । उपधानकं उपधीयते आरोप्यते शिरो इति उपधानकं उच्छीर्षकम् , [ इष्टका ईंट इति भाषायाम् । ] ॥ २३०

---

२२५ शीर्णगृहं ( प. काग ) २२७ किं कुर्मो ( गो. प ) २२८ भोज ( गो २. कापा ) । नारी समभ्युपेता ( प. कापा )

इति निगदितवति तस्मिन्सुन्दरसेनस्य चोत्तरावसरे ।
इयमुपगीता गीतिः केनापि कथाप्रसङ्गेन ॥ २३१ ॥
'निजवरभवनं सुरगृहमुर्वीतलमतिमनोहरं शयनम् ।
कदशनममृतमभीप्सितकार्यैकनिविष्टचेतसां पुंसाम्' ॥ २३२ ॥
तां च श्रुत्वा सुहृदं पौरन्दरिरिदमुवाच परितुष्टः ।
मम हृदयगतं प्रकटितमेतेन, सहैव भवतु गच्छामः ॥ २३३ ॥
अथ सहचरद्वितीयः क्लेशसमुद्रावतरणकृतचित्तः ।
निरगात्सुन्दरसेनः कुसुमपुरादविदितः पित्रा ॥ २३४ ॥
पश्यन् विदग्धगोष्ठीरभ्यस्यन्नायुधानि विविधानि ।
शास्त्रार्थानधिगच्छन् विलोकयन् कौतुकान्यनेकानि ॥ २३५ ॥
जानन् पत्रच्छेदनमालेख्यं सिक्थपुस्तकर्माणि ।
नृत्यं गीतोपचितं तन्त्रीमुरजादिवाद्यभेदांश्च ॥ २३६ ॥

---

[ गीतिः आर्याभेदः, तल्लक्षणं तु—"यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि। अष्टादश द्वितीयान्तिमयोर्गीतिर्हि गायकप्रीत्यै ॥" इति ॥ २३१ ॥ सुरगृहं देवालयः निजभवनतुल्यं सुखदम् । कदशनं कुत्सितं दुष्टु साधितं भोजनम् । अभीति—इष्ट-सिद्धिपरायणानाम् ॥ अत्र इवादिपदानुपादानेऽपि तदर्थवत्त्वात् लुप्तोपमा व्यङ्ग्या। ] ॥ २३२ ॥ पौरन्दरिः पुरंदराभिधविप्रकुमारः सुन्दरसेनः, [ भवतु तदेव भवतु इत्यर्थः । ] ॥ २३३ ॥ [अविदितः पित्रा, पितरं अपृष्ट्वैव । कुसुमपुरात् पाटलिपुत्रात्; तत्र 'पाडल' इति प्रसिद्धानां पाटलिद्रुमाणां अत एव पाटलिकुसुमानां प्राचुर्यात् कुसुमपुरं इति पाटलिपुत्रस्य अपरं नाम ॥ २३४ ॥ त्रिभिः प्रवासजातं विशेषज्ञानलाभार्थं वर्णयति पश्यन्निति। गोष्ठी सभा। कौतुकं अद्भुतं अतिशायि वृत्तं वा।] ॥२३५॥ [ आलेख्यं चित्रकर्म, "रूपभेदाः प्रमाणानि भावलावण्ययोजनम् । सादृश्यं वर्णिका भङ्ग इति चित्रं षडङ्गकम् ॥" इति । सिक्थपुस्तकर्माणि—तत्र सिक्थकर्म मधूच्छिष्टेन नानापुत्तलादिक्रीडनकविधानकला, तच्च अन्यत्र चतुःषष्टिकलासु न पृथक् परिगणितम्, पुस्तक्रियायामन्तर्भावात्; पुस्तकर्म व्याख्यातम् १२४ आर्याटिप्पण्याम्; यद्वा सिक्थपुस्तं सिक्थेनैव लेप्यकर्म । गीतोपचितं गीतविशिष्टं, न तु शुद्धं । तन्त्री

---

२३१ 'सेनं तथोत्तरा' (प) २३३ तामुपश्रुत्य च ( प ) समुत्कण्ठः च (कापा)। सहैव गच्छावः ( ५ )

बुध्यन् वञ्चकभङ्गीर्विटकुलटानर्मवक्रकथितानि ।
बभ्राम सुहृत्सहितः सुन्दरसेनो महीमखिलाम् ॥ २३७ ॥
(विशेषकम्)

अथ विदितसकलशास्त्रो विज्ञाताशेषजनसमाचारः ।
निजगृहगमनाकाङ्क्षी स शिलोच्चयमर्बुदं प्राप ॥ २३८ ॥
तत्पृष्ठदेशदर्शनलोलमतिं सुन्दरं परिज्ञाय ।
गुणपालितो बभाषे विलोक्यतामद्रिराज इति ॥ २३९ ॥
'एष सुतः सानुमतः स्यन्दच्छीताच्छसलिलसंपन्नः ।
लोकानुकम्पयेव प्रालेयमहीभृता मरौ न्यस्तः ॥ २४० ॥
शिशिरकरकान्तमौलिः कटकस्थितपवनभोजनः सगुहः ।
विद्याधरोपसेव्यो बिभर्ति लक्ष्मीमयं शम्भोः ॥ २४१ ॥

---

वीणा, मुरजः मृदङ्गः ।] ॥ २३६ ॥ (वञ्चक)भङ्गीः कौटिल्यविलासान् [कुटिलानां सरणीः] ॥ २३७ ॥ [अथेति, प्रवासेन इत्यध्याहार्यम् ।] समाचारः वृत्तम् । शिलोच्चयं पर्वतं, [अर्बुदं 'आबु' इति सम्प्रति प्रसिद्धम् । स च गूर्जरदेश (गुजरात) मरुदेशयोः (मारवाड) सीमाभूतः] ॥ २३८ ॥ पृष्ठदेशः पश्चात्तनभागः । लोलमतिं लालसम्, "लोलश्चलसतृष्णयोः" इति अमरः ॥ २३९ ॥ [इतश्चतुर्दशभिः अर्बुदाचलं वर्णयति एष इति । सानुमतः असङ्ख्यशृङ्गत्वात् सानुमान् हिमालयः तस्य सुतः पुत्रः, तदुक्तं सोमेश्वरदेवेन वस्तुपालकारिततत्रत्यधर्मस्थानप्रशस्त्याम्—"गौरीवरश्वशुरभूधरसंभवोऽयमस्त्यर्बुदः ककुदमद्रिकदम्बकस्य । मन्दाकिनीं घनजटे दधदुत्तमाङ्गे यः स्यालकः शशिभृतोऽभिनयं करोति ॥ ३० ॥" इति । ] प्रालेयमहीभृत् हिमगिरिः । [म्रियन्ते प्राणिनः तृष्णया यत्र स मरुः निर्जलः देशविशेषः 'मारवाड' इति सुप्रसिद्धः । अत उत्प्रेक्षा लोकानुकम्पयेव इति । ] २४० ॥ शिशिरकरकान्तानि चन्द्रकान्तमणयः, मौलिषु शिखरेषु, यस्य; पक्षे—शिशिरकरेण चन्द्रेण, कान्तः मनोहरः, मौलिर्यस्य । कटकेषु नितम्बभागेषु [पर्वतमध्यभागेषु,] स्थिताः, पवनभोजनाः पवनाशिनः तपस्विनो यस्य; पक्षे—कटकस्थाने कङ्कणस्थाने, स्थिताः, पवनभोजनाः सर्पाः यस्य । गुहाभिः गह्वरैः सहितः, पक्षे—गुहेन षडाननेन सहितः । विद्याधरैः देवयो-

---

२३७ वञ्चकवृत्तीः (कापा) २३८ शिलोच्चयनाथम° (प.) शैलोच्चयनाथमर्बुदं° (कापा) २३९ लोलमलं (प. कापा) २४० स्यन्दत्स्फीता° (कापा)

अत्र तरुशिखरसङ्गतसुमनस इति जातविस्मयो मन्ये ।
अभिलषति समुच्चेतुं तारा निशि मुग्धकामिनीलोकः ॥ २४२ ॥
आश्चर्यं यदुपान्ते तिष्ठन्त्येतस्य सप्त मुनयोऽपि ।
अथवा कस्याकर्षं न करोति समुन्नतिर्महताम् ॥ २४३ ॥
अवगम्य निरवलम्बनमम्बरमार्गं पतङ्गतुरगाणाम् ।
अयमवनिधरो मन्ये विश्रान्त्यै वेधसा विहितः ॥ २४४ ॥
इममाश्रित्य हिमांशोरोषधयः सन्निकर्षमुपयाताः ।
प्रत्यासत्तिः प्रभुणा प्रायोऽनुग्राहकवशेन ॥ २४५ ॥

---

निविशेषैः [ यद्वा, गुटिकाञ्जनादिविद्यासिद्धिमद्भिः योगिविशेषैः ] उपसेव्यः शोभितः, पक्षे—तैः [ देवांशकविशेषैः ] सेवितः । [ अत्र आर्थी श्लेषोपमा । ] ॥ २४१ ॥ [ इतः पञ्चभिः तस्य अत्युच्चत्वं नानाभङ्ग्या वर्णयति ] अत्रेति । कामिनीलोकः ताराः तरुमौलिसङ्गतानि पुष्पाणि [ इति ] मत्वा समुच्चिचीषति यतोऽसौ मुग्धः बालिशः [ मूढः, यद्वा ] स्वरूपतो रूपी [ प्रशस्तरूपवान् इति, सुन्दरः । ] [ अत्र काव्यलिङ्गभ्रान्तिमदुत्प्रेक्षालंकाराः । ] ॥ २४२ ॥ अस्यात्युन्नतत्वात् सप्तर्षयः उपान्तवर्तिन इव उपलक्ष्यन्ते । तदेतत्समर्थनाय अथवेत्यादिना अर्थान्तरितम् ॥ [ यत् एतस्य शिलोच्चयमात्रस्य अर्बुदाचलस्य, उपान्ते समीपे, सप्त मुनयोऽपि ब्रह्मणः पुत्रत्वेन प्रसिद्धाः तपोबलादिना प्राप्तसर्वोच्चस्थानाः अपि, तद्भृत्याः इव तिष्ठन्ति तत् आश्चर्यं अद्भुतम्, विरुद्धदर्शनात् । ते च " मरीचिरत्रिः पुलहः पुलस्त्यः क्रतुरङ्गिराः । वसिष्ठश्च महाभाग सप्तैते ब्रह्मणः सुताः ॥ " इत्युक्ताः; पक्षे सप्तर्षिनामा तारासमूहविशेषः, सूर्यमण्डलादपि अत्युच्चैः स्थितः; तत्क्रमस्तु ध्रुवात् पूर्वभागे मरीचिः, ततः क्रमात् सारुन्धतीको वसिष्ठः, अङ्गिराः, अत्रिः, पुलस्त्यः, पुलहः, क्रतुः चेति । पूर्वोक्तमेव अर्थान्तरन्यासेन आक्षिपति अथवेति । आकर्षं समीपानयनम् । अत्र अथवेति आक्षेपवाचकपदसत्त्वात् आक्षेपार्थान्तरन्यासालंकारयोः संसृष्टिः ] ॥ २४३ ॥ अवलम्ब्य निश्रित्य, अम्बरमार्गं आकाशमार्गं, [ पतङ्गः सूर्यः, ] [ उत्प्रेक्षया तस्य अत्युच्चत्वं व्यञ्जितम् । ] ॥ २४४ ॥ अस्य अत्युच्चत्वात् तत्संबन्धेन ओषधयः ओषधीशस्य [ चन्द्रस्य ] सान्निध्यं प्राप्ता इति अनुग्राहकाधीनतया प्रभुणा सान्निध्यसंपत्तिर्युक्तैवेति । [ अनुग्राहकः प्रभोः कृपाप्रापको मध्यस्थः, अत्र तादृशः अर्बुदः । अर्थान्तरन्यासोऽलंकारः । अस्यामार्यायां उत्तरार्धे

---

२४२ मुग्धकामिनीसार्थः ( गो २ ) २४४ अवलम्ब्य ( गो. का ) २४५ सन्निधानमुपं ( काप )

ध्वजिनीव दानवानां मिष्टकसमधिष्ठिता, त्रियामेव ।
उद्यातरोहिणीका, रम्येयमुपत्यका भाति ॥' २५३ ॥

( संदानितकम् )

इति दर्शयति वयस्ये, सुन्दरसेने च पश्यति प्रीत्या ।
स्वप्रस्तावोपगता गीतिरियं केनचिद्गीता ॥ २५४ ॥
'अतिशयितनाकपृष्ठं पृष्ठं ये नार्बुदस्य पश्यन्ति ।
बहुविषयपरिभ्रमणं मन्ये क्लेशाय केवलं तेषाम् ॥' २५५ ॥
आकर्ण्य च स बभाषे, महात्मनाऽनेन युक्तमुपगीतम् ।
शिखरिशिरः पश्यामो वयस्य रम्यं समारुह्य ॥ २५६ ॥
अथ गिरिवरमारूढो विलोकयन् विविधविबुधभवनानि ।
वापीरुद्यानभुवः सरांसि सरितश्चचार विस्मेरः ॥ २५७ ॥
अचिराभामिव विघनां, ज्योत्स्नामिव कुमुदबन्धुना विकलाम् ।
रतिमिव मन्मथरहितां, श्रियमिव हरिवक्षसः पतिताम् ॥२५८॥

---

कोरांटी' इति व्यवह्रियमाणानां] च व्रातैः समूहैः; पक्षे अर्जुनस्य पार्थस्य, बाणानां शराणां, समूहैः संछन्ना समावृता; [वरूथिनी सेना ।] ऋक्षाणां भल्लूकानां [ 'रिंछ' इति भाषायां प्रसिद्धानां,] पक्षे नक्षत्राणां सहस्रेण परिपूर्णा ॥ २५२ ॥ [ ध्वजिनी सेना । मिष्टकः मिष्टत्वात् आम्रः स्यात् तद्वृक्षैः, दानवविशेषेण च; ] [ 'मस्तकसमधिष्ठिता' इति पाठे ] मस्तकैः देवदारुवृक्षैः [ मस्तकरूपेण तत्तदधिकारस्थानेषु स्थितैः ] प्रधानाधिकारिभिश्च समधिष्ठिता । [ 'अक्षाङ्क' इति पाठे अक्षनामानः बिभीतकवृक्षाः, पक्षे अक्षनामा दानवः । ] [ त्रियामा रात्रिः,] रोहिण्यो लताः, [ यद्वा रोहिणीका 'कुटकी' 'कडु' इति वा भाषायां प्रसिद्धः लघुवृक्षविशेषः,] रोहिणी नक्षत्रविशेषश्चेति सर्वत्र यथायोग्यमन्वयः । [उपत्यका अद्रेः अधः आसन्ना भूमिः ।] ॥ २५३ ॥ [प्रस्तावः प्रसङ्गः ।] ॥ २५४ ॥ नाकपृष्ठं स्वर्गभूम्युपरितनभागः, तत् अतिशयितं अधरीकृतं [अतिक्रान्तं] येन, ततोऽप्यतिसुन्दरं इत्यर्थः । विषयाः देशाः, "देशविषयौ तूपवर्तनम् " इति अमरः ॥ २५५ ॥ विबुधभवनानि देवप्रासादाः । [ वापी दीर्घिका । उद्यानं राज्ञः सर्वोपभोग्यं वनम् । ] विस्मेरः साश्चर्यः ॥२५७॥ [चतुर्भिः तत्र दृष्टिपथं उपयातां नायिकां वर्णयति

---

२५३ ध्वजिनीव दामवानासृष्टकसम° ( प. ) °वानां मस्तकसमवेष्टिता । ( गो २ ) सृष्टाङ्कसम°; अक्षाङ्कसम° (कापा) २५५ बहुदेश (गो २) २५७ रसितश्च जातविस्मेरः (प.)

हस्तोच्चयं विधातुः, सारं सकलस्य जन्तुजातस्य ।
दृष्टान्तं रम्याणां, शस्त्रं संकल्पजन्मनो जैत्रम् ॥ २५९ ॥
विकसितकुसुमसमृद्धिं, शृङ्गाररसापगैककलहंसीम् ।
लीलापल्लववल्लीं, व्रतिनामवधानवर्मणां भल्लीम् ॥ २६० ॥
विचरन्नुपवनखण्डपपुष्पप्रकराभिरामभूपृष्ठे ।
रममाणां सह सख्या ललनामालोकयामास ॥ २६१ ॥
(कुलकम्)

अवलोकयतस्तस्य स्मरसायकवेध्यतामुपगतस्य ।
इदमभवन्मनसि चिरं विस्मयभाराभिभूयमानस्य ॥ २६२ ॥
केदं खलु विश्वसृजः कौशलमत्यद्भुतं जातम् ।
येन विरुद्धानामपि घटितैकत्र स्थितिस्तथाहीयम् ॥ २६३ ॥
ललितवपुर्निर्दोषा स्फुरदुज्ज्वलतारकाभिरामा च ।
निर्वाच्यवदनकमला जितवीणा क्वणितवाणी च ॥ २६४ ॥

---

अचिराभेति । अचिराभा क्षणप्रभा विद्युत्, विघना तत्पतित्वेन कल्पितेन मेघेन रहिता। कुमुदबन्धुः चन्द्रः । मालापूर्वकः उपमालंकारः; अत्र घनादिन्यूनत्ववर्णनं नायिकायाः प्रियाभावसूचनेन एकाकित्वरूपसाधर्म्यसंपादनार्थं इति न दोषः इति प्राचां मतानुसारेण; वस्तुतस्तु अत्र उपमावाचकशब्दोपादानात् न्यूनताद्रूप्यरूपकवत् न्यूनोपमा ग्राह्या, न तु विनोक्तिः । ] ॥२५८॥ [ इत आर्याद्वये रूपकम् । ] हस्तोच्चयो हस्तकौशलम् । वर्णयिष्यमाणा हारलतानाम्नी काचित् हस्तोच्चयादिरूपेण निरूपिता । जातं समूहः, "जातं जनिसमूहयोः" इति विश्वः । दृष्टान्तं निदर्शनम् । [ जैत्रं जयनशीलम् ] ॥ २५९ ॥ [ कुसुमसमृद्धिः वसन्तर्तुः । विविधलीलारूपा ये पल्लवाः तेषां वल्ली, लीलावती इत्यर्थः । व्रती तपस्वी, अवधानं समाधिः वर्म कवचं यस्य स अवधानवर्मा। "अवधानसमाधानप्रणिधानानि तु समाधौ स्युः ।" इति हैमः । भल्ली 'भाला' इति प्रसिद्धं भेदकं शस्त्रम् । ] ॥ २६० ॥ २६१ ॥ विस्मयेत्यादि । संजाताश्चर्यातिशयस्य इति अर्थः ॥२६२॥२६३॥ [ इतः त्रिषु विरोधाभासालंकारमालया नायकस्य

---

२५९ हस्तोच्चयः ( गो. कापा. ) हस्तवोलकं ( का. ) । अस्त्रं ( कापा ) २६० विलसित ( कापा ) । शृङ्गारसरोवरैक ( कापा ) २६१ प्रसरा॰ ( गो २ ) २६२ स्मरमार्गण…मुपेतस्य (प) । इदमासीन्म॰ (प. कापा) २६३ ॰द्भुतं समुपजातम् (प. कापा)

प्रकटितविग्रहसंस्थितिरतिशोभाघटितसन्धिबन्धा च ।
उन्नतपयोधराढ्या शरदिन्दुकरावदाता च ॥ २६५ ॥
अभिमतसुगतावस्थितिरभिनन्दितचरणयुगलरचना च ।
अतिविपुलजघनदेशा विध्वस्तशरीरविहितशोभा च ॥ २६६ ॥
आविर्भवदनुरागे तस्मिन्नथ वलितलोचना सहसा ।
सापि बभूव मृगाक्षी हस्तगता कुसुमचापस्य ॥ २६७ ॥

---

तद्दर्शनजनिताश्चर्यातिशयो व्यज्यते । ] निर्दोषा बाहुहीना कथं ललितवपुः, अथ च रात्रिहीना कथं स्फुरन्तीभिः तारकाभिः नक्षत्रैः अभिरामा । निर्वाच्यं निरभिधेयं कथं वदनमिति कथं निर्वाच्यवदनकमला। यदि जिता वीणा यया सा, तर्हि कथं क्वणिता वीणाशब्दतुल्या [ यद्वा क्वणः वीणाध्वनिः संजातोऽस्यास्तादृशी, क्वणशब्दात्तारकादित्वात् इतच् । ] वाणी यस्याः सेदृशी । ( २६४ । ) प्रकटिता विग्रहस्य युद्धस्य संस्थितिर्यया सा, कथम् अतिशोभया घटितः सन्धिबन्धः संमेलो यस्याः तादृशी । उन्नतैः पयोधरैः परिपूर्णा, कथं शरदिन्दुकरैः शुभ्रा, मेघानां वर्षासु समुपलब्धेः । ( २६५ । ) अभिमता सुगतावस्थितिः बुद्धावस्थितिः यस्याः सा, कथं 'अभिनन्दितचरणरचनशोभा ' [ इति पाठे ] चरणो वेदशाखा, वेदस्य तेन निन्दितत्वात् तथा भवितुं सा नार्हति; 'चरणयुगलरचना च ' इति [मूल] पाठे ऋक्सामरूपतया ऋग्यजूरूपतया मन्त्रब्राह्मणरूपतया वा [चरण]युगलत्वं निर्वहति । अतिविपुलजघनभागा च सुलक्षणा सुन्दरी भवति इति तादृशी, कथं विध्वस्ता शरीरशोभा यस्याः सा तथा,–इति विरोधपरम्परा (२६६ ।)। निर्दोषा दोषैर्हीना, तारका नेत्रकनीनिका, स्फुरन्त्या उज्ज्वलया तया मनोज्ञा । निर्वाच्यं वर्णनीयं वदनकमलं यस्या सा; जितवीणा वीणाधिकमधुरध्वनिः, क्वणितवाणी वीणाक्वणिततुल्यवाणी । ( २६४ । ) विग्रहसंस्थितिः शरीरविन्यासः, सन्धिबन्धोऽवयवसंश्लेषः । पयोधरौ स्तनौ । ( २६५ । ) सुगतं [सु] शोभनं [गतं] गमनम् , चरणौ पादौ । विध्वस्तं शिवेन दग्धं शरीरं यस्य तेन कामेन सम्पादितशोभा च–इति विरोधपरम्परापरिहारः ॥ २६४ ॥ ॥ २६५ ॥ २६६ ॥ [ आविर्भवदनुरागे इति । अत्रेदं बोध्यं-प्रथमं सुन्दरसेने एव रागाविर्भावः, तस्य प्रथमं नायिकादर्शनात् , तथापि "पूर्वं नारी भवेद्रक्ता पुमान् पश्चात्तदिङ्गितैः । " इति कविसमयात् पूर्वरागः प्रथमं स्त्रिया एव वर्णितः चमत्काराधायकः इति कृत्वा कविना नायिकानुरागवर्णनं प्रस्तुतम् इति ॥ ] हस्तगता वशवर्तिनी

---

२६५ रतिशोभनघ° ( प ) । कलावदाता ( कापा ) २६६ चरणरचनशोभा च ( कापा ) ( गोटि )

तरुमूलमाश्रितायाा विस्मृतसकलान्यकर्मणः सपदि ।
तस्या गात्रलतायामङ्कुरितं सात्त्विकैर्भावैः ॥ २६८ ॥
सैवोपवनसमृद्धिस्तस्मिन्नेव क्षणे स्मरं स्मृत्वा ।
तां व्यथयितुमारेभे, प्रभोर्हि कृत्यं करोति खलु सर्वः ॥२६९॥
गात्रसिरासंधिभ्यः प्रस्वेदजलं विनिर्ययौ तस्याः ।
अन्तर्ज्वलितमनोभवहव्यभुजा दह्यमानेभ्यः ॥ २७० ॥
कुसुमशरजालपतिता मुहुर्मुहुर्विदधती विवृत्तानि ।
अनिमेषं पश्यन्ती मत्स्यवधूमनुचकार सा तन्वी ॥ २७१ ॥
स्तब्धतनुं सोत्कम्पां पुलकवतीं स्वेदिनीं सनिःश्वासाम् ।
विदधे तामसमशरः, क्रीडति हि शठो विशिष्टमासाद्य ॥२७२॥

---

आसक्ता इत्यर्थः ॥ २६७ ॥ [ सपदि तत्क्षणम् । ] सात्त्विकैः भावैः स्तम्भादिभिः, [ ते च—“ स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः । वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका मताः ॥ ” इति । “ अत्र सत्त्वं जीवच्छरीरं तस्य धर्माः सात्त्विकाः, तथाच शारीराः भावाः स्तम्भादयः सात्त्विका भावाः ” इति रसतरङ्गिणीकारः । स्थायिनो व्यभिचारिणश्च भावा आन्तरा एव इति विवेकः । ] अङ्कुरितं प्रादुर्भूतम् । [ गात्रलता इत्यत्र शब्दोपात्तं, अङ्कुरितं इत्यत्र च श्लेषसामर्थ्याक्षिप्तं रूपकं, तरुमूलं इत्यत्र च प्रियरूपविषयनिगरणव्यञ्जनात् रूपकातिशयोक्तिध्वननेन एकदेशविवर्तिरूपकालंकारः अत्र बोध्यः । ] ॥ २६८ ॥ [ उपवनसमृद्धिः वसन्तकृता, वसन्तस्य च मित्रं स्मरः, अतः सोऽपि प्रभुः । स्मरं स्मृत्वा अर्थात् तस्य कामिपीडनरूपनिदेशं स्मृत्वा । तथाहि माघः—“ प्रभुचित्तमेव हि जनोऽनुवर्तते ।” इति ( १५।४१ ) । अर्थान्तरन्यासालंकारः । ] ॥ २६९ ॥ [ इतः षड्भिः तान् सात्त्विकभावान् वर्णयति ते यथायथमूह्याः । ] [ सिरा ‘ शिरा ’ इति तालव्यादिरपि—नाडी । हव्यभुक् अग्निः । बब्बुलादिकाष्ठविशेषेषु दह्यमानेषु तद्ग्रन्थिभ्यः छिन्नभागेभ्यो वा तैलरूपं जलं निःसरतीति प्रसिद्धम् । ] ॥२७०॥ विवृत्तानि परावर्तनानि । [मत्स्यवधूः मत्सी, तस्या अनिमेषचक्षुष्ट्वं प्रसिद्धमेव । अनेन चक्षुश्चेष्टानिरोधः प्रलयविशेष उक्तः । उपमालंकारः ।] ॥ २७१ ॥ [ असमशरः पञ्चबाणः कामः । शठः धूर्तः, विशिष्टं विशेषं प्राप्य, क्रीडति यथेष्टं तथा रमते—तेन स्वेच्छवर्तनं कारयति । अर्थान्तर-

---

२६८ भासितायाा ( कापा ) २६९ स्मरं समाश्रित्य ( प. का. गो २ ) प्राप्य ( गो २ कापा ) । प्रभवत्कृत्यं ( प ) २७० गात्रसरसन्धनेभ्यः ( प. कापा )

उच्छ्वासैरुल्लसनं कुचयुगले, सौष्ठवं विलासानाम् ।
अभिलषितेन, प्रेम्णा स्निग्धत्वं चक्षुषोर्मनोहारि ॥ २७३ ॥
अनुरक्त्या वदनरुचिं, वचसि च गमने च साध्वसस्खलनम् ।
तस्या मदनः कुर्वन्नुपनिन्ये चारुतामवधिम् ॥ २७४ ॥
( युग्मम् )

पार्श्वगतेऽपि प्रेयसि कामशरासारताड्यमानाऽपि ।
न शशाक साऽभिधातुं चित्तगतं प्रणयभङ्गतो भीता ॥ २७५ ॥

न्यासालंकारः, अनेन प्रबला दुरवस्था गम्यते । केषाञ्चित् मते नात्र समुच्चयालंकारः, स्तम्भादीनां स्वाभाविकत्वात् तन्नामनिर्देशमात्रे वैचित्र्याभावात् । ] ॥ २७२ ॥ उच्छ्वासैः इत्यादि । नवीनानुरागावस्थायां उच्छ्वासादिना नूतनमेव मौग्ध्यं संपन्नं इति, तच्च लोकानुभूतिविषय एव ॥ [हारलतायाः तरुणिमोद्गमेन कुचयोः उच्चत्वं, विलासानां सौष्ठवं, नयनयोः स्नैग्ध्यं, वदनस्य कान्तिः, वाग्गमनयोः स्खलनं च जातान्येवासन्, तथापि सुन्दरसेनदर्शनात् मदनेन उत्पादितभावत्वात् तत्रतत्र जातानुभावैः तदिदं सर्वं रामणीयकसीमानं प्राप्तं इत्यभिप्रायः । तथाहि—उच्छ्वासैः कुचयोः अधिकतरं उन्नतत्वं, अभिलाषेण सङ्गमोपायव्यवसायेच्छासम्भवेन विलासानां शृङ्गारभावजक्रियाणां अधिकतरचारुताविद्धत्वं, सञ्जातस्नेहे तत्प्रदर्शनाय नेत्रयोः अधिकतरं रागप्रत्यायकं स्नेहवत्त्वं ( २७३ ); तथा अनुरागबलेन वदने अधिकतरं कान्तिमत्त्वं, वाण्यां गतौ च—वाचि 'प्रियः किं कथं मनुयात्' इति साध्वसेन भयेन, गतौ च यौवनोद्गमरूपवयोविशेषेण यद्भयं तेन स्खलनात् अधिकतरं स्खलनं च प्रादुरभवन्; एवं कामकृतविडम्बनेन तस्याः तनोः अवयवविशेषाः चेष्टाविशेषाश्च अत्यन्तं सौन्दर्यं व्यञ्जयामासुः इति भावार्थः । अत्र यौवनेन आरब्धस्य नायिकाचारुतारूपकार्यस्य मदनजनितविक्रियारूपकारणान्तरसान्निध्यात् तस्य शीघ्रं सुष्ठु निष्पन्नत्वात् समाधिरलंकारः ॥ ] २७४ ॥ [ कामशरासारः कामबाणानां वेगेन अविच्छेदेन वा वृष्टिः ।] चित्तगतं मनोभिलषितम् । प्रणयः प्रीतिः । [ मदनपीडितायाः सत्याः समीपवर्तिनं प्रियं प्रति स्वाभिलाषकथने प्रवृत्तिर्युक्तैव तथापि प्रथमसमागमे एवं कृते स्वस्याः लघुता निर्लज्जता वा व्यक्तीकृता स्यात्—तथाहि "सर्वा एव हि कन्याः पुरुषेण प्रयुज्यमानं वचनं विषहन्ते, न तु लघुमिश्रामपि

२७३ °वं विलसितानि (गो. का) । स्निग्धं वचनं म° (गो. का) २७४ वचनरुचिं (प. का ) । °तामधिकम् ( प. गो २ ) अधिकाम् (कापा) २७५ समभिधातुं (गो) । भीत्या ( प. गो २. कापा ) [ अपपाठोऽयं ] ।

अथ विदितचित्तवृत्तिः सक्तदृशं प्रियतमे समाकृष्य।
मदनेन दह्यमानां विहसितविशदं जगाद तामाली॥ २७६॥
'अयि हारलते संहर हरहुङ्कृतिदग्धदेहसंक्षोभम्।
सद्भावजाऽनुरक्तिर्न हि पथ्यं पण्यनारीणाम्॥ २७७॥
अवधीरय धनविकलं, कुरु गौरवमकृशसंपदः पुंसः।
अस्मादृशां हि मुग्धे धनसिद्ध्यै रूपनिर्माणम्॥ २७८॥

---

वाचं वदन्तीति घोटकमुखः।" इति कन्याविस्रम्भणे वात्स्यायनः, तेन च प्रियमनसि अन्यथाभावः उदियात् इति प्रणयस्य प्रेम्णः भङ्गात् भेदात् भीता सती न किञ्चित् जगाद॥ अत्र स्वाभिप्रायप्रकाशने कारणकलापे सत्यपि तत्कार्यानुत्पत्तेः विशेषोक्तिः अलंकारः, स च 'प्रणयभङ्गतो भीता' इत्यनेन उक्तनिमित्तः। अनेन अस्याः बालात्वं व्यञ्जितम्। तथा च श्रीहर्षः—"का नाम बाला द्विजराजपाणिग्रहाभिलाषं कथयेदलज्जा।" (नैषध० ३।५१) इति॥] २७५॥ [विहसितं मध्यमो हासः, "आकुञ्चितकपोलाक्षं सस्वनं निःस्वनं तथा। प्रस्तावोत्थं सानुरागमाहुर्विहसितं बुधाः"॥ इति लक्षितम्॥ आली—'आलिः' इत्यपि शब्दः--सखी॥] २७६॥ अयीत्यादि। [हरः महादेवः, हुंकृतिः कोपातिरेकजनितः हुम् इति शब्दविशेषः।] वेश्यानां वस्तुतश्चित्तानुगतोऽनुरागो न हि पथ्यं कल्याणकारी, अपि तु कृत्रिमैव प्रीतिस्तासां हितावहेति। [अयि कोमलामन्त्रणे। हरहुंकृतिदग्धदेहः कामदेवः, अनया पर्यायोक्त्या नष्टदेहात्मकात् क इव क्षोभः इति व्यज्यते। सद्भावजा—सद्भावः अभिमानः, इदमेव मे प्रियं नान्यदिति अभिप्रायः अभिमानः, तज्जा आभिमानिकी अनुरक्तिः प्रीतिः। तथाहि वात्स्यायनः--"अभ्यासादभिमानाच्च तथा संप्रत्ययादपि। विषयेभ्यश्च तन्त्रज्ञाः प्रीतिमाहुश्चतुर्विधाम्॥" (२।१) इति। तत्र प्रथमा कर्माभ्यासात्, द्वितीया सङ्कल्पात्, तृतीया स्वभावात् निसर्गतो वा, चतुर्थी अन्योन्यदानमानादिव्यवहारविशेषात् जायते। प्रस्तुते द्वितीया उद्दिष्टा। तामधिकृत्य वात्स्यायनः--"अनभ्यस्तेष्वपि पुरा कर्मस्वविषयात्मिका। सङ्कल्पाज्जायते प्रीतिर्या सा स्यादाभिमानिकी॥" इति। इयमेवान्यत्र 'समा' इति व्यवहृता, यथा अनङ्गरङ्गे--"समयोगात्समा स्मृता।" (४।२७) इति॥ पथः अनपेतं पथ्यं, नहि पथ्यं अपथ्यं अहितावहम्; पण्यनारीणां रूपाजीवानां वेश्यानाम्; नहि पथ्यमिति अनेन श्रीमतः अपहाय यत्र कुत्रापि अनुरागबन्धनं वेश्यानां न पन्थाः इति सूचितम्। अर्थान्तरन्यासः स्पष्टः॥] २७७॥ [इत उक्तं विवृणोति अवेति। गौरवं बहुमानं,] अकृशाः अन्यूनाः संपदो यस्य तस्य

---

२७७ नहि पथ्यं (प) नहि रम्या (का)

अभिरामेऽभिनिवेशं विदधाना विविधलाभनिरपेक्षा ।
उपहस्यसे सुमध्ये विदग्धवाराङ्गनावारैः ॥ २७९ ॥
येषां श्लाघ्यं यौवनमभिमुखतामुपगतो विधिर्येषाम् ।
फलितं येषां सुकृतं जीवितसुखिताथिंता येषाम् ॥ २८० ॥
तेऽवश्यं स्वयमेव त्वामनुबध्नन्ति मदनशरभिन्नाः ।
न हि मधुलिहः कृशोदरि मृग्यन्ते चूतमञ्जर्या ॥ २८१ ॥
( युगलकम् )

इति गदितवतीमालीं कामशरासारभिन्नसर्वाङ्गी ।
अव्यक्तस्खलिताक्षरमूचे कृच्छ्रेण हारलता ॥ २८२ ॥

---

विन्नवित्तस्य । [ मुग्धे तत्त्वानभिज्ञे, रूपं आजीवो जीवनसाधनं यासां ताः रूपाजीवा वेश्या एव वयम् इति भावः ॥] २७८॥ अभिरामे मनोज्ञे, केवलं तारुण्यलुब्धा सती-अभिनिवेशं विदधाना अनुरक्ता, [ उपहस्यसे उपहसिष्यसे इत्यर्थः, " वर्तमानसामीप्ये वर्तमानवद्वा " इति लट्, तेन वर्तमानसमीपभविष्यत्कालद्योतनात् । ] विदग्धैः स्वव्यवहाराभिज्ञैः, वाराङ्गनानां, वारैः वरसमूहैः विटैः इति अर्थः; [ यद्वा वाराङ्गनानां वारैः समूहैः विविधवेश्यागणैः इत्यर्थः ॥ ] २७९ ॥ [ येषां कामुकानां, श्लाघ्यं सुरूपाप्राप्त्या आश्रयबलेन वा प्रशस्यं; अभिमुखतां उपगतः प्रसन्न इति यावत्; जीवितं जीवनं तस्य सुखिता आनन्दः ॥ ] २८०॥ अनुबध्नन्ति प्रार्थयन्ति [ वस्तुतः अनुवर्तन्ते अनुषजन्ते वा, पूर्ववत् वर्तमानसामीप्ये लट्प्रयोगः तेन अनुषजिष्यन्ते अनुगमिष्यन्ति इति वाऽर्थः ॥ प्रतिज्ञामात्रेण नेदं प्रत्यायकं चेत् स्वोक्तसमर्थनार्थं वैधर्म्येण अर्थान्तरं न्यस्यति नहीति । मधुलिहः भ्रमराः, मधुशब्दप्रकृतिककर्मषष्ठ्यन्तात् लिहधातोः "क्विप् च" ( पा० सू० ३ । २ । १६ ) इति क्विप्; मधु लेढि आस्वादते इति लौकिकविग्रहः, कुम्भं करोतीति कुम्भकारः इतिवत्, समासस्तु षष्ठ्यन्तपदस्यैव । कृशोदरि निम्नोदरि इत्यर्थः, मृग्यन्ते अन्विष्यन्ते, चूतः आम्रः । तथा च कालिदासः— " न रत्नमन्विच्छति मृग्यते हि तत् । " ( कुमार० ५।४५ ) इति । अन्यत्र च— " नानीयन्ते मधुनि मधुपाः पारिजातप्रसूनैः, नाभ्यर्थ्यन्ते तुहिनरुचिना चन्द्रिकाभिश्चकोराः । " इति । अर्थान्तरन्यासालंकारः ॥ ] २८१ ॥ [ कृच्छ्रेण कष्टेन ॥ ]

---

२७९ त्रिनिवेशं ( प. गो २. कापा ) । विभवलाभ ( गो २ ) २८० सुकृतैः ( प. गो २. का ) २८१ मधुलेहाः सुन्दरि ( प. कापा )

'सखि कुरु तावद्यत्नं पटुतरमतिवेदनाप्रतीकारे ।
क्रोडीकृता विपत्त्या न भवन्त्युपदेशयोग्या हि ॥ २८३ ॥
अस्वायत्तः प्रेयान् मृदुपवनः सुरभिमास उद्यानम् ।
इयती खलु सामग्री भवति क्षीणायुषामेव ॥' २८४ ॥
मत्वा मदनाशीविषविषवेगाकुलितविग्रहामालीम् ।
समुपेत्य शशिप्रभया पौरन्दरिरभिदधे कृतप्रणतिः ॥ २८५ ॥
'यदि नाम रुणद्धि गिरं गणिकाभावोपजनितवैलक्ष्यम् ।
तदपि कथनीयमेव, स्निग्धापदि न हि निरूप्यते युक्तम् ॥२८६॥
एतावति संसारे परिगणिता एव ते सुजन्मानः ।
आपन्नपरित्राणे व्याकुलमनसः स्फुरन्ति ये बुद्धौ ॥' २८७ ॥

---

॥ २८२ ॥ [ पटुतरं तीक्ष्णं चातुर्ययुक्तं वा, प्रतीकारे प्रतिकरणे निग्रहे । अर्थान्तरन्यासेन तदेव समर्थयति क्रोडीति । ] क्रोडीकृताः अङ्कीकृताः आक्रान्ताः, [ उपदेशः हिताहितविवेककथनम् । विपन्नानां विपत्तिप्रतीकार एव अभीष्टः, न तेषां शुष्कोपदेशश्रवणेन किमपि प्रयोजनं इति भावः ॥ ] २८३ ॥ [ अस्वायत्तः अस्वाधीनः प्रेयान् प्रियः, सुरभिमासः चैत्रः । समुच्चयालंकारः, अत्र मृदुपवनादीनां स्वतःशोभनत्वेऽपि विरहिणीविषयतया अशोभनता ज्ञेया, अतः अशोभनसमुच्चयोऽयम् ॥ ] ॥ २८४ ॥ [ आशीः तालुगता दंष्ट्रा तत्र विषं यस्य सः आशीविषः सर्पः, विग्रहः देहः । पौरन्दरिः पुरन्दरस्यापत्यं सुन्दरसेनः ॥ "विज्ञातनायिकाचित्ता सखी वदति नायकम् ।" ( १५३ ) इति शृंगारतिलकोक्तन्यायेन शशिप्रभया अभिदधे इति । ॥ ] २८५ ॥ [ रुणद्धि गिरं वक्तुं न ददाति, अस्या गणिकात्वात् कथं सुजातेन सा स्वीकरिष्यते इति ] वैलक्ष्यं लज्जा । [ मित्रविपत्तौ तद्दूरीकरणार्थं इदं युक्तं न वेति न विचार्यते । तथा च माघः—" विपदि न दूषिताऽतिभूमिः ।" ( ८।२० ) इति, ( अतिभूमिः अमर्यादा । ) अत्रापि समर्थ्यसमर्थकयोः सामान्यविशेषसम्बन्धे अर्थान्तरन्यासालंकारः ॥ ]२८६॥ [ आपन्नाः विपद्ग्रस्ताः । एतावति महति इत्यर्थः, परिगणिताः

---

२८३ यत्नं बहु मनसिजवे॰ (गो २) बहुमतमति वे॰ (कापा) । क्रीडीकृता (प.) २८४ सुरभिकुसुममुद्यानम् ( प ) । इयमियती सा॰ ( गो २ कापा ) २८५ मदनाशीविषवेगा॰ ( प ) । स उपेत्य ( प ) २८६ गणिकाभावोऽपि जनित॰ ( प ) । कथितव्यमेव ( प. कापा ) । २८७ ते सुजनाः ( का ) । आपत्सु परित्राणव्याकुलमनसां ( प ) । कोमलमनसः ( कापा )

यस्मिन्नेव मुहूर्ते चक्षुर्विषयं गतोऽसि मे सख्याः ।
तत एवारभ्य गता विधेयतां दग्धमदनस्य ॥ २८८ ॥
रोमोद्गमसन्नहनं भित्त्वाऽन्तर्विग्रहं परापतिताः ।
तस्या मानससम्भवकोदण्डविनिर्गता इषवः ॥ २८९ ॥
किं वा वदतु वराकी, कुत्र समाश्वसितु, यातु कं शरणम् ।
पीडयति भृशं यस्मान्नित्यं शुचिदक्षिणो मृदुः पवनः ॥२९०॥
वचसि गते गद्गदतामुज्झितमौनव्रताश्चिराय पिकाः ।
हृष्टा व्यथयन्ति सखीं जातावसरा निरर्गलं विरुतैः ॥ २९१ ॥

---

परिसङ्ख्याताः विरलाः । बुद्धौ स्फुरन्ति स्मृतिमुपगच्छन्ति ॥ ] २८७ ॥ [ चक्षुर्विषयं गतः दृष्टः । दग्धशब्देन निन्दा गम्यते ॥२८८॥ सात्त्विकभावेषु पुलकोद्गमं वर्णयति रोमेति । ] अन्तर्विग्रहं विग्रहान्तर् इत्यर्थः, [ अर्थात् प्रकृते अन्तःकरणम् । रोमोद्गमस्य पुलकानां उद्गमस्य, सन्नहनं बन्धः, स कीदृशः, अन्तःकरणं भित्त्वा परापतिताः प्रतिनिवृत्ताः कामबाणा एव । अत्र रूपकालंकारः, पुलकानां इषुफलानां च ताद्रूप्यम् । अनेन सा कामबाणभिन्ना इति सूचितम् ॥ ] २८९ ॥ [ वराकी दीना, भृशं अत्यर्थम्, मृदुः कोमलः, अतएव शुचिदक्षिणः शृङ्गाररसानुकूलः, " शुचिः शुद्धे सितेऽनले । ग्रीष्माषाढानुपहतेषूपधाशुद्धमन्त्रिणि । शृङ्गारे च " इति हैमः, " दक्षिणः सरलावामपरछन्दानुवर्तिषु " इति च विश्वलोचने । अपि च शुचिदक्षिणोऽमृदुः इति शुचिः अग्निः ग्रीष्मः तद्वत् दाहे दक्षिणः निपुणः अत एव अमृदुः तीक्ष्णः सन् पीडयति इत्यपि श्लेषेण सूच्यते ] ॥२९०॥ [ सात्त्विकेषु भावेषु स्वरभङ्गं कथयति वचसीति । जातावसराः कलकण्ठत्वे पराभवहेत्वपगमात् प्राप्तसमयाः, निरर्गलं निरङ्कुशं, विरुतैः विरावैः कलशब्दैः । कलकण्ठ्या तया मूकीकृताः कोकिलाः लब्धच्छिद्रा अधुना वैरनिर्यातनं कुर्वन्ति इति भावः । अत्र क्षुद्रैः तिर्यग्भिरपि तद्व्यथोत्पादनस्य प्रियविरहजनितस्वरभङ्गेन समर्थनात् काव्यलिङ्गालङ्कारः ॥ ] २९१ ॥ [ गतौ वेपथुः जन्यं स्खालित्यं वर्णयति स्खलितेति । एवमेव पूर्वं तद्गमनलीलया पराजिता हंसाः "प्रादुःष्यात्क इव जितः पुरः परेण । " (८।१२) इति माघोक्त्यनुसारेण अन्तर्हिताः,

---

२८८ यदवधि दृष्टोऽसि मे सख्या (गो २ का) चक्षुर्विषयोऽसि मम सख्याः (कापा) २८९ भित्त्वा पीड्यन्ति (प) । तस्यां (प. कापा) । विनिःसृता इषवः (प) २९० किं विदधातु वराकी (प. कापा) । नित्यशुचिर्दक्षिणो मृदुपवनः (प.) यस्या नित्यशुचिर्दक्षिणः पवनः (कापा) । २९१ प्राप्तावसरा (गो २)

स्खलिताकुलिते गमने तन्वङ्ग्या अगणितश्रमा हंसाः ।
सुचिराल्लब्धावसराः कुर्वन्ति गतागतानि परितुष्टाः ॥ २९२ ॥
उष्णोच्छ्वसितसमीपे विदह्यमानोऽपि मधुकरस्तस्याः ।
अलककुसुमं न मुञ्चति, कृच्छ्रेष्वपि दुस्त्यजा विषयाः ॥२९३॥
नो वारयसि तथा मां साम्प्रतमिति कथयतीव मधुलेहः ।
निःसहवपुषः कर्णे श्रुतिपूरकपुष्पसंगतो गुञ्जन् ॥ २९४ ॥
प्रशिथिलभुजलतिकायास्तस्याः पतितस्य हेमकटकस्य ।
यत्प्रापणं पृथिव्यास्तस्मिन्खलु मुक्तहस्तता हेतुः ॥ २९५ ॥

---

अधुना निर्भीकं प्रकटं गमनानि आगमनानि च कुर्वन्ति इत्यर्थः ॥२९२॥ विरहजनितं अन्तस्तापं वर्णयति उष्णेति । अलककुसुमं अलकाः केशाः तत्र शोभार्थं निहितं पुष्पं, अत्र जातावेकवचनम् । कृच्छ्रेषु कष्टेषु शरीरपीडासु अपि, विषयाः विशेषेण सिन्वन्ति बध्नन्ति पुरुषं ते विषयाः रूपादिगुणयुक्ताः पदार्थाः, दुस्त्यजाः दुःखेन त्यक्तुं शक्याः । अर्थान्तरन्यासालंकारः ॥ २९३ ॥ तथा पूर्ववत्, साम्प्रतं सम्प्रति अस्मिन्काले, मधुलेहः भ्रमरः, लेढि इति लेहः, "श्याद्व्यधा" इत्यादिना (पा. सू. ३।१।१४१) णप्रत्यये उपधागुणः, ततो मधुनो लेहः आस्वादयिता इति, धरतीति धरः, गङ्गायाः धरः गङ्गाधरः इतिवत् षष्ठीतत्पुरुषः । निःसहं वपुः यस्याः तस्याः निःसहवपुषः स्वशरीरधारणमपि भारभूतं यस्याः तस्या इत्यर्थः, श्रुतिपूरकं कर्णपूरकं कर्णपूरं कुवलयं, "कर्णपूरं कुवलयेऽप्यवतंसशिरीषयोः ।" इति विश्वलोचने । उत्प्रेक्षालंकारः । अत्र शरीरधर्मत्वे सति चेष्टानिरोधः इति लक्षितः प्रलयाख्यः सात्त्विको भावो वर्णितः । भ्रमरबाधावर्णनं शाकुन्तले यथा—"चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं, रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः । करौ व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं," (१।१९) इति ॥ अपिच—"विलोलतां चक्षुषि, हस्तवेपथुं, भ्रुवोर्विभङ्गं, स्तनयुग्मवल्गितम् । विभूषणानां क्वणितं च, षट्पदः गुरुर्यथा नृत्यविधौ समादधे ॥" (११।३७) इति भट्टिकृतरावणवधकाव्ये ॥२९४॥ कटकं वलयं नाम प्रकोष्ठाभरणम् 'कड्ढं' इति भाषायाम् । ] मुक्तहस्तता विरहक्लान्त्या शिथिलहस्तता उदारता च । [ अनेन तस्याः तानवाख्यः संचारिभावावस्थाविशेषः उक्तः कृशतानाम्नी पञ्चमी स्मरदशा वा उक्ता । कृशात् बाहोः कटकस्य भ्रंशः स्वाभाविक एव, अतः अत्र वैचित्र्यार्थं मुक्तहस्तता इति श्लिष्टपदद्वारा काव्यलिङ्गालङ्कारः सम्पादितः । कालिदासस्तु "···मुहुर्मणिबन्धनात् कनकवलयं स्रस्तंस्रस्तं मया प्रतिसार्यते ।" (शाकुं० २।१३) इत्येतावत्

रशनागुणेन विगलितमेकपदे तन्नितम्बतश्चित्रम् ।
पतनाय नियतमथवा निषेवणं गुरुकलत्रस्य ॥ २९६ ॥
अङ्गीकृत्य मनोभवमुरसि तथा लालितोऽपि हतहारः ।
तापयति सखीं तत्क्षणमन्तर्भिन्नात्कुतः कुशलम् ॥ २९७ ॥
वाससितं स्वेदजलं कज्जलमलिनाश्रुवारिणा मिश्रम् ।
कुचतटपतितं तस्याः प्रयागसंभेदसलिलमनुकुरुते ॥ २९८ ॥

---

अवर्णयत् ॥] २९५॥ [ अन्यत्रापि तत् वर्णयति रशनेति । रशना रसना वा स्त्रीकटिभूषणं काञ्ची, तस्याः गुणः बन्धनरज्जुः । एकपदे तत्कालं युगपत् । नितम्बः निभृतं तम्यते काङ्क्ष्यते कामुकैः इति नितम्बः स्त्रीकट्याः पश्चाद्भागः। इदमपि महच्चित्रं यत् रशनाऽपि विस्तारिनितम्बात् विगलिता । अथवा इदं न चित्रं इति आक्षिपति पतनायेति ।] गुरुकलत्रस्य गुरुभार्यायाः, निषेवणं कामभावो( वनयो ? )पसेवनं, पतनाय पातित्याय, नियतं निश्चितं, [ तथाहि याज्ञवल्क्यः " ब्रह्महा मद्यपः स्तेनस्तथैव गुरुतल्पगः । एते महापातकिनो यश्च तैः संपिबेत्समाः ॥ " ( सह संवसेत् इति पाठान्तरम् ) (३।२२७) इति । ] तथाऽत्रापि रशनागुणेन काञ्च्या, गुरुणो विशालस्य, तस्याः कलत्रस्य श्रोणिभागस्य, सम्बन्धः संपादितः इति पतनम् अधः स्खलनं, नाश्चर्यकारीति । [ " कलत्रं श्रोणिभार्ययोः " इति अमरः । ] [ आक्षेपश्लेषार्थान्तरन्यासानां सङ्करः] ॥२९६॥ [ विरहे स्त्रीणां अलंकारधारणं अनुचितं, तत्र केषाञ्चित् अलंकाराणां दूरीभावः विरहजनितकार्श्यात् स्वयमेव जातः इति द्वाभ्यां उक्तम् । अधुना अपरस्य स्थितिं कथयति अङ्गीति । तथा चार्थे । किञ्च प्रियवत् उरसि संस्थापनेन लालितोऽपि हारः, अधुना तस्याः शत्रुं मनोभवं कामदेवं, अङ्गीकृत्य तत्पक्षं स्वीकृत्य, शत्रुभूतः सन्, अतएव हतः कृतमनोभङ्गः, एनां मत्सखीं तापयति, स्वीया अपि प्रतिपक्षीभूता इति करुणं वर्तते इति भावः । अर्थान्तरन्यासेन समाधत्ते अन्तरिति । ] अन्तर्भिन्नः [ भेदं प्राप्तः ] सच्छिद्रः [हारवर्तिमुक्तानां तथात्वात्, पक्षे] अन्तः गृहे मनसि वा परस्परं कलहादिना विरुद्धश्च । [ कुशलं क्षेमम् ] ॥२९७॥ [ स्वेदाश्रुसात्त्विकभावौ एकेनाह वासेति । वासेन तस्याः शरीरे अवस्थानेन सितं श्वेतं, तस्याः अङ्गस्य गौरत्वात्, स्वेदजलं बाहुल्यात् ललाटतः कपोलतलं प्राप्य तत्र चक्षुर्वर्तिकजलात् जातमलिम्ना अश्रुजलेन मिश्रं सत् कुचतटे पतितम् । प्रयागः तीर्थराजः संप्रति ' अल्लाहाबाद ' इत्यपरनाम्ना प्रसिद्धः तत्र ] संभेदः [ गङ्गायमुनयोः ] सङ्गमः [ तस्य सलिलं श्वेतकृष्णवर्णं जलं तदनुकुरुते तत्साम्यं

---

२९८ वक्षसि तत्स्वेदजलं ( प. का )

पिकरुतमलयसमीरणसुमनःस्मरभृङ्गदहनपरिकलिता।
पञ्चतपश्चरति भवत्परिरम्भणसौख्यलम्पटा बाला॥ २९९॥
न परां पतति वराकी दशमीं यावन्मनोभवावस्थाम्।
त्रायस्व सुभग तावच्छरणागतरक्षणं व्रतं महताम्॥' ३००॥
अथ तद्वचसि कृतादरमुद्भूतमनोभवं समवधार्य।
अवगीतिभीतचेता ऊचे गुणपालितः सुहृदम्॥ ३०१॥

---

बिभर्ति। प्रयागे गङ्गायमुनासङ्गमस्य कालिदासेन मनोहरतयोत्प्रेक्षितं वर्णनं रघुवंशे त्रयोदशसर्गे (श्लो० ५४–५७)। अत्र उपमालङ्कारः, स्वेदजलस्य क्रमेणानेकाश्रयसंबन्धोक्तेः पर्यायालंकारभेदः।] २९८॥ [उपसंहरति पिकेति। पिकरुतं कोकिलकुहूशब्दः, मलयसमीरणः मलयपर्वतवायुः, सुमनांसि मल्लिकादिपुष्पाणि, स्मरः पुष्पायुधः, भृङ्गाः भ्रमराः, एतानि पञ्च तस्याः कामपीडितायाः तापकत्वात् दहनाः अग्नयः तैः] परिकलिता परिवारिता, [वस्तुतः परिबाधिता,] [पञ्चतपः पञ्चातपो वा पञ्चाग्निसाध्यः तपोविशेषः, तत्प्रकारस्तु "यज्ञियैर्दारुभिः शुष्कैश्चतुर्दिक्षु चतुष्कृतम्। वह्निसंस्थापनं, ग्रीष्मे तीव्रांशुस्तत्र पञ्चमः॥ ···तन्मध्यस्था सूर्यबिम्बं वीक्षन्ती बहुलांशुका।" इति कालिकापुराणे।] परिरम्भणं आलिङ्गनं, लम्पटा आसक्ता। [रूपकालंकारः स्पष्टः, चरति इति चरतीवेत्यर्थात् उत्प्रेक्षा व्यङ्ग्या॥] २९९॥ [अन्तिमप्रार्थनं करोति नेति। परा दशमी मनोभवावस्था मरणरूपा दशमी कामदशा, तदुक्तं—"नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोऽर्थसङ्कल्पः। निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः। उन्मादो मूर्छा मृतिरित्येताः स्मरदशा दशैव स्युः॥" इति। शृङ्गारतिलके तु—"अभिलाषोऽथ चिन्ता स्यात्स्मृतिश्च गुणकीर्तनम्। उद्वेगोऽथ प्रलापः स्यादुन्मादो व्याधिरेव च॥ जडता मरणं चैव दशमं जायते ध्रुवम्।" (२।५) इति। सुभग सौभाग्यैश्वर्ययुक्त। स्वप्रार्थनां अर्थान्तरन्यासेन द्रढयति शरणेति, तथाहि कालिदासः "क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैःशिरसां सतीव।" (कुमार० १।१२) इति।] ३००॥ [एतदुक्त्यवसाने नायके भावोद्गमं संलक्ष्य शशिप्रभया स्वसख्याः हारलतायाः नामनिवासस्थानादीनां निरूपणं कृत्वा निर्गतम् इति अध्याहार्यम्।] [अथ शशिप्रभायाः गमनात् पश्चात्, सुहृदं ऊचे इत्यन्वयः। "पापान्निवारयति योजयते हिताय" सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः॥" इति न्यायेन इति भावः।]

---

२९९ परिकरिता (प) ३०० परापतति (गो. का)। रक्षणव्रतं (गो. का)

'यद्यपि मारप्रसरो दुर्वारः प्राणिनां नवे वयसि ।
चिन्त्यं तदपि विवेकिभिरवसानं वारयोषितां प्रेम्णः ॥ ३०२ ॥
वारस्त्रीणां विभ्रमरागप्रेमाभिलाषमदनरुजः ।
सहवृद्धिक्षयभाजः प्रख्याताः संपदः सुहृदः ॥ ३०३ ॥
ताभिरवदातजन्मा करोति सङ्गं कथं यासाम् ।
क्षणदृष्टोऽपि प्रणयी, रूढप्रणयोऽपि जन्मनोऽपूर्वः ॥ ३०४ ॥
प्रद्युम्नः प्रद्युम्नो विरूपकः खलु विरूपकः सततम् ।
सुस्निग्धः सुस्निग्धो रूक्षो रूक्षस्तु गणिकानाम् ॥ ३०५ ॥

---

अवगीतिः वेश्यानुसरणनिन्दा ॥ ३०१ ॥ [ मारप्रसरः कामविकारः, दुर्वारः अप्रतिनिषेध्यः, नवे वयसि तारुण्ये । ] अवसानं परिणामफलम् ॥ ३०२ ॥ [ " विभ्रमस्तु विलासे स्याद्विभ्रमो भ्रान्तिहावयोः । " इति विश्वलोचने, अपिच " विभ्रमो भ्रूसमुद्भवः " इति विभ्रमाः भ्रूविलासाः; रागः चित्तानुरञ्जनं, प्रेम प्रियतर्पणहेतुभूतः भावः स्नेहो वा, अभिलाषः प्रियकर्तृकालिङ्गनादितृष्णा, मदनरुक् कामव्यथा; अत्र रसार्णवसुधाकरे प्रेमरागादीनां भेदः उक्तः, यथा—" अङ्कुरपल्लवकलिकाप्रसूनफलभोगभागियं क्रमतः । प्रेमा मानः प्रणयः स्नेहो रागोऽनुराग इत्युक्तः ॥ " ( २।१०९ ) इति । ( इयं रतिः । ) " स प्रेमा भेदरहितं यूनोर्यद्भावबन्धनम् । " " दुःखमप्यधिकं चित्ते सुखत्वेनैव व्यज्यते । येन स्नेहप्रकर्षेण स राग इति गीयते ॥" इति च ॥ वस्तुतस्त्वत्र विभ्रमादयः संभोगावस्थाः, ताश्च " प्रेमाभिलाषो रागश्च स्नेहः प्रेम रतिस्तथा । शृङ्गारश्चेति संभोगः सप्तावस्थः प्रकीर्तितः॥ प्रेमा दिदृक्षा, रम्येषु तच्चित्तमभिलाषकः । रागस्तत्संगबुद्धिः स्यात्, स्नेहस्तत्प्रवणक्रिया ॥ तद्वियोगासहं प्रेम, रतिस्तत्सहवर्तनम् । शृङ्गारस्तत्समं क्रीडा, संभोगः सप्तधाक्रमः ॥ " इति रसरत्नाकरात् किरातटीकायां मल्लिनाथः । प्रकृते विभ्रमः विलासः रतिः, मदनरुक् च प्रेम । ] संपदः संपत्तेः, सुहृदः मित्रकल्पाः, सहवृद्धिक्षयभाजः अन्वयव्यतिरेकिणः । तथा च सम्पत्सत्त्वे तासां विभ्रमादिविकासो नान्यथा इत्यर्थः ॥ ३०३ ॥ अवदातजन्मा सत्कुलोत्पन्नः । [ प्रणयः स्नेहः । ] जन्मनोऽपूर्वः अदृष्टचरः ॥ ३०४ ॥ प्रद्युम्नः कामः कामसदृशश्च । कामकल्पादयो यथारूपमेव उदासीनतया ताभिर्व्यवह्रियन्ते, न तु तासु कश्चित् आन्तरो भावविकारादिः अर्थग्रहणैकासक्तत्वात् इत्यर्थः । [ यद्वा गणिकानां स एव प्रद्युम्नः कामदेवः तत्तुल्य इत्यर्थः, यः, प्रद्युम्नः प्रकर्षेण द्युम्नं धनं यस्य

---

३०२ वेशयोषितां ( प ) वेशयोषितः ( कापा ) ३०४ कुर्वीत समागमं ( कापा )

यासां जघनावरणं परकौतुकवृद्धये न तु त्रपया ।
उज्ज्वलवेषा रचना कामिजनाकृष्टये न तु स्थितये ॥ ३०६ ॥
मांसरसाभ्यवहारः पुरुषाहतिपीडया न तु स्पृहया ।
आलेख्यादौ व्यसनं वैदग्ध्यख्यातये न तु विनोदाय ॥ ३०७ ॥

---

सः, " हिरण्यं द्रविणं द्युम्नं " इति अमरः; एवं स एव च विरूपकः विशेषेण रूपमस्यास्तीति अतिरूपवान्, यः विरूपकः विविधा बहवो रूपकाः नाणकविशेषाः यस्य सः, रूपमेव रूपकं, स्वार्थे कन्, " रूपं श्लोके यशोनाटकादौ सौन्दर्यशब्दयोः । ग्रन्थावृत्तौ तथाऽऽकारे स्वभावे नाणके मृगे ॥ " इति महीपः । सुस्निग्धः स्नेही सः, यः सुस्निग्धः, द्रव्येण इति शेषः; रूक्षः कठोरः, तु अप्यर्थे, अरूक्षः इति च्छेदः स्निग्धः इत्यर्थः, यः धनी इति शेषः । तथा च क्षेमेन्द्रः–" वित्तेन वेत्ति वेश्या स्मरसदृशं कुष्ठिनं जराजीर्णम् । वित्तं विनाऽपि वेत्ति स्मरसदृशं कुष्ठिनं जराजीर्णम् ॥ " इति । अत्र प्रद्युम्नादिपदचतुष्टयस्य अर्थभेदेन पुनरावृत्तत्वात् यमकशब्दालंकारभेदः यमकावलिः, तथाहि " पदेषु यत्र सर्वेषु सादृश्यं दृश्यते यदि । यमकावलिरुद्दिष्टा श्लिष्टा यमककोविदैः ॥ " इति; न च लाटानुप्रासः, तत्र पदानां तात्पर्यमात्रभेदेन इष्टत्वात्; अत्र च समानपदानां भिन्नार्थत्वात्; तद्वैपरीत्ये भासमानसमानार्थे पदभेदे पुनरुक्तवदाभासः, यथा–" द्विषामरीणां त्वं सेनां वाहिनीमुदकम्पयः । " (५५) इति आनन्दवर्धनीये देवीशतके । पुनश्च अत्र यः धनी स एव तासां कामदेवः इत्याद्यर्थे सश्लेषं रूपकं, यः धनी स तासां कामदेवतुल्यः इत्यर्थग्रहणे तु उपमा ॥ ] [ नात्र कथितपदत्वं दोषः, पदानामर्थान्तरत्वात् । ] ॥ ३०५ ॥ [ इतः पञ्चके परिसङ्ख्यालंकारद्वारा तासां गुणकर्मणां निरूपणेन ताः निन्दति यासामित्यादिना । ] कौतुकं आसक्तिप्रयोजकं आश्चर्यम् । स्थितये लोकमर्यादायै ॥ [ उज्ज्वलवेषा रचना वस्त्रालंकारादिना शरीरप्रसाधनं, स्थितये स्वप्रतिष्ठानुरूपा मर्यादा इति । ] ॥ ३०६ ॥ [ मांसस्य तद्रसस्य च भक्षणं, अनेककामुकसंसेवनजन्यशरीरपीडाशमनार्थं, न तु तद्वाञ्छया । ] व्यसनम् [ चित्तस्य विविधस्थापनादिकं ] आसक्तिप्रदर्शनं [ वा ] । वैदग्ध्यं प्रावीण्यम् । विनोदः स्वमनोनुरञ्जनम् ॥ [ इयं ललिताख्या गीतिः गाथिनी वा इति गीतिभेदः । ] ॥ ३०७ ॥ [ इतः त्रिषु श्लेषमूलकपरिसंख्या ] रागः रक्तिमा प्रीतिश्च; सरलत्वं ऋजुता

---

३०६ वेषाचरणं ( गो २ ) वेषावरणं ( कापा ) ३०७ विनोदः ( प. कापा ) [ अस्मिन्पाठे प्रक्रमभंगो दोषः ] ।

रागोऽधरे न चेतसि, सरलत्वं भुजलतासु न प्रकृतौ ।
कुचभारेषु समुन्नतिराचरणे नाभिनन्दिते सद्भिः ॥ ३०८ ॥
जघनस्थलेषु गौरवमाकृष्टधनेषु नो कुलीनेषु ।
अलसत्वं गमनविधौ नो मानववञ्चनाभियोगेषु ॥ ३०९ ॥
वर्णविशेषापेक्षा प्रसाधने नो रतिप्रसङ्गेषु ।
ओष्ठे मदनासङ्गो नो पुरुषविशेषसंभोगे ॥ ३१० ॥
या बालेऽपि सरागा, वृद्धेष्वपि विहितमन्मथावेगा ।
क्लीबेष्वपि कान्तदृशः, साकाङ्क्षा दीर्घरोगेऽपि ॥ ३११ ॥
स्वेदाम्बुकणोपचिता अनार्द्रतानिजनिवासमनसश्च ।
आविष्कृतवेपथवो वज्रोपलसारकठिनाश्च ॥ ३१२ ॥
जघनचपला अनार्याः, परभृतयः कृतकनेत्ररागाश्च ।
सर्वाङ्गार्पणदक्षा असमर्पितहृदयदेशाश्च ॥ ३१३ ॥

---

अकुटिलता च, [ प्रकृतौ स्वभावे ]। समुन्नतिः उत्तुङ्गता उत्कर्षश्च ॥ ३०८ ॥ गौरवं पीवरत्वं समादरश्च । अलसत्वं मन्थरगामित्वं दीर्घसूत्रता च, [ अभियोगः अभिनिवेशः । नो न ] ॥ ३०९ ॥ वर्णः शुक्लादिः द्विजादिश्च, [ नो इत्यादि वेश्यानां सर्वसाधारणत्वात् ] । ओष्ठे मदनासङ्गो वाङ्मात्रे कामसम्बन्धः, [ यद्वा मदनस्य मधूच्छिष्टस्य आसङ्गः निवेशनं दंशेन शीतेन वा जातस्य विरोपणार्थं, " मदनः स्मरधत्तरवसन्तद्रुमसिक्थके " । इति विश्वलोचने ।] ॥ [ पुरुषविशेषाणां रूपगुणयौवनादिसंपन्नानाम् । ] ॥३१०॥ [इतः पञ्चके विरोधाभासालंकारेण अप्रथमे श्लेषानुगृहितेन च तेन तासां अनभिनन्दनीयानि चरितानि उद्घाटयति या इति। ] केवलं द्रव्यमोषणासक्तत्वेन बालवृद्धादिष्वना(दिष्वा ? )त्याभाजः । [ यदुक्तं—" सर्वाङ्गना तु वेश्या " इति ( काव्यालंकारे १२।३९ ) ] ॥ ३११ ॥ आर्द्रता क्लिन्नता सरसता च । [ अनार्द्रतायाः निजनिवासः स्वगृहं मनो यासां ताः । ] [ अत्र चः अप्यर्थकः, ] वेपथुः कम्पः, स च पुरुषप्रतारणायैव आविष्क्रियते ताभिः, वज्रोपलो हीरकमणिः, सारः [ स्थिरांशः ] ॥ ३१२ ॥ जघनचपलानामच्छन्दसो आर्याछन्दोऽन्तर्गतविशेषरूपतया कथं अनार्याः आर्याच्छन्दोभिन्नाः, [ तल्लक्षणं तु " प्राक्प्रतिपादितमर्धे प्रथमे चरमदले

---

३१० रतिप्रबन्धेषु ( गो. का ) । विशेषजनितसंभोगे ( प ) ३११ मन्मथावेशा ( गो २ ) ३१२ °चिता न चार्द्रता ( गो. का. )

न कुलसमुत्पन्ना अपि भुजङ्गदशनकृतवेदनाभिज्ञाः ।
कन्दर्पदीपिका अपि रहिताः स्नेहप्रसङ्गेन ॥ ३१४ ॥
उज्झितवृषयोगा अपि रतिसमये नरविशेषनिरपेक्षाः ।
कृष्णैकाभिरता अपि हिरण्यकशिपुप्रियाः सततम् ॥ ३१५ ॥

---

तु चपलायाः । लक्ष्माश्रयेण सोक्ता विशुद्धधीभिर्जघनचपला ॥ " इति छंदोमंजर्याम् ; प्राक्प्रतिपादितं आर्यासामान्यलक्षणं, चतुर्थपादे पंचदशमात्रात्मके जगणसत्त्वं 'चपलालक्षणं इत्यर्थः॥ ] जघनेषु चपलाः चञ्चलाः व्यभिचारिण्यः इत्यर्थः, अनार्या हीनप्रकृतयः [ विवेकशून्या वा । तथाच नलचम्प्वां कुण्डिननगरवर्णने–" सर्वतोमुखजघनचपलाभिरप्यनार्याभिः कर्णाटचेटीभिर्भरितं " इति । ] परेण काकेन भृतिः पोषो यासां तादृश्यः कोकिलास्वरूपाः, कथं कृतकः कृत्रिमो नेत्ररागो नेत्ररक्तिमा यासां तथा; तासां जात्यैवारक्तनेत्रत्वात्, [ " कोकिलः परपुष्टश्च कृष्णः परभृतोऽसितः । वसन्तदूतस्ताम्राक्षः " इति धन्वन्तरीयनिघण्टौ; ] परभृतयः परा भृतिः मूल्यं यासां, तथा केवलं प्रलोभनायैव प्रकटितनेत्रप्रीतयः, [ चः अप्यर्थे ] । वञ्चनाय [ प्रलोभनाय वा ] पुरुषेभ्यः सर्वाङ्गसमर्पणप्रदर्शनप्रवीणाः, अथ च रूपकोल्लुण्ठनप्रवणान्तःकरणतया असमर्पितो न आसक्तीकृतो [ यद्वा अनासक्तः असम्प्रापितः ] हृदयदेशो याभिस्ताः ॥ [ अपि च हृदयदेशपदेन कुचाभोगसूचनमपि कृतम् । यथोक्तं पञ्चायुधप्रपञ्चभाणे–" तथाहीयं मर्दनापातभीता–आश्लेषेऽपहरत्यतीव हृदयं " इति । ॥ ३१३ ॥ नकुलेषु [ 'नोलिया' इति ख्यातेषु ] बभ्रुषु समुत्पन्नाः कथं सर्पदर्शनेन पीडाभाजः, तज्जातेः सर्पघातकत्वात्; न कुले सद्वंशे उत्पन्नाः हीनजातित्वात्, भुजङ्गस्य जारजातीयस्य अवलोकनज्ञाने कुशलाः । [ दशनपदस्थाने दर्शनपदभ्रान्त्या व्याख्यातं, वस्तुतस्तु भुजङ्गानां विटानां दशनैः दन्तक्षतैः कृतानां वेदनानां अभिज्ञाः ] कामस्य दीपिकाः प्रकाशिकाख्यबृहद्दीपस्वरूपाः, कथं स्नेहस्य तैलस्य संबन्धेन हीनाः तन्मात्रप्रकाश्यत्वात् तासाम्, दीपिका उद्बोधयित्र्यः, स्वयं च रागहीनाः । स्नेहस्तु–" विस्रम्भे परमां काष्ठामारूढे दर्शनादिभिः । येनान्तरङ्गं द्रवति स स्नेह इति कथ्यते ॥ " इति लक्षितः ॥ ३१४ ॥ कामशास्त्रोक्तवृषलक्षणाक्रान्तपुरुषयोगो याभिः परिहृतस्ताः कथं नरविशेषे अनाग्रहाः, [ " उपकारपरो नित्यं स्त्रीवशः श्लेष्मलस्तथा । दशाङ्गुलशरीरश्च धीमान् धीरो वृषो मतः ॥ " इति स्मरदीपिका । ] वृषो धर्मः, तासां तेन शून्यत्वात्; कोऽपि पुरुषो भवतु

---

३१४ भुजङ्गदशनवेदनाभिज्ञाः ( गो. का. )

मेरुमहीधरभुव इव किम्पुरुषसहस्रसेवितनितम्बाः ।
नीतय इव भूमिभृतां सुपरिहृतानर्थसंयोगाः ॥ ३१६ ॥
बहुमित्रकरविदारणलब्धाभ्युदयाः सरोरुहिण्य इव ।
डाकिन्य इव च रक्तव्याकर्षणकौशलोपेताः ॥ ३१७ ॥
प्रतिपुरुषं सन्निहिताः कृत्यपरा विविधविकरणोपचिताः ।
बहुलार्थग्राहिण्यः प्रकृतय इव दुर्ग्रहा गणिकाः ॥ ३१८ ॥
( अर्थचतुष्टयवाचिनीयमार्या । )

---

तत्र नापेक्षा [ युवादिष्वेव ], द्रव्यप्राप्त्यैकासक्तत्वात् ; " सुकृते वृषभे वृषः " इति अमरः । भगवति श्रीकृष्णे केवलम् अभिरताः प्रीताः कथं हिरण्यकशिपुमहासुरस्य प्रियाः, तस्य तद्विरोधित्वात् ; कृष्णं पापरूपं अभितः सर्वतो रतं यासां ताः, तथा सुवर्णान्नाच्छादनग्रहणप्रवीणाः; " कशिपु त्वन्नमाच्छादनं द्वयम् " इति अमरः ॥ ३१५ ॥ [ त्रिभिः श्लेषोपमया आह मेरु इति । ] किंपुरुषाः [कुत्सिताः पुरुषाः] निन्द्यपुरुषाः, [ अश्वमुखा अनश्वमुखा इति भेदद्वयेन प्रसिद्धाः किन्नरनामानः ] देवयोनिविशेषाश्च । [ भूमिभृतो राजानः । ] अनर्थः द्रव्यविहीनः [ तस्य ] संयोगः समागमः, पक्षे अनर्थस्य नाशस्य [ भयोत्पत्तेः वा ] संयोग उपलब्धिः परिहृतो वर्जितो याभिस्ताः । [ " स्वतः परतो वा भयोत्पत्तिरित्यनर्थः " इति कौटिल्यः ( ९।७ ) ] ॥ ३१६ ॥ मित्राणि समागमसमये सुहृद्रूपेण व्यवह्रियमाणाः पुरुषाः, मित्रः सूर्यः, करा हस्ताः किरणाश्च, विदारणं नखक्षतादिः पत्रोद्घाटनं च, अभ्युदयः संपत्तिः विकासश्च । [ डाकिनी देव्या अनुचरीभेदः, सा च रक्तपाननिरता भवति। ] रक्तः आसक्तः, रक्तं च रुधिरम्; " रक्तोऽनुरक्ते नील्यादिरञ्जिते लोहिते त्रिषु । " इति मेदिनी। [ तथा च वासवदत्तायां कुसुमपुरवर्णनान्तर्गतवेश्याजनवर्णने " जलौकसेव रक्ताकृष्टिनिपुणेन" इति ] ॥ ३१७॥ प्रतिपुरुषं प्रतिमनुजं प्रतिजीवात्मानं व्याकरणस्थप्रतिप्रथमपुरुषादि, साधारणतया प्रतिमनुजं च । कृत्यपराः उल्लुण्ठनरूपस्वकार्यकुशलाः, कार्यविधायिन्यः प्रकृतेरेव कर्तृत्वमिति सांख्यसिद्धान्तात्, कृत्यप्रत्ययाः परा उत्तरस्था याभ्यस्ताः । विकरणानि सत्त्वरजस्तमःसाम्यावस्थारूपप्रकृतेः महत्तत्त्वादिरूपेण परिणामाः, स्तम्भस्वेदादिनानाविकाराः, शबादि[ दश विकरणाख्य ]प्रत्ययाः, शैत्यादिविकृतयश्च । बहुलोऽर्थो बहु द्रव्यम्, वस्तु, अभिधेयः, प्रयोजनं च । प्रकृतिः सत्त्वरजस्तमः–साम्या-

---

३१८ विविधकरणकोपचिताः ( गो. का ) विकरणोपेताः ( कापा ) । ( अर्थचतुष्टयमत्र । का )

वस्था, व्याकरणप्रत्ययोद्देश्यं, स्वभावश्च ॥ [ " प्रकृतिस्तु सत्त्वरजस्तमसां साम्यमात्रके। स्वभावामात्यपौरेषु लिङ्गे योनौ तथाऽऽत्मनि ॥ " इति विश्वलोचने। अत्र उपमानभूतप्रकृतिशब्दस्य नानार्थत्वात् विशेषणानां च श्लिष्टत्वात् तन्मूलकाः चत्वारोऽर्थभेदाः अस्याः आर्यायाः। तत्र प्रथमः कोशानुक्तवैयाकरणपरिभाषितप्रकृतिपरः, द्वितीयः सांख्योक्तप्रधानापरनामकप्रकृतिपरः, तृतीयः स्वभावार्थकः, चतुर्थः राजनीतिसम्मतामात्यादिप्रकृतिपरः इति ज्ञेयम्। तत्र श्लिष्टानां विशेष्यपदानां अर्थाः क्रमादेवं बोध्याः— प्रकृतिः ( १ ) अर्थावबोधहेतुः प्रत्ययविधानावधिभूतः शब्दविशेषः, नामधातुभेदेन द्विविधः प्रातिपदिकसंज्ञकः; ( २ ) सांख्योक्ताः अष्ट प्रकृतयः, तथाहि सांख्यतत्त्वविवेचने—" अव्यक्तबुद्ध्यहंकारास्तन्मात्रादिपञ्चकम् । अष्टौ प्रकृतयस्त्वेताः सत्त च व्यक्ततामियात्। " इति। ( ३ ) स्वभावः; ( ४ ) "स्वाम्यमात्यसुहृत्कोपराष्ट्रदुर्गबलानि च। राज्याङ्गानि प्रकृतयः" इत्यमरः। विशेषणानां तु प्रथमार्थे ( १ ) प्रथममध्यमोत्तमपुरुषाणां समीपस्थाः, यथा यातीत्यादौ; कृत्यप्रत्ययाः तव्यदादयः पराः उत्तराः यासां ताः कृत्यपराः, यथा कर्तव्यमित्यादौ; विकरणाः विकरणप्रत्ययाः शप्श्यनादयः तैः उपचिताः वृद्धिगताः ताः, यथा भवति दीव्यति इत्यादौ; बहुलानां अर्थानां ग्राहिण्यः बोधिकाः, यथा हरति इत्यादौ हृञः प्रापणस्वीकारस्तेयादयः अर्थाः; दुर्ग्रहाः दुरिति उपसर्गस्य ग्रहः ग्रहणं यासु ताः। ( २ ) द्वितीयार्थे पुरुषाः सांख्यस्मृताः बहवः क्षेत्रज्ञाः तान् सन्निहिताः; कृत्यं सुखदुःखमोहात्मकमहदादिकार्यं तत्परायणाः; षोडशविकारैश्च उपेताः, तदुक्तं सांख्यतत्त्वविवेचने—" एकादशेन्द्रियाणि च महाभूतानि पञ्च च। विकाराः षोडशैवैते न तु प्रकृतिताजुषः ॥ " इति; दृश्यत्वपरिणामित्वविशिष्टानां पदार्थानां ग्राहिण्यः तेषां कारणत्वात्; दुर्ग्रहाः शास्त्राभ्यासेन दुःखेन ज्ञातुं शक्याः इति। ( ३ ) तृतीयेऽर्थे स्वस्वविशिष्टो भावः प्रतिपुरुषं वर्तत इति प्रसिद्धं, तेन च सर्वोऽपि स्वस्वकर्मपरो भवति, उक्तं च " न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् । कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ " ( गीता ३।५ ) इति। विकरणाः विकाराः क्रोधलोभादयः तैः उपचिताः पुष्टाः, नानाविधविषयसेविन्यः; दुर्ग्रहा दुःखेन नियमितुं शक्याश्च इति। ( ४ ) चतुर्थेऽर्थे राज्याङ्गानि प्रकृतयः तु प्रजान्तर्गतप्रतिपुरुषसम्बद्धाः; स्वस्वप्रयोजनपरायणाः; विकरणानि विविधानि उपकरणानि तैः उपचिताः पुष्टिं नीताः; प्रजाभ्य एव बहुलस्य द्रव्यस्य ग्राहिण्यः; दुर्ग्राहाश्च अपराजेयाः इति ॥ विशेष्यपक्षे तु वेश्याः पुरुषमात्रसमीपं गच्छन्ति; कृत्यं पुरुषाणां मोहनाकर्षणादि तत्र प्रयत्नवत्यः; विकरणानि विशिष्टा इन्द्राण्यादिरतिबन्धाः तैः उपचिताः तत्तज्ज्ञानवत्य इत्यर्थः; बहुलस्य प्रभूतस्य अर्थस्य द्रव्यस्य ग्राहिण्यः

सादरमाकृष्य चिरं कुसुमस्तबकं च नरविशेषं च।
रिक्तीकर्तुं निपुणाः क्षुद्राः क्षुद्राश्च चुम्बन्ति ॥ ३१९ ॥
परमार्थकठोरा अपि विषयगतं लोहकं मनुष्यं च।
चुम्बकपाषाणशिला रूपाजीवाश्च कर्षन्ति ॥ ३२० ॥

---

संग्रहणशीलाः; दुर्ग्रहाश्च वशीकर्तुमशक्याः भावचरितादिभिः ज्ञातुमशक्या वा इति ॥ अत्र श्लेषोपमा ॥ ] [ अस्या आर्यायाः मुक्तकत्वे—प्रकृतय इव गणिकाः श्लेषगर्भत्वात् गणिका इव प्रकृतयः इति व्यत्ययेन पठने दण्डिमतेन अन्योन्योपमा, मम्मटमतेन उपमेयोपमा च व्यङ्ग्या बोध्या ] ॥ ३१८ ॥ रिक्तीकर्तुं नीरसतायै दारिद्र्याय च, [ न तु स्नेहेन आनन्दाय, चुम्बन्तीत्यन्वयः ]। [ निपुणाः दक्षाः, ] क्षुद्राः मधुमक्षिकाः, क्षुद्राः वेश्याः; "क्षुद्रा व्यङ्गा नटी वेश्या सरघा कण्टकारिका।" इति अमरः। [ अत्र प्रस्तुतानां वेश्यानां अप्रस्तुतानां मधुमक्षिकाणां च रिक्तीकरणायैव चुम्बनक्रिया-रूपैकधर्मोक्तिः दीपकालंकारः, केवलं प्रस्तुतानां अप्रस्तुतानां वा तादृशोक्तौ तुल्ययोगिता; एतयोः औपम्यं गम्यम्, "वदन्ति वर्ण्यावर्ण्यानां धर्मैक्यं दीपकं बुधाः।" इति दीपकलक्षणं कुवलयानन्दे। ]॥ ३१९ ॥ परमार्थे परिणामे वस्तुतश्च, कठोराः निर्घृणाः कठिनाश्च। [ विषयः इन्द्रियार्थः पदार्थविशेषश्च। चुम्बकपाषाणशिला लोह-चुम्बक इति ख्यातो धातुविशेषः। ] रूपाजीवाः [ रूपमेव आजीवः जीवितसाधनं यासां ताः ] वेश्याः। [ अत्र विरोधानुप्राणितः दीपकालंकारः। ] [ वासवदत्तायां दूतीसंवादे तु प्रियतमं प्रति संवादः—"प्रस्तर इव क्रूरोऽसि, न चाकर्षकचुम्बकद्राव-केष्वेकोऽसि, भ्रामकोऽसि परं कितव।" इति। तत्र तट्टीकाकारणामाशयो यथा—आकर्षकचुम्बकद्रावकभ्रामकाः शिलाविशेषाः नायकविशेषाश्च। तत्र शिलाविशेषेषु स आकर्षकः यत्सम्बन्धात् प्रत्युप्तमपि लोहं निःसरति, स चुम्बकः यत्सम्बन्धात् लोहं उप-गच्छति सूर्यकान्तो मणिर्वा, स द्रावकः यत्सम्बन्धात् लोहं द्रवति चन्द्रकान्तो मणिर्वा, भ्रामकः सः यत्सम्बन्धात् लोहं भ्रमति 'गुरिया' इति ख्यातः॥ नायकविशेषेषु तु—"दूरादाकर्षणे शक्तो यः स आकर्षकः स्मृतः। सर्वेषां स्पर्शलोलत्वं कुरुते यः स चुम्बकः॥ कृतार्थयति यो दृष्ट्या स द्रावक इति स्मृतः। भ्रामको मधुराभाषः संस्तवद्वेषभाजनम्॥ इति भोजः।" इति। यद्वा,—कामकलाकौशलेन यो नारीमा-कर्षति स आकर्षकः, रतिकौशलेन यश्चुम्बति स चुम्बकः, ओषधिविशेषयोगेन कुच-मर्दनेन वा यः कठिनकामिनीं द्रावयति स द्रावकः, अन्यासक्तो योऽन्यनारीं भ्रामयति प्रतारयति स भ्रामकः, इति दर्पणे च शिवरामः॥ अत्र अयं विशेषो

पुरुषाक्रान्ताः सततं कृत्रिमशृङ्गाररागरमणीयाः ।
आहन्यमानजघनाः करेणवो वारयोषाश्च ॥ ३२१ ॥
उचितगुणोत्क्षिप्ता अपि पुरतो विनिवेशिते सुवर्णलवे ।
झगिति पतन्ति मुखेन प्रकटप्रमदा यथा च तुलाः ॥ ३२२ ॥
बहिरुपपादितशोभा अन्तस्तुच्छाः स्वभावतः कठिनाः ।
वेश्याः समुद्गि(द्ग?)का इव कणन्ति यन्त्रप्रयोगेण ॥ ३२३ ॥

---

बोध्यः—अतिदेशन्यायेन इमे भेदाः युवतीनां अपि उद्भावयितुं योग्याः । तथाहि पुरुषान् स्वरूपमहिम्ना दूरादपि आकर्षितुं समर्था आकर्षिणी । आकृष्य नरान् तान् स्वसंलग्नान् करोति या सा चुम्बिका, आलोकमात्रेण स्पर्शमात्रेण वा तान् द्रावयितुं शक्ता द्राविणी, मोहयित्वा समागमादानेन भ्रामयति सा भ्रामिका इति ॥ एवं प्रस्तुते वेश्याः चुम्बकपाषाणशिलावत् पुरुषान् अन्यविषयेभ्यः स्वं प्रति आकृष्य तान् स्वासु संसक्तान् कुर्वन्ति इति भावार्थः । अत्र व्यञ्जितसाम्येन वेश्यानां शिलावत् कठोरहृदयत्वं परमार्थत एव इति सूचितम् ॥ ] ॥ ३२० ॥ आक्रान्ताः परिकरिताः अधिष्ठिताश्च । कृत्रिमः केवलं वञ्चनायैव संपादितः नान्तरः, कृतिसंपादितश्च; शृङ्गारः रसविशेषः, [ " स्त्रीपुंसयोर्मिथो रागवृद्धिः शृङ्गार उच्यते । " इति रसरत्नहारे; ] [ सिन्दूरदानादिना यद्वा द्विरदभूषणैः, " शृङ्गारः सुरते नाट्यरसे द्विरदभूषणे । शृगारं चूर्णसिन्दूरे लवङ्गकुसुमे मतम् ॥ " इति विश्वलोचनः । ] वेषरचना च, रागः प्रीतिः रञ्जनं च । आहन्यमानं ताड्यमानं [ सुरतक्रियायां अन्यदा वा समतलादिना ] जघनं कटिपुरोभागः [ तस्य मदनभूमित्वात्, ] पृष्ठप्रान्तभागश्च यासाम् । [ गतिसंवर्धनार्थं करेणवः तोत्रेण जघने हन्यन्ते, तथा च मुद्राराक्षसे द्वितीयाङ्के विराधगुप्तोक्तिः—" अथ जघनाभिघातमुत्प्रेक्षमाणा गजवधूरतिजवनतया गत्यन्तरमारूढवती " इति । अत्र गम्योपमया वेश्यानां युवतिचरमभेदवद्धस्तिनीसाम्येन तद्वत् तासां सुरते दुःसाध्यत्वमपि सूचितम् । ] [ अत्र श्लेषविद्धं दीपकम् । ] ॥ ३२१ ॥ उचितेन अभ्यस्तेन योग्येन च, गुणेन सौन्दर्यादिना वर्तितसूत्रेण च, उत्क्षिप्ताः प्रवृत्तकामाः प्रोन्नमिताश्च; विनिवेशिते निमित्ततया नियमिते स्थापिते च । [ झगिति झटिति शीघ्रम्, ] पतन्ति वश्या भवन्ति अधो भवन्ति च । [ प्रकटप्रमदा वेश्याः, तुलाः तोलनयन्त्राणि । श्लेषसङ्कीर्णोपमा । ] ॥ ३२२ ॥ बहिरित्यादि । बहिरेव संपादितरूपशोभा इत्यर्थः, तुच्छाः निःसाराः रिक्ताश्च, कठिनाः

---

३२२ °मदाः कलाधिकाश्च तुलाः ( कापा ) ३२३ भणंति ( कापा )

बध्नन्ति येऽनुरागं दैवहतास्तासु वारवनितासु ।
ते निःसरन्ति नियतं पाणिद्वयमग्रतः कृत्वा ॥' ३२४ ॥
इदमुपदिशति वयस्ये सुन्दरसेने च मन्मथव्यथिते ।
प्रस्तावादुपगातुं गीतित्रयमभ्यधायि केनापि ॥ ३२५ ॥
' तरुणीं रमणीयाकृतिमुपनीतां स्मृतिभुवा वशीकृत्य ।
परिहरति यो जडात्मा प्रथमोऽसौ नालिको विना भ्रान्तिम् ॥ ३२६ ॥
इदमेव हि जन्मफलं जीवितफलमेतदेव यत् पुंसाम् ।
लडहनितम्बवतीजनसंभोगसुखेन याति तारुण्यम् ॥ ३२७ ॥

---

अनार्द्रमनसो दृढाश्च । [ विरोधालंकारः व्यङ्ग्यः तद्द्योतकापिशब्दानुपादानात् । ] समुद्गिका क्रीडासाधनरूपः संपुटकः, स्त्रीत्वं अपचयविवक्षातः, क्वणन्ति अनुकूलभाषिण्यो भवन्ति शब्दायन्ते च, यन्त्रप्रयोगः छलव्यापारः कलाप्रयुक्तिश्च । [ यथा यन्त्रगरुडयन्त्रपुत्तलकादिषु । ] [ श्लेषोपमा ] ॥ ३२३ ॥ [ दैवं भाग्यं विधिः वा । ] पाणिद्वयमग्रतः कृत्वा भिक्षार्थं हस्तद्वयं प्रसार्य ॥ ३२४ ॥ [ मननं मत् चेतना, मथतीति मथः, मतो मथः मन्मथः, " मन्मथः कामचिन्तायां कपित्थे कुसुमायुधे । " इति । ] [ गीतिः आर्याछन्दोभेदः, तल्लक्षणं तु—" यस्याः पादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि । अष्टादश द्वितीये तावत्यः स्युस्तुरीयके गीतिः ॥ " इति ॥ ३२५ ॥ तरुणी—" बालेति गीयते नारी यावद्वर्षाणि षोडश । तस्मात्परं च तरुणी यावता त्रिंशता भवेत् ॥ तदूर्ध्वमधिरूढास्याद्यावत्पञ्चाशता भवेत् । वृद्धा तत्परतो ज्ञेया सुरतोत्सववञ्चिता ॥ " इति नागरसर्वस्वे; अन्यत्र तरुणी योग्या इति अधिरूढा प्रौढा इति च व्याहृता । उपनीतां समीपं प्रापितां, स्मृतिभूः मनसिजः सङ्कल्पयोनिः स्मरः । प्रथमः अग्रणीः । ] नालिकः अलिकं ललाटं तद्विहीनः, अभाग्य इत्यर्थः, [ वस्तुतस्तु नलं एव नालं अस्ति अस्य इति ठन् प्रत्यये नालिकः महिषः, तेन मूर्खः इत्यर्थः, मध्यदीर्घो नालीकशब्दोऽपि एतदर्थकः, " नालीकः पिण्डजेऽप्यब्जे नालीकः शरशल्ययोः । " इति विश्वलोचने । विना भ्रान्तिं निःसन्देहम् । तथा च भारविः—" उपगतमवधीरयन्त्यभव्याः । " ( १०।५१ ) इति । " सौन्दर्यवल्लीव विलासविज्ञा तारुण्यसंपन्नमनोहरश्रीः । समागतेयं विजनेऽभिलाषादुपेक्ष्यते केन विचक्षणेन ॥ " इति च पुरुषपरीक्षायाम् । ( ४३।६ ) ] ३२६ ॥ [ जन्म देहोत्पत्तिः, जीवितं देहधारणम्, ] लडहाः सुन्दर्यः, [ लडहस्तु पुमानयम् । विलासे भेद्यलिङ्गं तु, सुन्दरे शब्दवित्

---

३२५ इत्युपदिशति ( कापा ) । °दुपयातं ( प. ) °दुपजातं ( काग )

सुमनोमार्गणदहनज्वालावलिदह्यमानसर्वाङ्ग्यः।
प्रबलप्रेमप्रवणाः प्रमदाः स्पृहयन्ति नाल्पपुण्येभ्यः॥' ३२८॥

---

पुनः। व्याचष्टे हर्षनन्दीमं, विलासवति नप् पुनः॥" इति केशवः। केचित्तु 'लडहः' अयं मनोहरार्थः देश्यः शब्दः, देश्यस्तु विशिष्टदेशे भवः, लटभः इति संस्कृतम् इति। "लडहः सुकुमारः, सुकुमारशब्दस्य प्राकृते लडहादेशः" इति काव्यप्रकाशटीकासुधासागरे। अतः केषाञ्चिन्मते लडहादिदेश्यशब्दप्रयोगे देश्याख्यः पददोषः। तथाहि सरस्वतीकण्ठाभरणे—"तद्देश्यमिति निर्दिष्टं यदव्युत्पत्तिमत्पदम्॥" (१।१४) यथा—'गल्लौ लावण्यतल्लौ ते, लडहौ मडहौ भुजौ। नेत्रे वोसट्टकन्दोट्टमोट्टायितसखे सखि॥" इति। अव्युत्पत्तिमत् प्रकृतिप्रत्ययविभागशून्यमित्यर्थः। "व्युत्पन्नानां अन्यादृशी च्छाया, देश्यानां च न तादृशी, इति देश्यवेद्यपदसमभिव्याहारे प्रायेण छायावैरूप्यं बन्धस्य भवतीति सहृदयहृदयसाक्षिकं दोषबीजम्। तल्लं अल्पसरः, मडहं कृशं, वोसट्टं विकसितं, कन्दोट्टं नीलोत्पलं, मोट्टायितं विलासः।" इति तट्टीकायां रत्नधरः। तदुक्तं रुद्रटेनापि—"प्रकृतिप्रत्ययमूला व्युत्पत्तिर्यस्य नास्ति देश्यस्य। तन्मडहादि कथंचन रूढिरिति संस्कृते रचयेत्॥" (काव्यालंकारे ६।२७) इति॥ एतादृशपदप्रयोगाणां अदुष्टत्वमपि तत्रैव सरस्वतीकण्ठाभरणे समाहितं, यथा—"यदव्युत्पत्तिमद्देश्यमिति पूर्वं निरूपितम्। महाकविनिबद्धं सत्तदप्यत्र गुणीभवेत्॥" (१।१०४) इति। तथा च वामनीयकाव्यालंकारसूत्रे—"अतिप्रयुक्तं देशभाषापदम्॥" (५।१।१३) इति। एवंरीत्या हर्षचरिते सप्तमोच्छ्वासे—"...तुन्दिलचुन्दीजनजनितजनहासे" इत्यत्र कुट्टन्यर्थकस्य चुन्दीशब्दस्य, स्तुतिकुसुमाञ्जलौ च—"काला यथोक्तिरमृदुः क्षतसेवकाला।" (३०।५६) इत्यत्र अपवादार्थकस्य आलाशब्दस्य, अन्यत्रापि लहर्यादितत्तद्देश्यशब्दप्रयोगाणामदुष्टत्वं बोध्यम्॥] नितम्बिन्यः तासां, जनस्य समूहस्य, [यद्वा नितम्बिन्य एव जनः लोकः, "जनो लोके महर्लोकात्परे लोके च पामरे।" इति विश्वलोचने, तस्य] संभोगसुखेन, याति अतिक्रामति॥ ३२७॥ सुमनोमार्गणः [पुष्पबाणः] कामः। [प्रमदाः सामान्ये बहुवचनम्। यत् कामपीडिता नत्वर्थार्थिनी प्रणयिनी प्रमदा पुरुषविशेषं कामयेत् तत् तस्य कस्यापि महतः पुण्यस्यैव फलं इति ज्ञेयं इति भावः। तथा च मुकुन्दानन्दभाणे—"परिरम्भकेलिपरिहासभाषणैर्भृशमादृतोऽपि न वशं समेति यः। स वधूजनोऽपि यतते यदि स्वयंग्रहणाय तत्पुरुषपुण्यगौरवम्॥" (१९४) इति।]

एवमुपश्रुत्य वचः समुवाच पुरन्दरात्मजः सुहृदम् ।
'मम हृदयादिव कृष्ट्वा गीतमिदं साधुनाऽनेन ॥ ३२९ ॥
तदतनुसायकविकलां हारलतां हरिणशावतरलाक्षीम् ।
आश्वासयितुं यामो, गुणपालित किं विकल्पितैर्बहुभिः॥' ३३०॥
अथ तत्र काऽपि गणिकाऽगणयन्ती परिचितं हृतद्रविणम् ।
प्रविशन्तमेव मन्दिरमीर्ष्याव्याजेन निरुरोध ॥ ३३१ ॥
काचिद्वञ्चकदत्तं लुण्डीकृतजीर्णवसनमवलोक्य ।
वेश्या विषीदति स्म क्षपाक्षये व्यर्थकर्तव्या ॥ ३३२ ॥
दैवस्मृत्याऽऽपतितं दृष्टिपथं भग्नमूल्यविटमेका ।
ज्वलिता रुषा भुजिष्या जग्राह जवेन धावित्वा ॥ ३३३ ॥

---

॥ ३२८ ॥ [ "महासत्त्वानां दैववशात् विकारोदयेऽपि परप्रेरणया प्रथमप्रवृत्तिः किमपि गौरवं आविष्करोति ।" इति प्रकृते गीत्युपश्रुत्या नायकप्रवृत्तिमाह एवमिति । इदं मम हृदयात् कृष्ट्वा इव अनेन साधुना गीतम् इत्यन्वयः । साधुः इति उक्तिः तस्य स्वमतानुकूलत्वात् । यथा हारलता स्वसख्या वेश्याधर्मं बोधिताऽपि न तदङ्गीचकार, तथा नायकोऽपि सुहृदा वेश्याकूटचरितं अवबोधितोऽपि ( ३०२-३२४ ) कामाकृष्टः सहजप्रेमवशः उपश्रुत्याऽनुमोदितः न तत् स्वीचकार इति भावः ] ॥३२९॥ [ विकलां व्याकुलां, हरिणशावतरलाक्षी इत्यत्र वाचकलुप्तोपमा । तरलं लोलं चञ्चलम् । विकल्पितैः ऊहापोहैः । ] ॥३३०॥ [ एवं निर्णीय सुहृदा सह हारलतामन्दिरं प्रति प्रस्थितेन सुन्दरसेनेन वेश्यावाटे यद्यत् दृष्टं श्रुतं च तत् प्रघट्टकेन वर्णयति अथेति । इतः ३४२ आर्या यावत् वेश्याविटकर्तृकाणि विविधदृश्यानि आह ॥ अथ आरम्भे अनन्तरं वा । अगणयन्ती अनादरं कुर्वन्ती । ईर्ष्या अक्षान्तिः परोत्कर्षासहिष्णुत्वं, तस्य व्याजेन छलेन, प्रथमं आगतः कामुकः त्वां दृष्ट्वा तव ईर्ष्यां द्वेषं वा करिष्यतीति रूपेण मिथ्याभाषणादिना । ] ॥ ३३१ ॥ लुण्डीकृतं कन्दुकाकारेण दत्तम्, तथा च तदानीमनुद्घाटितत्वात् अज्ञातसारम् इत्यर्थः । ] क्षपाक्षये रात्र्यपगमे । विषादः "प्रारब्धकार्यासिद्ध्यादेर्विषादः सत्त्वसंक्षयः ।" इति लक्षितः । ] ॥३३२॥ [ दैवस्मृत्या विधेः आभिमुख्येन दिष्ट्या । भग्नमूल्यः भग्नं विनाशितं अदानात् मूल्यं वेतनं पणं वा येन सः, विटः धूर्तः । भुजिष्या

---

३२९ गीतिरियं केनचिद्गीता ( कापा ) ३३० तदसमबाणसमर्पितहा° ( कापा ) ३३२ दत्तं पुञ्जीकृतं° ( प. का )। वृत्तकर्तव्या ( प. गो २ ) ३३३ देव° ( गो )। विटमेकम् ( कापा )

अन्तःस्थितकामिगृहद्वारगतं लुप्तविचनरमन्या ।
समुवाच कुट्टनी व्रज कल्लोलाकल्पदेहेति ॥ ३३४ ॥
प्रकटितदशननखक्षतिरभिदधती राजपुत्ररतियुद्धम् ।
अपरा पुरः सखीनां वारवधूराततान सौभाग्यम् ॥ ३३५ ॥
अन्या कामिस्पर्धावर्धितभाटी समुत्सुका चण्डी ।
सौभाग्यगर्वदर्पं समुवाह विलासिनीमध्ये ॥ ३३६ ॥
एकगणिकानुबन्धक्रोधोद्यतशस्त्रकामिनोः काऽपि ।
सम्भ्रमतो धावित्वा निवारयामास कुट्टनी कलहम् ॥ ३३७ ॥
धनमाहृत्य बहुभ्यो भुज्यत एकेन केनचित्सार्धम् ।
इति धनवन्तं कामिनमावर्जयति स्म काऽपि वारवधूः ॥ ३३८ ॥

---

वेश्या, "भुजिष्या प्रैष्यमात्रे स्यात् स्वतन्त्रायामपि स्मृता ।" इति धरणिः । तदुक्तं— "उत्कोच-पारितोषक-भाट-सुभाषित-परार्थ-चौर्यांशाः । तत्क्षणमेव ग्राह्याः षडन्यकाले न लभ्यन्ते ॥" इति । ] ॥३३३॥ [ अन्तः स्थितः कामी यत्र तत् गृहं तस्य । ] कल्लोलवत् [महाजलतरङ्गवत् ] स्वच्छः आकल्पो वेषः तथा देहो यस्याः सा धृतश्वेताम्बरा इत्यर्थः । [ यद्वा, कल्लोल इति संबोधनं, हे शत्रो इत्यर्थः; "कल्लोलः ख्यात उल्लोलप्रमोदपरिपन्थिषु ।" इति विश्वलोचने; अकल्पदेह इत्यपि तस्यैव संबुद्धिः, अकल्पः स्वकार्ये असमर्थः देहो यस्य सः, क्लीव इति यावत् ; "अथ कल्पः स्यान्न्याये देवद्रुमे विधौ ।··· सामर्थ्ये वर्णने तथा ।" इति केशवः । ] ॥३३४॥ [ प्रकटितेति । स्वशरीरे बहूनि दशननखक्षतानि दर्शयन्ती सती, ततः स्वस्याः केनचित् राजपुत्रेण महापुरुषेण साकं रतिरूपं सुरतरूपं युद्धं, "मोहनं मदनयुद्धमूचिरे" इति रतिरहस्ये ( १०।५२ ), तत् प्रत्याययन्ती, यतः क्षत्रिया एव निर्दयाः अधिकप्रगल्भा वा भवन्ति इति, स्वस्याः अन्याभ्यः सामान्यपुरुषसेविताभ्यः सौभाग्यं भाग्योत्कर्षं आततान विस्तारयामास । ] ॥ ३३५ ॥ [ समुत्सुका अर्थग्रहणे त्वरावती इत्यर्थः, चण्डी कोपनशीला च, ततः चातुर्येण उत्पादिता या कामिनोः ] स्पर्धा उत्कर्षेच्छया संघर्षः, [तया इत्यादि,] भाटी मूल्यं, [ विलासिनी वेश्या । ] ॥ ३३६ ॥ [ अनुबन्धः प्रवृत्तस्य एकस्य अनु पश्चात् अपरस्य प्रवर्तनम् । सम्भ्रमतः भयात् एकस्यापि वधस्य । "सम्भ्रमस्त्वादरे पुंसि संवेगे साध्वसेऽपि च ।" इति विश्वलोचने । ] ॥ ३३७ ॥ आवर्जयति स्म धनमाहृत्य इत्यादिनय-

---

३३६ समुच्छ्रिता ( कापा )। काखेडा ( प ) ३३७ बन्धे ( गो. का )। कुट्टिनी ( प ) ३३८ स्म वार ( गो. का )

गायन्मात्रागाथा द्विपदिकया सौष्ठवेन विट एकः ।
बभ्राम पुरो दास्या विदधद्विकृतीरनेकविधाः ॥ ३३९ ॥
कश्चित्पण्यस्त्रीणां विभवोपचितान्यपुरुषयोजनया ।
विदधाति समाराधनमधनत्वमुपागतः कामी ॥ ३४० ॥
त्वयि सक्तेन मया गृहमुज्झितमधुना परेव जाताऽसि ।
इति ढौकमलभमानः कश्चिद्गणिकामुपालेभे ॥ ३४१ ॥
उषिताम् अपरेण समं वृद्धविटानां पुरः पराजित्य ।
त्याजयति स्म भुजङ्गः कश्चिद्गणिकां द्विगुणभाटीम् ॥ ३४२ ॥

---

व्यवहारप्रदर्शनेन वशयितुं प्रसादयामास । [यद्वा, एकेन केनचित्—यत्र स्वमनो लग्नं तेन स्वहृदयाधिष्ठितेन; कासुचित् वेश्यासु दृष्टमिदं यत् नानाकामिभ्यः धनं संगृह्य ताः तत् स्वाभिमतस्य एकस्य अर्थे व्ययीकुर्वन्ति इति; इति हेतौ, अपरान् विहाय धनवन्तं श्रीमन्तमेव इत्यर्थः, आवर्जयति स्म वशीभूतं अकरोत् । ] ॥ ३३८ ॥ [ इतः चतुर्भिः विटवृत्तानि आह गायन् इति । मात्रागाथाः—गाथा गीतसामान्येऽपि, अतः मात्रागाथाः मात्रागणघटिता गाथाः, आर्याः इत्यर्थः; द्विपदिकया द्विपदिकाख्यगीत्या तत्पद्धत्या इत्यर्थः, " तल्लक्षणं चाह भगवान् भरतमुनिः—' शुद्धा खण्डा च मात्रा च संपूर्णेति चतुर्विधा । द्विपदी करण्ख्येन तालेन परिगीयते । ' इति " इति विक्रमोर्वशीयप्रकाशिकायां रङ्गनाथः । विटः—वर्णितश्चैतादृशः कलाविलासे क्षेमेन्द्रेण—" भक्षितनिजबहुविभवाः परविभवक्षपणदीक्षिताः पश्चात् । अनिशं वेश्यावेशस्तुतिमुखरमुखा विटाश्चिन्त्याः ॥ " (९।३९) इति । दास्याः वेश्यायाः, " दासी बाणा(ला?)भुजिष्ययोः " इति मेदिनी, भुजिष्या तु वेश्या इति पूर्वं ( ३२३ श्लो. टि. ) उक्तमेव । अत्रेदं भाति भुजिष्याशब्दस्य दासीवेश्योभयपरत्वात् दास्यर्थवाचकशब्दाः वेश्यावाचका अपि व्यवहारार्थं कोषविशेषेषु च संग्रहीताः । ] विकृतिः अङ्गाभिनयादिचेष्टा, [ ' चाळा ' इति भाषायाम् । ] ॥ ३३९ ॥ [ कश्चित् दरिद्रीभूतः कामी वेश्याः धनिभिः संयोज्य विनिमये तया रतं विनामूल्यं प्राप्नोति स्म इति भावः । " आराधनं तु पूजायां पाकप्रापणयोरपि । " इति विश्वलोचनः । ] ॥ ३४० ॥ [ उज्झितं त्यक्तम् । ] ढौकः [ गतिः, तस्याः प्राप्तिः, ] परिसरः सान्निध्यं समागमादिकमिति यावत् ॥ ३४१ ॥ [ वारवञ्चनकुपितः कश्चित् भुजङ्गः कामी एकां स्वेन सङ्केतं कृत्वा आदौ एव मूल्यं गृहीत्वा

---

३३९ द्विपथकमथ ( प ) ३४२ योजयति ( गो २ कापा ) । भुजंगं ( गो. का )

दृष्टा त्वया विशेषक वलयकलापी शशिप्रभाभुजयोः ।
बाढं भणभण कीदृक्कानु तरः सोमयाऽऽदत्तः ॥ ३४३ ॥
अद्य चतुर्थो दिवसश्चीनाम्बरयुगलकस्य दत्तस्य ।
तदपि परुषाभिधाना वद मदनक किं करोम्यत्र ॥ ३४४ ॥
स्नेहपरा मयि केली, कलहंसक, किन्तु राक्षसी तस्याः ।
माता नात्मीकर्तुं वर्षशतेनापि शक्यते पापा ॥ ३४५ ॥

---

रात्रौ तु अन्येन सह उषितां, उपस्थिते विवादे व्यवहारे, वृद्धविटाः वेश्यादिव्यवहारे कुशलाः येऽत्र प्राड्विवाकपदे वृताः, अधिकरणिकत्वेन कल्पिता वा, तेषां पुरः, तां पराजित्य तदुक्तिः अतथ्या इति निर्णाय्य दण्डरूपेण स्वदत्तात् द्विगुणं द्रव्यं तस्या अग्रहात् इति छायार्थः । ] ॥ ३४२ ॥ [ इतः द्वादशसु विटानां परस्परालापाः विव्रियन्ते दृष्टा इत्यादि । विशेषक इति विटविशेषसम्बुद्धिः, त्वया, शशिप्रभाभुजयोः, [ य इति अध्याहार्यं, ] वलयकलापी मयूराकारं भूषणं, [ एतन्नामकं बाहुविभूषणं, तथा च तन्नामसंकीर्तने भरतः—" शङ्खकलापी कटकं तथा स्यात्पत्रपूरकम् । खर्जूरकांसोपितिकं बाहुनानाविभूषणम् ॥ " ( २१।२८–२९ ) इति, अत्र शङ्खकलापी एव वलयकलापी वलयानां शङ्खनिर्वृत्तत्वात् । दत्तः इति काकाक्षिगोलकन्यायेन उभयत्र सम्बध्यते, तं इत्यध्याहर्तव्यं, दृष्ट्वा, सोमया तन्नामिकया अपरया तत्परिचितवेश्यया, कीदृक् कीदृशः, तरः भूषणविशेषरूपा भाटी, क्व कुत्र कस्मिन् देशे, आदत्तः इत्यत्र विश्लेषः गृहीत इत्यर्थः, तत्, बाढं कामं, वद । भणभण इति द्विरुक्तिः श्रवणौत्सुक्यात् शीघ्रं उत्तरदानं सूचयति । ' दृष्टस्त्वया ' इति पाठस्तु सरलः, तत्र अग्रे ' वलयकलापः ' इति पाठः योग्यः । ] ॥ ३४३ ॥ [ कश्चिदन्यस्याः दुर्नयं मित्रं प्रत्याह अद्येति । चीनाम्बरं चीनदेशे निर्मितं वस्त्रं, तत् अतिसूक्ष्मं महार्घं च भवति । ] [ परुषं कर्णकटु अभिदधती—नानुकूला इत्यर्थः, " अपमानितश्च नार्या विरज्यते " इति । यथोक्तं मृच्छकटिके—" स्त्रीभिर्विमानितानां कापुरुषाणां विवर्धते मदनः । " ( ८।९ ) इति । ] ॥ ३४४ ॥ राक्षसी तत्तुल्या घोरा [ समागमार्गलरूपा इत्यर्थः, माता कृत्रिमा जननी व्याख्यातपूर्वा ( आ. १४२ ) । ] आत्मीकर्तुं अनुकूलयितुम् । [ पापा अतिपापसम्पन्ना अतिदुष्कृत्यकारिणी दुष्टा इति क्रोधोक्तौ । ] [ तथा च

---

३४३ दृष्टा त्वया ( प. ) दृष्टस्त्वया ( गो २ ) । कीदृग् भद्रतरा सामया दत्ता ( प ) कीदृक् क्वातुतरः सोमया दत्ता ( कापा ) । ३४४ °वसश्चित्रा° ( गो २. का ) । ३४५ °हंसक किन्नरी ( कापा ) ।

सुमनः कुङ्कुमवासः सज्जीकुरु किमिति तिष्ठसि विचिन्तः ।
अद्य तव दयितिकायाः किंजल्कक नर्तनावसरः ॥ ३४६ ॥
यदि नाम पञ्च दिवसांस्त्वयि कुरुते प्रेम धनलवं दृष्ट्वा ।
तदपि न रागवती सा, कन्दर्पक किं वृथा गर्वः ॥ ३४७ ॥
जीवन्नेव विलासक परिहर दूरेण मूढ हरिसेनाम् ।
बद्धावेशस्तस्यां व्यापृतपुत्रो महाविषमः ॥ ३४८ ॥
केसरया क्षणदत्तं कृत्वांशुकमुपरि कामिजालस्य ।
स्तब्धग्रीवं भ्रमतश्चन्द्रोदय पश्य माहात्म्यम् ॥ ३४९ ॥

---

शृङ्गारभूषणभाणे—"रसज्ञलोकैरभिनन्दितानां वाराङ्गनाचन्दनवल्लरीणाम् । मुहुर्वमन्त्यो गरलं मुखेन स्वमातरः कालभुजङ्ग्य एव ॥ (२४) ॥ अपि च अयमाजन्मसिद्धः स्वभावः—तरुणं वा ललितं वा गुणोन्नतं वा कुलप्रसूतं वा । अपहाय मातृलोको धनिनं यं कश्चिदेव कामयते ॥ (२५) ॥" इति । ] ३४५॥ [ सुमनः स्वस्थचित्त इति सम्बोधनं, यद्वा सुमनःकुंकुमवासः इत्येकं पदं, सुमनोभिः पुष्पैः अलंकृतं कुंकुमेन केशरेण च रञ्जितं वासः वस्त्रम् । नर्तने तादृशं वस्त्रं परिधीयते । दयितिका इति वेश्याविशेषनाम । ] ३४६ ॥ [ रागवती स्नेहवती । गर्वः इष्टलाभादिना अन्येषामवज्ञा । तथाहि समयमातृकायां—" वेश्यालताः सरागं पूर्वं तदनु प्रलीनतनुरागम् । पश्चादपगतरागं पल्लवमिव दर्शयन्ति निजचरितम् ॥ " इति । ] ३४७ ॥ [ जीवन्नेव " लक्षणहेत्वोः" ( पा. ३ । २ । १२६ ) इति हेतौ शतृप्रत्ययः । परिहरणहेतुकं यतः जीवनं इत्यर्थः । यावत् प्रतिस्पर्धिना व्यापृताख्यस्य पुत्रेण न व्यापाद्यसे इति भावः । ] बद्धावेशः धृताग्रहः अत्यासक्तः, [ महाविषमः अप्रधर्ष्यः । ] ॥ ३४८॥ [ क्षणे महोत्सवे, यथा वर्षर्धिमङ्गलदिने ' जन्मगांठ ' इति भाषायां, होलिकादिसर्वसामान्ये वा; दत्तं वितीर्णं, अंशुकं वस्त्रं, उपरि कृत्वा उत्तरीयरूपेण सर्वदृश्यं धृत्वा; स्तब्धा ग्रीवा यथा स्यात् तथा, स्तब्धग्रीवता हि गर्विणः स्वभावानुभावः, तेन सगर्वं इत्यर्थः; भ्रमतः पर्यटतः कामिजालस्य तन्नाम्नः, माहात्म्यं महत्तां, भोः चन्द्रोदय, पश्य; इति कस्यचित् काक्वा वक्रोक्तिः; तेन दत्तवस्त्रप्रदर्शनेन सा मय्येवानुरक्ता इति तस्य अभिमानं मिथ्यैव, वस्तुस्थित्या तस्याः

---

३४६ विचित्तः ( प. कापा ) ३४७ न रङ्गवती ( कापा ) ३४८ जीवद्द्वेषि नलावक ( प )

कौमारकं विहन्तुं रतिसमये मदनसेनायाः।
इच्छामि किन्तु तस्या मात्राऽतीव प्रसारितं वदनम् ॥ ३५० ॥
विश्रम कियतस्तपसः फलमेतद्यदुपभुज्यते मदिरा।
स्वकरेण पीतशेषा मदघूर्णितमदनसेनया दत्ता ॥ ३५१ ॥
कुवलयमालानिलयो लीलोदय किमिति सम्प्रति त्यक्तः।
किं विदधामस्तस्मिन्भ्रातर्दास्या विना मूल्यम् ॥ ३५२ ॥

---

अनेवंविधत्वात् इति सूचितम्। ] ३४९ ॥ [ अभुक्तपूर्वायाः मदनसेनायाः ] कौमारकं बाल्यं तद्विहन्तुम् अपसारयितुं [ हर्तुं ], प्रथमसमागमाय इति यावत्। वदनं अतीव प्रसारितं—बहुद्रव्यं याचितम् ॥ ३५० ॥ [ मदघूर्णितमदनसेनया पीतशेषा मदिरा स्वकरेण दत्ता यत् उपभुज्यते इत्याद्यन्वयः! मदेन मद्येन मद्यपानेन, यद्वा " मदिरादिकृतो मोहो हर्षव्यतिकरो मदः। " तेन घूर्णिता उन्मत्ता। निपीतपरिशेषस्य मधुनः अङ्गनास्यश्वसितसौरभमिश्रणात् नवसुधास्यन्दिबिम्बाधररससंक्रान्त्या वा लोकोत्तरगन्धरसस्पर्शवीर्यविपाकादिरूपः परमोत्कर्षः व्यज्यते, अत एव विश्रमस्य तादृशपानं महत्तपःपुण्यफलत्वेन उत्प्रेक्ष्यते ॥ ] [ मधुपानं प्रायः रतारम्भात् पूर्वं क्रियते, यतः सर्वजात्योः नायकनायिकयोः तत् ह्रीविमोहविरहहृदयपाटवोत्पादत्रपानिगलनिरर्गलनिधुवनफलकम्। तथाहि कालिदासः—" आसेवन्ते मधु रतिफलं " ( मेघ० २।५ ) इति। माघोऽपि " आचार्यत्वं रतिषु विलसन्मन्मथश्रीविलासाः, ह्रीप्रत्यूहप्रशमकुशलाः शीधवश्चक्रुरासाम् ॥ " ( ९।८ ) इति। क्वचित् रतश्रमापनोदित्वात् रतान्तेऽपि क्रियते ॥ तच्च नानाप्रकारेण—यथा क्वचित् प्रथमं प्रियेण मधु पीत्वा तत् प्रेमादरपुरःसरं प्रियायै दीयते, क्वचित् समानकालं पृथक्पात्रैः युगपद्वा एकपात्रेण पीयते, कदाचित् प्रिययैव आदौ तदनु प्रियेण—तदपि प्रियापीतशेषगर्भपात्रात् किंवा साक्षाद्दयितामुखकमलपात्रात्। अत्र उत्तरोत्तरस्य उत्कर्षः बोध्यः ॥ उक्तं च शृङ्गाररसज्ञैः " प्रियामुखोच्छिष्टं हि पवित्रम् " इति, स्मृतिरपि—" रतिकाले मुखं स्त्रीणां शुद्धमाखेटके शुनाम्। " इति। ] ३५१ ॥ [ निलयः वेश्म। दास्याः वेश्यायाः। दासीपदप्रयोगेण धिक्कारश्च व्यञ्जितः॥. उक्तं च लोकोक्तिमुक्तावल्यां—" यूनामकिञ्चनानां का वाञ्छा वारसुन्दरीवीथ्याम्। कार्पासपण्यवीथ्याः कौलेयस्यापि कोऽपि सम्बन्धः ॥ " (९२) इति; कौलेयः श्वा ॥ ]

---

३५० कौमारकं विधातुं वाञ्छसि किल रमण मद० ( प ) विहातुं ( कापा ) ३५१ °दुपयुज्यते ( प )। °तदेवदत्तया ( प ) ३५२ °माला निलये···त्यक्ता ( प )। °किं विदधीमहि तं° ( प )

मुषिताशेषविभूतेरिन्दीवरकस्य यामिनी याति ।
संवाहयतः सम्प्रति मञ्जीरक तिलकमञ्जरीचरणौ ॥ ३५३ ॥
अद्यापि बालभावं निखिलं न जहाति बालिका तदपि ।
प्रौढिम्ना मकरन्दक सकला ललना अधः कुरुते ॥ ३५४ ॥
कुब्जे गत्वा वक्ष्यसि तं निर्दयचित्तनर्तनाचार्यम् ।
हारा सुकुमारतनुः किमियं सम्मर्दकारिता भवताम् ॥ ३५५ ॥
निःसारोऽभिनिवेशः शुकशावकपाठने सुरतदेवि ।
तिष्ठति बहिरुपविष्टः प्रतीक्षमाणस्तव प्रेयान् ॥ ३५६ ॥
वीणावादनखिन्ना पतिताऽऽस्ते वासभवनपर्यङ्के ।
उत्थापय तां त्वरितं स्मरलीलां मत्त आयातः ॥ ३५७ ॥
किमिदं यथास्थितत्वं तव माधवि यन्मुहुर्वदन्त्या मे ।
परिधत्से नाभरणं श्रीविग्रहराजसूनुना दत्तम् ॥ ३५८ ॥

---

३५२ ॥ [ विभूतिः सम्पत्तिः । एकदा तस्याः प्रभुरपि तयैव अपहृतसंपत् तस्या एव दासः जातः इति भावार्थः ] ॥ ३५३ ॥ [ इतः ३६२ तमाङ्कां आर्यां यावत् चेट्या-दीनां उक्तयः, तत्र प्रथमं मातुः कामुकं प्रति उक्तिः । [ बालिका वयसा यथार्थनाम्नी काचित् । गुणेषु तु] प्रौढिम्ना प्रौढभावेन । [ नायिकासु " प्रौढा ह्यधिककन्दर्पा पत्या-वखिलकेलिकृत् । " इति रसरत्नहारे, तस्याः भावः प्रौढिमा । बाला मुग्धा अपि प्रौढा इति विरोधः, तेन च तस्या असाधारण्यसूचनेन व्यतिरेको व्यङ्ग्यः । ] ॥ ३५४ ॥ [ चेटीं प्रति माता । निर्दयचित्तत्वं शिक्षकधर्मः । हारा तन्नाम्नी । ] संमर्दकारिता [ योग्यतामतिक्रम्य ] अतिशिक्षण [ रूपं ] पीडनं [यद्वा नृत्ये स्खलने बोधितार्थग्रहण-विलम्बे वा संताडनम् । ] ॥ ३५५ ॥ [नायिकां प्रति माता । निःसारः अयुक्तः, "सारं न्याय्ये जले वित्ते सारं स्याद्वाच्यवद्वरे । " इति विश्वलोचनः । अभिनिवेशः संलग्नचि-त्तत्वम् । प्रतीक्षमाणः समागमकालं प्रतिपालयमानः, उपविष्टः तन्नामा, प्रेयान् प्रियः ।] [ अनेन तस्याः शुकसारिकाप्रलापनकलाकौशल्यं व्यञ्जितम् । ] ॥ ३५६ ॥ [ चेटीं प्रति माता । पतिता खेदापनयनाय यथासुखं शयिता । मत्तः कामुकनाम । ] ॥ ३५७ ॥ [ नायिकां प्रति माता । यथास्थितत्वं स्तब्धत्वम् । इदं वचनं नायकश्रवणगोचरं यथा

---

३५४ जहाति मदनिका ( प )। सकलां ललनां ( गो. का ) ३५५ किमिति श्रममद्य कारिता ( प. कापा ) ३५६ निःसर कोभिनिवेशः ( प. कापा ) ३५७ °लां भट्ट-पुत्र ( प. गो २. कापा )

ईदृक्शून्यमनस्त्वं किं कुर्मो मातरिन्दुलेखायाः ।
पानक्रीडासक्त्या पतिताऽपि न चेतिता कनकताडी ॥ ३५९ ॥
नकुलः पयो न पायित इति रोपवशादियं हि दुःशीला ।
नाश्नाति कामसेना पुनःपुनः प्रार्थ्यमानाऽपि ॥ ३६० ॥
श्रीबलसुतपरिपालित ऊर्णायुः किमनया विजेतव्यः ।
मुकुला मुक्तसुखस्थितिरहर्निशं मेषपोषणे लग्ना ॥ ३६१ ॥
आताम्रतामुपगतमुच्छूनं करतलं च तव ललिते ।
मा पुनरतिचिरमेवं प्रविधास्यसि कन्दुकक्रीडाम् ॥ ३६२ ॥

---

स्यात् तथा उक्तं, तेन च केनापि कारणेन रुष्टा सा अधिकधनदानेन प्रसादनीया इति सूचितम् ॥ ]॥ ३५८ ॥ [ मातरं प्रति चेटीवचनं कामुकस्य श्राव्यम् । ] शून्यमनस्त्वं असावधानता । [ पानक्रीडा मधुपानम् । चेतिता ज्ञाता । ] कनकताडी भूषणविशेषः, [ कनकमयी ताडी लब्वामलकाकारं कर्णपालीभूषणम् । अनेन त्वया कामुकेन अन्यत् क्रीत्वा प्रियायै समर्पणीयं इति व्यञ्जितम् । ] ॥ ३५९ ॥ [ चेट्याः मातरं प्रति कामुकश्राव्यम् । नकुलः कुक्कुरादिवत् क्रीडनार्थं पालितः बभ्रुः, पयः दुग्धं, रोषवशात् इति दुःशीलत्वे सद्भावविपर्यये हेतुः । इदं कामुकरागवर्धनार्थं व्याजः, कामुकस्यैव प्रणयेन सा आहारं निर्वर्तिष्यते इति धनदानाद्युपायेन तस्या रोषः तेन परिहर्तव्यः इति सूचयति ॥ ] ॥ ३६० ॥ [ रागवर्धनार्थं नायिकायाः अन्यकार्यव्याप्टतिव्याजेन समयावकाशाभावं कथयति—श्रीबलेति । तथाहि समयमातृकायां—" प्रथमं प्रार्थिता वेश्या न क्षणोऽस्तीत्युदाहरेत् । जनस्यायं स्वभावो हि सुलभामवमन्यते ॥ " (५।६८) इति क्षेमेन्द्रः । यद्वा मेषयुद्धावलोकनव्याजेन नायकस्य तस्यां प्रीतिकौतुकजननार्थं इयं विटस्योक्तिः, तथा च कामसूत्रे–" लावककुक्कुटमेषयुद्धशुकसारिकाप्रलापनप्रेक्षणककलाव्यपदेशेन पीठमर्दो नायकं तस्या उदवसितमानयेत् । " ( ६ । १ ) इति । यद्वा सा मेषादियुद्धकलाप्रावीण्यवतीति सूचयन्त्याः मातुः कामुककर्णगामिनी उक्तिः इयं–श्रीति । ] ऊर्णायुः इत्यादि । [ऊर्णायुः मेषः ' मेंढो ' इति भाषायाम् । ] अनया किं तत्सौभाग्यसंपत्तिः संपादनीया यत्त्यक्तान्यसर्वकर्मा सुखानपेक्षा तत्पोषणे [ स्वीयमेषस्य पोषणादौ ] एव व्याप्टता ॥ ३६१ ॥ [ मातुः

---

३५९ कनकनाडी ( गो. का. ) [ ताकारनकाराक्षरयोः लेखनाकारसंभ्रममूलोऽयं अपपाठः । ] ३६० पुनर्याच्यमानापि ( गो. का ) ३६१ श्रीधरसुत ( प ) । किल मधा ( प ) । बकुला ( प ) ३६२ आताम्रतामुपगतं प्रोच्छूनं ( प. का ग )

अभिराम कनकभाटी प्रथममियं गृह्यते, समुत्पन्ने ।
स्नेहे तु कुसुमदेव्यास्त्वं प्रभवसि जीवितस्यापि ॥ ३६३ ॥
ग्रहणकमर्पय तावद्यदि कौतुकमुपरि चन्द्रलेखायाः ।
निर्वर्तितकर्तव्यो दास्यसि किञ्चिद्यथाभिमतम् ॥ ३६४ ॥
न परमदाता मातः सूनुरसौ वासुदेवभट्टस्य ।
निर्लज्जः शठवृत्तिः पुनःपुनर्वार्यमाणोऽपि ॥ ३६५ ॥
क्षपयति वसनानि सदा हठेन सकलानि सुरतसेनायाः ।
न ददात्येकामूर्णामुरणः परमस्ति कार्पासम् ॥३६६॥ ( युग्मम् )

---

वेश्यादारिकाविशेषं प्रति उक्तिरियम् । उच्छूनं शोथवत् । ] [ कन्दुकक्रीडाया मनोहारि वर्णनं दशकुमारचरिते षष्ठ उच्छ्वासे द्रष्टव्यम् । तस्या विस्तरस्तु कन्दुकतन्त्रे । ] ॥ ३६२ ॥ [ द्वाभ्यां मातुः प्रथमकामुकं प्रति उक्तिविशेषमाह । कनकमयी महती भाटी गृह्यते तत्र दुःखितमनसा न भाव्यं, पश्चात् समुत्पन्ने स्नेहे विस्रंभे समारूढे, त्वं तु तस्या जिवितस्यापि ] प्रभवसि प्रभुः भवसि [ भविष्यसि इत्यर्थः, किमु तत्र वाच्यं तस्याः अन्येषां क्षुद्रधनानां इति बहुमूल्यग्रहणाय छलोक्तिः । ] ॥ ३६३ ॥ ग्रहणकं पुरस्कारद्रव्यम् [ रतमूल्यं वा, ] [ तावत् आदौ एव, कौतुकं कुतूहलं तत्समागमस्य इति, यद्वा अभिलाषः । निर्वर्तितकर्तव्यः संप्राप्तसुरतः, किञ्चित् उपदारूपं 'बक्षीस' इति भाषायाम्, यथाभिमतं स्वेच्छानुरूपम् । इदमपि अधिकग्रहणोपायः । ] ॥ ३६४ ॥ [ त्रिभिः वैशिकशठस्य अधमवैशिकस्य वा आचरणं वक्ति, तत्र युग्मकेन चेटी मातरं प्रति तच्छाठ्यं प्रकाशयति नेति । न परमदाता—परमस्य उत्कृष्टस्य दाता न—दातव्यमिति तुच्छमेव ददाति इत्यर्थः, अतः वारंवारं निवार्यमाणोऽपि निस्त्रपः कुटिलवर्तनः स कुचादिस्पर्शनाद्यर्थं सुरतसेनायाः वस्त्राणि बलात् समाकर्षति, अतः एवंविधः स केनापि प्रकारेण निष्कास्यः इति भावः । ] [ शठवृत्तिः "वाचैव मधुरो यस्तु कर्मणा नोपपादयेत् । योषितां कश्चिदप्यर्थं स शठः परिकीर्तितः ॥" ( २३ । २९८ ) इति नाट्यशास्त्रे । निर्लज्जस्तु—" वार्यमाणो दृढतरं यो नारीमुपसर्पति । सचिह्नः सापराधश्च स निर्लज्ज इति स्मृतः ॥" ( २३ । ३०१ ) इत्यपि तत्रैव । ] ॥३६५॥ [ तन्निर्लज्जत्वं प्रकाशयति क्षपयतीति । ] न ददातीति । [कार्पासं कर्पासं इत्यपि कर्पासबीजं 'कपासीआ' इति भाषायां इत्यर्थः । ] तथा च कर्पास-

---

३६३ डोंव भाटी (प) । समुत्पन्ना (प) ३६४ चन्द्रसेनायाः (प) । दास्यसि पश्चार्यं (प) ३६५ सूनुरयं नगररोटभट्टस्य ।···पुनरेति निवार्यमाणोपि ( प ) ३६६ कर्पासं (का)

भगिनि न मुञ्चति वेश्म क्षणमपि पटराजपुत्रोऽसौ ।
भग्नान्यनरावसरो, नग्नेनाधिष्ठितं तीर्थम् '॥ ३६७ ॥

इत्थंप्राया वाचः शृण्वन्विटकुट्टनीसमुद्गीर्णाः ।
तं वेशसन्निवेशं पश्यन् प्रविवेश दारिकावेश्म ॥३६८॥ (कुलकम्)

आकण्ठमिवोत्कतया स्नपितमिव स्निग्धचक्षुषः प्रसरैः ।
तमुपागतमत्यर्थं हारलता पूजयामास ॥ ३६९ ॥

---

भक्षकोऽपि उरणो [ मेषः ] नैकमपि ऊर्णासूत्रं वितरति यथा, तथा वासुदेवभट्टसूनुः केवलं स्वार्थमात्रप्रसक्तो न किञ्चिदपि वितरति, सुरतसेनायाः वसनादिकं नाशयति मात्रम् । तथा च न आसक्तिः तत्र विधेया इत्यर्थः; लोकोक्तिरूपेणेत्थम् उक्तिः, [ तेन अत्र लोकोक्तिरलंकारः, तल्लक्षणं तु "लोकप्रवादानुकृतिर्लोकोक्तिरिति भण्यते ।" इति कुवलयानन्दे । लोकोक्तिस्तु आभाणकः 'कहावत' इति भाषायाम् । अत्र च उपमानोपमेयवाक्ययोः दानाभावरूपः समानो धर्मः पृथक् निर्दिष्टः, तेन प्रतिवस्तूपमाऽपि।] ॥३६६॥ [ एका गणिका अपरां प्रति कामुकशाठ्यं आक्रोशेन निरूपयति । ] भगिनि इत्यादि । [ भग्नान्यनरावसरः अदत्तापरकामुकप्रवेशावसरः । अत्र ' भग्नान्यतरासङ्गो' इति पाठे भग्नान्यावतरणासङ्गः इत्यर्थः, तरः अवतारः प्रवेशः । ' नग्नेनाधिष्ठितं यथा तीर्थं ' इति पाठे ] यथा नग्नकः [ विवस्त्रो भिक्षुविशेषः ' बावो ' इति भाषायां, ] तीर्थं [ पुण्यक्षेत्रं ] अपैतृकमपि अधिष्ठितिमात्रेण स्वीयं अभिमन्यते, न च तत्र अन्यस्मै स्थानावकाशं ददाति, तथा स मद्गृहं स्वीयं अभिमन्यमानः वार्यमाणोऽपि न मुञ्चति [तिरस्कृतोऽपि न त्यजति निरन्तरत्वसान्निध्येन च अन्यस्मै प्रवेशं न ददाति] इत्यर्थः । [ मूलपाठे पूर्ववत् लोकोक्तिप्रतिवस्तूपमालङ्कारयोः संसृष्टिः । ] [ तथा च समयमातृकायां–" न भवत्येव धूर्तस्य वेश्यावेश्मन्यमातृके । चुल्लीसुप्तस्य हेमन्ते मार्जारस्येव निर्गमः ॥ " ( १ । ४३ ) । अत एव प्रस्तुते मातरं मुक्त्वा अन्यां प्रति उक्तिः भगिनीत्यादिना ] ॥३६७॥ उद्गीर्णा उद्गारिताः । [ न च समुद्गीर्णा इत्यस्य ग्राम्यत्वं, तदुक्तं " निष्ठ्यूतोद्गीर्णवान्त्यादि गौणवृत्तिव्यपाश्रयात् । अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते ॥ " इति । ] [ वेशसन्निवेशः-वेशानां वेश्यागृहाणां, " नेपथ्ये गृहमात्रे च वेशो वेश्यागृहेऽपि च । " इति रभसः, संनिवेशः रचनाप्रकारः यत्र सः, वेश्यावीथिका । ] दारिका बाला, बालवेश्या हारलता इत्यर्थः ॥ ३६८ ॥ [ इतः षड्भिः

---

३६७ क्षणमपि भे कपटराज ( प ) । भग्नान्यतरासङ्गो (गो. का) । 'ष्ठितं यथा तीर्थं ( गो. ) ३६८ दयितिकावेश्म ( प ) ३६९ गतमत्यन्तं ( गो २ का ) गतमभ्यर्णं ( प )

सुविहितसमुचितसंस्थितिरवनतशिरसा प्रणम्य तत्सख्या ।
इदमभिदधेऽतिनम्रं सुन्दरसेनः शुभावसरे ॥ ३७० ॥
' प्रियदर्शन किं बहुभिः स्मरपीडितदीनवचनसन्दर्भैः ।
इयमास्ते हारलता, जीवनमस्यास्त्वदायत्तम् ॥ ३७१ ॥
निर्यन्त्रकेलिविशदं सहजप्रेमानुबन्धरमणीयम् ।
कार्यान्तरान्तरायैरनुपहतं यातु यौवनं युवयोः ॥ ३७२ ॥

---

हारलतासुन्दरसेनयोः समागमं वर्णयति आकृष्टेति । उत्कता उत्कण्ठितमनस्ता । स्वस्याः प्रेमार्द्रैः नेत्रावलोकनैः आप्लावितस्य इव तस्य हारलता समादरवचनादिसम्मानक्रियाभिः स्वागतं चकार इत्यर्थः । उत्प्रेक्षालंकारः ॥ ] ३६९ ॥ [ शुभावसरे—सहजप्रेमाकृष्टया मनोरथविषयप्रियतमजनसमागमेन प्रशस्ते मङ्गले वा समये । ] ३७० ॥ [ प्रियदर्शन इति संबोधनेन दर्शनमात्रेणैव सर्वसन्तापशान्तिः ध्वनिता । अत एव, सम्प्रति अलं तदनुभूतमदनव्यथाप्रकाशकदुःखज्ञापकवाक्यप्रपञ्चैः दुरुक्तैः, तथाकृते वृथा दुःखेन कालहरणमेव स्यात् इत्यर्थः । ] [ 'स्मरपीडितवचनचाटुसन्दर्भैः' इति पाठे ] चाटवः प्रियोक्तयः, सन्दर्भः ग्रथनम् । [ जीवनेत्यादिना उपक्षेप्यं सुन्दरसेनवियोगे हारलतायाः मरणं सूचितम् ॥ ] ३७१ ॥ [ इतः द्वयोः सखीकर्तृकस्वेष्टाशंसा । ] निर्यन्त्रकेलिः अप्रतिबन्धो विलासः [ विहारो वा, ] [ सहजप्रेम नैसर्गिकी प्रीतिः, तल्लक्षणं तु—" दम्पत्योः सहजा तु या । सान्द्रा निगडभूता च प्रीतिर्नैसर्गिकी मता ॥ " ( ४ । २६ ) इति अनङ्गरङ्गे । अर्थप्रातिसुहृद्गोष्ठीसेवाव्यापृतीत्यादीनि ] कार्यान्तराणि अन्यकार्याणि एव विघ्नाः तैः, [अनुपहतं अविच्छिन्नं, तथा च मुद्राराक्षसे— " परायत्तः प्रीतेः कथमिव रसं वेत्ति पुरुषः । " ( ३ । ४ ) इति; ] [ ' अपरिहृतं ' इति पाठे ] अत्याजितं; [ अयं पाठः विरुद्धार्थकः इति त्याज्यः । यातु परिभुक्तं भवतु; यौवनं तारुण्यं, रतिरसायनं वयः; यथा लक्षितं सहृदयलीलायां—" बाल्यानन्तरं गात्राणां वैपुल्यसौष्ठवविभक्तताविधायी स्फुटितदाडिमोपमः स्मरवसतिः अवस्थाभेदः यौवनम् । " इति । युवयोः सर्वप्रकारेण सदृशयोः; तथा च मृच्छकटिके " सदृशजनसमाश्रयः कामः । "(८।३३)इति, अथवा परस्परदर्शनानुबद्धरतिपरिपोषयोः भवतोः । आशीरलंकारः, तल्लक्षणं काव्यादर्शे " आशीर्नामाभिलषिते वस्तुन्याशंसनं " इति; अयं अलंकारः कैश्चित् नाङ्गीकृतः, कैश्चिच्च प्रेयोलंकारभेदत्वेन अन्यैः नाट्यालंकारत्वेन वा

---

३७० संविहित ( प ) । शुभेऽवसरे ( प ) ३७१ स्मरपीडावचनचाटुसंदर्भैः ( गो ) स्मरपीडनव···र्भैः ( का ) ३७२ आर्या° ( काश ) । °रपरिहृतं ( गो. का )

निर्दयमविरतवाञ्छं स्रस्तत्रपमव्यवस्थितावरणम् ।
उपचीयमानरागं सततं भूयाद्भवत्सुरतम् ॥ ' ३७३ ॥
इति दत्त्वाऽऽशिषमन्तर्निर्याते परिजने, तदङ्गेषु ।
विस्रम्भविविक्तरसो ववृधे कुसुमायुधः सुतराम् ॥ ३७४ ॥
( विशेषकम् )

यदमन्दमन्मथोचितमनुरूपं यत्तथानुरागस्य ।
यद्यौवनाभिरामं, यच्च फलं जीवितव्यस्य ॥ ३७५ ॥

उक्तः । ] ॥ ३७२ ॥ [ भवतोः अतिस्नेहाक्रान्तत्वात् धृष्टयोः उभयोः; निर्दयं अचिन्तितमार्दवं, तदुक्तं भारविणा—"आद्दता नखपदैः परिरम्भाश्चुम्बितानि घनदन्तनिपातैः । सौकुमार्यगुणसंभृतकीर्तिर्वाम एव सुरतेष्वपि कामः ॥" (किरात० ९।४९) ( वामः क्रूरः इत्यर्थः ); अविरतवाञ्छं—न विरता विश्रान्ता समाप्तिं इता वाञ्छा स्पृहा यत्र तत्, अप्राप्ततृप्तिकं सत् पौनःपुन्येन अभिलष्यमाणं; स्रस्तत्रपं विगलितलज्जाभावं सधाष्ट्र्यं इति यावत्, तच्च न मधुपानाद्युपायेन अपि तु एकीभूतहृदयत्वात्; अव्यवस्थितावरणं निर्लुलितवस्त्रादिसंनिवेशं, आवरणं केशभूषणादीनामुपलक्षणं; उपचीयमानरागं वर्धमानस्नेहं, " दुःखमप्यधिकं चित्ते सुखत्वेनैव रज्यते । येन स्नेहप्रकर्षेण स राग इति कथ्यते ॥ " इति रसार्णवसुधाकरे, उपचीयमानेतिविशेषणेन च " अचिरेणैव संसक्तश्चिरादपि न नश्यति । अतीव शोभते योऽसौ माञ्जिष्ठो राग उच्यते ॥ " इति तस्य उत्तमरागत्वं ध्वनितम् । सततं निरन्तरं; सुरतं—प्रेक्षणभाषणाश्लेषणचुम्बनाद्यनेकभेदभिन्नं बाह्यं, उत्तानकादिभेदेन षड्विधं आभ्यन्तरं च, इति द्विविधम् । ] ॥ ३७३ ॥ [ आशीः शुभाशंसनं, यथा शृंगारतिलकभाणे—" विगलितत्रपयोः प्रणयार्द्रयोः शयनमेकमजस्रमुपेयुषोः । भगवतः कृपयैव मनोभुवो भवतु वामनिशं सुरतोत्सवः ॥ " (१२९) इति । अन्तः गृहाभ्यन्तरे । विस्रम्भेण प्रणयेन, विविक्तः पवित्रः शुद्धः, रसः स्वादः, रसान्तरं वा यत्र तादृशः कुसुमायुधः मदनः, वृद्धिमाप; " विस्रम्भः केलिकलहे विश्वासे प्रणये वधे । " " विविक्तं विजने पूतेऽप्यसंपृक्तविवेकिनि । " " रसः स्वादेऽपि तिक्तादौ शृङ्गारादौ द्रवे विषे । " इति च विश्वलोचनः । यथाऽऽह मृच्छकटिके—" विविक्तविश्रम्भरसो हि कामः । " ( ८ । ३० ) इति ॥ एतेन अयं उत्कृष्टः शृङ्गाररसः, नात्र तदाभासलेशोऽपीति सूचितम् ॥ ] ॥ ३७४ ॥ [ इतः आर्याषोडश्या आशीरनुरूपं

३७३ ध्वस्तत्रपम° (प) । ताचरणं ( प. कापा ) ३७५ मन्मथोदित ( कापा ) । यद्यौवनेऽभि° ( प )

अविनय एव विभूषणमश्लीलाचरणमेव बहुमानः ।
निःशङ्कतैव सौष्ठवमनवस्थितिरेव गौरवाधानम् ॥ ३७६ ॥
केशग्रहणमनुग्रह उपकारस्ताडनं, मुदे दंशः ।
नखविलिखनमभ्युदयो, दृढदेहनिपीडनं समुत्कर्षः ॥ ३७७ ॥

---

उभयोर्गाढरागत्वात् प्रौढमन्मथरसं प्रगल्भाख्यतरुणीरतं ललितरीत्या वर्ण्यते । तच्च हारलतायाः मुग्धात्वेऽपि गणिकात्वात् बाल्ये एव अधीतसकलकामतन्त्रत्वात् सुन्दरसेनस्यापि अनङ्गागमपारीणत्वात् च न विरुद्धम् । तदुक्तं रतिरहस्ये ( ४ । ४ )— " यौवनस्था सद्भावारब्धगाढोद्भटरतिसुखिता " इति ॥ तत्रादौ षड्भिः कुलकेन प्रस्तुतसुरतस्य वैशिष्ट्यं प्राह यदिति । अमन्दः चण्डवेगो मन्मथः कामः । तथा तथाविधम् तादृक् । यौवनेन तरुणावस्थया अभिरामं सुन्दरं, तरुणयोः सुरतस्यैव परमानन्दावहत्वेन यथार्थत्वात् । " सौन्दर्यं प्रीतिसंपत्तिश्चण्डवेगोऽथ यौवनम् । एकैकमनुरागाय किमु यत्र चतुष्टयम् ॥ " इति भावः ] ॥ ३७५ ॥ [ इतः अन्तर्विशेषकम् । यस्मिन् सुरते, अविनय एवेत्यादि पूर्वार्धं व्याख्यातप्रायं ' असमञ्जसमि'ति ( १६० ) आर्याटिप्पण्याम् । निःशङ्कता निर्भयत्वं, " शङ्का त्रासे वितर्के च " इति विश्वलोचनः, सौष्ठवं भद्रभावः आतिशयितत्वं अतिशयो वा । अनवस्थितिः एकस्थले स्थित्यभावः, चाञ्चल्यं इति यावत्, गौरवाधानं महत्तासंपादकम् ॥ अविनयादि भूषणादिकं नास्ति तथापि तदुक्त्या अत्र विरोधः, एवकारोपादानेन रूपकं च ॥ एतच्छायः श्लोकः सुभाषितावल्यां भट्टपरिभूतस्य—" यद्दूरमुक्तविनयं यदनुष्ठितेच्छं, यन्निर्दयं यदसमाधि यदस्तलज्जम् । यद्रागनिघ्नहृदयं यदपोढधैर्यं, तत्तद्बभूव सुरतेषु गुणो, न दोषः ॥" इति । ] ३७६ ॥ [ केशग्रहणं—शिरोहृदयोपस्थानां त्रीणां कामस्थानानां आद्यशिरःस्थशशिकलापीडनाय यत् कचाकर्षणं, तत् न अन्यत्र इव अवमानं प्रत्युत अनुग्रहः कृपा एव तस्य नायिकाद्रावणफलत्वात् ॥ केशग्रहणप्रपञ्चः अनङ्गरङ्गं पञ्चसायकं च विहाय अन्यकामशास्त्रीयप्रबन्धेषु न दृष्टः इति सः प्रथमप्रबन्धात् उद्ध्रियते— " स्निग्धा घनाः कुञ्चितनीलवर्णाः केशाः प्रशस्तास्तरुणीजनानाम् । प्रेमप्रवृद्ध्यै विधिनैव मन्दं ग्राह्या नरैश्चुम्बनदानकाले ॥ ( ९।३७ ) । चिकुरान् परिगृह्य चुम्बति करयुग्मेन पतिः प्रियां यदि । समहस्तकमित्यथैकतो यदि हस्तेन तरङ्गरङ्गकम् ॥ ( ३८ ) । परिवेष्ट्य करेण कुन्तलान्मदनार्तो यदि धारयेत् प्रियाम् । रतिकेलिकलापकोविदाः कथयन्तीति भुजङ्गवल्लिकम् ॥ ( ३९ ) । कर्णप्रदेशस्थकचान् विगृह्य परस्परं चुम्बति यत्र नारी । पतिश्च रागात्सुरतावतारे कामावतंसः स कचग्रहः स्यात् ॥ ( ४० ) " इति ॥ उक्तं आर्यासप्तशत्यां अपि—" न च दूती, न च याच्ञा, न

**विगलल्लोलं चुम्बनमंवयवनिष्पेषनिःस्पृहो मर्दः।**
**अन्तःप्रवेशनेच्छं निर्भरपरिरम्भणं यस्मिन्॥ ३७८॥**

चाञ्जलिर्न च कटाक्षविक्षेपः। सौभाग्यमानिनां सखि कचग्रहः प्रथममभियोगः॥" (३२६) इति; अभियोगः वश्यतासंपादनोपायः इति तट्टीका। अत एव अत्र आदौ कविना तदुद्दिष्टम्॥ तथा ताडनं कराघातः, तत् च चतुर्विधं—उत्सङ्गोपविष्टायाः पृष्ठे मुष्टिना मुष्टिः, विवदन्त्या मूर्ध्नि फणाकृतिहस्तेन प्रसृतकं, युक्तयन्त्रायाः स्तनान्तरे स्तनयोः वा अपसारणार्थं यो हस्तप्रयोगविशेषः तेन अपहस्तकं, सुरतावसाने पार्श्वयोः जघने च समीकृततलेन समतलं इति च; तत् न तिरस्करणं प्रत्युत उपकारः हितसंपादनं, यथासंभवं तस्यतस्य क्रीडार्थत्वात् रागसंवर्धनार्थत्वात् च। दंशः ओष्ठकपोलादिषु दन्तैः पूर्वं व्याख्यातः १५५ आर्याटिप्पण्यां, स न पीडायै प्रत्युत मुदे हर्षाय एव, तस्य कामोद्बोधकत्वात्; स्त्रियोऽपि प्रियरदच्छदं प्रीतिकोपे दन्तैः सताण्डवभ्रु दशन्ति। नखविलिखनं कुचनितम्बादिषु कामांकुशैः नखैः तत्रैव पूर्वमुक्तं, तत् अभ्युदयः न अवज्ञालिङ्गं प्रत्युत उन्नतिकारणं, अनुरागातिशयप्रकाशकत्वात्। दृढं बलवत्, यत्, देहस्य तदवयवानां स्तनादीनां इत्यर्थः, निपीडनं अतिमर्दनं, यद्वा दृढं यत् देहनिपीडनं आलिङ्गनं प्रसिद्धं, तद्भेदाः कामसूत्रादिषु प्रपञ्चिताः ततो ज्ञेयाः, तत् देहपीडनं न तु दण्डरूपं अपि तु समुत्कर्षः प्राशस्त्यं, तस्य द्विविधसुरतनाम्नस्य आरम्भकत्वात्॥ अत्र पूर्ववदेव विरोधरूपकौ॥ एतद्विषये शृङ्गारदीपिका (१। २०)—"हास्यैर्वचोभिर्घनमुष्टिघातैर्नखक्षतैर्दन्तनिपीडनैश्च। विश्वासवाचा भणितैः प्रसिद्धैर्वशं नयेत प्रियवाक् प्रगल्भाम्॥" इति। तथा च माघः—"बाहुपीडनकचग्रहणाभ्यामाहतेन नखदन्तनिपातैः। बोधितस्तनुशयस्तरुणीनामुन्मिमील विशदं विषमेषुः॥" (१०।१२) इति] [एतदार्यार्थः सुवृत्ततिलके समुदाहृते साहिलस्य श्लोकेऽपि, स च "कचग्रहमनुग्रहं, दशनखण्डनं मण्डनं, दृगञ्जनमवञ्जनं, मुखरसार्पणं तर्पणम्। नखार्दनमतर्दनं, दृढमपीडनं पीडनं, करोति रतिसङ्गरे मकरकेतनः कामिनाम्॥" इति।] ३७७॥ विगलत् अतिप्रसक्तं, लोलं सतृष्णं, [यद्वा विगलल्लोलं इत्येकं पदं, विगलन्ती मुखात् बहिः निर्गच्छन्ती स्रवन्ती वा लोला जिह्वा यत्र तत्, "लोला जिह्वाश्रियोर्लोलः सतृष्णचलयोस्त्रिषु।" इति विश्वलोचने; अनेन ओष्ठचुम्बनात् अधिकं मतं जिह्वायुद्धं नाम अन्तर्मुखचुम्बनदशनचुम्बनजिह्वाचुम्बनतालुचुम्बनेति चतुर्विधं लक्षितम्। तथा च नैषधकाव्ये—"प्रस्मृतं न त्वया तावद्यन्मोहनविमोहितः। अतृप्तोऽधरपानेषु रसनामपिबं तव॥" (२०।

३७८ निगलनलोलं (प)। निष्पेषसस्पृहो (प. कापा)। प्रवेशमिच्छन् (गो २. का)

**यदनङ्गैरिव विहितं, रागैरिव दीप्तिमत्त्वमुपनीतम् ।**
**प्रेमभिरिव निस्खलितं, शृङ्गारैरिव विकासमानीतम् ॥ ३७९ ॥**

७८ ) इति, जिह्वाग्रलेहनमपि कामशास्त्रेषु उक्तम् । ] [ चुम्बनस्थानानि तु रतिरहस्ये—" नयनगलकपोलं दन्तवासो मुखान्तः स्तनयुगलललाटं चुम्बनस्थानमाहुः । दधति जघननाभीमूलकक्षासु चुम्बव्यतिकरसुखमुच्चैर्देशसात्म्येन लाटाः ॥ " ( ७ । १ ) इति । ] [ अवयवानां अङ्गप्रत्यङ्गानां निष्पेषः निर्दलनं तत्र ] निःस्पृहः निरपेक्षः निर्दयः, [ मर्दः मर्दनं पीडनं । ] [ प्रियगात्रस्पर्शसुखग्रहग्रस्ततया तदंगं प्रविविक्षतोरिव अभेदं अभिलपतोरिव, अङ्गानां अपरस्य अङ्गेषु प्रवेशने इच्छा यत्र तादृशं, निर्भरं गाढं दृढं, परिरम्भणं आश्लेषः, स्वदेहे परदेहस्य विलयं कर्तुमिच्छन्निव इत्यर्थः । अत्र क्षीरजलकाख्यालिंगनव्याख्याने जयमङ्गलः—" रागान्धत्वादनपेक्षितास्थिभङ्गदोषौ परिष्वजमानौ परस्परमनुविशत इव, बाहुयन्त्रेण अतिपीडनात् मृत्पिण्डौ इव क्षीरोदकवच्च तादात्म्यं प्रतिपद्येते इव; यथोक्तं—' भावासक्ताः कामुकाः कामिनीनामिच्छन्त्यङ्गेष्वम्भसीव प्रवेष्टुम् । ' इति । " इति ॥ माघस्तु एवमुत्प्रेक्षते—"संप्रवेष्टुमिव योषित ईषुः श्लिष्यतां हृदयमिष्टतमानाम् । आत्मनः सततमेव तदन्तर्वर्तिनो न खलु नूनमजानन् ॥ " (१० । ४८) इति ॥ इदं आर्याद्वयोक्तं केशग्रहणादि बाह्यरताष्टाङ्गवर्णनपरं प्रवृद्धरागकालद्योतकं इति ध्येयम् ] ॥३७८॥ यदनङ्गैरिति । [ यत् सुरतं, ] एकेन अनङ्गेन तथासम्पादनमशक्यमिति अनङ्गसमूहेन इव सम्पादितं इत्यर्थः । [एवमेवात्र रागप्रेम शृङ्गारशब्देषु बहुवचनप्रयोगो बोध्यः । दीप्तिमत्त्वं परमोत्कर्षम् । निस्खलितं निश्चलीकृतं, यद्वा स्खलितशून्यं स्वातिरिक्तपदार्थान्तरसंबंधशून्यं इति यावत् । विकासं प्रफुल्लताम् । ] [ अनेन अनङ्गः सुरतस्य उत्पादकः, रागः तद्वर्धकः, प्रेमा तत्स्थैर्यकारकः, शृङ्गारश्च तद्गुणसम्पादकः इति उपदिष्टम् ॥ रागप्रेमादीनां सूक्ष्मभेदस्तु—" स्याद्दृढेयं रतिः प्रेमा, प्रोद्यन् स्नेहः, क्रमादयम् । स्यान्मानः, प्रणयो, रागोऽनुरागो, भाव, इत्यपि ॥ ५३ ॥ बीजमिक्षुः, स च रसः, स गुडः, खण्ड एव सः । स शर्करा, सिता सा च, सा यथा स्यात् सितोपला ॥५४॥ अतः प्रेमविलासाः स्युर्भावाः स्नेहादयस्तु षट् । प्रायो व्यवह्रियन्तेऽमी प्रेमशब्देन सूरिभिः ॥५५॥ " इति उज्ज्वलनीलमणौ स्थायिभावप्रकरणे विवृतः । ] स्नेहलक्षणादि च तत्र—" आरुह्य परमां काष्ठां प्रेमा चिद्दीपदीपनः ॥ हृदयं द्रावयन्नेष स्नेह इत्यभिधीयते । अत्रोदिते भवेज्जातु न तृप्तिर्दर्शनादिषु ॥ " इति । प्रेमा तु तत्रैव—" सर्वथा ध्वंसरहितं सत्यपि ध्वंसकारणे । यद्भावबन्धनं यूनोः स प्रेमा परिकीर्तितः । " " प्रौढः प्रेमा स यत्र स्याद्विश्लेषस्यास-

३७९ निश्चलितं ( प )

अप्रागल्भ्यं व्यसनं, धैर्यमकार्यं, विवेक उपघातः।
हेपणमगुणो यस्मिंस्तत्सुरतं प्रस्तुतं ताभ्याम् ॥३८०॥ (कुलकम्)
प्रारब्ध एव तावत्प्रज्वलितो धगिति मनसिजो यस्मिन्।
तस्य विशेषावस्था वक्तुमशक्याः प्रवृद्धस्य ॥ ३८१ ॥
सहजरसेन जडीकृतमिति यूनोः कामशास्त्रनिर्णीते।
नानाकरणग्रामे लालित्यमवाप पाण्डित्यम् ॥ ३८२ ॥
अभिधेयमनाख्येयं प्रविचार्यं च्छादनीयमविषह्यम्।
न बभूव तयोस्तस्मिन्नारब्धे सुरतपरिमर्दे ॥ ३८३ ॥

---

हिष्णुता।" इति च। एतेषां मन्दादिभेदाः तत्रैव द्रष्टव्याः।] ॥ ३७९ ॥ [पूर्व (३७६–३७७) लोके केचित् ये दोषत्वेन मताः ते सुरतप्रसङ्गे तु गुणा एव इति रहस्यं दर्शितं, सम्प्रति केषाञ्चित् गुणानां तु तत्र दोषत्वमपि इति वस्तुस्थितिमाविष्करोति अप्रागल्भ्यमिति।] अप्रागल्भ्यं लज्जादिना अप्रौढिः, व्यसनं नाशकं, तद्वत् परिहरणीयमित्यर्थः। [धैर्यं पीडादौ विकारस्य अप्रदर्शनं, अकार्यं इति अधर्मादिवत् भावरूपं कुकर्म इत्यर्थः। विवेकः इदं मया कर्तव्यं न वा इति विचारः, उपघातः कार्ये अयोग्यतासंपादकः।] हेपणं लज्जाकरं, [ह्रीधातोः हेतुमण्णिजन्तात् भावे ल्युट्; यद्वा लज्जाकरणं करणे ल्युट्; अगुणः दोषः। प्रस्तुतं आरब्धम्।] [अत्र लेशालंकारो गम्यः।] ॥ ३८० ॥ [धक् धग् इति प्रज्वलिताग्निजशब्दानुकरणम्। अतिशयोक्तिर्व्यङ्ग्या।] ॥ ३८१ ॥ [सहजरसः शृङ्गाररसः, तस्य सर्वप्राणिषु विद्यमानत्वेन तत्स्वभावत्वात्, तेन जडीकृतं कुण्ठितं, इति प्रकारे, कुण्ठितप्रकारं इति यावत्, "इति हेतौ प्रकारे च प्रकाशाद्यनुकर्षयोः। इति प्रकरणेऽपि स्यात्समाप्तौ च निदर्शने।" इति विश्वलोचने, यत् यूनोः तरुणयोः तयोः, पाण्डित्यं नानाविषयेषु ज्ञानात्मकं क्रियात्मकं च नैपुण्यं, तत्, कामशास्त्रनिर्णीते अनङ्गागमप्रतिपादिते, नानाकरणानां तत्र वर्णितानां उपविभागादिना चतुरशीतिसङ्ख्याकभेदानां नागरकादिरतिबन्धानां ग्रामे समूहे, लालित्यं मनोहरत्वं, अवाप प्राप ॥ कुण्ठितमपि लालित्यं अवाप इति विरोधः, अन्यत्र कुण्ठितं सुरते तादृशं न इति समाधिः। एतेन तौ सुरतरसे तथा निमग्नौ यथा वेद्यान्तरं न किञ्चिदपि विविदतुः इति ध्वन्यते।] ॥ ३८२ ॥ [अनाख्येयं अनभिधेयं

---

३८१ झगिति (प)। शक्या (प) ३८२ निर्णीतौ (गो. का)। मालिन्यमवाप (प) इयाय (गो २. कापा) ३८३ अविधेयमनाख्येयमविचार्यं छादनीयं (प)। तस्मिन्नाविद्धारब्धसुरतसंमर्दे (प)

अत्यभ्यस्ता याऽन्या सुरतविधौ विविधचाटुपरिपाटी ।
तामालूनविशीर्णां चकार सहजः स्मरावेगः ॥ ३८४ ॥
सद्भावरागदीपितमदनाचार्योपदिष्टचेष्टानाम् ।
कः परिगणनं कर्तुं रतिचक्राविष्टरमणयोः शक्तः ॥ ३८५ ॥
बाला मृदुगात्रलता दृढपुरुषाक्रान्तविग्रहा न परम् ।
न व्यथिता, मुदमाप, प्रभवति खलु चित्तजन्मनः शक्तिः ॥३८६॥

---

प्रविचार्यं सम्यक् विचार्य वक्तव्यं, च्छादनीयं गोपनीयं अकथ्यं, अविषह्यं उक्तं श्रुतं वा सोढुं अशक्यं; अनेन सुरते वाक्प्रचारप्रकारः प्रदर्शितः ।] ॥ ३८३ ॥ [तथापि चाटूक्तीनां अप्रसरं प्राह अत्यभ्यस्तेति ।] अत्यभ्यस्ता पूर्वं मनोऽभिध्याता, [यद्वा पौनःपुन्येन प्रकटिता, अन्या भिन्ना सुरतविधेः पूर्वं भिन्नप्रकारा, चाटुः प्रियवचनं, " अस्त्री चाटुश्चटुः श्लाघा प्रेम्णा मिथ्याभिशंसनम् । " इति कोशः, तेषां] परिपाटी परम्परा [तां], आलूनविशीर्णा [सर्वतोऽपि] छिन्नभिन्नां, [सहजः नैसर्गिकः अकृत्रिमः, स्मरावेगः मदनसंरम्भः, सुरतविधौ चकार इत्यन्वयः । सुरते चाटोः अप्रवेशः जातः इति भावः ।] ॥ ३८४ ॥ [सद्भावः सदभिप्रायः, रागः प्रेम, उभाभ्यां दीपितः उत्साहितः, मदनः कामदेवः, स एव आचार्यः अध्यापकः, " उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः । साङ्गं च सरहस्यं च तमाचार्यं प्रचक्षते ॥" (२ । १४० ) इति मनुना उक्तः, तेन उपदिष्टाः चेष्टाः क्रियाः तासां, परिगणनं सङ्ख्याज्ञानम् ]; रतिचक्रं सुरतप्रबन्धः, [रागोत्पीडः इति कामसूत्रटीकायां जयमङ्गलः । रमणयोः प्रिययोः । तदुक्तं—" शास्त्राणां विषयस्तावद्यावन्मन्दरसा नराः । रतिचक्रप्रवृत्तस्य नास्ति शास्त्रं न च क्रमः ॥ " (कामसूत्रं २।२ ) इति, " नास्त्यत्र गणना काचिन्न च शास्त्रपरिग्रहः । प्रवृत्ते रतिसंयोगे राग एवात्र कारणम् ॥ स्वप्नेष्वपि न दृश्यन्ते ते भावास्ते च विभ्रमाः । सुरतव्यवहारेषु ये स्युस्तत्क्षणकल्पिताः । " (कामसूत्रं २।७ ) इति च ।] ३८५ ॥ [मृद्वी बाला बलिना पुरुषेण आक्रान्तशरीरा सती, न न व्यथिता—" द्वौ नञौ प्रकृतमर्थं दृढं सूचयतः " इति न्यायेन व्यथितैव पीडितैव, परं पूर्वोक्तस्य क्षेपे—तथापि, मुदं हर्षं प्राप, तत्र हेतुः, चित्तजन्मनः स्मरस्य, शक्तिः बलं, प्रभवति प्रकृष्टा समर्था भवति; "अचिन्त्यशक्तिर्भगवाननङ्गः ।" इति भावः । तदुक्तं केनचित् कविना—"या मा चन्दनपङ्कमङ्गपतितं भारं गुरुं मन्यते,

---

३८४ अभ्यस्ता या तन्व्या (प) प्रत्यभ्यस्तायान्यं (कापा)। ३८६ °विग्रहा सपदि । न व्यथिता (प) °विग्रहा न परम् । प्रव्यथिता (गो.)। प्रभवति ननु (प)।

किं रमणीं रमणोऽविशदुत रमणं सा न जानीमः ।
स्वावयवावगमस्त्वप्रकाशमगमत्तयोस्तदा निपुणम् ॥ ३८७ ॥
तस्या निमीलितदृशो निस्पन्दतनोर्बभूव सुरतान्ते ।
लिङ्गमनङ्गच्छाया जीवितसत्तानुमानस्य ॥ ३८८ ॥

---

सुप्ता कोमलपद्मपत्रशयने खेदं परं गच्छति । सा सर्वाङ्गभरं प्रियस्य सहते केनाऽप्यहो हेतुना, चित्रं पश्य, किमत्र चित्रमथवा, कामस्य किं दुष्करम् । " इति । तथा च पञ्चायुधप्रपञ्चभाणे–"सहजप्रेमरसानां गुरुरपि लघुतामुपैति तनुरङ्गे । कुसुममसोढनखाङ्कं तुन्दिलमधुपाँल्घूद्वहति ॥ ( ३३ ) इति । अत्र विरोधः काव्यलिङ्गं च अलंकारौ । ' न परम् । प्रव्यथिता ' इति पाठे–व्यथां न प्राप्ता, मुदं हर्षं, परं तु, प्राप्ता इत्यर्थः । तत्र अबलायाः बलिना आक्रमणे कृते पीडाप्राप्तिनिश्चयेऽपि तदप्राप्त्या विशेषोक्तिः, इष्टप्राप्तिहर्षेण प्रहर्षणालंकारो व्यङ्ग्यः, काव्यलिङ्गं च । ] ॥ ३८६ ॥ [ सुरतयोगे तयोः देहसायुज्यरूपं अद्वैतं जातं इति अत्र वर्णयति, ततः किमु वाच्यं हृदयाद्वैतं निर्वृत्तं इति च ध्वनयति । अविशत् तृष्णातिशयेन ऐक्यं अभिलषन् अनुप्राविशत् । पूर्वार्धं विशदयति स्वेति । अयं अवयवो मम अयं परस्य इति भेदबोधः, तु, निपुणं अत्यन्तं इत्यर्थः, अप्रकाशं अविभाव्यतां अविवेचनीयतां, गतः, तदा सुरतसम्प्रयोगे । अनुभवगोचरमिदं प्रायः विपरीतरतरक्तमानसानां प्रगल्भारतसूत्रकं च । तथाहि रुद्रटः–" लब्धायतिः प्रगल्भा रतिकर्मणि पण्डिता विभुर्दक्षा । आक्रान्तनायकमना निर्व्यूढविलासविस्तारा ( १२ । २४ ) ॥ सुरते निराकुलाऽसौ द्रवतामिव याति नायकस्याङ्गे । न च तत्र विवेक्तुमलं कोऽयं काऽहं किमेतदिति ॥ "( १२ । २५ ) इति । अपि च सुभाषितावल्यां रसकवेः अमरुकस्य पद्यं—" आश्लिष्टा रभसाद्विलीयत इवाक्रान्ताऽप्यनङ्गेन या, यस्याः कृत्रिमचण्डवस्तुकरणाकूतेषु खिन्नं मनः । कोऽयं काऽहमिति प्रवृत्तसुरता जानाति या नान्तरं, रन्तुः सा रमणी स एव रमणः शेषौ तु जायापती ॥ " इति । एतेन शुद्धत्वात् अयं उत्कृष्टशृङ्गारः, नात्र तदाभासलेशोऽपि इति सूचितम् । अत्र सन्देहालङ्कारः । ] ॥ ३८७ ॥ [ एवं सुरतं वर्णयित्वा तस्याः सुरततृप्तिं वर्णयति ] तस्या इति । [ निस्पन्दा–स्पन्दः किञ्चिचलनं ' स्पदि किञ्चिचलने ' घञ्, निवृत्तः स्पन्दो यस्याः सा निस्पन्दा अत्यन्तनिश्चला मृतवत् । ] अनङ्गच्छाया शरीरे कामकान्तिः, [ कामावेशेन जातविशेषा शरीरमात्रव्याता कान्तिः, ] जीवितसत्तायाः अनुमानस्य तदात्मकज्ञानस्य, लिङ्गं हेतुः, बभूव । तया तस्याः

---

३८८ अनङ्गावस्था ( प. कापा ) । निःस्पन्द ( प ) । मानस्य ( गो २ ) मानेऽस्य ( कापा ) मानेन ( गो. का )

श्रमजलबिन्दूपचिता वृत्तस्मरणेन जातवैलक्ष्या ।
सा शुशुभे विपरीता पर्याकुलकेशभूषणा नितराम् ॥ ३८९ ॥

सुखजीवितत्वं निश्चायितमित्यर्थः । [ तस्याः परां तृप्तिं प्राप्तायाः, अत एव निमीलितदृशः सुरतरससुखानुभूतिपारवश्यात् मुद्रितलोचनायाः निश्चलशरीरायाश्च, अत एव जडस्य तु मृतवद्भासमानायाः, यथा कविरेव अग्रे ( ३९९ आ० ) " सुरतरसमीलिताक्षी मृतेति भीतेन मुक्ताऽस्मि ॥ " इति, नागरिकस्य तु इयं जीवतीत्यनुमितेः लिङ्गं तस्याः अनङ्गच्छाया बभूव । अनेन तस्याः सुरतसौख्यातिशयः असामान्य इति व्यज्यते । ] [ अत्र शुद्धः अनुमानालंकारः । रतिलाभलक्षणं च रतिरहस्ये ( १० । ४४ )—" स्रस्तता वपुषि, मीलनं दृशोः, मूर्छना च रतिभावलक्षणम् ॥ " इति, रतिभावः सुरततृप्तिः ॥ ] ॥ ३८८ ॥ [ पुरुषायितं सुरतान्तावस्थाया वैलक्षण्यात् तामपि वर्णयति श्रमेति । विपरीता पुरुषायिता । एतदुचितसमयः अनङ्गरङ्गे ( १० । ३१ )—" जातश्रमं वीक्ष्य पतिं पुरन्ध्री स्वेच्छात एवाथ रतेष्वतृप्ता । कन्दर्पवेगाकुलिता नितान्तं कुर्वीत तुष्ट्यै पुरुषायितं सा ॥ " लक्षणं तु—"उत्तानसुप्तं दयितं भुजाभ्यामालिङ्ग्य लिङ्गं विनिवेश्य गुह्ये । भजेन्नितम्बं परिचालयन्ती नारी तदा स्याद्विपरीतबन्धः ॥ " इति । नायिकाया जघनचालनादिपरिश्रमेण स्वेदोपचयः, केशभूषणादीनां च अव्यवस्थितिः । वृत्तस्मरणेन—रतावेगे अनुभावितेन तदन्ते स्मृतिपथमागतेन स्वस्याः पुरुषवत् आचरितेन, जातवैलक्ष्या लज्जिता । नितरां अतिशयेन, शुशुभे कान्तिं आप ॥ ] [ अस्य चतुरया प्रगल्भया संसेव्यमानस्य बन्धस्य आदिमध्यावसानलीलाः सुभाषितादिभ्यो रसयितव्याः । आरम्भस्य यथा—"पातितोऽसि कितवाधुना मया, हन्मि, संवृणु, कुतोऽसि निर्मदः । निघ्नती क्वणितकङ्कणं मुहुः, कृष्णकुन्तलविचुम्बिताधरा, सान्द्रदोलितनितम्बमाकुला । " इति रतिरहस्ये ( १० । ४९ ), मध्ये यथा—" चलत्कुचं व्याकुलकेशपाशं स्विद्यन्मुखं स्वीकृतमन्दहासम् । पुण्यातिरेकात् पुरुषा लभन्ते पुंभावमम्भोरुहलोचनानाम् ॥ " इति; यथा वा—" जलधरैः स्थगितं शशिमण्डलं, नटनशालि युगं च रथाङ्गयोः । सरुतहंसमभूत्कमलद्वयं, वपुषि नर्मविशेषपुषि स्त्रियाः ॥ " ( ६ । ७० ) इति जानकीपरिणयकाव्ये । अवसाने तु यथा—" आलोलामलकावलीं विलुलितां बिभ्रच्चलत्कुण्डलं, किञ्चिन्मृष्टविशेषकं तनुतरैः स्वेदाम्भसां जालकैः । तन्व्या यत्सुरतान्ततान्तनयनं वक्त्रं रतव्यत्यये, तत्त्वां पातु चिराय किं हरिहरब्रह्मादिभिर्दैवतैः ॥ " इति अमरुकशतके

३८९ शुशुभे रतविरतौ ( कापा ) रतिविरतौ ( प ) ।

निर्व्याजार्पितवपुषोर्निर्वृतिमयमेव गणयतोर्विश्वम्।
क्षणदा विरराम तयोरक्षीणाकाङ्क्ष्योरेव ॥ ३९० ॥
मोहनविमर्दखिन्ना विजृम्भमाणा स्खलद्गतिर्मन्दम्।
निद्राकषायिताक्षी हारलता वासवेश्मनो निरगात्॥ ३९१ ॥
'परिचितपार्श्वगताऽहं, तेन समं पानभोजनं कृत्वा।
नीता निशा कथाभिर्मोहनकार्यं तु यत्किञ्चित्॥ ३९२ ॥

---

(३)। [ 'रतविरतौ' इति पाठे तु वृत्तं निष्पन्नं यत्संभोगकार्यं, अन्यत् समानम्॥ ] ३८९ ॥ [ परस्परं निर्व्याजेन वञ्चनाराहित्येन। ] निर्वृतिः आनन्दः [ सौख्यं, "निर्वृतिः सुस्थितायां स्यादस्तंगमनसौख्ययोः।" इति विश्वः। ] [ क्षणदा क्षणं उत्सवं ददातीति रात्रिः, अक्षीणाकाङ्क्ष्योः अतृप्तयोः॥ तथा च तयोः क्षणदा एव क्षयमाप, न तु विलासाकाङ्क्षा इति भावः। सुखिनां भूयानपि कालो लघीयानिव भवतीति भावः। तथा च उत्तररामचरिते भवभूतिः—"किमपि किमपि मन्दंमन्दमासत्तियोगादविरलितकपोलं जल्पतोरक्रमेण। अशिथिलपरिरम्भव्यापृतैकैकदोष्णोरविदितगतयामा रात्रिरेव व्यरंसीत्॥" (१। २७) इति। अस्य श्लोकस्य वाणीविनोदपरं सुरतव्यापारपरं चेति द्विविधं व्याख्यानं तन्नाटकस्य वीरराघवकृतव्याख्यायां द्रष्टव्यम्॥ ] ३९० ॥ [ एवं मुग्धासुरतपरकाव्यान्तरवर्णनवैलक्षण्येन प्रगल्भासुरतवर्णनं समाप्य, चरमं शयित्वा पूर्वमेव प्रबुद्धायाः हारलताया रतालयात् प्रातः निर्गमनं प्रथमं प्राह मोहनेति। ] मोहनं सुरतं, [ तत्र यः विमर्दः पीडनं गजेन कमलिन्या इव, तेन खिन्ना क्लान्ता, विजृम्भमाणा मुखं व्यायतं कुर्वती निद्रानिधूननाय, स्खलद्गतिः गमने स्खलनवती निद्राशेषत्वात् निधुवने घा प्राप्तश्रमयोः पादयोः गमनासमर्थत्वात्, ] निद्रया [ सुरतावृत्त्या ] तदप्राप्त्या इत्यर्थः, [ यद्वा नेत्रयोः अल्पनिद्राया अवस्थितेः, यद्वा रतिश्रमसंचारिभावस्य अनुभावः निद्रा तया, ] कषायिते आरक्ते अक्षिणी यस्याः सा; [ वासवेश्मनः रतालयात्, मन्दं अलसं यथा स्यात्तथा स्वैरं, निरगात् बहिः अगच्छत्॥ स्वभावोक्तिः अलंकारः, अस्यैव जातिः इति अपरं नाम। केषाञ्चित् मते नास्य अलंकारत्वं, तत्तु सामान्यवर्णनपरस्य वस्तुवैचित्र्यरहितस्य वा इति विज्ञेयम्॥ ] ३९१ ॥ [ ततः सुन्दरसेनस्यापि स्वगृहं प्रातः प्रत्यागच्छतः तत्र वेशवीथ्यां यत् श्रवणपतितं अभूत् तत् द्वादशार्याभिः

---

३९० वि(नि?)वृत्तिमय (प)। रेव (प. गो२) रेवम् (गो. का) ३९१ दोर्बलविमर्द (कापा)। लता वेश्म (गो.) ३९२ पार्श्वमिता (प)। कार्यं च (गो. का)

अविदग्धः श्रमकठिनो दुर्लभयोषिद्युवा जडो विप्रः ।
अपमृत्युरुपक्रान्तः कामिव्याजेन मे रात्रौ ॥ ३९३ ॥
नेच्छाविरतिः क्षणमपि, न च शक्तिर्वस्तुशून्यरतियत्नैः ।
केवलमलमद्याहं कदर्थिता वृद्धपुरुषेण ॥ ३९४ ॥
मद्यवशादभियोक्तरि मृतकल्पे तल्पभागमग्नायाः ।
अविरोधितनिद्रायाः सुखेन मे यामिनी याता ॥ ३९५ ॥
सुकुमारसंप्रयोगः पेशलवचनः सवक्रपरिहासः ।
कुशलवशेन समेतो मम सखि रमणो मनोहराकारः ॥ ३९६ ॥

---

अनुवदति परिचितेति । अहं आसमिति शेषः । समं सह, पानं मदिरादेः । मोहनकार्यं सुरतं, यत्किञ्चित् अल्पमेव, जातम् । मन्दवेगशीघ्रकालकामिसङ्गता नीचरतात् असन्तुष्टा इयम् । ] ॥ ३९२ ॥ श्रमकठिनः श्रमेण कठिनो दृढगात्रः, [ अतः दुःसहः, यद्वा श्रमे श्रमवति कृत्ये कठिनः कर्कशः; दुर्लभा योषित् यस्मै सः, तथा च अत्यातुर इत्यर्थः । अत एव कदर्थनाकरत्वात् अपमृत्युरूपः, [ तत्प्रापकत्वात्, ] [ युवा वर्धमानयौवनः । ] उपक्रान्तः आगतः । [ प्राप्तचण्डवेगचिरकालकामुका उच्चरतात् असन्तुष्टा इयम् । अविदग्धादिषड्विशेषणैः असत्समुच्चयालङ्कारः; कामिव्याजेन अपमृत्युः इति कैतवापह्नुतिः, अत्र व्याजपदेन नायं कामी किन्तु दुर्मरणकारी इत्यपह्नवः प्रतीयते इति द्वयोरत्र संसृष्टिः ।] ॥३९३॥[इच्छायाः सुरतलिप्सायाः, क्षणमपि, विरतिः उपरमो न, तस्या उत्कटत्वात्। वस्तुशून्याः संभोगौपयिकसामर्थ्यरूपवस्तुरहिताः, संभोगाक्षमाः इत्यर्थः, ये रतियत्नाः तत्प्राप्त्यर्थं कृता नानाविधा उपायाः तैः, अद्य अस्यां रात्रौ, वृद्धपुरुषेण जराक्षीणवीर्यत्वात् ध्वजोत्थानशून्येन, अलं भृशं अत्यर्थं, कदर्थिता अनुचितव्यापारवती कृता अर्दिता वा । "असम्भोगो जरा स्त्रीणां" इत्यनुभूतं इति तात्पर्यम्। तथा च भट्टवृद्धेः वृद्धरतवर्णनम्—" यत्नोत्थापनमात्रनिःसहजरच्चर्मावशेषश्लथभ्रश्यच्छेपसि दुर्बलाङ्गवलनव्यर्थोद्यमालिङ्गने । लज्जाधायिनि खिद्यमानयुवतौ वृद्धस्य कृच्छ्रे रते यत्स्यात् तत्प्रतिभाव्य, किं नु हसितुं युक्तं किमारोदितुम् । " इति । रतशक्तिशून्यवृद्धसमागमेन कदर्थिता इयम् । ] ॥ ३९४ ॥ [ अभियोक्तरि सम्प्रयोगकर्तरि कामुके, तल्पभागे शय्यैकदेशे, रतान्ते मद्यपानेन नष्टसंज्ञत्वात् मृतवत् जाते । रतोत्तरं अनायासिता सुखसुप्ता इयम् । ] ॥ ३९५ ॥ [ सुकुमारः—न मन्दवेगः नापि चण्ड-

---

३९३ अपमृत्युमप ( प ) ३९४ रयत्नेति ( प ) ३९५ भागमधिरूढे-अनिवारितनिद्रायाः ( प ) ३९६ शकुनवशेनोपनतो ( प ) । मनोभवाकारः ( प )

पल्यङ्काङ्कनिलीनः पराङ्मुखो मुक्तमन्दनिःश्वासः ।
मद्याचनया नितरां निःस्वेदः स्वेदसलिलसंसिक्तः ॥ ३९७ ॥
पर्यस्तामितानङ्गो व्यपगतनिद्रः क्षपाक्षयाकाङ्क्षी ।
ग्रामोषितः प्रहीणो निष्प्रतिपत्तिः स्थितोऽद्य सखि मनुजः ॥३९८॥
( युगलकम् )

शृणु सखि कौतुकमेकं ग्रामीणककामिना यदद्य कृतम् ।
सुरतरसमीलिताक्षी मृतेति भीतेन मुक्ताऽस्मि ॥ ३९९ ॥

---

वेगः किन्तु मध्यवेगः, सम्प्रयोगः रतं यस्य सः; पेशलवचनः चाटूक्तिः; सवक्रपरिहासः वक्रोक्तिवचनोपन्यासैः परिहासजनकः, वाग्विदग्ध इति यावत् । कुशलवशेन भद्रप्राप्त्यधीनतया, सौभाग्येन इति यावत् । रमणः कामुकः, मनोहराकारः सुन्दरः । लब्धोत्तमनायका समरतात् हर्षिता इयम् । ] ॥३९६॥ [ अथ तिसृषु ग्रामीणकर्तृकरतजातिः, तत्र युगलके अप्राप्तरतस्य, तृतीये प्राप्तरतस्य । " विरमति कथनं विना न खेदः " इति न्यायेन काचित् सखीं वक्ति पल्यङ्केति । पल्यङ्कः खट्वा ' पलंग ' इति भाषायां तस्य अङ्के मध्यभागे, निलीनः शयानः, नायिकायाः नागरिकतया अभिभूतः तत्पराङ्मुखः, अत एव अकिञ्चित्करत्वात् निःश्वासवान्, ] मद्याचनया ममैव कार्यप्रार्थनया, [ निःस्वेदः शान्तस्मरतापः, ' स्वेदः स्वेदनघर्मयोः ' इति विश्वलोचने, ] भव्यस्वभावात् स्वेदार्द्रः । ॥ ३९७ ॥ [ एवं अस्तमदनोदयोऽपि, तच्चिन्तया अप्राप्तनिद्रः, अत एव अरुणोद्गमाकाङ्क्षी, ग्रामोषितः कश्चित् ग्रामवासी, मनुजः मनुष्यः इति अवहेलनोक्तिः, अद्य अस्यां रात्रौ, मयैव प्रहीणः त्यक्तः, ] [ दत्तभाटकः अप्राप्तरतश्च सन् ] निष्प्रतिपत्तिः कर्तव्यमूढः, स्थितः आसीत् । अतिमूढग्रामीणकसंगता परिहासवती इयम् । ] ॥ ३९८ ॥ [ ग्रामीणकः—ग्रामे भवः ग्रामीणः, स एव ग्रामीणकः । सुरतरसेन मीलितनयना अहं मृतेति अनुमीय, भीतेन त्रस्तेन, शीघ्रमेव त्यक्ता । मां मृतां ज्ञात्वा स पलायनं चकार । तथा च गाथासप्तशत्याम् ( ४ । ६० ) " अज्जं मोहणसुत्तं भिअत्ति मोत्तू पलाइए हलिए । दरफुडिअवोडभारोअराहि हसिअं व फलहीहिं ॥ " ( आर्यां मोहनसुप्तां मृतेति मुक्त्वा पलायिते हलिके । दरस्फुटितफ-

---

३९७ पर्यंकासनलीनः ( प ) । मन्नोदनया सुतरां निष्यंदस्वेद ( प ) । ३९८ °नङ्गोऽप्यपगतनिद्रः ( गो. का. ) ३९९ [ इयं प पुस्तके ३९२ अंकान्तरं ] ग्रामेयककामिना ( प ) । सुरतसुख ( प ) । ग्राम्येण तु कामिना...भीत्या विमुक्ताऽहम् ( इति क्वचित् सुभाषितपाठः ) ।

अविदितदेशप्रकृतेः शठात्मकाद्दुर्विदग्धतोऽस्माभिः ।
अनुभूतो राजसुतादा भण्डविडम्बनाक्लेशः ॥ ४०० ॥
प्रियसखि लोकसमक्षं नगरप्रभुणा हठेन नीताऽस्मि ।
एवं तु नो कदाचिद्द्विगुणार्थप्रार्थने कृतो न्यायः ॥ ४०१ ॥

---

लोदराभिः हसितं इव कार्पासीभिः ॥ ) 'बोडं' कर्पासफले देश्यम् । अत्र हलिकः क्षेत्रिकः, न स म्लेच्छ एव । अत्र सुरततृप्तिसुप्तिमरणदशयोः विवेकाभावेन जडहलिकस्य पलायने तन्मौर्ख्यं दृष्ट्वा समीपस्थाभिः सखीभिरिव कार्पासीलताभिः हसितमिव इत्युत्प्रेक्षा, तत्र सादृश्यबीजं तु कार्पासफलस्फोटेन बहिर्भूतकार्पासस्य श्वैत्यं; हासस्य च श्वैत्यं कविसमयप्रसिद्धं, यदाह विश्वनाथकविराजः—"मालिन्यं व्योम्नि पापे, यशसि धवलता वर्ण्यते हासकीर्त्योः ।" ( ७ । २३ ) इति । अतः 'दरफुडिअवेण्टभारोणआइ' ( दरस्फुटितवृन्तभारावनतया ) इति क्वचित् पाठः स न रसावहः । एतदार्याव्याख्यानावतरणे "कोऽप्यात्मनो विज्ञत्वं ख्यापयन् सखायमाह" इति गङ्गाधरोक्तिः न तत्त्वस्पर्शिनी अस्याः अतिजडहलिकपरत्वात् ॥ 'ग्रामेयककामिना' इति पाठे "कत्र्यादिभ्यो ढकञ्" ( पा. ४ । २ । ९५ ) इति ढकञि ढकारस्यैयादेशे ग्रामेयक इति रूपम् ॥ अत्र हीनपात्रत्वात् शृङ्गारस्य रसाभासेऽपि अद्भुतहास्ययोः शबलत्वं स्पष्टमेव । तेन न रसक्षतिः । यद्वा भावप्रकाशकारमतेन "शृङ्गारो हास्यभूयिष्ठः शृङ्गाराभास ईरितः" इत्युक्तेः अस्तु शृङ्गाराभासत्वम् । ग्रामीणसंगता तन्मौर्ख्येण विस्मिता इयम् । ] ॥ ३९९ ॥ [ अज्ञातदेशस्वभावात्, धूर्तात्, अत एव दुर्विदग्धात् गर्वितात्, कस्मादपि राजपुत्रात्, अस्माभिः गृहस्थिताभिः सर्वाभिः एव, आः सन्तापे, भण्डः 'भांड' इति प्रसिद्धः अश्लीलभाषी, तत्कृता या विडम्बना तिरस्करणं तस्य क्लेशः बाधा अनुभूतः । तादृशात् केवलं अश्लीलवाक्यश्रवणादिकं एव प्राप्तं, नान्यत् किमपि इति भावार्थः । भण्डविडम्बिता विषण्णा इयम् । ] [ 'राजसुतादवभाण्डविडम्बनाक्लेशः' इति पाठे ] अवभाण्डं भाटकरूपेण दत्तं रिक्तं भाण्डम्, [ यद्वा अवभाण्डं कूटभूषणं, "भाण्डं भूषणमात्रेऽपि, भाण्डं मूलवणिग्धने । नदीपात्रे, तुरङ्गाणां भूषणे, भाजनेऽपि च ॥" इति विश्वः । ] ॥ ४०० ॥ [ नगरप्रभुः नगराध्यक्षः तेन, हठात् बलात्कारेण मदिच्छाविरुद्धं, लोकसमक्षं नीता—तेनैव न्यायो न कृतः परन्तु पञ्चकुलं आहूतम् । विवादवस्तु तु ] विगुणः

---

४०० अवभाण्डविडंबनावेशः ( गो ) अधिभा° ( का ) ४०१ एवं बंधकदातुद्वि ( द्विं ? )……ने कुतो न्यायः ( प ) कृतोऽन्यायः ( का ) । एवं तु ननु ( कापा ) ।

आकर्षन्ती जघनं व्रजसि यथा विलिखिता नखैस्तिलशः ।
मन्ये तथोपभुक्ता केरलि केनापि दाक्षिणात्येन ॥ ४०२ ॥
अधरे बिन्दुः, कण्ठे मणिमाला, स्तनयुगे शशप्लुतकम् ।
तव सूचयन्ति केतकि कुसुमायुधशास्त्रपण्डितं रमणम् ॥' ४०३ ॥

---

अयोग्यः, [ तादृशस्य अधिकस्य इति यावत् अर्थस्य कामिदातव्यस्य द्रव्यस्य प्रार्थनम् । पूर्वं एवं कदापि नाभूत्, एवं लोकसमक्षम् । तथा च एवं मेऽवमानना कृता । यद्वा कृतः अन्यायः इति च्छेदः, एवंप्रकारेण अन्यायः औचित्यशून्यं पूर्वं नो कृतं इत्यर्थः । लोकापवादेन अवमानिता इयम् ] ॥ ४०१ ॥ [ कामुकेन, नखैः, तिलशः निबिडं इति यावत्, विलिखिता दत्तक्षता, अतः जघनं आकर्षन्ती महाकृच्छ्रेण इत्यर्थः, व्रजसि गमनं करोषि, तथा तेन, मन्ये अनुमिनोमि, केरलि वाराङ्गनाविशेषसम्बोधनं, न तु केरलदेशवासिनि, केनापि दाक्षिणात्येन मगधात् दक्षिणे उत्कलदेशः तत्रत्येन, यतः तद्देशोद्भवाः प्रायः नखदंततोषिण्यो भवन्ति तेन तत्रत्यस्य कामुकस्य तत्परायणत्वं; त्वं, उपभुक्ता सम्प्रयुक्ता कृतसम्भोगा, इति । अनुमानालङ्कारः । विदेशीयकामुकसम्भोगेन प्राप्तनूतनविलासा इयम् । ] ॥ ४०२ ॥ बिन्द्वादयः सुरतचिह्नविशेषाः । तल्लक्षणानि च कामसूत्रे [ द्वितीयाधिकरणे ] चतुर्थपञ्चमाध्याययोः द्रष्टव्यानि । [ बिन्दुः–अधरमवष्टभ्य तन्मध्ये राजदन्ताभ्यां निष्पादितः क्षतः; मणिमाला–दन्तावलिभ्यां निष्पादिता दशनाङ्कावलिः, सैव प्रतिदंशशृङ्खलया कृता–बिन्दुमाला । अनयोः भेदे बहवः कामशास्त्रप्रकरणकारा भ्रान्ताः । देवरायमहाराजप्रणीतरतिरत्नप्रदीपिकायां स्पष्टं भेदनिरूपणं, यथा–"मध्येऽधरं रदद्वन्द्वसंदंशेनाल्पखण्डनात् । जातं दशनविच्छेद्यं बिन्दुं वात्स्यायनोऽब्रवीत् ॥ ···रदनद्वयदंशेन मालाकाराश्च बिन्दवः । ऊर्वोर्ललाटे च कृता बिन्दुमालेति तां विदुः ॥ सिताग्रैर्दशनैः सर्वैर्युगपद्दंशना कृता । बिन्दुमालेव मुनिभिर्मणिमालेति सोदिता ॥" इति चतुर्दशपरिच्छेदे । इमे दशनच्छेद्ये गलकक्षवंक्षण(ऊरुसन्धि)प्रदेशेषु भूषणतां प्रयातः । तत्र मणिमाला अभ्याससाध्या ॥ शशप्लुतं नखविलेखनविशेषः, तल्लक्षणं–"लेखाः स्तनास्ये विरला मयूरपदं नखाग्रैः सकलैर्निषक्ताः । शशप्लुतं पञ्चनखव्रणानि सान्द्राणि तच्चूचुकचिह्नमाहुः ।" इति हरविजयमहाकाव्यटीकायां ( २७।७० ) कस्यचित् । मयूरपदशशप्लुते रागवर्धनात् रमणीनां बहुमते ॥ प्रकृते स्वरतिकलाचातुर्यज्ञापनाय कामिना बिन्दुमणिमाले सर्वदृग्गो-

---

४०२ यथा विक्षता (प) भुक्ता त्वं करेलि दा° (प) ४०३ कुचयुगे (प) केरलि ( गो. का )

इति शृण्वन्नुषसि गिरो निर्वृत्तनिशाभियोगगणिकानाम् ।
सोऽपि यथाक्रियमाणं प्रविधातुं निर्जगाम कर्तव्यम् ॥ ४०४ ॥
( कुलकम् )

सुरचितरागोपचितेः स्वीकृतमनसस्तया समं तस्य ।
यौवनसुखमनुभवतो जगाम संवत्सरः सार्धः ॥ ४०५ ॥
विस्रम्भकथाः कुर्वन् विचरन्नुद्यानवेदिकापृष्ठे ।
सहचरकरसक्तकरः सुन्दरसेनः कदाचित्तु ॥ ४०६ ॥
स्थूलघनतन्तुसन्ततितोनिततूलाम्बरावरणम् ।
यष्टिप्रान्तनियन्त्रितदलवृन्तककुतुपतुम्बिककटित्रम् ॥ ४०७ ॥

---

चरे अधरे गले च कृते, शशप्लुतं तु दीर्घकालस्थायि परोक्षेऽपि कामुकक्रीडास्मारकं इति कृतम् ॥ नागरेण रमणेन लालिता सौभाग्यगर्विता इयम् । ] ॥ ४०३ ॥ [ इति एवंप्रकाराः । उषसि प्रातःकाले । निशाभियोगः निशायां रात्रौ अभियोगो मर्दनं सुरतं इति यावत् । यथाक्रियमाणं क्रियमाणं अनतिक्रम्य वर्तते इति, कर्तव्यं नित्यं सन्ध्यावन्दनादिकं कर्म ॥ ] ४०४ ॥ [ एवं तस्य सुखातिशयेन कालापगमस्य अवधिमाह सुरचितेति । [ सुरचिता सुष्ठु उत्पादिता या रागोपचितिः स्नेहवृद्धिः इति कर्मधारयसमासः, तस्मात्, हेतौ पञ्चमी, स्वीकृतमनसः वशीकृतचेतसः तस्य । तया समं तया सह । यौवनसुखं युवावस्थोचितविलासादिजन्यं आनन्दं, अनुभवतः । सार्धः संवत्सरः अष्टादश मासाः । ] ॥४०५॥ [ अत्रान्तरे भाविविरहबीजं पितुः सन्देशप्राप्तिं प्राह विस्रम्भेति । यद्वा शृङ्गारे रूढपदस्य नायकस्य शान्तरसे प्रवेशं निगमयितुं वृत्तान्तरं कथयति विस्रम्भेति । ] विस्रम्भकथाः विश्वासेन रहस्यालापाः । [ उद्यानं राज्ञः साधारणं वनं, तत्र वेदिका उपवेशनस्थानं, तस्य पृष्ठे पृष्ठभागे । ] ४०६ ॥ [ द्वाभ्यां तत्पितुः सन्देशहरं दूतं वर्णयति ] स्थूलेत्यादि । स्थूलानां, घनानां दृढानां च, तन्तूनां सन्तत्या परम्परया, तोलि(नि ?)तम् परिस्यूतं [ तुद्धातोः ] तूलपूर्णं [ कार्पासगर्भं ] अम्बरं आवरणं यस्य तम् । नियन्त्रितं बद्धं । दलवृन्तकं व्यजनं, [ दलं तालदलं ग्राह्यं, तस्य वृन्तकं प्रसवबन्धकं, तस्य व्यजनोपयोगात् तालवृन्तकं दलवृन्तकं वा लक्षणया

---

४०४ निशानियोग ( कापा ) ४०५ स्वरुचित ( गो २. का ) ४०६ 'सेनः किल कदाचित् ( गो. का ) ४०७ संततितानितनानापटच्चरावरणम् ( प ) संततितोलिततूलाम्बरा' ( गो. का ) । दलवीटककुतपतुंबकप्रायम् ( प )

त्रुटितचरणत्रसङ्गतसंस्फुटिताभ्यक्तपादमलिनतनुम् ।
त्वरितगतिलेखवाहकमारादायान्तमद्राक्षीत् ॥४०८॥ (तिलकम्)
प्रत्यासन्नीभूतं क्रमेण पौरन्दरिः परिज्ञाय ।
साकूतमना ऊचे 'वयस्य हनुमानयं प्राप्तः' ॥ ४०९ ॥
अवनितललीनशिरसा कृतनतिना तेन विनिहितं भूमौ ।
उत्क्षिप्य झटिति लेखं सुन्दरसेनस्तु वाचयामास ॥ ४१० ॥
'स्वस्ति श्रीकुसुमपुरात् पुरन्दरः सुन्दरं समभिधत्ते ।
अन्तर्जृम्भितशोकग्रस्ताविस्पष्टवर्णपदम् ॥ ४११ ॥
कुलमकलङ्कं न गणितमवधीरितमग्रजन्मनासुचितम् ।
नावेक्षितमवगीतं, शठसेवितवर्त्मनि त्वया पतता ॥ ४१२ ॥

व्यजनवाचकं, "व्यजनं तालवृन्तं तत्" इति कोशः, दलवृन्तशब्दस्तु अदृष्टचरः । कुतुपः चर्मनिर्मितं अल्पं घृतादिपात्रम् । ] [ 'कुतपः' इति पाठे ] कुतपः नेपालकम्बलः [ छागकम्बलो वा । "कुतपो भागिनेये स्यादष्टमांशे दिनस्य च । कुतपस्तपने छागकम्बले कुशवाद्ययोः ॥" इति विश्वलोचने । तुम्बिकं दुधी इति प्रसिद्धालाबूफलनिर्मितं जलपात्रम् । ] कटित्रं [कटिं त्रातीति, कटिबन्धनस्य मार्गश्रमाल्पीकरणात् तद्बन्धने उपयुक्तं ] लघुवस्त्रम् [ 'केडीउं' इति भाषायाम् । ] [ इदं जातिवर्णनम् । ] ॥ ४०७ ॥ [ चरणत्रः उपानत् । ] संस्फुटितः सपादस्फोटः, [ अत एव ] अभ्यक्तो रजसा कीर्णः, [ वस्तुतः विरोपणद्रव्यलिप्तः । त्रुटितादिपादश्चासौ मलिनतनुश्च तम् । त्वरितगतिश्चासौ लेखवाहकश्च तं; आरात् दूरात् । ] [इयमपि जातिः । ] ॥ ४०८ ॥ प्रत्यासन्नीभूतः समीपगतः । [साकूतमनाः विदिततदभिप्रायः इत्यर्थः । ] हनुमान् तत्सदृशः इत्यर्थः [ तस्य विलक्षणरूपवेशत्वात् दूतत्वाच्च तथारूपकोक्तिः । हनूमान् इत्यपि रूपम् । वस्तुतः हनुमान् इति दूतस्य नाम । ] ॥४०९॥ [ उत्क्षिप्य हस्तेन गृहीत्वा । "विवक्षितार्थकलिता पत्रिका लेख ईरितः ।" इति रसार्णवसुधाकरे । ] ॥ ४१० ॥ [ स्वस्ति अव्ययम्, सर्वत्र लेखारम्भे प्रयुज्यते; सुशोभनं अस्ति वर्तते इति मङ्गलज्ञापकं, यद्वा सु अस्ति वर्तताम् इति आशीर्वादात्मकम् । अन्तर् इत्यव्ययं, मनसि इत्यर्थः । जृम्भितः विकसितः, शोकः इष्टालाभतन्नाशादिजन्यो मनोविषादः । ] ग्रस्तं परिक्षिप्तं । ॥ ४११ ॥ [ कुलं गोत्रम् । अग्रजन्मा चातुर्वर्ण्ये प्रथमं जातः ब्राह्मणः । अवगीतं

४०८ संगतविस्फुटिता° (प) स्फुटिताभ्यक्तान्त (कापा) । लेखहारक (प) ४१० सुन्दर इति वा° (प) ४१२ नापेक्षित (प. कापा)

वंशेऽकुटिलगतीनां द्विजिह्वतादोषरहितचरितानाम् ।
अपरविनाशरतानामुत्पन्नः कथमसि भुजङ्गः ॥ ४१३ ॥
क्व पुरोडाशपवित्रितवेदपदोद्गारगर्भवदनं ते ।
क्व च मदिरासववासितवारवधूमुखरसास्वादः ॥ ४१४ ॥
क्व कुशविपाटनजन्मा सहसोदितवेदनाचमत्कारः ।
क्व च दासीरतसङ्गरनिर्दयनखरक्षतिः प्रीत्यै ॥ ४१५ ॥

---

गर्हितं जनापवादः । शठः धूर्तः दुर्जनः इति यावत् ॥ अत्र शोकः भावः । ]४१२ ॥ [ वंशे अन्वये कुले । ] अकुटिला निश्छला अवक्रा च । द्विजिह्वता सूचकता पिशुनता सर्परूपता च; "द्विजिह्वौ सर्पसूचकौ" इति अमरः । न परस्य विनाशे रतानां, परोऽन्यः पुरुषः स्वर्गलोकोऽपि । भुजङ्गो [ भुजं कुटिलं गच्छति इति ] जारः सर्पश्च । [ अत्र अकौटिल्यादिगुणवैशिष्ट्यकारणात् तद्विपरीतगुणवतः भुजङ्गरूपकार्योत्पत्तेः असम्भवेऽपि तादृशस्य उत्पत्तिकथनात् विभावनालङ्कारः, " क्रियायाः प्रतिषेधेऽपि कार्योत्पत्तिर्विभावना । " इति काव्यप्रकाशे; पुनः " अननुरूपसंसर्गो विषमम् " इति रसगङ्गाधरीयविषमलक्षणानुसारेण अत्र उत्पत्तिलक्षणस्य संसर्गस्य अयोग्यत्वं, कारणात् स्वगुणविलक्षणगुणकार्योत्पत्त्या इति विषमोऽपि; भुजङ्ग इति पदे तु रूपकातिशयोक्तिः । एवं श्लेषानुप्राणितः विभावनादित्रयाणां अत्र सङ्करः, तेन विवक्षितार्थस्य तच्चरितगर्ह्यत्वस्य उत्कटप्रतीतेः क्रोधरूपः भावः परं व्यञ्जितः । ]॥ ४१३ ॥ [ इतः नवभिः विषमालङ्कारभङ्ग्या तस्य भूतवर्तमानप्रवृत्त्योः घटनाननुरूपत्वं, तयोः अत्यन्तविरुद्धत्वात् ऐकाधिकरण्यस्य असम्भवेऽपि तथादर्शनात् विस्मयात्मकं अद्भुतं च प्रकाशयति क्वेत्यादिना । तत्रापि पूर्वार्धे कृतविप्रोचिताचाराणां उत्तरार्धे तु क्रियमाणतद्विरुद्धव्यापाराणां वर्णनम् । पुरोडाशः सोमरसः, " पुरोडाशो हविर्भेदे चमस्यां पिष्टकस्य च । रसे सोमलतायाश्च हुतशेषे च कीर्तितः । " इति विश्वः, तेन पवित्रितं वदनम्;] उद्गारः मधुरध्वनिः । [ क्वेति—द्वौ क्वौ महदन्तरं सूचयतः, एवमन्यत्रापि । मदिरासवौ—मदिरा शीधुः मद्यसामान्ये, " शीधुरिक्षुरसैः पक्वैरपक्वैरासवो भवेत् । " इति परिभाषाप्रदीपे, " यदपक्वौषधाम्बुभ्यां सिद्धं मद्यं स आसवः । " इति भावप्रकाशे । एतेन द्विविधमपि मद्यमुक्तम्; तत्र मदिरा मद्यं वा उन्मादजनकं, आसवस्तु केवलं उद्दीपक इति विवेकः । तत्र सुरापानं ब्राह्मणानां निषिद्धं, न क्षत्रियवैश्ययोः इति ज्ञेयम् ॥ ताभ्यां वासितं सुरभीकृतं, यत् वारवधूमुखं वेश्यावदनं, तस्य यः रसः अर्थात् अधररसः, तस्य आस्वादः पानानुभवः । ] ॥ ४१४ ॥ [ कुशाः दर्भाः, विपाटनं

क त्रेतानलधूमक्षोभितनयनाम्बुधौतवदनत्वम् ।
क च गणिकानिर्भर्त्सनशोकभरायातबाष्पसलिलौघः ॥ ४१६ ॥
क वषट्कारध्वानः षट्कर्मविभूषणं श्रवणपूरः ।
क च साधारणवनितारतिमणिताकर्णनौत्सुक्यम् ॥ ४१७ ॥
काचार्यप्रतनुलताताडनसंक्षोभसम्भवः कम्पः ।
क च कुपितवारललनानिष्ठुरपादप्रहारविषहत्वम् ॥ ४१८ ॥

लवनं, कुशानां तीक्ष्णधारत्वात् तद्विपाटने अङ्गुलिक्षतः जायेत तेन तत्कर्म निपुणतया क्रियते इति कुशान् लाति इति कुशलः इति शब्दः निपुणार्थे रूढः । सहसोदिता आकस्मिकी, वेदना व्यथा । दासी–भुजिष्या–वेश्या; यथा मेघदूतस्थ–" तत्रावश्यं " इति-श्लोकगत–' वलयकुलिश'पदव्याख्याने " वज्रपर्यायत्वात् कुलिशशब्देन हीरका उच्यन्ते " इति तट्टीकायां महिमसिंहगणिः, तथा " भुजिष्या प्रैष्यमात्रे स्यात् स्वतन्त्रायामपि स्मृता " इति धरणिकोशोक्त्या भुजिष्याशब्दस्य दासीवाचकत्वात् वेश्यावाचकत्वाच्च ये दासीवाचकशब्दाः ते सर्वेऽपि वेश्यावाचकाः इति विज्ञेयम् ॥ सङ्गरः युद्धम् । तत्र उन्मत्तया चण्डवेगया प्रौढया रुष्टया वा प्रियशरीरे नखदन्तक्षतादि क्रियते ॥ यत्र कुशक्षतः वेदनायै अभूत् तत्रैव नखक्षतः प्रीत्यै भवति इति विरोधोऽपि व्यङ्ग्यः, तेन च आश्चर्यम् । ] ॥ ४१५ ॥ [ त्रेतानलः त्रेताग्निः गार्हपत्याहवनीयदक्षिणाग्निनामकं अग्नित्रयं आहिताग्नीनां, क्षोभितं व्याकुलतां नीतम् । निर्भर्त्सनं तिरस्कारः । अनेन गणिकायां रागातिशयो व्यज्यते । ] ॥ ४१६ ॥ [ वषट्कारः यागे देवतायै हविर्दानसमये प्रयुज्यमानः शब्दः यथा इन्द्राय वषट् इत्यादौ । तथाहि वाग्धेन्वाः चत्वारः स्तनाः, तत्र स्वाहाकारवषट्काराभ्यां देवा आकार्यन्ते, स्वधाकारेण पितरः, हन्तकारेण हर्षद्योतकेन मनुष्याः आकार्यन्ते । ध्वानः ध्वनिः । षट्कर्माणि विप्राणां तु "अध्यापनं चाध्ययनं यजनं याजनं तथा । दानं प्रतिग्रहश्चापि षट् कर्माण्यग्रजन्मनः ।" इति ( मनुस्मृतिः १०।७५ ) । श्रवणपूरः उच्चघोषतया श्रवणं पूरयति आप्यायति इति, यद्वा न केवलं स कर्मभूषणं अपि तु कर्णपूरः कर्णाभरणविशेषः इत्यपि शब्दसामर्थ्यात् सूच्यते ।] साधारणवनिता [सामान्या] वेश्या, [तस्याः रतिकाले मणितं पूर्वं व्याख्यातं (आ. १५५) तेषां आकर्णने, औत्सुक्यं उत्कण्ठा । ] ॥ ४१७ ॥ [ पञ्चभिः स्वभ्यस्तत्राल्यकालिकाचरणस्मरणपूर्वकं तद्विरुद्धाचरणं दर्शयति क्काचार्येति । आचार्यःगुरुः,

४१६ सलिलत्वम् (प) ४१७ सत्कर्मविभूषणश्र° (गो. का) ४१८ विषहित्वम् (प)

क्व हरिणचर्मावरणं स्मृतिशास्त्रनिवेदितं व्रतं चरतः ।
क्व च पण्यस्त्रीगात्रस्पृष्टाम्बरधारणेषु बहुमानः ॥ ४१९ ॥
समिधामेव च्छेदनमभ्यस्तं शैशवात्समारभ्य ।
शठवनिताधरखण्डन उत्पन्नं कौशलं कुतो भवतः ॥ ४२० ॥
शुश्रूषणमेव गुरोः परिशीलितममलचेतसा सततम् ।
कुटिलमतयो भुजिष्याः कथं त्वयाऽऽराधिता निपुणम् ॥४२१॥

---

"उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः । सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ।" (मनुस्मृतिः २।१४०) इति लक्षितः, तस्य प्रतनुः अस्थूला, लता शाखा "समे शाखालते" इति अमरः,वेत्रलता कशारूपा या शिष्याणां ताडने उपयुज्यते 'सोटी' 'छडी' वा इति भाषायाम्, तया ताडनं इत्यादि। कम्पः त्रासेन वेपथुः । कुपिता—नेयं प्रणयकलहकुपिता तस्याः पादप्रहारासंभवात्, परन्तु प्रियस्य अल्पदोषे महादोषे वा क्रोधाक्रान्ता। निष्ठुरः निर्दयः । पादेत्यादि तूष्णीं लत्ताघातसहनम्। ताडनस्य सहनासहनयोः कथनात् अत्रापि विरोधः व्यङ्ग्यः, महदाश्चर्यं च फलम् । ] ॥४१८॥ [ स्मृतिशास्त्रैः गौतमबोधायनादिभिः ऋषिभिः श्रुतिमवलम्ब्य प्रणीतैः स्मृत्याख्यशास्त्रैः, यद्वा स्मृतिभिः शास्त्रैश्च धर्मसूत्रादिभिः, निवेदितं उपदिष्टं अनुशासितं; व्रतं ब्रह्मचर्यादि, यद्वा लव्याश्वलायनस्मृत्युक्तानि महानाम्न्यादीनि चत्वारः व्रतविशेषाः, यद्वा उपनयनात् उपाकर्मान्तं क्रमेण आचरितव्यं सावित्रीव्रतं वेदाब्दव्रतं आरण्यकव्रतानि च; तत् सर्वं चरतः तदनुष्ठानपरायणस्य । हरिणचर्मावरणं—उपनयनसंस्कारसमये प्रदत्तं आव्रतसमाप्ति धारणीयं ऐणेयं त्रिभिः खण्डैः स्यूतं अष्टाचत्वारिंशदङ्गुलपरिमाणं प्रावरणं, तच्च ब्राह्मणानां कृष्णाजिनं ऐणेयं विहितं; एणी बिन्दुरहिता मृगी, तत्सम्बन्धि ऐणेयं; तथाहि याज्ञवल्क्यः—उपनीतः "दण्डाजिनोपवीतानि मेखलां चैव धारयेत् ।" (१।१।२९) इति। पण्यस्त्री—मूल्यप्राप्या रमणी, वेश्या; अम्बरं वस्त्रं; बहुमानः चित्तोन्नतिः । उत्तरार्धच्छायावाहिनी अत्रैव ३४९ तमा आर्या.। ]॥४१९॥ [ समिधां होमार्थं उपयुज्यमानानां परिमाणविशेषयुक्तानां प्लक्षादिकाष्ठविशेषाणाम् । शठवनिता कुलटा वेश्या ॥ अधरखण्डनं अधरस्य दंशनं दशनच्छेद्यम् । ]॥ ४२०॥ [ शुश्रूषणं शुश्रूषणशब्दः गुरूपदिश्यमानवेदशास्त्रादिशुश्रूषाहेतुके सेवने रूढः—परिचर्या सेवा, परिशीलितं अभ्यस्तं, अमलचेतसा अकुटिलमतिना, ] भुजिष्या दासी [ वेश्या, आराधिताः

---

४२० धर(वेंद्धन)मु (प) ४२१ "मचलचेतसा (का.)। निपुणाः (का) निपुण (कापा)

आम्नायपाठ एव स्फुटतरपदसौष्ठवं तव ख्यातम् ।
प्रकुपितवेश्यानुनये क्व शिक्षितं वचनचातुर्यम् ॥ ४२२ ॥
अथवा किं क्रियतेऽस्मिन्नवदातकुलेऽपि लब्धजन्मानः ।
सदसंस्तुता भवन्ति प्रागुपचितकर्मदोषेण ॥ ४२३ ॥
त्वयि विनिवेश्य कुटुम्बं परलोकहितार्जनैकविहितास्थः ।
स्थास्यामीति समीहितमनुदिवसं, तद्विसंवदितम् ॥' ४२४ ॥

---

सन्तोषिताः, निपुणं सकौशल्यं चातुर्येण । ] ॥४२१॥ [ आम्नायपाठे वेदमन्त्रोच्चारणे, स्फुटतरपदसौष्ठवं—पाणिनीयादिशिक्षानुसारेण प्रत्येकं वर्णानां यथास्थानादिना व्यक्ततया पदानां च यथास्वरं उच्चारणेन, सौष्ठवं अतिशयः, यथोक्तं पाणिनीयशिक्षायां "माधुर्यमक्षरव्यक्तिः पदच्छेदस्तु सुस्वरः । धैर्यं लयसमर्थं च षडेते पाठका गुणाः ॥" (३३) इति; यद्वा "अभ्यासार्थे द्रुता वृत्तिः प्रयोगार्थे तु मध्यमा शिष्याणामुपदेशार्थे वृत्तिरिष्टा विलम्बिता ॥" इति तत्तद्वृत्त्याश्रयणेन, पस्पशाह्निके महाभाष्ये उक्तसंवृताद्यष्टादशदोषराहित्येन च उच्चारणेन यत् सौष्ठवं तद्वत्त्वं; ख्यातं प्रसिद्धम् । अनुनयः क्रोधापनयनं सान्त्वनं, वचनचातुर्यं चाटूक्तिप्रयोगवैचित्र्यम् । ] ॥ ४२२ ॥ [ पूर्वोक्तं विरुद्धाचरणदर्शनमूलं सर्वं आश्चर्यं कर्मदोषेण समाधत्ते अथवेति । अस्मिन् एतादृशविपरीताचारविषये, किं क्रियते—कः उपायः । अवदातकुले विशुद्धवंशे, लब्धजन्मानः उत्पन्नाः, यत्, सदसंस्तुताः ] सद्भिः अपरिचिताः निन्दिताश्च, [ भवन्ति तत् केवलं, प्रागुपचितानां सञ्चितानां प्रारब्धोन्मुखानां, कर्मणां दोषेण एव जायते । आक्षेपालंकारः ॥ ४२३ ॥ चिरसेवितं स्वसंकल्पं, तद्भङ्गेन नैराश्यं च प्रकटयन् उपसंहरति त्वयीति । त्वादृशे सुपुत्रे कुटुम्बभरं विन्यस्य, परलोकाय स्वर्गाय तदाप्तये इत्यर्थः; यत् हितं पथ्यं इष्टसाधकं, तस्य अर्जने प्राप्तौ, विहिता कृता, आस्था यत्नं, येन सः—स्वर्गाप्तिसाधनपरः—भविष्यामि इति, अनुदिवसं प्रतिदिनं, समीहितं इच्छाविषयीकृतं ध्यातं; "तथा च शङ्खलिखितौ—'पुत्रमुत्पाद्य, संस्कृत्य, वेदमध्याप्य, वृत्तिं विधाय, दारैः संयोज्य गुणवति पुत्रे कुटुम्बमाविश्य, कृतप्रस्थानलिङ्गो वृत्तिविशेषाननुक्रमेत्' इति" इति, धर्माकूते, मनुस्तु—"महर्षिपितृदेवानां गत्वाऽऽनृण्यं यथाविधि । पुत्रे सर्वं समावेश्य वसेन्माध्यस्थ्यमाश्रितः" ॥ (४।२५७) इति । तत् त्वया, विसंवदितं असिद्धिविषयीकृतम् ॥ "प्रीणाति यः सुचरितैः पितरं स पुत्रः" इति नयविरुद्धेन तव कुचरितेन

---

४२२ तवाख्यातं (प) ४२४ जैनैकनिरतात्मा (प) ° कविहिताशः (कापा)

इत्यवगतलेखार्थे सुन्दरसेने विधेयसंमूढे ।
आर्यामगायदन्यः स्वावसरे गीतिपरिकलिताम् ॥ ४२५ ॥
' विषयतिमिरावृताक्ष्णामवटे पततामदृष्टमार्गाणाम् ।
पुंसां गुरुजनवचनद्रव्यशलाकाञ्जनं शरणम् ॥ ४२६ ॥
उद्वेजयति तदात्वे सुखसम्पत्तिं करोति परिणामे ।
कटुकौषधप्रयोगो गुरुनिगदितकार्यनिष्ठुरं वचनम् ॥ ' ४२७ ॥
लब्ध्वा वचमोऽवसरं मित्रमवादीत्पुरन्दरापत्यम् ।
पुनरपि न हि खिद्यन्ते प्रियजनहितभाषणे सन्तः ॥ ४२८ ॥

---

नष्टपरलोकः हताशोऽहं जातः इति तात्पर्यार्थः । ] ४२४ ॥ [ अवगतः विदितः । लेखार्थः–क्रोध ( ४१२ ) विस्मय ( ४१३ ) निर्वेदादि ( ४२२ ) भावानां प्रकाशकः । विधेयसंमूढे इतिकर्तव्यतामतिशून्ये । गीतिपरिकलितां आर्यां–सगीतिं आर्यां, प्रथमं आर्यां ततः गीतिं च । ] ४२५ ॥ [ विषयाः इन्द्रियार्थाः; तद्रूपतिमिरेण अन्धकारेण, अपि च तिमिराख्येन ' नजला ' इति भाषायां प्रसिद्धेन साकल्येन दृष्टिरोधफलकेन नेत्ररोगविशेषेण; आवृताक्ष्णां पिहितनेत्राणां उपहतदर्शनानां; अवटे श्वभ्रे गर्ते ॥ गुरुजनवचनमेव द्रव्यं, तेन निर्मिता शलाका अञ्जनवर्तिः । यथोक्तं गुरुगीतायां ( ४७ )–"अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया । चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥ " इति । रूपकालंकारः ॥ ] ४२६ ॥ तदात्वे तस्मिन् ग्रहणसमये, " तत्कालस्तु तदात्वं स्यात् " इति अमरः । [ सुखसम्पत्तिं देहस्य व्याधिनाशेन मनसश्च आधिनाशेन शान्तिप्राप्तिम् । कटुकः–वाय्वग्निगुणभूयिष्ठः षड्सान्यतमो रसः, तस्य लक्षणं सुश्रुते सूत्रस्थाने ( अ. ४२ ) " यो जिह्वाग्रं बाधते, उद्वेगं जनयति, शिरो गृह्णीते, नासिकां च स्रावयति, स कटुकः " इति, तद्वत् यत् औषधं " वैद्यो व्याधिं हरेद्येन तद्द्रव्यं प्रोक्तमौषधम् । " इति आत्रेयसंहितायां, तस्य प्रयोगः । गुरुनिगदितं च तत् कार्यनिष्ठुरं निर्वर्तनविषये कष्टकरं च इति गुर्वादि ॥ काव्यलिङ्गानुप्राणितो रूपकालङ्कारः ॥ ] ४२७ ॥ [ प्रस्तावगीतेन लब्धावकाशः मित्रं कर्तृ गुणपालितः, " न कालविज्ञोऽवसरं जहाति । " ( राष्ट्रौढवंशकाव्ये १६ । ३६ ) इति नीतिवित्, पुरन्दरापत्यं सुन्दरसेनं, पुनरपि–प्रथमं ( ३०२-३२४ आर्याभिः ) कृतोपदेशस्य अग्रहणेन अवमानितोऽपि, भूयः, अवोचत् । यद्वा पुनरपि. प्रियजनहितभाषणे इत्यन्वयः ।

---

४२५ गीतिसन्मिश्रां ( प ) ४२७ सुखसंवृद्धिं ( गो. का ) सुखसंवृत्तिं ( कापा ) ४२८ लब्ध्वाथ वचोवसरं ( प ) लब्ध्वापि व° ( कापा )

'अगणितसहचरवचसो दुर्व्यसनमहाब्धिमग्नवपुषस्ते ।
मन्युव्यथितस्य पितुर्यदि परमवलम्बनं वचनम् ॥ ४२९ ॥
निजवंशदीपभूतः कृतचरितालंकृतो महासत्त्वः ।
सुन्दर सम्प्रति तातः स्पृष्टो दुष्पुत्रदोषेण ॥ ४३० ॥
पुत्राभावः श्रेयान्न कुसुतता पुत्रिणः कुलीनस्य ।
अन्तस्तापयति भृशं सच्चरितकथाप्रसङ्गेन ॥ ४३१ ॥
संव्यवहारत एव प्रायो लोके गुणः सुखानियतः ।
येन तु सुतेन जननी वन्ध्यात्वं श्लाघते स पापीयान् ॥४३२॥

---

स्वप्रियस्य यत् हितं परिणामसुखं, तस्य आफलोदयं वारंवारं कथने सत्पुरुषाः क्लेशं न गणयन्ति । तदुक्तं—"भूयोऽपि पथ्यं वक्तव्यम्" इति । अर्थान्तरन्यासालंकारः । ] ४२८ ॥ [ तत्रादौ तदेव स्वावमाननं स्मारयति अगणितेति । सहचरः मित्रम् । दुर्व्यसनं अग्राह्यस्त्रियां आसक्तिः, गणिकासङ्गरूपः सुचरितभ्रंशो वा । परं मुख्यं दृढं वा, अवलम्बनं सहायकं निमजतः रज्जुः इव, ते तव, यदि किमपि भवति तर्हि तत्, मन्युः शोकः "मन्युः पुमान् क्रुधि । दैन्ये शोके च यज्ञे च ।" इति मेदिनी, तेन व्यथितस्य पीडितस्य पितुः वचनं लेखेन गोचरीकृतं एव भवति इति शेषः । रूपकालंकारः ॥ ] ४२९॥ [ कृते सत्ययुगे यत् चरितं धर्ममात्रमयं, तत्र धर्मस्य चतुष्पात्त्वात्, तेन अलंकृतः शोभितः। महान्तः सत्त्वाः सहजा गुणा यस्य स महासत्त्वः, "सत्त्वं प्राणात्मभावयोः । द्रव्ये बले पिशाचादौ सत्तायां गुणवित्तयोः॥ स्वभावे व्यवसाये च" इति विश्वलोचने। यद्वा महत् सत्त्वं यस्य सः, सत्त्वं च "चित्तस्याविकृतिः सत्त्वं विकृतेः कारणे सति ।" इति लक्षितम् ॥ सुन्दर इति वात्सल्येन नामैकदेशग्रहणं, नाम्नाऽभिमुखीकरणं च स्ववचने आवर्जनार्थम्। दुष्पुत्ररूपदोषेण । ] ४३०॥ [चतुर्भिः कुपुत्रनिन्दा पुत्राभावेत्यादिभिः। पुत्रिणः पुत्रवतः पितुः, कुलीनस्य सद्वंशे जातस्य । या इति शेषः । अत्र पुत्राभावाख्यदोषस्य गुणत्वकल्पनात् लेशालंकारः । ] ४३१॥ संव्यवहारत इति। गुणः, संव्यवहारतः व्यवहारेण, प्रसिद्ध्यति; किं च प्रायः सुखानियतः सुखे कारणं न । [ दुःखदोऽपि कश्चित् लोकव्यवहारतः गुणः, सुखदोऽपि कश्चित् लोकापवादतः न गुणः, इति गुणत्वे प्रमाणं संव्यवहार एव, न तु सुखं इति भावः । तेन वेश्यासंगमे सुखभावाङ्गीकारेऽपि लोकव्यवहारनिन्द्यत्वात् स दोष एव इति फलितम् । ] परन्तु येन

---

४३१ दुःसुतता (प)। प्रसंगेषु (प)। ४३२ सांव्यवहारिक······गुणोन्नतिर्नियता (प) सांव्यवहारित (का)

विफलं शास्त्रज्ञानं, गुरुगृहसेवाऽपि नोपकाराय ।
विषयवशीकृतमनसो न्याय्यं पन्थानमुत्सृजतः ॥ ४३३ ॥
जीवन्नेव मृतोऽसौ यस्य जनो वीक्ष्य वदनमन्योन्यम् ।
कृतमुखभङ्गो दूरात्करोति निर्देशमङ्गुल्या ॥ ४३४ ॥
नोपनिहन्तुं विषयाः शक्याः सत्यं, तथापि निपुणधियः ।
अभिधेयतां न गच्छन्त्यपवादविशेषिताभिधानस्य ॥ ४३५ ॥
गुरुपरिचर्या, जाया कुलोद्गता, स्निग्धबन्धुसम्पर्कः ।
ब्राह्मे कर्मणि सक्तिर्लोकद्वयसाधनं सुधियाम् ॥ ४३६ ॥

---

सुतेन लोके सुखकारणतया अभिमतेन माता वन्ध्यात्वं श्लाघते शंसति, स तु पापतरः ॥ [ तथाहि हरिवंशे कृष्णवाक्यं–" नापुत्री विन्दते लोकान् कुपुत्राद्वन्ध्यता वरा । कुपुत्रो नरको यस्मात् सुपुत्रः स्वर्ग एव हि ॥ " इति । ] ४३२ ॥ [ ' नियतिवशीकृत ' इति पाठे नियतिः " भाव्यर्थः, अदृष्टविशेषः, ब्रह्मलिखितपद्धतिः वा, " इति कादम्बरीस्थतच्छब्दव्याख्याने भानुचन्द्रगणिः । न्याय्यं न्यायात् नीतेः अनपेतं युक्तम् । ] ४३३ ॥ [ जनः लोकः, यस्य वदनं वीक्ष्य कृतमुखभङ्गः विषादेन विकृतमुखः, अन्योन्यं परस्परं, यस्य दूरात् अङ्गुल्या निर्देशं करोति–सोऽयं दुराचारः इति हस्तसंज्ञयैव परिचाययति, न तु नामापि गृह्णाति, तस्य दुष्टत्वात् । ] ४३४ ॥ [ विषयापहृतिप्राबल्यं समाधत्ते नेति । विषयाः स्रक्चन्दनवनितादयः, गुणगुणिनोरभेदेन तेषां मनोहरणबलं इति यावत्, उपहन्तुं नाशयितुम् । निपुणधियः कुशलाः । ] अपवादेन [ अयं दुर्जनः इत्यादिरूपया ] निन्दया, विशेषितं दौर्गुण्यादिविशेषविशेषितं दत्तविशेषणं इति यावत्, यद् अभिधानं नाम, तस्य अभिधेयतां वाच्यतां, न गच्छन्ति निन्दाभाजो न भवन्ति इत्यर्थः । [ विषयबलं न विजीयेत इति सत्यं तथापि कुशलाः विषयाभिभवेऽपि लोकापवादविषयीभूतां सीमां न व्रजन्ति इति भावः । ] ४३५ ॥ [ गुरोः जन्मदातुः विद्यादातुः वा, परिचर्या शुश्रूषा, तत्र आद्यस्य स्वधर्मत्वात् इहलोकसाधनत्वं, अपरस्य मोक्षमार्गप्रदर्शकत्वात् परलोकसाधनत्वम् ॥ कुलोद्गता सद्वंशजाता; जाया–यस्यां स्वयमेव पुनः पुत्ररूपेण जायते " आत्मा वै पुत्रनामासि " ( कौशीतकीउप० २।११ ) इति श्रुतेः सा, विधिपरिणीता भार्या, सा च तृतीयपुरुषार्थवारिधितरीभूतत्वेन इहलोकसाधनं, यज्ञादिषु सहधर्मचारितया

---

४३३ नियतिवशी० ( का ) ४३५ नो परिहर्तुं ( प ) । विशेषता ( प ) ४३६ गुणोन्नता ( का )

सुलभा तस्य विभूतिस्तस्य गुणा यान्ति जगति विस्तारम् ।
बहु मनुते तं सुजनस्तस्मै स्पृहयन्ति बान्धवाः सततम् ॥४३७॥
नासादयति स एकः सत्सेवितमार्गतः परिस्खलनम् ।
मण्डयति सोऽन्ववायं, स निवासः शर्मणामशेषाणाम् ॥४३८॥
स भवति विनयाधारो, युक्तायुक्ते विवेकिता तस्य ।
वृद्धोपदेशवाचः श्रवणोदरपूरणं सदा यस्य॥४३९॥ (विशेषकम्)

---

च परलोकसाधनं, तदुक्तं—"भार्या मूलं गृहस्थस्य भार्या मूलं सुखस्य च। भार्या धर्मफलावाप्त्यै भार्या सन्तानवृद्धये ॥ (अत्र भार्यायाः प्रथमे पादे अर्थसाधनत्वं, द्वितीये कामसाधनत्वं, तृतीये धर्मसाधनत्वं, तुरीये च स्वर्गसाधनत्वं प्रोक्तं बोध्यम्।) परलोकस्त्वयं लोको जीयते भार्यया द्वयम् ॥" इति स्कान्दे लोपामुद्राप्रशंसायाम् ॥ स्निग्धाः प्रीतिमन्तः, बन्धवः मातृपितृगोत्रीयाः स्वजनाः मित्राणि च तेषां, सम्पर्कः समागमः, तत्र आद्यानां व्यवहारसहायकत्वेन इहलोकसाधनत्वं, अपरेषां सदुपदेशदानादिना परलोकसाधनत्वम् ॥ ब्रह्मणः विप्रस्य मोक्षस्य च इदं ब्राह्मं, "ब्रह्मा···यज्ञे विप्रे च···। क्लीबं तु वेदे मन्त्रेऽन्ने··मोक्षे जपे धने चाथ।" इति केशवः, कर्म तत्र, सक्तिः सङ्गः सभक्ति दोषपरिहारपूर्वकं अनुष्ठानं, तत्र आद्ये अध्ययनादिषड्विधकर्मणि सक्तिः स्वधर्मत्वात् इहलोकसाधनं, अपरस्मिन् विवेकादिचतुष्टये मोक्षप्रदायिनि सा परलोकसाधनं, सुधियां बुद्धिमतां, अस्तीति शेषः ॥ अत्र साधनं इत्येकवचनं गुरुपरिचर्यादिचतुष्टयस्य दण्डचक्रादिन्यायेन समुदायाभिप्रायकम् । ततः एतेषु एकस्मादपि स्खलने लोकहानिः, किमु वाच्यं तव सर्वस्खलनेषु; तथाहि—तव वेश्योपगमात् पितुः परिभवः (अवहेलनं), धर्मपत्नीत्यागः, बन्धुतावियोगः, स्वधर्मप्रमादश्च, प्रत्यक्षाः, तेन त्वया लोकद्वयं हारितम् इति सूचितम् ॥ न च अत्र समुच्चयालंकारः, सर्वेषां समुदितत्वेन हेतुकथनात् ॥]४३६॥

[ तत्र आद्ये प्राधान्येन गुरुपरिचर्या ऐहिकसुखसाधनमिति प्रथमं तां मनसि निधाय त्रिभिः विशेषकेण "गुरुवचनमवश्यमेव पाल्यं" इति नीतिं द्रढयितुं गुरुवचनसमादरसुफलानि आह सुलभेति । विभूतिः सम्पत्तिः । विस्तारं जले तैलबिन्दुवत् । बहु मनुते बहुमानस्य पात्रं करोति । बान्धवाः सम्बन्धिनो जनाः । ४३७ ॥ अन्ववायं पूर्वजोत्तरजानां समवायरूपं वंशम् । शर्म शृणाति हिनस्ति अशुभं इति, सुखम् ॥ ४३८ ॥ विनयः अचापलं अनौद्धत्यम् । युक्तं शोभनं कर्म । विवेकिता सदसदां पृथक्तया ज्ञानम् ॥ यथोक्तं भामिनीविलासे—"गीर्भिर्गुरूणां परुषाक्षराभिस्तिरस्कृता यान्ति नरा

---

४३८ य एकः (का)। चान्ववायं (का) ४३९ भवति स (प)। श्रवणोदरतर्पणं (प)

प्राक्तनकर्मविपाकः क्षुद्रासु शरीरिणां यदासक्तिः ।
आयतनं तु सुखानां संसारभुवां कुलोद्गता दाराः ॥ ४४० ॥
निर्विण्णे निर्विण्णा, मुदिते मुदिता, समाकुलाऽऽकुलिते ।
प्रतिबिम्बसमा कान्ता, संक्रुद्धे केवलं भीता ॥ ४४१ ॥
यावद्वाञ्छितसुरतव्यायामसहाऽविरुद्धसंभाषा ।
चित्तानुवृत्तिकुशला पुण्यवतामेव जायते जाया ॥ ४४२ ॥

---

महत्त्वम् । अलब्धशाणोत्कषणा नृपाणां न जातु मौलौ(लिं) मणयो वसन्ति (लभंते)॥" (१।७१) इति ॥]४३९ ॥ ["जाया कुलोद्गता" इति (४३६) उक्तं, तामुद्दिश्य इतः षडार्याः । तत्र प्रथमं सुखप्राप्तौ स्वीयासामान्ययोः अन्तरं आह प्राक्तनेति । प्राक्तनानां पुरातनानां पूर्वजन्मकृतानां, कर्मणां, विपाकः परिणामः यत्, ] क्षुद्रासु वेश्यासु, ["क्षुद्रा वेश्यानटीकण्टकारिकासरघासु च ।" इति विश्वप्रकाशः, क्षुद्रापदप्रयोगेण अधमासु इत्यपि व्यज्यते, शरीरिणां देहवतां पुरुषाणां, आसक्तिः अतीव चित्तादिव्यासङ्गः; तथा च उक्तं काश्मीरिकमहाकविजह्लणेन मुग्धोपदेशे–"शापः कोऽपि महानयं, परिणतिर्दुष्कर्मणामीदृशी, यत्संत्यज्य कुलाङ्गनां बहुमुखो दासीजनः सेव्यते ॥" (२६) इति ॥ आयतनं निवासस्थानं, तु पूर्वोक्तव्यावृत्तौ, संसारभुवां ऐहिकानां, सुखानां आनन्दानां, कुलोद्भवाः सत्कुलजाः, दाराः परिणीता स्त्री, (दाराशब्दस्य नित्यबहुवचनत्वं आनुशासनिकम् ।) तासां धर्मशृङ्गारवत्तया प्रशस्तत्वात् । तथा च भरतः–" निजा पाणिगृहीतीति स्याल्लोकद्वयसहायिनी । ऐहिकं सुखमाधत्ते स्वर्गं चामुष्मिकं तथा ॥" इति । ]४४०॥ [ एवं कामशृङ्गारं विनिन्द्य युग्मेन धर्मशृङ्गारमूलां कुलजां अकुटिलमनस्कतया पतिप्राणां प्रशस्ताचरणां पुण्यलभ्यां प्रशंसन् धर्मानुगुणं रतिकरं रसिकसम्मतं च कुलपालिकावर्तनमनुवदति निर्विण्णे इति । पत्यौ, निर्विण्णे खिन्नचित्ते, साऽपि तथा । मुदिते प्रहृष्टचित्ते । आकुलिते क्षुभितचित्ते । प्रतिबिम्बसमा छायातुल्या; तथा चोक्तं—" हृष्टा हृष्टे विषण्णा स्याद्विषण्णास्ये सदा प्रिये । छायेवानुगता पुण्या संपत्सु च विपत्सु च ॥" इति । तत्र एकमेवापवादमाह संक्रुद्धे इति। तस्मिन् कुपिते न सा प्रतिकुपिता परन्तु भीता भयाविष्टा भवति ।]४४१॥ व्यायामः दैर्घ्यम् [ "व्यायामः पौरुषे व्यामे स्पर्धायां दुर्गसञ्चरे । आकर्षणे च वज्रादेः स्याद्दीर्घीकरणेऽपि च। आयासेऽपि ।" इति केशवः, विलम्ब इति यावत्। प्रियस्य यावान् सुरतकाल इष्टः तावन्तं हर्षेण साऽपि सहते, न तु तस्य अल्पत्वे हस्तिनीव असन्तुष्टा दीर्घत्वे

---

४४० °द्गता रामाः (प) ४४२ °विरुद्धसंपर्का (गो. का.)।

सद्भावप्रेमरसं वलयावलिशङ्कशङ्किता निभृतम् ।
*विदधानाऽङ्गसमर्पणमुन्मीलितकुसुमसायकाकूतम् ॥ ४४३ ॥
हाहा किमुद्धतत्वं, श्रोष्यति कश्चिद्दंतत्रप, स्वैरम् ।
निकटे परिवारजनो विस्मृत एव स्मरातुरस्य तव ॥ ४४४ ॥

वा पद्मिनीव निःसहा भवति, तस्याः प्रियप्रसादनैकचित्तत्वात् । यद्वा सुरतव्यायामः सुरते वस्त्रादिकर्षणम् । तस्मादेव सन्तुष्टत्वात् च अविरुद्धसंभाषा न कदापि प्रतिकूलभाषिणी । अनुवृत्तिः अनुकूलतया वर्तनम् । पुण्यवान् कृतपुण्यः, अनेन विरलत्वं सूचितम् । जायते सम्पद्यते भवति । जाया पत्नी, तथाहि उक्तं महाभारते—"आत्मा हि जायते तस्यां तेन जायां विदुर्बुधाः । भर्ता तु भार्यया रक्ष्यः कथं जायान्ममोदरे ॥" (४।२१।४१–२) इति ॥ वेश्यायाःनिर्वेदादिभावदर्शनानां सुरतविनोदादिकृत्यानां च कपटाश्रयत्वात् ताभ्यः स्वीया एव वरा इति सूचितम् ॥ कुलवधूं उद्दिश्य—"अनुकूलां विमलाङ्गीं कुलजां कुशलां सुशीलसम्पन्नाम् । पञ्चलकारां भार्यां पुरुषः पुण्योदयाल्लभते ॥" इति प्रसंगाभरणे ॥ अन्यत्र च, "दुःखार्ते मयि दुःखिता भवति या, हृष्टे प्रहृष्टा तथा । दीने दैन्यमुपैति, रोषपरुषे पथ्यं वचो भाषते । कालं वेत्ति, कथाः करोति निपुणा, मत्संस्तवे रज्यते । भार्या, मन्त्रिवरः, सखा, परिजनः, सैका बहुत्वं गता ॥" इति । "आधौ सिद्धौषधिरिव हिता, केलिकाले वयस्या, पत्नी त्रेतायजनसमये, क्षत्रियाण्येव युद्धे । शिष्या देवद्विजपितृसामराधनें, बन्धुरार्तौ, सीता सा मे शिशिरितमहाकानने का न जाता ॥" इति च चम्पूरामायणे ( ४।४ ) । ४४२ ॥ ] [ हारलतासक्तिशिथिलीकरणाय त्रिभिः विशेपकेण कुलजायाः स्वीयायाः सुरतवैलक्षण्येन मनोहारित्वं निर्दिशति सद्भावेति । वलयावलेः करकङ्कणानां झणत्कारमात्रेऽपि श्वशुरादिगुरुजनः तच्छब्दं श्रोष्यतीति शङ्कान्विता सती, निभृतं निश्चलं निःशब्दं इति यावत् यथा स्यात् तथा, सद्भावः शोभनो भावो मनोविकारो यत्र सः सद्भावः निष्कपटः, प्रेमरसो यत्र तथाविधं—प्रियाय स्वाङ्गानां चुम्बनाद्यर्थं कपोलकुचादीनां समर्पणं, विदधाना कुर्वाणा, कथं ? उन्मीलितं विकसितं, कुसुमचापस्य मदनस्य, आकूतं अभिप्रायः अभिलाषो वा, यथा स्यात् तथा इति उन्मीलितकुसुमसायकाकूतं स्वस्याः कामातुरतासूचनं यथा भवेत् तथा, यद्वा यथा प्रियस्य कामो विकसितो भवेत् तथा इत्यर्थः । ] ॥४४३॥ [तदीयां लज्जावैवश्यव्रीडाव्यञ्जिकां उक्ति अनुवदति हाहेति । "हाहा तु खेदने" इति विश्वलोचनः, किं कीदृशं, उद्धतत्वं

* इतः ४५४ आर्यापूर्वार्धपर्यन्तः पाठः काव्यमालामुद्रितपुस्तके प्रभ्रष्टः । ४४३ कूलां (गो) ४४४ हहा किमिदमसत्त्वं (प)

इति हुङ्कृतिसंवलितैरायासनिवेदितार्थपदवाक्यैः ।
द्विगुणीकरोति कुलजा नायककर्माणि मोहनप्रसरे ॥' ४४५ ॥
(कुलकम्)

इत्थमुदीरितवाचं सुहृदमवोचत् पुरन्दरस्य सुतः ।
समुपस्थितजीवसमावियोगभयकम्पितो वचनम् ॥ ४४६ ॥
'तातादेशेऽलंघ्ये हारलताविरहपावके तीव्रे ॥
विधिवशवर्तिनि मरणे नो विद्मः कार्यपरिणामम् ॥ ४४७ ॥

---

उल्बणंता प्रगल्भता मर्दनादिषु निर्दयता, गतत्रप निलज्ज, स्वैरं मन्दं, "स्वैरं स्वच्छन्दमन्दयोः" इति विश्वलोचनः, चुम्बनादिव्यापारं कुरु इति शेषः। तथाविज्ञप्तौ कारणं दर्शयति निकटे इति। निकटे समीपे, परिवारजनः परिजनः भृत्यादिः, स्मरातुरस्य मदनावेशवतः। तथा च कस्यचित् प्राचीनस्य रसिकस्य पद्यं—"जागर्ति लोको, ज्वलति प्रदीपः, सखीजनः पश्यति कौतुकेन। मुहूर्तमात्रं कुरु कान्त धैर्यं, बुभुक्षितः किं द्विकरेण भुङ्क्ते ॥" इति। इदं पद्यं महाकविबिल्हणस्य इति केचित् ॥ अत्र यथास्थितो मूलपाठः चिन्त्यः परिवारजन इत्यत्र स्मृधातुकर्मत्वेन षष्ठ्या दुर्वारत्वात्। तवेत्यतः षष्ठी न युक्ता "उभयप्राप्तौ कर्मणि।" (पा.२।३।६६) इत्यनेन कर्मण्येव षष्ठी न कर्तरीति नियमात्। अतः "निकटे परिवारजने विस्मृतिरेव" इति पाठः कर्तव्यः, तत्रापि परिवारजनस्य कर्मणः अधिकरणत्वेन विवक्षायां सप्तमी, निकटे स्थिते परिवारजनविषये तव विस्मृतिरेव इति च अर्थः ॥४४४॥ इति एवंप्रकारैः, हुङ्कृतिः निषेधसूचकः कण्ठध्वनिविशेषः, ताभिः,] संवलितैः मिश्रैः। [आयासेन प्रयत्नेन, लज्जासत्त्वात्, निवेदितः प्रकटितः, अर्थः मनोगतं, यैः तादृशानि पदानि वाक्यानि च यत्र तैः। पदसमूहो वाक्यम्। पदं,पदे, पदानि, वाक्यं, वाक्ये, वाक्यानि च, इत्यर्थः, वचनस्योपलक्षणत्वात् ॥] द्विगुणीकरोति समुद्दीपयति [भूयो जातस्पृहाणि करोति, नायककर्माणि चुम्बनादीनि, मोहनप्रसरे सुरतप्रवृत्तौ। ] [ सत्सु गृहवृद्धेषु "भूषणं योषितां लज्जा" इति कुलजानां नीतिः सुरतेऽपि न व्यभिचरतीति भावः। तेन तासां मुग्धावत् सव्रीडसुरतप्रयतनेन नायकरतिरसः प्रगुणीभवति। मुग्धा तु—"यतते रतचेष्टायां गूढं लज्जामनोहरा।" इत्युक्तं रसार्णवसुधाकरे ॥४४५॥ एवं नायकस्य नायिकायाश्च चक्षूरागमारभ्य तयोः प्रौढं संयोगशृङ्गारं वर्णयित्वा नायकप्रवासजन्यविरहहेतुकं नायिकामृत्युफलं विप्रलम्भं संक्षेपगुणं करुणरसोज्जीवितमुद्भावयति इत्थमित्यादिना। जीवसमा प्राणप्रिया ॥४४६॥ आदेशः आज्ञा, अलंघ्ये अवश्यपालनीये,

---

४४५ °रायासविवेचितार्थ° (प) ४४७ तातादेशे लक्ष्ये (गो)

अनपेक्षितधनलाभां स्नेहैकनिबद्धमानसां दयिताम् ।
दैवाकृष्टो मुञ्चति घटितो वा लोहवज्रकणिकाभिः ॥' ४४८ ॥

अथ कृतगमनविनिश्चितिरभिमततरामां चकार विदितार्थाम् ।
साऽपि तमनुवव्राज प्रस्तुतयात्रं शुचाऽऽकुलिता ॥ ४४९ ॥

आसाद्य वटस्य तलं बाष्पपयःकणचिताक्षिपक्ष्माग्राम् ।
विघ्नितचरणविहारो हारलतामभिदधाति स्म ॥ ४५० ॥

---

" पितृवचनमवश्यमेव पाल्यम् " इति राघाविनोदटीकायाम् । पावकः अग्निः ॥ तथा च नलचंम्वाम् ( ५. उ. ) नलोऽप्येतदाकर्ण्य " तदिदं संकटं ' इतो व्याघ्र इतस्तटी, इतो दवाग्निरितो दस्यवः, इतो दुष्टदंदशूक इतोऽप्यंधकूपः' इति न्यायात् । इतः कर्णान्तकृष्टशरासनो मर्मप्रहारी प्रहरति मकरध्वजः, इतश्चायमेतेषां अलंघनीय आदेशः ।" इति । " तदेतदतिसंकटं यदिह कैश्चिदुक्तं जनैरितोऽपि विषमा तटी भयमितो महाव्याघ्रतः ॥" ( १।३२ ) इति च ॥ विधिः भाग्यं, " विधिर्वेधसि काले ना, विधाने नियतौ स्त्रियाम् " इति विश्वलोचनः; भाग्याधीने दैवायत्ते मृत्युकाले इत्यर्थः । अत एव कार्यस्य हारलतात्यागरूपस्य, परिणामं अन्तं, आत्मनः गमनं वा मरणं वा अन्यत् किमपि वा भविष्यतीति न ज्ञातुं समर्थः इति भावः ॥ अलङ्घ्ये तातादेशे प्रियाविरहतापः, विरहतापे च मरणं इति कारणमाला, तथापि मरणस्य विधिवशत्वविशिष्टोक्त्या कार्यस्य अनिश्चयेन कारणमाला व्यङ्ग्या ॥ ' अलङ्घ्ये ' इत्यत्र ] 'लक्ष्ये' [ इति पाठे ] विधेये [ इत्यर्थः । ] ॥ ४४७ ॥ [ प्रियात्यागे न्यायमाह अनेति । दैवं भाग्यम् । ] [ ' बालोऽपि ' इति पाठे ] बालः कर्तव्यविमूढः । वज्रकणिकाभिः हीरककणैः, घटितः संयोजितः सुदृढं निबद्धः, [वज्रतुल्यकठिनहृदयः ]इत्यर्थः॥४४८॥ [ अथेति अनन्तरम् । विनिश्चितिः निश्चयः, अभिमततरामां प्रियरमणीं, हारलतां इत्यर्थः; विदितार्थां ज्ञाताभिप्रायाम् । प्रस्तुतयात्रं प्रवसन्तं ] 'प्रस्तुतपात्रं' [ इति पाठे ] प्रकरणविषयं नायकं इत्यर्थः । [ अयं पाठः अक्षरसंभ्रमादुद्भूतः त्याज्य एव । ] [ शुचा शोकेन । ] ४४९ ॥ [ वटस्य नगराद्बहिः स्थितस्य न्यग्रोधवृक्षस्य । " पक्ष्माक्षिलोम्नि किञ्जल्के तन्त्वाद्यंशेऽप्यणीयसि । " इति अमरः । विघ्नितचरणविहारः, विहारः भ्रमणं " विहारो भ्रमणे स्कन्धे सुगतालयलीलयोः । " इति विश्वलोचनः, वियोगकालप्राप्त्या

---

४४८ मानसामेताम् ( गो ) । घटितो बालोऽपि वज्र० ( गो )

'आ क्षीरवतो वृक्षादा सलिलाद्वा प्रिये प्रियं यान्तम् ।
अनुयायादिति वचनं तेन त्वमितो निवर्तस्व ॥ ४५१ ॥
किं कुर्मो दैवहताः, प्रभवति यस्मिन्कृशोदरि प्रसभम् ।
*प्रेमग्रन्थिच्छेत्ता गुरुशासनसायको निरावरणः ॥ ४५२ ॥
न द्रविणलवप्राप्तिर्नैकाश्रयपरिचयो न चाटुगुणः ।
न स्वामिसमादेशो नाकारविलोभनं न चाख्यातिः ॥ ४५३ ॥
हेतुस्तव प्रवृत्तेरस्मासु, तथापि दैवयोगवशात् ।
ईदृक्कोऽप्यनुबन्धो यस्य विपाकोऽप्रतीकारः ॥४५४॥ (युग्मम्)

---

स्खलितगमनः, अभिदधाति स्म अवदत् ।]॥४५०॥[तत्र आदौ आदीर्घपथं अनुगमनं प्रतिषेधति आ इति। आ मर्यादीकृत्य। क्षीरवान् क्षीरी वृक्षः, स च पञ्चविधः, "न्यग्रोधोदुम्बराश्वत्थपारीपप्लक्षपादपाः । पञ्चैते क्षीरिणो वृक्षाः।" इति, प्रस्तुते वटः। आ सलिलाद्वा यथा शाकुन्तले चतुर्थे शार्ङ्गरवः " 'आ उदकान्तात् स्निग्धो जनोऽनुगन्तव्यः' इति श्रूयते। तदिदं सरस्तीरम्। अत्र सन्दिश्य प्रतिगन्तुमर्हसि।" इति। अनुयायात् अनुव्रजेत्, वचनं स्मृत्यादीनां, तथा च–" नदीतीरे गवां गोष्ठे क्षीरवृक्षे जलाशये। आरामेष्वथ कूपादौ दृष्टं बन्धुं विसर्जयेत् ॥" इति। ४५१॥ गमने निरुपायतां प्रतिपादयति किमिति। दैवहताः विधिवशवर्तिनः, प्रभवति प्रभुः इव आचरति, प्रभुशब्दात् आचारक्विप्, प्रसभं बलात्, प्रेमग्रन्थिः प्रेममयो ग्रन्थिः, मोचयितुं अशक्यः दृढ इति यावत्। शासनं आदेशः आज्ञा, निरावरणः निर्निरोधः, सायकः खड्गश्च, "शरे खड्गे च सायकः।" इत्यमरः, निरावरणः कोशरूपावरणरहितः घातयितुं कोशात् आकृष्टः। रूपकालंकारः।]४५२॥ [" अथवा स्नेहश्च निमित्तसव्यपेक्ष इति विप्रतिषिद्धमेतत्। व्यतिषजति पदार्थानान्तरः कोऽपि हेतुर्न खलु बहिरुपाधीन्प्रीतयः संश्रयन्ते ॥" (६।१२) इति उत्तररामचरिते, तान् उपाधीन् विशेषेण निर्दिशन्, तस्याः प्रीत्युद्गमे न कोऽपि उपाधिः कारणं इति स्वानुभवं स्पष्टतया कथयति नेति। न अर्थलाभः, न एकत्रावस्थानं, न प्रियवचनानि, न पित्रादिरूपप्रभोः आज्ञा, न सौन्दर्याकर्षणं, न च नापि, आख्यातिः प्रसिद्धिः; ॥४५३॥–तव मयि प्रीतिरूपप्रवृत्तेः कारणं; अर्थात् आवयोः उत्तमा साहजिका एव प्रीतिः सम्भूता। तादृश्याः प्रीतेः फलं आमरणं वियोगाभाव एव समुचितः तथापि, नियतेः हेतोः, ईदृक् एतादृशः, कोऽपि

---

* इतः पङ्क्तिचतुष्टयगतः पाठः प्रकरणापेक्षितः गो. पुस्तकेऽपि भ्रष्टः केवलं प. पुस्तके एव वर्तते।

परुषं यदभिहिताऽसि प्रणयरुषा शङ्कितेन नर्मणि वा ।
सुदति न तत्स्मरणीयं दुर्भाषणकीर्तनोद्घाते ॥ ४९५ ॥
तव हृदये हृदयमिदं विन्यस्तं, न्यासपालनं कष्टम् ।
यत्नात्तथा विधेयं स्थानभ्रंशो यथा न स्यात् ॥' ४९६ ॥

---

अनिर्वचनीयः,] अनुबन्धः दोषोत्पत्तिः, "दोषोत्पादेऽनुबन्धः स्यात्" इति अमरः, [वियोगात्मकभवितव्यतारूपः इति तात्पर्यं,] [यस्य,व्याधेरिव,] विपाकः परिणामः, [अप्रतीकारः "उपसर्गस्य घञ्यमनुष्ये बहुलम्" (पा० ६।३।१२२) इति उपसर्गस्य विकल्पेन दीर्घः, अचिकित्स्यः अनिवार्यः इत्यर्थः, अर्थात् वियोगरूपः । अनिष्टस्य नामग्रहणायोग्यत्वात् साक्षात्तदुक्तेश्च हृत्तापकत्वात् विरहस्य अनभिधानं इति ज्ञेयम् ।] ४९४ ॥ [द्वाभ्यामुपसंहरन् स्वस्य अविस्मरणं प्रार्थयितुमनाः आदौ किमपि विस्मरणीयमेव संज्ञापयति परुषमिति । प्रणयरुषा प्रणयकलहे यः कोपोद्गमः तेन, शङ्कितेन वितर्कपूर्णचेतसा, मया, यत्, परुषं कठोरं, अभिहिता असि उक्ता असि, तत्, त्वया सख्या सह इति शेषः, नर्मणि परीहासप्रसङ्गे, दुर्भाषणकीर्तनोद्घाते वा तद्विपरीते क्रोधोक्तिसमुपक्रमे वा, न स्मरणीयं विस्मरणीयमेव, तत् संस्मृत्य दुःखं न कार्यं इति भावः । उद्घातः प्रस्तावः । सुदति शोभना दन्ता दशना यस्याः सा सुदती, "वयसि दन्तस्य दतृ" (पा० ५।४।१४१) इति वयसि गम्ये दन्तस्य सुपूर्वस्य दत्रादेशः, तत्सम्बुद्धौ ।] ४९५ ॥ [अन्तिमप्रार्थनीयं पर्यायोक्त्या वक्ति तवेति । तव हृदये हृदयकोशे, इदं मम, हृदयं विन्यस्तं निक्षेपरूपेण 'थापण' इति भाषायां, विन्यस्तं निहितं स्थापितम् । प्रसिद्धं चेदं यत् परकीयन्यासस्य पालनं रक्षणं, कष्टं दुःखेन कार्यं इति । तथा च स्वप्नवासवदत्ते—"सुखमर्थो भवेद्दातुं सुखं प्राणाः सुखं तपः । सुखमन्यद्भवेत् सर्वं दुःखं न्यासस्य रक्षणम् ॥" (१।१०) इति । अतः यथा स्थानभ्रंशः न्यासस्य स्वस्थानात् भ्रंशः अनुपलम्भात्मकः न स्यात् तथा, यत्नात् सावधानतया, विधेयं करणीयम् । अहं कदापि न विस्मरणीयः इति ध्वननात् पर्यायोक्त्यलंकारः । "पर्यायोक्तं तु गम्यस्य वचो भङ्ग्यन्तराश्रयम्" इति कुवलयानन्दे । अपि च हृदयस्य न्यासरूपेण कथनात् रूपकं, तद्बलाच्च अपरस्यापि अप्रस्तुतस्य द्रव्यालंकारादिन्यासस्य भ्रंशो न भवेत् तथा स रक्षणीयः इति अर्थपरिस्फूर्तेः समासोक्तिरपि; "समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेत् । अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः ॥"

---

४९५ यदभिहता (प)। शंकितं च (गो)। द्घातौ (प)

अथ विरतवचोदयितं बाष्पभराश्लिष्टवर्णपदयोगम् ।
इति कथमपि हारलता संमूर्च्छितवर्णभारतीमूचे ॥ ४५७ ॥
'अविशुद्धकुलोत्पन्ना देहार्पणजीविका शठाचरणा ।
क्वाहं रूपाजीवा, क भवन्तः श्लाघनीयजन्मगुणाः ॥ ४५८ ॥
यत्त्वं विषयविलोकनकुतूहलादागतोऽसि, विश्रान्तः ।
इयतो दिवसानस्मिंस्तन्मम परजन्मसुकृतफलम् ॥ ४५९ ॥
गुरुसेवां बन्धुजनं स्वदेशवसतिं कलत्रमनुकूलम् ।
अनुषङ्गदृष्टपरिचित आस्थां प्रविधाय कः परित्यजति ॥ ४६० ॥

---

इत्यपि कुवलयानन्दे ॥ ] ४५६ ॥ [ अथ अनन्तरं, बाष्पभरेण आश्लिष्टः संयुक्तः वर्णानां अक्षराणां अत एव पदानां च योगः प्रयोगः यस्य तं, विरतं समाप्तं वचः उक्तिः यस्य स विरतवचाः स चासौ दयितः प्रियश्च तं विरतवचोदयितं सुन्दरसेनं, हारलता, ] संमूर्छिताः अस्पष्टाः [ वर्णाः यत्र तादृशीं भारतीं वाणीं, कथमपि— उपस्थितविरहेण उत्कण्ठासंस्पृष्टहृदयत्वात् बाष्पवृत्तिकलुषकण्ठतया वैक्लव्यात् महता प्रयत्नेन, इति समनन्तरवर्णितप्रकारेण, ऊचे अवोचत् । ] ४५७ ॥ [ इतः हारलतावाक्यसप्तकम् । तत्रादौ विषमालङ्कारेण अननुरूपयोः घटनं अनुवदति अविशुद्धेति । अविशुद्धं वेश्याकुलोत्पन्नत्वात् पितृशुद्धिरहितं अपवित्रम् । देहार्पणं कामुकेभ्यः उपभोगाय शरीरसमर्पणमेव जीविका वृत्तिः यस्याः सा, शठाचरणा सकपटव्यवहारा । रूपाजीवा गणिका । श्लाघनीयं उच्चं प्रशस्तं, जन्म जनिः जननवंशः इति यावत्, श्लाघनीयाः गुणाश्च यस्य सः । मानार्थे बहुवचनम् । ] ४५८ ॥ [ अननुरूपयोः दीर्घकालं सङ्गतं असम्भवि अपि यत् निर्वृत्तं तत् स्वस्याः केनापि पुण्येन इति समाधत्ते यदिति । विषयाः देशाः । "रम्यवस्तुसमालोके लोलता स्यात्कुतूहलम् ।" ( ३।११९ ) इति साहित्यदर्पणे । ] विश्रान्तः स्थितः । [ परं अन्यत्, "परः श्रेष्ठारिदूरान्योत्तरे, क्लीबं तु केवले ।" इति मेदिनी । ] ४५९ ॥ [ तदेव समर्थयति गुर्विति । ] अनुषङ्गः सामान्यसम्बन्धः [ प्रसङ्गः वा, ] तेन दृष्टः ततः परिचितः तस्मिन् जने, आस्थां नियतबुद्धिं, [ श्रद्धां वा, प्रविधाय कृत्वा, कः पुमान्, लोकद्वयसाधनत्वेन पूर्वं ( आ. ४३६ ) उक्तं गुरुपरिचर्यादित्रयं, सर्वाभिमतां स्वदेशवसतिं च परित्यजति; हेतुविशेषं विना न कोऽपि इत्याशयः,

---

४५७ भराकृष्टवर्णपदयोगात् ( प ) । संमूर्च्छितवस्तु ( प ) ४५९ यत्तु विषयावलोकनकुतूहलाभ्यागतेन विश्रान्तम् । ...तन्मे परजन्मकृतशुभस्य फलम् ( प )

यौवनचापलमेतद्यन्मादृशि भवति कौतुकं भवताम्।
यत्तु सुखमनवगीतं तस्य स्थानं निजा दाराः ॥ ४६१ ॥
ते मधुराः परिहासास्ता वक्रगिरः स वामतासमयः।
नो हृदये कर्तव्या रहसि क्षेमार्थिना भवता ॥ ४६२ ॥

---

स्वाभिमतो हेतुश्च पूर्वस्यां उक्तः। ] ४६० ॥ [ तस्य विरहजन्यशोकस्य लघूकरणाय स्वस्याः अन्यत्र तन्मनः प्रेरयितुं सयुक्तिकं वक्ति यौवनेति । मादृशि अशुद्धकुलोत्पन्नायां सामान्यायां, कौतुकं अभिलाषः, "कौतुकं त्वभिलाषेऽपि, कुसुमे, नर्महर्षयोः। परम्परासमायाते मङ्गले, चातिशायिनि ॥ विवाहसूत्रे, विषयाभोगकाले, समुत्सवे।" इति विश्वलोचने; तत् यौवनचापलं युवावस्थासम्बद्धं चित्तचाञ्चल्यं, अकृत्यं वा, न तु वास्तवसुखबुद्धिहेतुकम्। तथा च मृच्छकटिके चारुदत्तोक्तिः—"गणिका मम मित्रमिति। अथवा यौवनमत्रापराध्यति, न चारित्रम् ॥" (९) इति। पुरुषाणां अनिन्द्यसुखाश्रयस्तु स्वीया जाया एव न सामान्या इति सिद्धान्तः। अनेन पूर्वं परोक्षे तन्मित्रेण यदुक्तं (आ. ४४०) तदवष्टम्भितं इत्यनुसन्धेयम्। ] ४६१ ॥ [ "साधारणस्त्री गणिका कलाप्रागल्भ्यधार्ष्ट्ययुक्।" इति, "किन्तु तासां कलाकेलिकुशलानां मनोरमम्। विस्मारितापरस्त्रीकं सुरतं जायते नृणाम् ॥" इति च शृङ्गारतिलके निरूपितं, तादृश्या वस्तुस्थित्या स्वीयासमागमेऽपि त्वत्परिहासादीनां प्रसङ्गेषु स्मृत्या तत्र विरसत्वोद्भूत्या बाधसंभवात् कथं निजदारेषु सुखसम्भूतिः इति नायकाशङ्कां निरसितुं स्वकेलीनां विस्मरणमेव प्रार्थयते ते इति। ते अनुभूतार्थविषयाः मधुराः हृदयङ्गमाः प्रीयमाणान्तकरणाः। परिहासाः 'परीहासः' इत्यपि रूपम्, ते वाचा क्रियया च इति द्विविधाः, तत्र वाग्विषयः प्रियाकर्तृको यथा बुद्धचरितकाव्ये—"पश्य भर्तश्चितं चूतं कुसुमैर्मधुगन्धिभिः। हेमपञ्जररुद्धो वा कोकिलो यत्र कूजति ॥" (४।४४) इति; अत्र ऋतुमत्या विदग्धया अप्राप्तरतः उपहस्यते। नायककर्तृकः स यथा नैषधीये महाकाव्ये—"वनकेलौ स्मराश्वत्थदलं भूपतितं प्रति। देहि मह्यमुदस्येति मद्गिरा व्रीडिताऽसि यत् ॥" (२०।९६) इति; अत्र तु मुग्धा संभोगप्रार्थनेन उपहस्यते। यथा वा—"निधिनिक्षेपस्थानस्योपरि चिह्नार्थमिव लता निहिता। लोभयति तव तनूदरि जघनतटादुपरि रोमाली ॥" [ ३३८ ] इति आर्यासप्तशत्याम्। अत्र शृंगारनिधीभूतं अनंगमंदिरं व्यंग्योपहासेन लक्षितम् ॥ उभयकर्तृको यथा—"मधु तिष्ठति वाचि योषितां, हृदये हालहलं महद्विषम्।" (सौन्दरनन्दकाव्ये ८।३५) इति प्रियायाः उक्तिः, तत्र "अत एव निपीयतेऽधरो,

**लाघवतो यन्महतः प्रणयाद्वाऽसाधु यत्तवाचरितम् ।**
**प्रतिकूलं तत्र मया नाथाञ्जलिरेष विरचितो मूर्ध्नि ॥ ४६३ ॥**

हृदयं मुष्टिभिरेव ताड्यते ॥" इति प्रियस्य प्रत्युक्तिः । क्रियाविषयः परिहासः यथा– एकयानयोग्ये निःश्रेणिकामार्गे द्वयोः प्रतिकूलगमने नायिका मुखस्पृष्टनायकजङ्घाप्रदेशा संवृत्ता, ततः क्रमेण मुखस्पृष्टमुखा चेत्यादि रससदनभाणे ( श्लो. ११५–११६ मध्ये गद्यम् ) ॥ ताः हृच्चुम्बिन्यः अत एव अविस्मरणीयाः । वक्रगिरः–वक्रभणितयः, प्रसिद्धस्थानव्यतिरेकिण्यः समुज्ज्वला उक्तयः, साकूतवचांसि, व्यञ्जकवाचः; तासु प्रियस्य यथा–" जानाति किं न भवती रसिकेषु मुख्यमन्योपकारकरणे च सदा रतं माम् । " इति रससदनभाणे ( १४५ ) परकीयां प्रति; प्रियायाः यथा–" लीलाम्बुजे मम रमस्व यथेष्टमस्मिन्मा गच्छ षट्पद परिभ्रमणेन किं ते ।" इति भिक्षाटनकाव्ये ( १४ । १७ ) शठं रमणं प्रति, यथा वा–" अङ्गं चम्पकमालिकेति सहसा गाढं न संश्लिष्यतां, कामं स्वाद्विति कोमलाधरदलं नो खण्डनीयं त्वया । तन्वंगी तरलेति नैव विविधक्रीडारसैः खेद्यतां, इक्षुः स्वादुतमो भवेदिति समं मूलेन किं खाद्यते ॥ " इति अनङ्गजीवनभाणे; उभयोर्यथा–" देहीति वाचि पदमद्य तवेन्दु-मौले, चक्षुः पुनर्मृगदृशां मणिमेखलासु । पुंसो रसार्द्रहृदयस्य पुरो वधूनां वाक्ये च चेतसि च कर्मणि चान्यदन्यत् ॥ " ( ९।११ ) इति भिक्षाटनकाव्ये । एवं परि-हासानां वक्रगिरां च मधुरो रसः प्रायः सरसकवीनां दाक्षिणात्यानां शृङ्गाररसप्रधान-भाणादिप्रबन्धेषु आस्वादनीयः ॥] वामता–उद्दीपनाय अनुवृत्तेः अनङ्गीकरणं, विरुद्धा-चरणं वा [ तस्य समयः प्रसङ्गः, यथा–" चुम्बनेषु परिवर्तिताधरं, हस्तरोधि रशनावि-घट्टने । विघ्नितेच्छमपि तस्य सर्वतो मन्मथेन्धनमभूद्वधूरतम् ॥ " ( १९।२७ ) इति रघुवंशे; अत्र पूर्वार्धे वामतायाः उत्तरार्धे तत्फलस्य च वर्णनम् । परिहास–वक्रोक्ति–वामतानां व्यञ्जकत्वप्राधान्यात् तेषां आलम्बनोद्दीपनत्वेन ते विरहेऽपि चित्तं अनुबध्नन्ति इति, ते नो हृदये कर्तव्याः–हृदि अवकाशं न देयाः विस्मरणीया एव, कदा ? रहसि एकान्ते स्वपत्नीसमागमे संप्रयोगे वा, न तु सर्वदा; किमर्थं ? क्षेमार्थिना लब्धायाः स्वीयायाः लक्षणया तत्प्रीत्याः रक्षणार्थिना, कुशलार्थिना वा, भवता श्रीमता ।] ॥४६२॥

[ एवं निर्बाधं सुखोपायमुक्त्वा स्वस्खलनादीनां क्षमां याचते लाघवतः इति । लाघवतः स्वभावक्षुद्रतया, प्रणयात् स्नेहातिशयतः वा, यत्, तव महतः उदाराशयस्य, असाधु–यतः क्लेशकरं, प्रतिकूलं सुखविरोधि, आचरितं कृतं, मया स्यादिति शेषः, तत्र तस्मिन्

४६३ मन्मनसः···द्वा यन्मया तवाचरितम् ( प ) । यन्नवा ( का ) यत्र वा ( गो २. कापा )

दुःसञ्चारा मार्गा दूरे वसतिर्विसंष्ठुलं हृदयम् ।
गुणपालित तव सुहृदा भवितव्यमतोऽप्रमत्तेन ॥' ४६४ ॥
हृदयद्वय एकत्वं याते यूनोर्वियोगजं क्लेशम् ।
अनुभवतोरपरेण प्रसङ्गतः पठ्यते पथ्या ॥ ४६५ ॥

विषये, नाथ हे स्वामिन् मयि सर्वप्रकारेण स्वतन्त्र, वियोगखेदेन न तु प्रिय इति काकुः, मूर्ध्नि अञ्जलिः हस्तसंयोगः प्रणामः इति यावत्, विरचितः बद्धः; स च कोपोद्धतहृदयनमनहेतुः सद्यःप्रसादनः ॥ अत्र असाधुशब्दानन्तरं क्वचित् ' यत्र ' इति, प्रथममुद्रितपुस्तके ' यन्न ' इति च पाठौ ते लिखितप्राचीनपुस्तकीय ' त्त ' अक्षरपाठसम्भ्रमेण उद्भूतौ । ] ४६३ ॥ [ " अतिस्नेहः पापशङ्की । " ( शाकुंतले ४ । ) इति, " स्वगृहोद्यानगतेऽपि स्निग्धे पापं विशङ्कयते स्नेहात् । " ( नागानन्दे ५।१ ) इति ( पापं व्यसनम् ), " प्रेम पश्यति भयान्यपदेऽपि । " ( किरात. ९।७० ) इति च न्यायेन तस्य स्वगृहं प्रति प्रवासे विघ्नापाताशङ्किनी तत्सहायं सम्बोधयति दुःसञ्चारा इति । दुःसञ्चाराः निम्नोन्नतत्वात् चौरसर्पादिभयेन वा विषमाः, मार्गाः पन्थानः; तत्रापि वसतिः स्वदेशः निवासस्थानं दूरे; तेन मे हृदयं ] विसंष्ठुलं भयाशङ्कि, [ स्त्रीस्वभावत्वात्; यद्वा तत्रापि प्रियतमस्य हृदयं, विसंष्ठुलं नूतनविरहाघातने स्वस्थानाद्भ्रष्टं अव्यवस्थितं; इति कष्टपरम्परा, समुच्चयालंकारः । अप्रमत्तेन सावधानेन ॥ ] ४६४ ॥ [ कविः अत्रान्तरे कस्यचित्पथ्यापठनमाह हृदयेति । यूनोः हारलतासुन्दरसेनयोः द्वाभ्यां भिन्नाभ्यां हृदयाभ्यां स्नेहेन एकत्वं अद्वैतं प्राप्ते, पुनः तयोः दैववशात् प्राप्तात् वियोगात् जायमानं क्लेशं दुःखं अनुभवतोः सतोः, अपरेण केनचित्, प्रसङ्गतः स्वपाठप्रसङ्गेन निम्नोक्ता पथ्या आर्याछन्दोभेदः, तल्लक्षणं—" ओजे गणत्रयं पादे, द्वितीये तच्चतुष्टयम् । गुरुश्चतुर्थेऽपि तथा, किन्तु लोऽत्र तृतीयके ॥ विषमे जगणो नात्र, पथ्याऽऽर्या संप्रकीर्तिता ॥ " इति मन्दारमरन्दचंप्वाम् । ( ओजे विषमे प्रथमे तृतीये च पादे, गणः मात्रागणः । द्वितीये चतुर्थे च पादे गणचतुष्टयं गुरुश्च, किंतु अत्र चतुर्थे पादे तृतीयः गणः लः लघुः एक एव । अतः चतुर्थपादे तृतीयगणस्य मात्रात्रयन्यूनत्वात् स पादः पञ्चदशमात्रात्मकः । विषमे विषमगणे प्रथमे तृतीये पञ्चमे सप्तमे च जगणो न भवति, इत्यर्थः ॥ ) अपि च पथ्या इति वाच्यबलेन हितावहोक्तिः इत्यपि सूच्यते । पठ्यते पठिता इत्यर्थः । इयमपि आर्या पथ्यैव, लक्षणसमन्वयात् । अत्र प्रस्तुतवर्णनपरेण पथ्यापदेन अस्या आर्यायाः पथ्यानामत्वरूपसूच्यार्थसूचनात्

४६४ विसंस्थुलं ( प )

'अन्योन्यसुदृढचेष्टितसद्भावस्नेहपाशबद्धानाम् ।
विच्छेदकरो मृत्युर्धीराणां वा परिच्छेदः' ॥ ४६६ ॥
अथ तच्छ्रवणानन्तरमास्स्व सुखं दयितिके व्रजामीति ।
अभिधाय याति मन्दं सुन्दरसेने विवर्तितग्रीवम् ॥ ४६७ ॥

---

मुद्रालंकारः । तदुक्तं कुवलयानन्दे–"सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैः । " इति ] ॥ ४६५ ॥ [ तामेव पथ्यार्यां पठति अन्योन्यमिति । अन्योन्यं प्रति यानि सुदृढानि स्थूणानिखननन्यायेन स्थिरतां आपन्नानि चेष्टितानि यावन्ति कर्माणि, तैः यः सद्भावः निष्कपटः, स्नेहः "दर्शने स्पर्शने वाऽपि श्रवणे भाषणेऽपि वा । यत्र द्रवत्यन्तरङ्गं स स्नेह इति कथ्यते ॥ " इति लक्षणलक्षितः, तद्रूपेण पाशेन बन्धनरज्ज्वा बद्धानां नियन्त्रितानां स्निग्धजनानां विच्छेदकरः अत्यन्तवियोगप्रापकः, मृत्युः मरणं, वा विकल्पे, धीराणां— "विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः । " (कुमार० १।५०) इति वर्णितानां ज्ञानेन द्वन्द्वोपपातेषु समचित्तवृत्तीनां, यद्वा पण्डितानां, ] परिच्छेदः समागमः [ वस्तुतः विवेकः । तथा चोक्तं— " ज्ञानाच्च रौक्ष्याच्च विना विमोक्तुं न शक्यते स्नेहमयस्तु पाशः । " (सौन्दरनंदकाव्ये ७।१५) इति ॥ परिसंख्यालंकारः—यथा— " परिसंख्या निषिध्यैकमेकस्मिन् वस्तुयन्त्रणम् । अत्र मृत्युर्विवेको वा दुःखस्यान्तं करिष्यति ॥" इति ॥ अत्रेदं अवधेयं—दृश्ये पताकास्थानेन यथा प्राकरणिकस्य भाविनः कर्तव्यस्य वाऽर्थस्य सूचनं क्रियते तथा श्रव्ये श्राव्ये वा काव्ये प्रसङ्गपठितैः श्लोकैः क्रियते, तदुदाहरणानि हर्षचरितादिषु । एवं प्रस्तुते तु हारलतायाः प्राणत्यागः सुन्दरसेनस्य वनप्रस्थानं च सूचिते । ] ॥४६६॥ [ अथेति षड्भिः कुलकेन रतिसागरप्रविष्टां, प्रियेण अत एव प्राणैरपि वियुज्यमानां, दशम्या स्मरावस्थया च युज्यमानां हारलतां वर्णयन् कविः इतः ४९० तमीं आर्यां यावत्, इष्टजनवियोगजन्यदुःखातिशयेन मृतहारलतालम्बनकं तद्गुणादिस्मरणकथनोद्दीपितं तत्प्रियकृतपरिवेदनरोदनाद्यनुभावितं भूपातादिभिः संचारितं, प्रवासजन्यविप्रलंभेऽपि अस्य निरवधिकत्वात् एकत्र प्राणैर्देशान्तरगमनरूपमृतिपर्यवसानत्वात् शोकस्थायिभावं यमदैवतं अश्रुपाताद्यनुभावकं करुणाख्यं रसं निबध्नाति अथेति ॥ अथ तच्छ्रवणानन्तरं आस्स्वेत्यादि अभिधाय सुन्दरसेने विवर्तितग्रीवं मन्दं याति वटशाखालम्बिभुजामित्यादिद्वितीयान्तपदैः वर्णितां

---

४६६ अन्योन्यगूढ ( गो. का ) । बद्धस्य ( गो. का ) । ४६७ °न्तारमस्निग्धं ( गो. का ) । दयतिके ( प ) । याति सुन्दरसेनेऽपि वि० ( का ) [ नीरसोऽयं पाठः ] । निवर्तित ( का ) ।

वटशाखालम्बिभुजां श्वसितोष्णसमीरशुष्यदधरदलाम्।
पर्यस्तां बिभ्राणां तन्मार्गविलोकनानिमेषदृशम् ॥ ४६८ ॥
लोलायमानवेणीतिर्यक्कृतकण्ठभूषणविशेषाम्।
गलदश्रुवारिपूर्णां पतितां संशुष्कनिःसहाङ्गलताम् ॥ ४६९ ॥
रुन्धानामिव हृदयं स्फुटदितरकरेण कुचयुगाश्रयिणा।
परिशेषितां विलासैरुत्सृष्टां जीवलोककर्तव्यैः ॥ ४७० ॥
अङ्गीकृतां विपत्त्या, वशीकृतां मर्मघट्टनैर्विषमैः।
हारलतामपरिस्फुटमन्तःपरिकृष्यमाणभारत्या ॥ ४७१ ॥

---

अन्तःपरिकृष्यमाणभारत्या मामेत्यादि—तिरोहितेत्यन्तं अपरिस्फुटं अभिदधतीं हारलतां प्राणा जहुः—इति कुलकान्वयः ॥ 'आस्स्व सुखं' इति गमनकालीना आशीः। 'आस्स्व सुखं' इत्यस्य स्थाने 'अस्निग्धं' इति पाठे रूक्षं कठोरम्। दयायुक्ता दयिता तारकादित्वात् इतच्, ततः 'अनुकम्पायां ठक्' (पा. ५। ३। ७६) इति दयितिका, अनुकंपिता अनुकंपाविषया दयिता इत्यर्थः। मन्दं शोकभारगुरुतया शनैः शनैः, विवर्तितग्रीवं यावच्छक्यदर्शनार्थं मुहुर्मुहुः विवर्तिता वलिता ग्रीवा कन्धरा यथा स्यात् तथा, एतेन वलिताख्या दृष्टिः सूचिता, तल्लक्षणं—"वलितं तन्निवृत्तस्य भूयरूयत्ना (प्रेयो)-वलोकनम्।" इति। याति गमनं कुर्वति ॥ ४६७ ॥ सार्धेन आर्याद्वयेन करुणाक्रान्तहारलतादृश्यं अक्षरैश्चित्रयति वटेति। अधरदलं ओष्ठपल्लवः। पर्यस्तां परिवृत्तां, तन्मार्गस्य तस्य गमनपदव्याः, विलोकने तृष्णादीर्घेण चक्षुषा दर्शने, अनिमेषदृशं मीलनोन्मीलनचेष्टारहितां निश्चलां दृष्टिं, बिभ्राणाम्; ॥ ४६८ ॥ विगलितबन्धतया व्यालोलकेशपाशेन अव्यवस्थितकण्ठाभरणां, संशुष्केत्यादि—शुष्का अत एव स्वधारणे अशक्ता लता वल्ली तद्वत् भूमौ पतिता, ॥ ४६९ ॥ स्फुटत् विदलत् भिद्यमानं, यत् हृदयं तत्, अपरेण शाखानवलम्बिना करेण, रुन्धानां इव प्रतिबध्नन्तीं इव, शोकातिरेके हस्तस्य हस्तयोर्वा कुचयोरुपरि स्थापनं स्त्रीस्वभावः, तन्मूलेयं क्रियोत्प्रेक्षा; परिशेषितां त्यक्तां, "प्रियसन्निधौ अङ्गे क्रियायां वचने च सातिशयं विशेषोत्पत्तिः विलासः" तैः विलासैः; जीवलोकः संसारः; ४७० ॥ अङ्गीकृतां अभ्युपगतां आक्रान्तां इति यावत्, विषमैः दारुणैः, ] मर्मघट्टनं मर्मस्थलपीडा [ तैः हृदयादिजीवस्थानप्रदेशकृन्तनैः, वशी-

---

४६८ °दधरमुखीं (१) ४६९ दोलाय० (१)। तिर्यग्गत (१)। पतितां-शुकभागनिः (१. गो २.) ४७० परिशोषितां (गो. का) ४७१ अंगीकृतां निघत्या (१)। °लतामपि रिक्तामन्तः (गो २. का)

'मामा तावद्यात क्षणमेकं यावदेष निष्करुणः ।
वनगुल्मैर्न तिरोहित' इत्यभिदधतीं जहुः प्राणाः॥४७२॥(कुलकम्)
अथ पश्चात्समुपेतं पप्रच्छ पुरन्दरात्मजः पथिकम् ।
'दृष्टा शोकव्यथिता निवर्तमाना वराङ्गना भवता' ॥ ४७३ ॥
स उवाच 'वटतरोरध उर्व्यां पतिता विनिश्चलावयवा ।
तिष्ठति वनिता, नान्या नयनावसरं गताऽस्माकम्' ॥ ४७४ ॥
इति तद्वचनाश्महतो विह्वलमूर्तिः पपात भूपृष्ठे ।
उत्थापितश्च सुहृदा सोऽभिदधे तेन शोकविकलेन ॥ ४७५ ॥

---

कृतां पराधीनां तत्पीडापराधीनां इत्यर्थः, अन्तःपरिकृष्यमाणभारतया समासन्नमृत्युकाले परिशुष्यद्वाणीप्रचारतया, अपरिस्फुटं अव्यक्ताक्षरं, अभिदधतीं आल्पन्तीम् ; । ४७१ ॥ तदुक्तिमेवाह मामेति प्राणान् प्रति, मामेत्यनौचित्येन वीप्सया निषेधः, मा यात विलम्बत, निष्करुणः निर्दयः निष्ठुरः, वनगुल्मैः वनजकाण्डरहितवृक्षजातिभिः, तिरोहितः अन्तर्धानं अदृष्टत्वं प्राप्तः । प्राणाः इति प्राणस्य उपाधिभेदेन प्राणापानसमानोदानव्यानाः इति पञ्चभेदवत्त्वात् बहुवचनं, तां जहुः—विरहनिःसहा सा वीतजीविता जाता इत्यर्थः । यतः वियोगासहत्वं कामुकानां रूढरागत्वलक्षणम् । उक्तं हि—"इष्टप्रवासजनितान्यबलाजनस्य दुःखानि नूनमतिमात्रसुदुःसहानि ॥" ( शाकुं० ४।२ ) इति; "माभूत्सज्जनसङ्गो, यदि सङ्गो मा पुनः स्नेहः । स्नेहो यदि विरहो मा, यदि विरहो जीविताशा का ॥" इति च । तथा च मदालसाचंप्वां—"तत्तु प्रेमविडंबनं विघटितं प्राणप्रिया योषितो वैवर्ण्यं जडतां तनोस्तु तनुतां विन्दन्ति यत्केवलम् । यावद्रोचरमाकलय्य सुदती देहं जहात्यप्रियं, सा नूनं दयिता, स एव दयितः, स्नेहस्य सा पूर्णता ॥" ( ४।६३ ) इति । ] ॥ ४७२ ॥ [ अथेति प्रस्थितनायकवृत्तं वर्णयति । स स्वस्य पश्चात् आगतं कंचित् पथिकं हारलतां उद्दिश्य पृष्टवान्—शोकाकुला काचित् सुन्दरी ] निवर्तमाना स्वगृहं प्रति गच्छन्ती [ त्वया दृष्टा इति । ] ४७३॥ [ स उवाच पथिकः प्रत्यवदत् । विनिश्चलावयवा इत्यनेन सा मूर्छिता वा मृता वा इति स्वाशानं सूचितम् । ] ४७४ ॥ [ इति तत्प्रकारकं, वचनाश्म वाक्यरूपः प्रस्तरः दृढाघातकत्वात्, 'वचनास्त्रहतः' इति पाठे वाग्बाणविद्धः, सा मृतैवेति स्वयं

---

४७२ °दधतीं जहुः प्राणान् (प) [ अपपाठः ] ४७३ अथ वर्त्मनि ( गो. का )। विवर्तमानाङ्गना ( प ) ४७५ वचनास्त्र ( गो. का ) । शोकदीनेन ( प )

'भवतु कृतार्थस्तातस्त्वमपि सुमित्रास्स्व साम्प्रतं प्रीतः ।
समकालमेव मुक्ता पापेन मयाऽसुभिश्च हारलता ॥ ४७६ ॥
हाहा हाव हतोऽसि, ध्वस्ता लीला, विलास किं कुरुषे ।
उच्छिन्ना विच्छित्तिर्भ्रम विभ्रम दश दिशो निराधारः ॥४७७॥

प्रतीत्य इति शेषः, विह्वलमूर्तिः कम्पितशरीरः । सः सुहृत् गुणपालितः । विकलः शिथिलधैर्यः । ] ४७५ ॥ [ भवत्वित्यादिकं आर्यापञ्चकं हारलतात्यन्तिकवियोगस्य अप्रतिकार्यत्वात् सुन्दरसेनस्य विलपनोक्तिः, तदुक्तं उत्तररामचरितनाटके— " पूरोत्पीडे तडागस्य परीवाहः प्रतिक्रिया । शोकक्षोभे च हृदयं प्रलापैरेव धार्यते ॥" ( ३।२९ ) इति ॥ तत्रादौ स्वप्रियायाः मरणे पत्रप्रेषण—तदनुमोदनाभ्यां निमित्तभूतौ तातसुहृदौ पूर्वार्धेन व्याजोक्त्या उपालभमानः उत्तरार्धेन तत्र साक्षात्कारणभूतं स्वात्मानं निन्दति भवतु इति । ] कृतार्थः सम्पादितकर्तव्यः [ कृतकृत्यः । प्रीतः आस्स्व प्रसन्नो भव, साम्प्रतं हारलतामृत्युना तस्या मम वियोगेन, सुमित्र इति सोल्लुण्ठना सम्बुद्धिः । तत्र हेतुमाह समेति । यतः मया पापेन कर्तृकर्मणोरभेदेन पापकर्मणा इत्यर्थः; असुभिः मद्वल्लिप्रियैः तत्प्राणैश्च, समकालमेव मत्सख्यनिर्वहणार्थमिव मन्निर्गमनाव्यवहितक्षणे एव सा मुक्ता परित्यक्ता ॥ अत्र पूर्वार्धे " व्याजोक्तिरन्यहेतूक्त्या यदाकारस्य गोपनम् । " इति व्याजोक्तिः, उत्तरार्धे सहोक्तिः, पूर्वार्धस्य उत्तरार्धेन समर्थनाच्च काव्यलिङ्गं, इत्येतेषां संसृष्टिः । सहोक्तिलक्षणं च " सहोक्तिः सहभावश्चेद्भासते जनरञ्जनः । " इति कुवलयानन्दे । ] ४७६ ॥ [ इतः त्रिभिः हावादिगुणक्रियाविशेषाणां तामाश्रित्य स्थितानां तया विरहितान् तत्सम्बन्धित्वात् तानपि स्ववत् अनुशोचति । लोकेऽपि मृतस्य बान्धवादयः अनुशोच्यन्ते इति स्थितिः ॥ यद्वा एतेषु ये स्वस्य प्रियतराः तेषामेव स्मृत्या आख्यानं क्रियते ॥ ध्वस्ता कथाशेषा जाता । हा इति शब्दः शोकपूर्वकसंबोधनवचनः, तदतिशये च द्विरुक्तिः ॥ अथ यौवने स्त्रीणां सत्त्वजा अलङ्कारा दश—" भावो हावश्च हेला च त्रयस्तत्र शरीरजाः ॥ शोभा कान्तिश्च दीप्तिश्च माधुर्यं च प्रगल्भता । औदार्यं धैर्यमित्येते सप्त भावाः स्वभावजाः ॥ " इति शृङ्गारामृतलहर्याम्; अत्र " चित्तस्याविकृतिः सत्त्वं " " ततोऽल्पा विकृतिर्भावो बीजस्यादिविकारवत् । " इति सत्त्वभावयोः भेदः, ते च रत्याख्यं भावं भावयंति सूचयंति तस्मात् भावाः उच्यन्ते; स्वभावजाः अयत्नजाः इत्यर्थः । अत्र सत्त्वं जीवच्छरीरं स्वभावो वा इति सत्त्वजशब्देन दैहिका मानसा इति

४७६ भवता ( प ) । सुमित्रात्र ( गो. का ) सुमित्राद्य ( प )

द्विविधा अपि अलङ्कारा: संगृहीता:, चित्तवृत्ते: वैशिष्ट्यादाह्लादकत्वाच्च तत्रापि अलंकारत्वं उपचर्यते । ते च भावा: चतुर्धा—"चित्तगात्रवाग्बुद्ध्यारम्भसम्भवा: ।" तत्र भावादय: चित्तजा दश, लीलादय: गात्रजा दश, आलापादय: वागारम्भा द्वादश, रीत्यादय: बुद्ध्यारम्भा: त्रय:, इति मिलित्वा पञ्चत्रिंशत् रसार्णवसुधाकरे उपभेदैश्च अधिकसङ्ख्याका: कथिता: । तत्र वाग्बुद्ध्यारम्भाणां अन्यत्र अन्तर्भावं मत्वा बहुभि: ते पृथक् न गणिता:, केवलं चित्तजापरनामकसत्त्वजा: गात्रजाश्च प्रत्येकं दश मिलित्वा विंशतिरेव नायिकालङ्कारा: प्राय: स्वीकृता: । तत्रापि गात्रजेषु लक्षणादिभेदेन मद-तपन-मौग्ध्य-विक्षेप-कुतूहल-हसित-चकित-केलय: इति अष्टानां मध्ये अन्तर्भावादिना न्यूनाधिकस्वीकारेण गात्रजा लीलादय: परं अष्टादश-सङ्ख्याका भवन्ति, संमिलिता: अष्टाविंशति: ॥ तेषु आद्यौ भावहावौ उपलक्षणत्वेनादाय ते सर्वेऽपि भाषायां साधारणतया 'हावभाव' इति व्यवह्रियन्ते; यद्वा हाव: स्त्रीणां शृङ्गारचेष्टा, भावश्च आन्तरो धर्मविशेष: चेष्टाद्वारा आत्मसुखप्रकाशक: इति द्वयोर्मेलनेन 'हावभाव' इति व्यवहार: ॥ एतेषामेव नायिकालंकाराणां अनुभाव इत्यपि संज्ञा, यत: आलम्बनोद्दीपनविभावै: उद्बुद्धं रत्यादिकं भावं बहि: प्रकटयन्त: अनुभावरूपव्यापारवन्त: ते सन्ति, नायिका अलंक्रियतेऽनेन इति तेषां नायिकालंकारत्वमपि ॥ भरतेन तु लीलादीनामेव हावसंज्ञा कृता, तत्र नारीणां शृङ्गारचेष्टा हाव: इत्यर्थ: ॥ केचित्तु—स्त्रीणां सत्त्वजा अलंकारा विंशति:; तत्र भावादय: त्रय: अंगजा:, शोभादय: सप्त अयत्नजा:, लीलादयो दश स्वाभाविका: इति मन्यन्ते; नाट्यालंकाराश्च इत्यपि व्यवहरन्ति, तत्र भावादयो लीलादयश्च प्राप्तसंभोगे अप्राप्तसंभोगे च भवन्ति, शोभादय: प्राप्तसंभोगतायामेव ॥ एषु भावादय: दश पुंसामपि भवन्ति, गात्रजभावेषु अपि केचन तेषां सोपाधिका भवन्ति; स्त्रीणां तु सर्वे एव ते स्वभावजा:, तेषां च उद्दीपकान्वयव्यतिरेकाभ्यां आविर्भावतिरोभावा:, यद्वा, तेषां बाल्ये अनुद्भेद:, यौवने आविर्भाव:, वार्धके तिरोभाव: इति संक्षेप: ॥ एतेषु मूले सत्त्वजानां उपलक्षणेन हाव: एक एव, लीलादय: गात्रजाश्च सर्वे एव भावा: क्रमेण सम्बोधिता ज्ञेया: ॥ एतादृशां नाममात्रग्रहणे काव्ये न कश्चित् चमत्कार: इति न, रामादिदेवनाम्नां जपे यथा नामार्थमहिम्ना तदीयतत्तत्कल्याणगुणानां स्मरणं, तथा एवंविधस्थलेऽपि तत्तन्नामव्यञ्जिततत्तत्पदार्थानां सर्वाङ्गीणतया प्रतीतौ तात्पर्यात् । अपरे अपि अत्र समाधाने द्वे आदौ उक्ते । मूले हावस्तु—"ग्रीवारेचकसंयुक्तो भ्रूनेत्रादिविला-(का)सकृत् । अल्पालाप: सशृङ्गारः स हाव इति कथ्यते" इति लक्षित: । स च यथा—"अनिमिषदृशा सरस्यां पश्यन्ती चक्रवाकमिथुनानि । किञ्चिदुदञ्चत्पुलकैर्मु-

किलकिञ्चित गच्छ वनं, मोट्टायितमशरणत्वमुपयातम् ।
कुट्टमित प्रव्रज्यां गृहाण, बिब्बोक विश भुवो विवरम् ॥४७८॥

---

ग्धवधूर्भावमाख्याति ॥ ” इति कर्णभूषणे ॥ प्रियाय चित्तवृत्तिसंसूचनेन आह्वानफलकत्वात् हावः । भाव एव “ उद्भिद्योद्भिद्य विश्राम्यन् हावः, स एव प्रसरणैकस्वभावो हेला ” इति काव्यानुशासने हेमचन्द्रः ॥ लीला—“अङ्गैर्वेषैरलंकारैः प्रेमनिर्वचनैरपि । प्र(प्री)तिप्रयोजितैर्लीलां प्रियस्यानुकृतिं विदुः ॥ ” ( ६८ ) इति रसरत्नहारे । यथा—“ चण्डांशौ चरमाद्रिचुम्बिनि मनो जिज्ञासितुं सुभ्रुवा न्यञ्चत्कौतुकया तया विरचिते वंशीरवे राधया । एष स्फूर्जति कस्य निःस्वन इति क्रोधाद्व्रजन् काननं राधां वीक्ष्य लताप्रतानपिहितां स्मेरो हरिः पातु वः ॥ ” इति रसतरङ्गिण्याम् ॥ यथा वा–“ इयं चेष्टानुरागेण तथाऽनुकुरुते प्रियम् । मुक्तासूत्रं सपत्न्योऽपि वीक्षन्ते सस्पृहं यथा ॥ ” इति ॥ विलासः–“ प्रियसम्प्राप्तिसमये भ्रूनेत्राननकर्मणाम् । तात्कालिको विशेषो यः स विलास इतीरितः ॥ ” इति रसार्णवसुधाकरे । यथा—“ दीर्घा वन्दनमालिका विरचिता दृष्टयैव नेन्दीवरैः, पुष्पाणां प्रकरः स्मितेन रचितो नो कुन्दजात्यादिभिः । दत्तः स्वेदमुचा पयोधरभरेणार्घो न कुम्भाम्भसा, स्वैरेवावयवैः प्रियस्य विशतस्तन्व्या कृतं मङ्गलम् ॥ ” इति अमरुकशतके( ४५ ) ॥ विच्छित्तिः–“ स्तोका माल्यादिरचना विच्छित्तिः कान्तिपोषकृत् ॥ ” ( ७० ) इति रसरत्नहारे; ( ‘ स्तोकाप्याकल्परचना ’ ‘ आकल्पकल्पनाऽल्पाऽपि ’ इति प्रथमपादपाठान्तरे अन्यत्र । ) सा यथा–“ अधरे नववीटिकानुरागो नयने कज्जलमुज्ज्वलं दुकूलम् । इदमाभरणं नितम्बिनीनामितरद्भूषणमङ्गदूषणाय ॥ ” इति ॥ यथा वा विच्छित्तिप्रतिपादिका नागानन्दे ( ३।६ ) नायकस्य वक्रोक्तिः–“ खेदाय स्तनभार एव किमु ते मध्यस्य हारोऽपरस्ताम्यत्यूरुयुगं नितम्बभरतः काञ्च्याऽनया किं पुनः । शक्तिः पादयुगस्य नोरुयुगलं वोढुं कुतो नूपुरे, स्वाङ्गैरेव विभूषिताऽसि, वहसि क्लेशाय किं मण्डनम् ॥ ” इति ॥ विभ्रमः–“ प्रियागमनवेलायां मदनावेशसंभ्रमात् । विभ्रमोऽङ्गदहारादिभूषास्थानविपर्ययः ॥ ” इति रसार्णवसुधाकरे । यथा–“ आयाति प्रणयी तवेति वचनं श्रुत्वा सखीभाषितं, भूषान्यासविधिं तनौ मृगदृशा सम्पादयन्त्या तया । केयूरं पदपङ्कजे परिहितं, बाहौ धृतं नूपुरं, काञ्ची कण्ठतटे न्यधायि, जघने न्यस्ताश्च पुष्पस्रजः ॥ ” इति कर्णभूषणे ॥ अस्यां आर्यायां वामनरीत्या अनुल्बणः वर्णानुप्रासः शब्दालङ्कारः ॥ ] हावादयः शृङ्गारचेष्टाविशेषाः ॥ ४७७ ॥

[ किलकिञ्चितं किल अलीकेन किं–किञ्चित्–ईषत् चितं रचितम् : पृषोदरादित्वात् साधु । ‘ किलिकिञ्चितं ’ इत्यपि । “ स्त्रीणां किलिकिञ्चिताख्यो भावो विशेषदयिता-

मावहति " इति शाकुंतलटीकायां अभिरामः । " क्रोधश्रमत्रासहासशुष्करोदनसङ्करम् । अभीष्टसङ्गजाद्धर्षादुदेति किलकिञ्चितम् ॥ " ( ७१ ) इति रसरत्नहारे । तद्यथा दानकेलिकौमुदीभाणिकायां—" अन्तः स्मेरतयोज्ज्वला जलकणव्याकीर्णपक्ष्माङ्कुरा, किञ्चित्पाटलिताञ्चला रसिकतोत्सिक्ता पुरः कुञ्चती । रुद्धायाः पथि माधवेन मधुरव्याभुग्नतारोत्तरा राधायाः किलकिञ्चितस्तबकिनी दृष्टिः श्रियं वः क्रियात् ॥ " इति; (अत्र अन्तःस्मेरतया इति स्मितं, जलकणेति रुदितं, किञ्चित्पाटलिता इति क्रोधः, रसिकतोत्सिक्ता इति अभिलाषः, पुरः कुञ्चती इति भयं, मधुरा इति गर्वः, व्याभुग्ना इति असूया । ) अपि च "यत्तु श्रीहर्षः—'त्वयि वीर विराजते परं दमयन्तीकिलकिञ्चितं किल । तरुणीस्तन एव दीप्यते मणिहारावलिरामणीयकम् ॥ ' ( नैषध० २।४४ ) इति तन्न, सङ्गाभावात्; भविष्यत्सामीप्ये वर्तमानवदिति वदसि चेत् दृष्टान्तानुपपत्तिः ॥ " इति रसरत्नहारटीकायां शिवरामः ॥ मोट्टायितं—"तद्भावभाविते चित्ते वल्लभस्य कथादिषु । मोट्टायितमिति प्राहुः कर्णकण्डूयनादिकम् " ॥ (७२) इति रसरत्नहारे । मुट् आक्षेपप्रमर्दनयोः, मुट् संचूर्णने वा, भावे घञ्, बाहुलकात् घञस्तुट्, ततो भृशादित्वात् क्यङ्, ततो भावे क्तः । विलासार्थे इदं देश्यं इति केचित् (३२७. टि.) । अपरे तु अङ्गप्रत्यङ्गानां मोटनात् मोट्टायितमित्याहुः । तद्यथा—"पत्युः शिरश्चन्द्रकलामनेन स्पृशेति सख्या परिहासपूर्वम् । सा रञ्जयित्वा चरणौ कृताशीर्माल्येन तां निर्वचनं जघान ॥ " इति कुमारसंभवे ( ७।१९ ); ( ' मानापनोदनविनोदनते गिरीशे ' शिरश्चन्द्रं अनेन चरणेन स्पृशेति भावः । ) इदं पद्यं तु हेमचन्द्रेण विहृतस्योदाहरणत्वेन अवतारितम् ॥ कुट्टमितं ' कुट्टिमितं ' इत्यपि शब्दः, तल्लक्षणं—" केशाधरादिग्रहणे मोदमानेऽपि मानसे । दुःखितेव बहिः कुप्येद्यत्र कुट्टिमितं हि तत् " ॥ इति रसार्णवसुधाकरे । तद्यथा—"करौद्धत्यं हन्त स्थगय कबरी मे विघटते, दुकूलं च न्यञ्चत्यघहर तवास्तां विहसितम् । किमारब्धः कर्तुं त्वमनवसरे निर्दय मदात्, पताम्येषा पादे, वितर शयितुं मे क्षणमपि " ॥ इति संभुक्ताया राधायाः पुनः संभोगारंभसंरंभवंतं कृष्णं प्रति उक्तिः ॥ (अनवसरे संभोगसमयाप्राप्तौ अपि । ) यथा वा माघे—"पाणिरोधमविरोधितवाञ्छं भर्त्सनाश्च मधुरस्मितगर्भाः । कामिनः स्म कुरुते करभोरूर्हारि शुष्करुदितं च सुखेऽपि ॥ " (१०।६९) इति । (अत्र कामिनः इत्यस्य पाणिरोधं भर्त्सनाश्च इत्यत्र, सुखेऽपि इत्यस्य पाणिरोधादित्रयेऽन्वयः । नीविबन्धविघट्टने हस्तरोधं, गाढालिंगने विमर्दे वा तर्जनाः, दन्तनखच्छेद्येषु प्रहणनेषु वा शुष्करुदितं—अनश्रुत्वात् कृत्रिमरोदनं कुरुते स्म । अत्र पाणिरोधादिविशेष्याणि कोपव्यञ्जकानि, अविरोधितवाञ्छादिविशेषणानि सुखव्यञ्जकानि इति ) ॥ इदं पद्यं साहित्यदर्पणे किलकिञ्चितस्य

**ललितमनाथीभूतं, विहृतस्य गतिर्न विद्यते कापि ।**
**शशधरबिम्बद्युतिमुषि यातायामन्तकस्यान्तः ॥ ४७९ ॥**

उदाहरणत्वेन उद्धृतं तच्चिन्त्यम् । यत्तु सरस्वतीकण्ठाभरणे—"केशस्तनाधरादीनां महादुःखेऽपि यत्पुनः । सुखाविष्करणं तन्व्यास्तच्च कुट्टमितं मतम् ॥" इत्यलक्षि, तन्न रमणीयं, तथात्वे सुखस्य आभासत्वात् नीरसतापत्तेः ॥ बिब्बोकः विब्बोक इत्यपि—"इष्टेऽप्यनादरो गर्वान्मानाद्विब्बोक ईरितः ।" इति रसार्णवसुधाकरे । गर्वाद्यथा—"पुंसाऽनुनीता शतसामवादैर्हालां निरीहेव चुचुम्ब काचित् । अर्थानभीष्टानपि वामशीलाः स्त्रियः परार्थानिव कल्पयन्ति" ॥ इति ॥ एतद्विषये रसरत्नहारटीकायां शिवरामः—"यत्तु माघः—'किं तावत्सरसि सरोजमेतदारादाहोस्विन्मुखमवभासते युवत्याः । संशय्य क्षणमिति निश्चिकाय कश्चिद्विब्बोकैर्बकसहवासिनां परोक्षैः ॥' (८।२९) तन्न । विब्बोकस्य केवलं मुखवर्तित्वाभावात् । यत्त्वमरसिंहः—'स्त्रीणां विलासविब्बोकविभ्रमा ललितं तथा । हेला लीलेत्यमी हावाः क्रियाः शृंगारभावजाः ॥' इति तदपि न, आचार्यैः सर्वेषां भेदवर्णनात् ॥ 'माघो बभ्राम विब्बोके तत्रैवामरनामकः । ताभ्यां समो मया दृष्टः श्रीहर्षः किलकिञ्चिते ॥" इति । अत्र माघटीकायां मल्लिनाथेन "यद्यपि ('मनाक् प्रियकथालापे) विब्बोकोऽनादरक्रिया' इत्युक्तं, तथापि विशेषवाचिनां सामान्ये लक्षणेति अदोषः"। इति कथञ्चित् समाधानमुक्तम् ॥] ४७८॥ ललितं—"विन्यासभङ्गिरङ्गानां भ्रूविलासमनोहरा । सुकुमारा भवेद्यत्र ललितं तदुदाहृतम्" ॥ इति रसार्णवसुधाकरे। तद्यथा दशरूपककर्तुः धनञ्जयस्य—"सभ्रूभङ्गं करकिसलयावर्तनैरालपन्ती, सा पश्यन्ती ललितललितं लोचनस्याञ्चलेन । विन्यस्यन्ती चरणकमले लीलया स्वैरपातैर्निःसङ्गीतं प्रथमवयसा नर्तिता पङ्कजाक्षी" ॥ इति । यथा वा—"कलक्वणितमेखलं चपलचारुनेत्राञ्चलं प्रसन्नमुखमण्डलं श्रवणसञ्चरत्कुण्डलम् । स्फुरत्पुलकबन्धुरं लपितशोभमानाधरं विहाररतिमन्दिरं व्रजति कस्य शातोदरी" ॥ इति । केचित्तु सातिशयं विलासमेव ललितं आहुः तन्न, विलासः प्रियायाः प्रियसन्निधौ एव, ललितं तु अन्यत्रापि इति भेदात् ॥ मूले अनाथीभूतं अस्वामिकं जातम् ॥ विहृतं—अस्य स्थाने विकृतं इति क्वचित् पाठः स प्रमादजः । तल्लक्षणं—"ह्रीमानेर्ष्यादिभिर्यत्र नोच्यते स्वविवक्षितम् । व्यज्यते चेष्टयैवेदं विहृतं तद्विदुर्बुधाः" ॥ इति उज्ज्वलनीलमणौ । तत् लज्जया यथा—"निरुद्ध्य यान्तीं तरसा कपोतीं कूजत्कपोतस्य पुरो दधाने । मयि स्मितार्द्रं वदनारविन्दं सा

४७९ °स्य न विद्यते गतिः (प) । मुखि (प. कापा) (अयं पाठः षखयोः संभ्रमेण लेखककृतः) । यातायामन्तकस्यान्तिकम् (प)

विनिवृत्त्य यामि दग्धुं मद्विरहात्त्यक्तवल्लभप्राणाम् ।
भवतु वराक्यास्तस्याः सप्तार्चिर्दानमात्रमुपकारः ॥' ४८० ॥

गत्वाऽथ तमुद्देशं यस्मिन्सा पञ्चभावमापन्ना ।
विललाप मुक्तकण्ठं विलुठन् भुवि सहचरेण धृतमूर्तिः ॥४८१॥

---

मन्दमन्दं नमयाम्बभूव ” ॥ (२।२८) इति भामिनीविलासे ।(अत्र यान्तीं पलायमानां, कूजन् सुरतार्थं रुतविशेषं महाशब्दं वा कुर्वन्, अत्र विवक्षितं स्वसुरतौत्कण्ठ्यं स्मितवदननमनाभ्यां व्यञ्जितम् ॥ ) तत् मानेन यथा—“ अद्यापि तन्मनसि सम्परिवर्तते मे रात्रौ मयि क्षुतवति क्षितिपालपुत्र्या । जीवेति मङ्गलवचः परिहृत्य रोषात् कर्णेऽर्पितं कनकपत्रमनालपन्त्या ” ॥ इति बिल्हणपंचाशिकायाम्; ( कनकपत्रस्य कर्णार्पणचेष्टया स्वस्याः सौभाग्यं अत एव पत्युः दीर्घजीवनं आशंसितम् ॥ ) तदीर्ष्यया यथा—“ वीक्ष्य वक्षसि विपक्षकामिनीहारलक्ष्म दयितस्य भामिनी । अंसदेशविनिवेशितां क्षणादाचकर्ष निजबाहुवल्लरीम् ” ॥ (२।२२) इति भामिनीविलासे ॥ इति गात्रजा नायिकालंकाराः ॥ यद्यप्यत्र सर्वमिदं नातिप्रयोजकं तथापि काव्यस्य लोकव्यवहारादिज्ञापनेन व्युत्पत्त्याधायकत्वरूपहेतुमत्त्वात् संक्षेपेण इदमत्र उक्तम् । एवमेवान्यत्रापि बोध्यम् ॥ मूले—गतिः गमनस्थानं आश्रय इति यावत् । शशधरेत्यादिः उपमा । शशधरइत्यनेन पूर्णचंद्रता द्योत्यते तत्रैव शशाभिव्यक्तेः । अन्तकः यमः । अन्तः समीपं, “ अन्तः स्वरूपे निकटे प्रान्ते निश्चयनाशयोः । अवयवेऽपि ” इति हैमः ॥ ] ४७९ ॥ [ वल्लभाः प्रियाश्च ते प्राणाः । दग्धुं निष्पुत्रायाः वेश्यायाः अन्त्येष्ट्यां तत्प्रियस्यैव कर्तृत्वाधिकारात् , वराकी दीना । सप्तार्चिः—सप्ताः विस्तृताः काल्यादिसप्तसंख्याकजिह्वारूपाः वा । अर्चिषः ज्वालाः यस्य सः अग्निः; तस्य दानं दाहविधिः इत्यर्थः । उपकारः उप अधिकं करोतीति उपकारः कृतज्ञतया प्रतिकृतम् ॥ ] ४८० ॥ [ तादृशदशाविशिष्टायाः तस्याः दर्शनेन करुणारसपराधीनचेतसः चेष्टामाह गत्वेति । उद्देशं स्थलं, पञ्चभावं देहस्य उपादानकारणीभूतानि यानि पृथ्वीजलतेजोवाय्वाकाशाख्यानि पञ्चमहाभूतानि तेषां भावं—आत्मत्वं सत्तां स्वस्वरूपधृतिं—पञ्चभावं पञ्चतां पञ्चसु भूतेषु स्वस्वांशेन स्थितिं लयं इति यावत्, मृत्युं इत्यर्थः; ] पञ्चभावो मरणं, “ स्यात् पञ्चता कालधर्मः ” इति अमरः । [ विललाप रुरोद, मुक्तकण्ठं अत्युच्चैः, सहचरः सुहृत् मित्रं, धृतमूर्तिः अवष्टंभितशरीरः । ] ४८१ ॥

---

४८० मद्विरहे मुक्तव० ( प. कापा ) ४८१ मुक्तनादं ( प )

'एते वयं निवृत्ता मुञ्च रुषं, देहि कोपने वाचम् ।
उत्तिष्ठ, किमिति तिष्ठसि भूमितले रेणुरूषितशरीरा ॥ ४८२ ॥
विनिमील्य दृशौ कस्मादप्रतिपत्त्या स्थिताऽसि शुभवदने ।
त्वदवारितगमनविधेरपराधितया न मेऽस्ति संयोगः ॥ ४८३ ॥
नाकाधिपतिपुरस्त्रीरभिभवितुं त्वयि दिवं प्रयातायाम् ।
सत्स्वपि शरेषु पञ्चसु निरायुधः साम्प्रतं मदनः ॥ ४८४ ॥

[ इतः सुन्दरसेनस्य विलापाष्टकम् । तत्रादौ तां जीवन्तीमिव भावयित्वा नायिकानुनयं कुरुते एते इति । एते अपरोक्षाः, वयं इति सोत्प्रासोक्तौ बहुवचनं, निवृत्ताः प्रत्यागताः, अतः मत्प्रवासजनितं रुषं रोषं–स्त्रीपुंसयोरेव मिथः अवज्ञादिजातं चित्तज्वलनं रोषः–तं, मुञ्च त्यज, प्रत्यागमनेन अपराधविगमे सति इति भावः; अत एव, कोपने क्रोधशीले भामिनि, वाचं प्रत्युत्तरं रोषापगमदर्शकं, देहि यच्छ। अपि च भूमेः उत्थानेनापि रोषमुक्तिं प्रत्याययितुं प्रार्थयते उत्तिष्ठेति । तथापि अनुत्थानं दृष्ट्वा एतावद्दीर्घरोषेण स्वावज्ञायाः हेतुं पृच्छति–किमितीति । किमिति: वस्तुस्वरूपानिश्चये । रेणुरूषितशरीरा पांसुधूसरितदेहा । ] ४८२ ॥ [ कोपातिशयेन माऽस्तु वचनं, दृशाऽपि किं मां न पश्यसीत्याह विनिमील्येति । कस्मात् केन हेतुना, अप्रतिपत्त्या जडतया निश्चलतया, स्थिताऽसि वर्तसे; अथवा, अप्रतिपत्ति इति च्छेदः, न प्रतिपत्तिः प्रवृत्तिः यस्मिन् कर्मणि तत् यथा भवति तथाभूतं रूपं निर्व्यापाररूपं, आस्थिताऽसि आश्रिताऽसि इत्यर्थः । शुभवदने–वदनस्य शोभा प्रियवचनानां उक्तिः, तदश्रवणेन अनुनयार्थं तथोक्तिः; मृतावस्थायामपि मुखच्छायाया अनष्टत्वात् वा शुभवदने इत्युक्तिः । तस्याः एवंविधासंभाव्यवर्तने स्वापराधमेव हेतुत्वेन संभाव्य तस्याः मरणानुसन्धायकं संयोगाभावं निश्चिनुते त्वदेति । अपराधितया मदीयावाच्याक्षम्यमहादोषानुसन्धानेन हेतुना, त्वदवारितगमनविधेः त्वया अप्रतिषिद्धप्रस्थानस्य, मे मम, त्वया सह संयोगः मेलनं, नास्ति न भवति । मरणं व्यञ्जितं फलं, तत्र हेतुः असंयोगः, तस्य मद्गमनं, तस्य त्वया अप्रतिषेधः, तस्य मम कोऽपि अपराधः इति हेतुहेतुमद्भावपरम्परा । अनुमानालंकारः ॥ लोकेऽपि अपराधिनः मुखं अपराधितेन न दृश्यते, तेन सह संभाषणं च न क्रियते इति प्रसिद्धेरपि अत्र पूर्वार्धे अनुसन्धानं द्रष्टव्यम् ॥ 'त्वद्वारितगमनविधेः' इति पाठे त्वया वारिता गमनविधिः यस्य तस्य मम इत्यर्थः । पूर्वं गमनवारणस्यानुक्तेः अयं पाठः न समीचीनः ॥ ] ४८३ ॥ [ व्यञ्जितं

४८४ पुरन्ध्री ( प. गो २ )

वञ्चकवृत्ता वेश्या इत्यपवादो जनेषु यो रूढः ।
अपनीतोऽसौ निपुणं त्वया प्रिये जीवमोक्षेण ॥ ४८५ ॥

---

मृत्युं मुखेन वदन् तज्जातं अनिष्टं कथयन् शोचते नाकेति । न विद्यते अकं दुःखं यत्र सः नाकः स्वर्गः तस्य अधिपतिः इन्द्रः, तस्य पुरं अमरावती, तत्रत्याः स्त्रियः अप्सरसः, ताः स्वरूपकलाविज्ञानादिभिः अभिभवितुं पराजेतुं, त्वयि दिवं स्वर्गं प्रयातायां आरूढायां, साम्प्रतं त्वया विना इदानीं, मदनः मन्मथः, सत्सु विद्यमानेषु अपि, पञ्चसु शरेषु बाणेषु, ते च–" अरविन्दमशोकं च चूतं च नवमल्लिका । नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः ॥ " इति, यद्वा " उन्मादनः तापनश्च शोषणः स्तंभनस्तथा । सम्मोहनश्च कामस्य पञ्च बाणाः प्रकीर्तिताः ॥ " इति । यद्वा मतान्तरेण, " द्रावणः क्षोभणश्चैव वशीकरण इत्यपि । आकर्षणश्च कामस्य बाणः सम्मोहनोऽपरः ॥ " इति । निरायुधः प्रहरणविहीनः जातः, यतः त्वत्सदृश्या अपराया अभावेन जगतः उन्मादादि जनयितुं स न प्रभविष्यति ॥ उक्तं हि जनार्दनभट्टेन शृङ्गारशतके–" वेणी खड्गसमा, भ्रुवौ परिलसद्बाणासनाभे शुभे, कर्णौ पाशसमौ, तथा विजयते नासा च तूणोपमा । मुग्धेऽपाङ्गविलोकनं शरसमं, जाने ततस्त्वं कृता प्रायः पञ्चशराभिधक्षितिभुजा शस्त्रस्य शाला निजा ॥ " इति ॥ अत्र मूले विनोक्तिः अलंकारः, तल्लक्षणं तु–" विनोक्तिश्चेद्विना किञ्चित्प्रस्तुतं हीनमुच्यते । तच्चेत्किञ्चिद्विना रम्यं विनोक्तिः साऽपि कथ्यते ॥ " इति कुवलयानन्दे; तन्मूलिका योगेऽपि मदनस्य आयुधायोगकल्पनात् असंबंधातिशयोक्तिः, शरेषु सत्सु अपि निरायुधः इति विरोधाभासश्च ॥ ] ४८४ ॥ [ एवं रूपादीन् प्रशंस्य तस्याः सुचरितं अपि श्लाघते वञ्चकेति । वञ्चकं खलं धौर्त्ययुक्तं वागादीनां अहृदयपूर्वकव्यापारवत्, अमनस्कतया प्रवर्तितं वा वृत्तं चरितं यासां ताः वञ्चकवृत्ताः, वेश्याः " वेशः भृतिः सोऽस्या जीवनं इति वेश्या " इति दशरूपकावलोके (२।४२); यद्वा वेशः नेपथ्यं जीवनं यस्याः सा वेश्या; यद्वा " वेशो बलम् " इति " वेशन्त०" ( पा० ४।४।१३१)महाभाष्ये अस्य दिगादौ पाठात् " दिगादि० " (पा० ४।३।५४) इति यत्, वेशे यूनां बले भवा स्थिता इत्यर्थः, तद्बलसहिता इति यावत्,–यद्वा " तस्मै हितम् " ( पा० ५।१।५) इति यत्, वेशाय यूनां बलाय हिता इत्यर्थः,–यद्वा " तत्र साधुः " (पा० ४।४।९८) इति यत्, बले साधुः इत्यर्थः,–यद्वा " गोद्व्यचो०" (पा० ५।१।३९ ) इति यत्, वेशस्य निमित्तं संयोगः उत्पातो वा इत्यर्थः,–सर्वत्र ततष्टाप्; यद्वा वेशति इच्छति देहविक्रयेण धनादिकं इत्यर्थः, " अघ्न्या०" (उ०१।३४) यक्, गुणश्च नि-

वर्ण्यः सद्व्रत एकस्त्रिपुरान्तकनन्दनो महासेनः ।
हृदयं यस्य स्पृष्टं न मनागपि वामलोचनाप्रेम्णा ॥ ४८६ ॥

---

पातनात्, निरुक्तप्रामाण्यादयं धातुः इच्छार्थकः । अपवादः निन्दा, ] रूढः प्रसिद्धतमः [ लब्धप्रतिष्ठः; तथाहि—" एता हसन्ति च रुदन्ति च कार्य('वित्त') हेतोर्विश्वासयन्ति पुरुषं न च ('तु') विश्वसन्ति । तस्मान्नरेण कुलशीलसमन्वितेन वेश्याः श्मशानसुमना ('०नघटिका') इव वर्जनीयाः ॥ " ( ४ । १४ ) इति मृच्छकटिके, " हारिद्रद्रवसोदराय रसनामात्रोपरिस्थायिने सत्यादन्यतमाय वित्तहरणप्रत्यक्षचौराय च । चित्रं दुर्भगरूपवर्णनमहापाण्डित्यविद्याय ते व्याजानां प्रथमाय गर्भगणिकारागाय तुभ्यं नमः ॥ " इत्यादि मुग्धोपदेशे, " वाग्भिः प्रीतिकरैर्विलोकनशतैः, संतर्जनैः सस्मितैः, क्रोधैरौषधमंत्रतंत्रमणिभिः कृत्वा वशं नायकम् । हृत्वा तस्य समस्तवस्तुनिचयं, त्यक्त्वा तमन्यं शठं सेवन्ते धनिनं, वृथैव सततं वाराङ्गनानां रतिः ॥ " ( १ । ६४ ) इति हरिहरकृतशृङ्गारदीपिकायां च । " वर्णनदयितः कश्चिद्धनदयितो दासकर्मदयितोऽन्यः । रक्षादयितश्चान्यो वेश्यानां नर्मदयितोऽन्यः ॥" इति क्षेमेन्द्रः; " कपटानुरागकौसीदिकः खलु वेश्याजनः, तथाहि —आलापैर्मधुरैश्च कांश्चिदपरानालोकितैः सस्मितैरन्यान् विभ्रमकल्पनाभिरितरानंगैरनंगोज्ज्वलैः । आचारैश्चतुरैः परानभिनवैरन्यान् भ्रुवः कंपनैरित्थं कांश्चन रंजयंति सुदृशो मन्ये मनस्त्वन्यथा ॥ " इति च वसंततिलकभाणे । असौ अपवादः, अपनीतः दूरोत्सारितः प्रमार्जितः, निपुणं अतिशयेन अत्यन्तं, यथा मृच्छकटिके वसन्तसेनया । प्रिये प्रेमसर्वस्वपरमालंबनभूते, स्वजातिगुणरहितत्वात् साभिप्रायमिदं सम्बोधनं, जीवमोक्षेण पतिव्रतावत् प्राणपरित्यागेन ॥" कुट्टनीमते 'वञ्चकवृत्त्यो वेश्याः…वृतेः 'इक् कृष्यादिभ्यः' इतीगन्तात्, यद्वा ' वञ्चकवृत्ता' इति पाठः ।" इति ( ४।१।४५) दुर्घटवृत्तौ । ] ४८५ ॥ [एवं रागविह्वलः विपरीतधर्माणं प्रशंसति वर्ण्य इति । वर्ण्यः श्लाघनीयः कीर्तनीयचरितः, सद्व्रतः शोभनो नियमः यस्य सः, कनकरजतताम्रमयपुरत्रयस्य तदधिपतेः असुरस्य च अन्तकः नाशकः—त्रिपुरान्तकः शिवः, तस्य नन्दनः पुत्रः, महासेनः महती सेना देवानां सैनापत्याधिकारत्वात् यस्य सः ] महासेनः षडाननः [ कार्तिकेयः । मनाक् ईषत् लेशमात्रं, अपि; वामलोचना वामे सुन्दरे लोचने यस्याः सा रमणी, तस्याः प्रेम्णा स्नेहेन न स्पृष्टं कामवशंवदो न जातः । तथाहि विक्रमोर्वशीयनाटके उर्वश्युक्तिः—"पुरा भगवता महासेनेन शाश्वतं कुमारव्रतं गृहीत्वा अकलुषो नाम गन्धमादनक-

---

४८६ वन्द्यः सद्व्रत (प )

मन्येऽभीष्टवियोगं निमेषमपि दुःसहं समवधार्य ।
हरिणा वक्षसि लक्ष्मीर्विधृता गौरी हरेण देहार्धे ॥ ४८७ ॥
अयि लोकपाल, सा भुवि ललामभूता, तया विना शून्यम् ।
विश्वमिति किं न चिन्तितमात्मस्थानं प्रियां नयता ॥ ४८८ ॥

---

च्छोऽध्यासितः ।" (अं.४) इति । (यद्यपि "जलप्रायमनूपं स्यात्पुंसि कच्छस्तथाविधः।" इति अमरः, तथापि कच्छशब्दः नानाकोशानुसारेण समुद्रसरित्सरःपर्वतादीनां प्रान्तदेशे समीपभागे च वर्तते । प्रकृते गन्धमादनः हिमवत्पुरस्य ओषधिप्रस्थस्य उपवनं कैलासशिखरोद्देशवर्ति, तत्समीपस्थः प्रदेशः गंधमादनकच्छः । ) महाभारते वनपर्वणि कार्तिकेयस्तवे ( अ. २३२ ) अपि स्कन्दनामसु–" कामजित् कामदः कान्तः । ( ४। ···खचारी ब्रह्मचारी च । "(८) इति । (कामजित् कामस्य मदनस्य जित् जेता ।)॥ " धन्यास्ते भुवि ये निवृत्तमदना धिग्दुःखितान्कामिनः । " इति भावः ॥ अप्रस्तुतप्रशंसालंकारः, अप्रस्तुतस्य कार्तिकेयस्य प्रशंसायाः प्रशंसनीयत्वेन प्रस्तुते तत्सरूपे अरागिणि पर्यवसनात् । यद्वा प्रियाप्रेमामृताप्राप्तिरूपदोषस्य तद्विरहजनितदुःखाभूमित्वव्यञ्जनेन गुणत्वकल्पनात् लेशालंकारो व्यङ्ग्यः॥] ४८६ ॥ [ तं विहाय अन्येषां देवानां प्रियाविरहासहिष्णुतां पश्यति मन्ये इति । अभीष्टः प्रियतमः । निमेषं चक्षुषोः एकोन्मेषनिमेषकालः लवद्वयम् । समवधार्य ऊहापोहेन अनुभवेन वा सम्यक् निश्चित्य ॥ स्वसदृशानां प्राकृतानां इत्थं विरहासहत्वे न किमपि आश्चर्यास्पदं इति अर्थात् आपद्यते॥ हेतूत्प्रेक्षालंकारः, " मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः । उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः ॥ " ( काव्यादर्शे २।२३४ ) इति ॥ ] ४८७ ॥ [उपसंहरन् तस्याः जीवितहरं यमं उपालभते अयीति। लोकानां प्राणहरत्वे अन्तकत्वे वा कथं लोकपाल इति ते नाम • इति सोल्लुण्ठनं सम्बोधनम् । लोकपालाः दश, प्राच्यादिदशदिग्रूपकन्यानां पतयः दिक्पालाः इति ख्याताः; ते च इन्द्रः, अग्निः, यमः, निर्ऋतिः, वरुणः, वायुः, कुबेरः, ईशानः, ब्रह्मा, शेषश्च इति; तेषु अन्यतमः ] लोकपालः दक्षिणदिक्पतिः यमः, [ यस्य देशं मृताः प्राणिनः तद्दूतैः नीयन्ते इति पुराणेषु प्रसिद्धम्, सोऽत्र सामान्योक्त्या लोकपाल इति सम्बोधितः । ललामं भूषणम् । " ललामोऽस्त्री ललामापि प्रभावे पुरुषे ध्वजे । श्रेष्ठे भूषापुण्ड्रशृङ्गपुच्छचिह्नाश्वलिङ्गिषु ॥ " इति यादवः । तद्रहितं विश्वं शून्यं निर्जनं, तथाहि मालतीमाधवे–" असारं संसारं, परिमुषितरत्नं त्रिभुवनं, निरालोकं लोकं, मरणशरणं

---

४८७ दुःसहं समालोक्य ( गो. का ) ४८८ किं न शोचितमा० ( प )

भगवन्हुतवह, मामा लावण्यसमुद्रसारमुद्धृत्य।
कथमपि विहितां धात्रा धक्ष्यस्येनां जगद्भूषाम् ॥' ४८९ ॥
इति विलपन्तं बहुविधमवधीर्य सुहृत् पुरन्दरस्य सुतम्।
काष्ठैर्विरचय्य चितां तामकरोदग्निसाद्गणिकाम् ॥ ४९० ॥

---

बान्धवजनम्। अदर्प कन्दर्प, जननयननिर्माणमफलं, जगज्जीर्णारण्यं, कथमसि विधातुं व्यवसितः ॥ " (५।२९) इति। प्रियां कार्मणतनुधारिणीम् इत्यर्थः, किं न चिन्तितं काक्वा न चिन्तितमेव इत्यर्थः। चिन्ता तु इष्टानिष्टपरिणामविचारः॥ अत्र 'सा भुवि' इत्यादौ काव्यलिङ्गं, 'तया विना' इत्यादौ विनोक्तिः, 'किं न चिन्तितं' इत्यत्र काक्वा वक्रोक्तिः; ततः यन्मरणं विवक्षितं तस्यैव, स्वलोकचारुतासम्पादनार्थं त्वया तन्नयनं कृतं इति व्यङ्ग्यार्थोपलब्ध्यै "आत्मस्थानं प्रियां नयता' इति भङ्ग्यन्तरेण उक्तत्वात्, पर्यायोक्तिः; एवं अत्र नाना अलंकाराः॥ अपि च अत्र 'सा भुवि ललामभूता' इति प्रियाप्रशंसया शृङ्गारः, 'तया विना विश्वं शून्यं' इति अद्भुतः, 'किं न चिन्तितं' इति आक्षेपात् वीरः, 'आत्मस्थानं नयता' इति मृत्युबोधात् करुणः, इति नाना रसाः ॥ ] ४८८ ॥ [ उन्मादातिशयेन तस्याः देहहरं अग्निं प्रार्थयते भगवन्निति। भगवन् इति उक्तिः अग्नेः लोकपालत्वात्, तस्य चाटुर्वा। हुतवह अग्ने, स्वस्मिन् हुतं द्रव्यं देवेभ्यो वहतीति हुतवहः, आर्यैः मनुष्यजीवनस्य यज्ञरूपत्वात् जीवनान्ते जीवनसाधनं देहोऽपि अग्नौ एव हूयते, अतः स संस्कारः अन्त्या इष्टिः इति अन्त्येष्टिनाम्ना व्यवह्रियते, तेन च हुतद्रव्यवत् शरीरमपि लोकान्तरं नीयते इति मतिः, अतः 'हुतवह' इति शब्दसम्बोधनं साभिप्रायम्। लावण्यं पूर्वं (आ.१८३) उक्तं, सारं श्रेष्ठभागम्। कथमपि महीयसा प्रयत्नेन। विहितां घटितां निर्मितां, मा धक्ष्यसि इति वर्तमानसामीप्ये भविष्यत्। भूषां भूषणम्॥ अत्र तस्याः दाहप्रतिषेधस्य लावण्यसारमुपादाय धात्रा कष्टोत्पादनेन समर्थनात् काव्यलिङ्गमलंकारः, तेन च भगवन् परमानुचितकारी मा भूः इति अभ्यर्थना द्योत्यते ॥ ] ४८९ ॥ [ इति एवं प्रकारेण, विलपन्तं दुःखजं वचः उदीरयन्तं, बहुविधं गुणस्मरणान्योपालंभदाहनिषेधाद्यनेकप्रकारं; अवधीर्य अविगणय्य अवज्ञाय, सुहृत् गुणपालितः, चिता "देहदाहाय काष्ठानां संचयः साग्निकश्चिता।" इति। ] अग्निसात् अग्न्यधीनां अकरोत् ददाह इत्यर्थः। [ "देये त्रा च" (पा०५।४।५५) इति चकारात् सातिप्रत्ययः। वेश्यानां वर्णान्तःपातित्वाभावात् न अग्निसंस्कारार्ह-

---

४९० °मवधार्य (कापा)। बहुविधगतवीर्यसुहृत्पुरन्दरप्रभवम् (प)

तस्मिन्निद्धहुताशनविनिपतने कृतमतौ शुचाऽऽकुलिते ।
मनसि स्फुरितामार्यां पपाठ कश्चित् प्रसङ्गेन ॥ ४९१ ॥
'अनुमरणे व्यवसायं स्त्रीधर्मे कः करोति सविवेकः ।
संसारमुक्त्युपायं दण्डग्रहणं व्रतं हित्वा ॥' ४९२ ॥

---

ता इति चेत्, न, तासां जातिमत्त्वं प्रबन्धान्ते टीकायां वेश्याजातिविचारे वक्ष्यते इति ॥ ] ४९० ॥ [ तस्मिन् सुन्दरसेने, ] इद्धः प्रदीप्तः, [ हुताशनविनिपतने अग्निप्रवेशे, शुचा शोकेन। मनसि स्फुरितां स्मरणपथं आगताम्। ] ४९१ ॥ [ अनुमरणं तु–भर्तरि मृते तद्देहाप्राप्तौ तत्पादुकादिग्रहणेन पृथक् चितारोहणेन देहत्यागः इति विशिष्टार्थः; अत्र तु सामान्यार्थो ग्राह्यः–प्रियस्य प्रियाया वा मरणं अनु पश्चात् मरणं म्रियते अनेन इति करणार्थे ल्युट् तस्मिन् अग्निप्रवेशविषभक्षणादौ, तेन देहत्यागे वा इत्यर्थः ॥ तच्च स्त्रीधर्म एव, तदनुष्ठात्री च पतिव्रता भण्यते, तदुक्तं– "मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता।" इति। तथा च दशकुमारचरिते (उ०४)–"स्त्रीधर्मश्चैष यददुष्टस्य दुष्टस्य वा भर्तुर्गतिर्गन्तव्येति"। ॥ इति। तथा च कालिदासोक्तिः—"शशिना सह याति कौमुदी, सह मेघेन तडित् प्रलीयते। प्रमदाः पतिवर्त्मगा इति प्रतिपन्नं हि विचेतनैरपि ॥" ( कुमार० ४। ३३ ) इति; एवं माघोऽपि प्रदोषवर्णनसर्गे–"रुचिधाम्नि भर्तरि भृशं विमलाः परलोकमभ्युपगते विविशुः। ज्वलनं त्विषः, कथमिवेतरथा सुलभोऽन्यजन्मनि स एव पतिः ॥" (९। १३) इति। मदालसाचंप्वां अपि–"मृतायां तन्वङ्ग्यां ध्रुवमनुचितं जीवनमिदं, शरीरस्य त्यागः परमनुचितानामनुचितः। प्रशस्यन्ते कान्ता जगति दयितेनानुमरणे, जनाः स्त्रीणामर्थे मृतमुपहसन्तीव पुरुषम् ॥" (४।१११) इति ॥ कादंबर्यां तु महाश्वेताश्वासनप्रघट्टके अनुमरणमात्रस्य अति निष्प्रयोजनत्वं सोदाहरणं प्रतिपादितं तत्रैव द्रष्टव्यम् ॥ इदं सहगमनं अन्वारोहणं वा इत्यपि उच्यते ॥ तस्मिन्, व्यवसायं निश्चयं, सविवेकः युक्तायुक्तदर्शनः। तथा च रघुवंशे तादृशं अजं प्रति वसिष्ठसन्देशे–"रुदता कुत एव सा पुनर्भवता नानुमृताऽपि लभ्यते। परलोकजुषां स्वकर्मभिर्गतयो भिन्नपथा हि देहिनाम् ॥" (८।८५) इति। तथा च "मृतोऽपि मानुषः शक्तो नानुगन्तुं मृतं जनम्। जायावर्जं च सर्वस्य याम्यः पन्था विभिद्यते ॥" इति स्मृतिः। संसारात् भवात्, मुक्तेः मोक्षस्य, उपायं तत्सिद्धौ साधनं। तथा च श्रुतिः–"न कर्मणा न प्रजया न धनेन त्यागेनैके अमृतत्वमानशुः" इति (महानारायणोपनिषदि १०।५।)। दण्डग्रहणं–दण्डं

---

४९१ शुचा कलिते ( गो २. का )

श्रुत्वा सुन्दरसेनः सुहृदमवोचद्व्यपेतवैक्लव्यः।
'प्रतिबोधितं मनो मे धीरेणानेन युक्तमुपदिशता ॥ ४९३ ॥
क्षणदृष्टनष्टवल्लभजन्मजराव्याधिमरणपरिभूते।
परिवर्तिनि संसारे कः कुर्यादाग्रहं मतिमान् ॥ ४९४ ॥

---

चतुर्थाश्रमलिङ्गं, तस्य ग्रहणं यत्र तत् व्रतं संन्यासः, तथा च वायुपुराणे—"चतुर्थमाश्रमं गच्छेत्संन्यस्य विधिना द्विजः। ···दण्डं च वैणवं सौम्यं सत्वचं समपर्वकम्। वेष्टितं कृष्णगोवालरज्ज्वा च चतुरंगुलम् ॥ ग्रन्थिभिश्च त्रिभिर्युक्तं जलपूतेन चोपरि। गृह्णीयाद्दक्षिणे हस्ते मन्त्रेणैव तु धर्मवित् ॥" इति। संन्यासग्रहणविधिषु एको विधिः दण्डग्रहणम्। स तु "इन्द्रस्य वज्रोऽसि वार्त्रघ्नः शर्म मे भव यत्पापं तन्निवारय।" इति दण्डं संप्रार्थ्य "सखा मा गोपाय" इति मन्त्रेण दक्षिणहस्ते दण्डं धारयेत् इति। तच्च "सशिखं वपनं कृत्वा बहिःसूत्रं त्यजेद्बुधः। एकदण्डं गृहीत्वा च भिक्षुधर्मं समाचरेत् ॥" इति स्मृतेः। तत्र सर्वकर्मणां न्याससूचनार्थं शिखासूत्रत्यागः, गोसर्पनिवारणार्थं वाङ्मनःकायनिग्रहसूचनार्थं च दण्डग्रहणं; उक्तं चेदं प्रकारान्तरेण नारायणेन परमहंसोपनिषद्दीपिकायां—"मानसस्य ज्ञानदंडस्य चित्तविक्षेपेण विस्मृतिर्मा भूदिति स्मारकः काष्ठदण्डो ध्रियते।" (३) इति ॥ हित्वा विहाय ] ॥४९२॥
[ तच्छ्रवणेन सुन्दरसेनस्य प्रबोधोत्पत्तिमाह श्रुत्वेति। ] वैक्लव्यं संमोहः [ धैर्यशैथिल्यं वा, व्यपेतवैक्लव्यः अविह्वलः स्थिरचित्तः। युक्तं कर्तव्यं इत्यर्थः ॥ तथाहि कालिदासः—"अवगच्छति मूढचेतनः प्रियनाशं हृदि शल्यमर्पितम्। स्थिरधीस्तु तदेव मन्यते कुशलद्वारतया समुद्धृतम् ॥" (रघु० ८।८८) इति ॥ ] ४९३ ॥
"संसारदोषमवधारयतो यथावद्वैराग्यमुद्भवति चेतसि निष्प्रकम्पम्।" इत्युक्तेः तस्य वैराग्यगर्भं अनुतापं शमप्रकर्षं च आह क्षणेति। क्षणे एव, "अष्टादश निमेषास्तु काष्ठा, त्रिंशत्तु ताः कला। तास्तु त्रिंशत् क्षणः," इति अमरः, अल्पकालेन इत्यर्थः; आदौ दृष्टः पश्चात् नष्टः अदर्शनं गतः इति यावत्, वल्लभः प्रियजनः चासौ जन्मादिना ] परिभूतः आक्रान्तः [ च व्यक्तमध्यः तस्मिन्, तथा च श्रीआत्मपुराणे—"इमाः प्रियतमा रामाः पुत्रपौत्रादयोऽपि च। आयुर्भूमिर्महाराज्यं हस्त्यश्वकनकादयः ॥ (९।२०७) अद्य नासन्, पुनः श्वस्ते भवितारः, परेऽहनि। न भविष्यन्ति, तेनामी यम कष्टतमाः स्मृताः ॥" (२०८) इति। जन्म जनिः। जरा वृद्धावस्था, यथा—"रूपस्य हन्त्री, व्यसनं बलस्य, शोकस्य योनिर्निधनं रतीनाम्। नाशः स्मृतीनां, रिपुरिन्द्रियाणा-

---

४९४ आवर्तिनि (प)। ० ग्रहं सुमतिः (प)

**यातु भवान् कुसुमपुरं, वयमप्यन्त्याश्रमे समाश्रयणम् ।**
**अङ्गीकुर्मोऽविद्याप्रहाणसंसिद्धये नियतम् ॥' ४९५ ॥**

---

मेत्रा जरा नाम, ययैष भग्नः ॥" ( ३।३० ) इति बुद्धचरितकाव्ये ॥ व्याधिः रोगः, यथा-" रोगाभिधानः सुमहाननर्थः शक्रोऽपि येनैष कृतोऽस्वतन्त्रः । " ( ३ । ४२ ) इति तत्रैव । मरणं मृत्युः; तदुक्तं-" अद्यैव हसितं गीतं पठितं यैः शरीरिभिः । अद्यैव ते न दृश्यन्ते कष्टं कालस्य चेष्टितम् ॥ " इति, तथा " व्याघ्रीव तिष्ठति जरा परितर्जयन्ती, रोगाश्च शत्रव इव प्रहरन्ति देहम् । आयुः परिस्रवति भिन्नघटादिवाम्भो लोकस्तथाप्यहितमाचरतीति चित्रम् ॥ " इति भर्तृहरिकृतवैराग्यशतके । परिवर्तिनि विवर्तनशीले नैकरूपिणि, यद्वा जन्मादीनां चक्रपरिवर्तनवत् क्रमेण पौनःपुन्येन प्रापके, यदुक्तं-" पुनरपि जननं पुनरपि मरणं पुनरपि जननीजठरे शयनम् । " इति चर्पटपञ्जरिकास्तोत्रे । आग्रहं आसक्तिं; मतिमान् मननशीलः विवेकी इति यावत्, यद्वा " तत्त्वमार्गानुसंधानादर्थनिर्धारणं मतिः । " तद्वान् ज्ञानवान्, तदुक्तं भगवद्गीतासु-" इन्द्रियार्थेषु वैराग्यमनहंकार एव च । जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ ( १३।९ )···एतज्ज्ञानमिति प्रोक्तं " ( १३।१२ ) इति । विषयविरागहेतुकः शान्तोऽत्र रसः । ] ४९४ ॥ [ एवं बुद्धः वैराग्यमात्रकारणकसंन्यासांगीकरणरूपां स्वमनीषां बोधयन् मित्रं प्रत्यावर्तितुं प्रार्थयते यातु इति । भवान् इति बहुमानेन ताटस्थ्येन उक्तिः । अन्त्याश्रमः "विरक्तः संन्यसेद्द्विजः" इति अङ्गिरःस्मृतेः क्रमेण आश्रयणीयेषु ब्रह्मचर्यगार्हस्थ्यवानप्रस्थसंन्यासाख्यचतुर्विधाश्रमेषु अन्त्यं संन्यासाश्रमं मोक्षसाधनम् ॥ अविद्या-जीवजगद्ब्रह्मस्वरूपाणां तत्त्वाग्रहणरूपा, तथा चोक्तं नैष्कर्म्यसिद्धौ-" ऐकात्म्याप्रतिपत्तिर्या स्वात्मानुभवसंश्रया । साऽविद्या संसृतेर्बीजं, तन्नाशो मुक्तिरात्मनः ॥ " (१।६) इति; यद्वा अविद्यादिषु पञ्चसु क्लेशेषु आत्मनो मूलोच्छेदहेतुत्वात् शत्रुभूतेषु एकः । सा च चतुर्विधा-अनित्येषु नित्यत्वबुद्धिः, अशुचिषु शुचिताबुद्धिः, दुःखे तत्साधने च सुखतत्साधनत्वबुद्धिः, अनात्मनि आत्मत्वबुद्धिः इति । तस्याः, प्रहाणस्य नाशस्य, संसिद्धये सम्यक् निर्वर्तनाय; तदुक्तं श्रीशङ्कराचार्यैः-" अनात्मभूते देहादावात्मबुद्धिस्तु देहिनाम् । साऽविद्या, तत्कृतो बन्धस्तन्नाशो मोक्ष उच्यते ॥ " इति । अविद्यानाशः परमानन्दप्राप्तेः उपलक्षणं, तथाहि वेदान्तानां फलद्वयं-अविद्यामूलकसर्वानर्थनिवृत्तिः परमानन्दप्राप्तिश्च, यत् मोक्ष इत्यभिधीयते ॥ तथा चोक्तं आत्मपुराणे-" अमृतत्वं हि मोक्षः स्यान्मोक्षो देहाद्यभावतः । अज्ञानस्य

---

४९५ प्यन्त्याश्रमे ( प )

सोऽवददभिजातजनो 'बाल्यात्प्रभृति त्वया न मुक्तोऽस्मि ।
संन्यसनबुद्धिरधुना कथमुज्झसि विषयनिःस्पृहं सुहृदम्' ॥४९६॥
"एवमि'ति सोऽभिधाय स्थिरमतिनियमैस्तपोधनैर्जुष्टम् ।
गुणपालितेन सहितः सुन्दरसेनो जगाम वनम् ॥ ४९७ ॥"
एवं, भवन्ति वेश्याः स्वार्थैकरता व्यपेतसद्भावाः ।
अभिलषितविषयसिद्धेः का हानिस्तदपि युष्माकम् ॥ ४९८ ॥

---

विनाशः स्यादात्मानन्दावबोधतः ॥" (७।२००) इति ॥ प्रियतमात्यन्तिकवियोगकारणकोऽत्र संन्यासः ॥ ] ४९५ ॥ अभिजातः कुलीनः सत्प्रकृतिः [ चासौ जनश्च अभिजातजनः, सः गुणपालितः । " अभिजातः स्मृतो न्याय्ये कुलीनप्राप्तरूपयोः ।" इति विश्वः । आबाल्यमित्रं विषयोपभोगलालसाशून्यं समानशीलव्यसनं मां सुहृदं, " दुःखे विपदि संमोहे कार्यकालात्ययेऽपि च । हितान्वेषी च हितकृद्यः सुहृत्सोऽभिधीयते ॥" इति भावप्रकाशे लक्षितं, परिवित्रजिषुः त्वं कथं त्यजसि, काक्वा त्यक्तुं नार्हसि इत्यर्थः । तथा चोक्तं—"अहितात्प्रतिषेधश्चहिते चानुप्रवर्तनम् । व्यसने चापरित्यागस्त्रिविधं मित्रलक्षणम् ॥" (४।६४) इति बुद्धचरितकाव्ये । इदं च सुष्ठु निर्व्यूढं यथार्थनाम्ना गुणपालितेन आदौ सुहृदः सुन्दरसेनस्य हारलतादर्शने गणिकासक्तिं प्रतिषेधयता, मध्ये पितुरुपालंभसन्देशप्राप्तौ गणिकात्यागे तं प्रवर्तयता, अन्ते निःसारसंसारत्यागे च तं अपरित्यजता ॥ ] ४९६ ॥ [ आख्यानकं उपसंहरति एवमिति । एवं इति अङ्गीकारे, त्वदभिमतं मयाऽनुमन्यते इत्यर्थः । स्थिरा दृढा, मतिः तत्त्वबुद्धिः, नियमाश्च येषां तैः; नियमास्तु शरीरातिरिक्तदेशकालादिसाधनापेक्षाः सन्ध्योपासनजपादयः, "शरीरसाधनापेक्षं नित्यं यत्कर्म तद्यमः । नियमस्तु स यत्कर्मानित्यमागन्तुसाधनम् ॥" इति अमरः; यद्वा पातञ्जलयोगसूत्रोक्ताः पञ्च "शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः ॥" (२।३२) इति ॥ तपोधनैः विषयविमुखैः शीतातपादिसहिष्णुभिः मुनिभिः, धनशब्देन तपसः समग्रसाधनधुरीणत्वं सूचितम् । ] जुष्टं सेवितम् । [ गुणपालितेन " मित्रं तदेव न जहाति सुखेऽतिदुःखे ।" ( बिल्हणकाव्ये १३९ ) इत्युक्तिं सार्थयता ॥ अनेन हारलतोपाख्यानेन विषयेषु दृढानुरागोऽपि भर्तृहर्यादिरिव कश्चित् निर्वेदादिद्वारा वैराग्यफलको भूत्वा भवसागरतरणोपायो भवतीति बोधितम् ] ॥ ४९७ ॥ [ एवं हारलतोपाख्यानं

---

४९६ जने ( कापा )। त्वयाऽस्मि न वियुक्तः (प)। सन्न्यसनबुद्धिमधुना (प)। मुञ्जति ( प. का )। सुन्दरः ( प ) ४९७ स्थितवति नियमैस्त० ( प )। मित्रेण तेन सहितः ( प )। ( हारलतोपाख्यानम् ) (प)। ४९८ भवंतु ( प )। स्वार्थैकदृशो ( प )

**रमणहृदयानुवर्तनचतुरचतुःषष्टिकर्मकुशलानाम् ।**
**न स्पृशति तत्त्वचर्चा पण्यवधूनां विदग्धचेतांसि ॥ ४९९ ॥**

---

समाप्य तच्छ्रवणजनितनायकभावं स्थूणानिखननन्यानेन दृढीकर्तुं तत्प्रयोज्यां वाचोयुक्तिं विकराला मालतीं उपदिशति एवमित्यादि चतुर्दशभिरार्याभिः । ] [ स्वार्थैकरताः स्वलाभैकदृष्टयः । व्यपेतसद्भावाः रागरहिताः, " कामिताख्येन भावेन भाव्यमानता भावः " इति जयमङ्गलः, स एव शोभनः–सद्भावः रागः । ] एवमित्यादि–एवमपि क्वचिदुपलब्धौ, प्रायस्ताः [ वेश्याः ] स्वार्थैकप्रवणाः [ रागरहिताः ] एव भवन्ति इति स्वीक्रियतां नाम, तथापि [ युष्माकं मनोरञ्जनैकार्थिनां पुरुषाणां तासां भावविहीनत्वेऽपि का हानिः, काक्वा ] न हानिः [ इति भावः ] । [ तत्र हेतुं दर्शयति अभिलषितविषय-सिद्धेः इति; पुरुषाणां अभिलषितः इच्छाविषयीकृतः, यः विषयः सौन्दर्याद्युपभोगः वरस्त्रीविलासादिजन्यविषयानन्दः वा, तस्य सिद्धेः प्राप्त्या, हेतौ पञ्चमी ॥ ] ४९८ ॥
[ तदेव समर्थयति रमणेति । रमणः कामुकः, तस्य हृदयं चित्तं मनोगतभावः, तस्य अनुवर्तनं आनुकूल्येन स्वस्य प्रवर्तनं, तस्मिन् चतुराः प्रवीणाः; चतुःषष्टिकर्मकुशलाश्च, तासां तादृशीनां, यद्वा रमणहृदयानुवर्तने चतुराणि पेशलानि यानि चतुःषष्टिकर्माणि आलिंगनादीनि तेषु कुशलानां प्रवीणानां; पण्यवधूनां पण्येन मूल्येन लभ्या प्राप्या वधूः पत्नी पण्यवधूः गणिका, तासां, तत्त्वचर्चा–सा रागवती न वा, तत्स्नेहः परमार्थो माया वा, तत्प्रवृत्तिः रागात् वा लाभात् वा इत्यादीनां निर्णयपरा विचारणा सत्यत्वास-त्यत्वविचारणा; विदग्धचेतांसि चतुरजनमनांसि, न स्पृशति; स्वरञ्जनैकदृष्टयः ते तत्साधनगुणौचित्यचिन्तापरायणा न भवन्तीति सर्वेषामनुभवगोचरमेव इति भावः । ]
[ चतुःषष्टिशब्देन कामसूत्रस्य अवयवभूताः कलेत्यपराख्याः गीताद्यंगविद्याः पाञ्चा-लिकी चापरा लक्ष्यते; प्रकृते तु कर्मेति विशेष्यपदेन पाञ्चालेन बाभ्रव्येण स्वप्रणी-तकामशास्त्रे वात्स्यायनीये च सांप्रयोगिकाधिकरणे प्रपञ्चितानि सभेदानि आलिङ्गनादीनि ६४ कर्माणि रागसंदीपनानि बोध्यानि । तानि च ' पाञ्चालिकी चतुःषष्टिः ' इति प्रसिद्धानि ' नन्दिनी ' इत्येकपदवाच्यानि च । यथाह वात्स्यायनः–" आलिङ्गन–चु-म्बन–नखच्छेद्य–दशनच्छेद्य–संवेशन–सीत्कृत–पुरुषायितौपरिष्टकानामष्टानामष्टधा वि-कल्पभेदादष्टावष्टकाश्चतुःषष्टिरिति बाभ्रवीयाः । " इति ( कामसूत्रे २। २ ) । तथा " नंदिनी सुभगा सिद्धा सुभगंकरणीति च । नारीप्रियेति चाचार्यैः शास्त्रेष्वेषा निरुच्यते ॥ कन्याभिः परयोषिद्भिः गणिकाभिश्च भावतः । लक्ष्यते बहुमानेन चतुःषष्टि-विचक्षणः ॥" इति तत्रैव उद्धृतप्राचीनश्लोकानुसारेण यथा एतच्चतुःषष्टिविज्ञः नारीणां

वलितप्लुतचित्रगतिस्थितिबोधैश्चोदनानुवृत्त्या च ।
रागस्पर्शेन विना विशति मनः सादिनां तुरगः ॥ ५०० ॥
गन्धोऽपि कुतः प्रेम्णः परभृतहारीतगृहकपोतानाम् ।
उज्ज्वलयन्त्यसमेषुं विरुतविशेषैस्तथापि ते यूनाम् ॥ ५०१ ॥

बहुमतो भवति, तथैव तद्विज्ञा नायिकाऽपि तत्प्रयोगचातुर्यात् पुरुषाणां हृद्या पूज्या च भवतीति बोध्यम् ॥ ] ४९९ ॥ [ उक्ततत्त्वचर्चानैष्फल्यं समर्थयितुं, रागो वा लाभो वा प्रवृत्तौ कारणं इति सामान्येन स्थितौ अपि, न किमपि तत्त्वतः वक्तुं शक्यते इति प्रतिपादयितुं, प्रथमं पूर्वोक्तस्य ( ४९८ ) सद्भावस्य रञ्जने अकारणत्वं, उत्तरोत्तरं पशुपक्षिमनुष्याणां त्रिभिः दृष्टान्तैर्दृढीकरोति वलितेति त्रिभिः आर्याभिः । रागस्पर्शेन विना स्वस्य रागरहितत्वेऽपि, चः त्वर्थकः, तुरगः तुरं त्वरितं गच्छतीति अश्वः, सादिनां अश्वारोहाणां, मनः विशति चित्तं गृह्णाति तद्रञ्जनं करोतीत्यर्थः । कथमित्याह— चोदनानुवृत्त्या कशाताडनरश्मिचालनादिना यत् सादिकर्तृकं चोदनं प्रेरणा, तस्य अनुवृत्त्या अनुसरणेन, वल्गितादिगतिविशेषाणां, स्थितेः अवस्थानस्य च, बोधैः ज्ञानैः— कार्यकारणयोरभेदेन कार्ये कारणोपचारेण वा तत्तद्बोधपूर्वककृतिभिः इत्यर्थः ॥ वल्गितादयः अश्वानां गतिविशेषाः, तत्र वल्गितं वेगेन विक्षिप्तोपरिचरणं गमनम् । प्लुतं तु पञ्चसु धारासंज्ञकेषु अश्वगतिविशेषेषु एकं, तत्तु " पूर्वापरोन्नमनतः क्रमादारोहणं प्लुतम् ।" इति—" त्वरया साम्येन ( झम्पेन ? ) गतिः प्लुतं, प्लवतेः क्तः, 'पर' इति ख्यातम् ।" इति अमरटीकायां सर्वानन्दः, " प्लुतं तु लंघनं पक्षि-मृगगत्यनुहारकम् ।" इति हैमः, शशगतिवत् तत् ; " चतुष्पादा प्लुता स्मृता " इति अश्ववैद्यके ; इयं पुला-पुलका-पुलना-प्लुतादिनामभिः ख्याता । तल्लक्षणं तु हयलीला-वत्यां—"प्लुतां प्लवङ्गितामाहुर्या धारा पुलनाभिधा ॥ क्षिपति समविशेषानुक्षिपत्यग्रपादान्, प्रसरति पुरतोऽश्वः साऽथ धारा पुलाख्या ॥" इति । चित्रं तु विलक्षणं मनोहारि गमनम् ॥ ] ५०० ॥ [ अपरं पक्षिविषयकं दृष्टान्तमाह गन्ध इति । गन्धः लेशः, " गन्धो गन्धकसम्बन्धलेशेष्वामोदगर्वयोः ।" इति विश्वलोचने । परभृतः परैः काकैः भृतः पुष्टः कोकिलः, गृहकपोतः गृहे पालितः कपोतः पारावतः 'पारेवा' 'कबुतर' वा इति लोके ख्यातः । उज्ज्वलयन्ति उद्दीपयन्ति । असमेषुः असमाः पञ्चत्वात् विषमसङ्ख्याका इषवः बाणा यस्य सः कामः । विरुतं कूजितम् । युवविषये रागाभावेऽपि परभृतादयः पक्षिणो विरुतैः माधुर्यात् सादृश्येन वा स्मारितप्रियासी-

५०० स्मरवलितप्लुतचित्रगतिस्थितिवेगैः (प) । निशितेतरसादिनां तुरगः ( प )

आहितमुक्ताहार्यैः सम्यक्सकलप्रयोगनिष्पत्त्या ।
भावविहीनोऽपि नटः सामाजिकचित्तरञ्जनं कुरुते ॥ ५०२ ॥
येऽपि धनक्षयदोषं पश्यन्ति जडा विलासिनीश्लेषे ।
प्रष्टव्यास्ते भवता किमकृतकशिपुन्यया दाराः ॥ ५०३ ॥

---

त्कृतत्वात् यूनां कामोद्दीपनं कुर्वन्त्येव इति भावः । अत्र प्रेमरहितत्वेऽपि कोकिलादीनां युवसु तज्जनकत्वात् विभावनाच्छाया, एवं कार्यहेत्वोर्भिन्नदेशत्वेन असङ्गतिच्छायाऽपि ॥ ] ५०१ ॥ [ मनुष्येषु अपि इयमेव स्थितिः इति दर्शयितुं तद्दृष्टान्तमाह आहितेति । आदौ आहितः स्थापितः गृहीतः, पश्चात् मुक्तः दूरीकृतश्च, आहार्यः नेपथ्यजो विधिः येन सः,—आहितमुक्ताहार्यः । आहार्यः तु आङ्गिक-वाचिक-आहार्य—सात्त्विकाख्येषु अभिनयेषु एकः, "आहार्याभिनयो नाम ज्ञेयो नेपथ्यजो विधिः ।" (२१।२) इति भरतः; तन्नेपथ्यं तु चतुर्विधं-पुस्तं अलंकारः अङ्गरचना सजीव इति भेदैः; तेषामपि बहव उपभेदा भारतीयनाट्यशास्त्रे ( २१ अ० ), तैः निर्वर्तितः वेशालंकारवस्त्रवर्णादिरचनः । सम्यक् यथातत्त्वं यथावस्तु, सकलस्य सम्पूर्णस्य अङ्गोपाङ्गोपेतस्य प्रयोगस्य अभिनयस्य निष्पत्त्या सिद्ध्या । भावविहीनः अनुरागरहितः । भावस्तु रसानुकूलः शरीरजो मानसो वा विकारः, स च बहुविधः, ते च रत्यादयः अष्ट स्थायिभावाः, निर्वेदादयः त्रयस्त्रिंशद् व्यभिचारिणः, स्तम्भादयः अष्ट सात्त्विकाः भावाः; तथा चोक्तं दशरूपके—"ये सत्त्वजाः स्थायिन एव चाष्टौ, त्रिंशत्त्रयो ये व्यभिचारिणश्च । एकोनपञ्चाशदमी हि भावा युक्त्या निबद्धाः परिपोषयन्ति ॥" इति । तेषु स्थायिभावाः रसोत्पादकत्वात् अन्यभावाश्रयत्वाच्च स्वामिन इव, अन्ये तु तत्परिजनतुल्याः ॥ नटः रङ्गावतारी अनुकार्यानुकरणकर्ता, "नट इति धात्वर्थभूतं नाटयति लोकवृत्तान्तम् । रसभावसत्त्वयुक्तं यस्मात्तस्मान्नटो भवति ॥" (?) ( ३५ । २७ ) इति भरतः ॥ सामाजिकानां नाट्यप्रेक्षकाणां, ते च "ये तुष्टौ तुष्टिमायान्ति शोके शोकं व्रजन्ति च । दैन्ये दीनत्वमायान्ति गुणग्रहणतत्पराः ॥ व्यक्तरोषानुरागाश्च ते नाट्ये प्रेक्षका मताः ॥" इति भरतेनोक्ताः, तेषां चित्तरञ्जनं मनोविनोदं कुरुते । स्वस्मिन् सामाजिकान् उद्दिश्य भावाभावेऽपि यथा नटः सामाजिकानां चित्तरञ्जनं आहार्याद्यभिनयैः कुरुते, तथा वेश्यायां रागाभावस्वीकारेऽपि सा विलासैः विदग्धान् रञ्जयत्येव इति भावः ॥ ] ५०२ ॥ [ एवं रागविषयकं विचारं प्रतिषिध्य तासां पूर्वोक्तं ( ४९८ ) लाभप्रवृत्तिदोषं

---

५०२ आहितयुक्त्याहार्यैः ( प ) युक्ताहार्यैः ( कापा ) । प्रयोगसंपत्त्या ( गो. का ) ५०३ दोषं प्रवदन्ति ( प )

न च लाभ एक एव प्रवर्तने कारणं मनुष्येषु ।
रागादयोऽपि सन्ति वैशिकशास्त्रप्रणेतृभिः कथिताः ॥ ५०४ ॥
का वा विभूतिराप्ता सुन्दरसेनात्तया तपस्विन्या ।
यद्विरहकुलिशभिन्ना मुमोच सा जीवितं क्षणार्धेन ॥ ५०५ ॥

निवारयति ये इति । ये जडाः अज्ञाः मूर्खाः, उक्तं च—" इष्टं वाऽनिष्टं वा सुखदुःखं वा (सुखमन्यद्वा?) न वेत्ति यो मोहात् । परवशगः स भवेदिह जडसंज्ञकः पुरुषः ॥" इति । विलासिनी—भ्रूनेत्रचेष्टादीनां विशेषाः विलासाः, ते अस्याः सन्ति सा विलासिनी—प्रकृते वेश्या, तस्याः, श्लेषे सन्धाने संयोगे आलिङ्गने वा, द्रव्यनाशरूपं दोषं पश्यन्ति, यथोक्तं—"वेश्याऽसौ मदनज्वाला रूपेन्धनसमेधिता। कामिभिर्यत्र हूयन्ते यौवनानि धनानि च ॥" इति, तथा "हारहीरकहिरण्यभूषणैस्तोषमेति गणिका धनैषिणी ।" इति च । ते, भवता तत्त्वज्ञानार्थं इदं प्रष्टव्याः--किमित्यादि प्रश्नाकारः । ] कशिपु अन्नं आच्छादनं च, [ तस्य व्ययः क्षयः न कृतो याभिः तादृश्यः दाराः धर्मपत्नी, किमित्यादि काकुगर्भा उक्तिः, किम् इति आक्षेपगर्भं पदं, तेन तासु अपि धनक्षयो भवति एव इति प्राप्यते । अतः धनक्षयदोषः न गणिकां एव स्पृशति इति भावः ॥ ] ॥ ५०३ ॥ [ एवं परहृदयरञ्जने अपररागस्य अकिञ्चित्करत्वेऽपि अपरस्य प्रवृत्तौ क्वचित् लाभः क्वचित् रागो वा कारणं प्रसिद्धमेव इति निरूपयति न चेति । प्रवर्तने तत्तत्कर्मसु प्रवृत्तिः । रागः अनुरागः प्रीतिः आसक्तिः । वैशिकशास्त्रं—वैशिकपुरुषसम्बद्धं शास्त्रं कामशास्त्रादि । तथाहि तं अधिकृत्य नाट्यशास्त्रे वैशिकाध्याये ( २३ ) भरतः— " विशेषयेत्कलाः सर्वा यस्मात्तस्मात्तु वैशिकः । ( २ ) वेश्योपचरणाद्वापि वैशिकः स उदाहृतः ॥ १ ॥ ( ३ ) यस्तुतौर्यक(कु?)लोपेतः सर्वशिल्पप्रयोजकः । स्त्रीचित्तग्राहकश्चैव वैशिकः स भवेत्पुमान् ॥ २ ॥ " इति । स च त्रयस्त्रिंशद्गुणोपेतः । वैशिकशास्त्रप्रणेतारः दत्तकविशाखिलवात्स्यायनादयः ॥ अत्र 'वैशेषिकशास्त्रवेदिभिः' इति पाठः अज्ञानकल्पितः अस्वच्छः यतः प्रकृतानुपयोगी ॥ 'सन्ति च वैशिक०' इति पाठः मात्रासंपूरणार्थं भवितुं युक्तः ॥ ] ५०४ ॥ [ प्रस्तुते समनन्तरोक्तहारलतोपाख्यानवृत्तं एव दृष्टान्तेन अनुसंदधाति केति । वा वितर्के, " वा स्याद्विकल्पोपमयोर्वितर्के पादपूरणे । समुच्चये च " इति मेदिनी । विभूतिः द्रव्यादिसम्पत्तिः । आप्ता त्वयैव उच्यतां इति शेषः ॥ ] तपस्विनी अनुकंप्या । [ यस्य विरह एव कुलिशं वज्रं, तेन भिन्ना विदारिता । ] ॥ ५०५ ॥

५०४ प्रवर्तते (प. का) तनाक्षरयोर्लिपिसंभ्रमादयं पाठ उत्पन्न इति भाति । वैशेषिकशास्त्रवेदिभिः ( का. अपपाठः )। कथितं ( का पा ) ५०५ मुमोच या ( प. का )

उत्तमतरुणप्रकृतिः पुलकादिकसूचितान्यतरशक्तिः ।
स्फुटसन्निहितविभावो निवार्यते केन शृङ्गारः ॥ ५०६ ॥
अन्तःकरणविकारं गुरुपरिजनसङ्कटेऽपि कुलटानाम् ।
जानन्ति तदभियुक्ता भ्रूभङ्गापाङ्गमधुरदृष्टेन ॥ ५०७ ॥

[एवं पक्षेण कादाचित्कीं रागप्रवृत्तिं प्रतिष्ठाप्य, इतः पङ्क्तिः वस्तुतः स्वीयादि–त्रिविधानामेव नायिकानां प्रवृत्तिः रागतन्त्रा एव इति वेश्यासु रागाभावशङ्का न कर्तव्येति व्यञ्जयन्ती प्रपञ्चयति उत्तमेत्यादिभिः । तत्रादौ रत्यात्मकस्य शृङ्गारस्य लोकसिद्धं अनपह्नोयत्वं अगोपनीयत्वं अप्रतिषेध्यत्वं वा अनुवदति उत्तमेति । उत्तमः तरुणः युवा उत्तमा तरुणी युवती च उत्तमतरुणौ, तौ प्रकृतिः कारणं यस्य सः शृङ्गारः, एतेन जुगुप्सारहितत्वात् सः ' शुचिः ' इत्यपि उच्यते । शृङ्गारलक्षणं च–" रम्यदेशकलाकालवेषभोगादिसेवनैः । प्रमोदात्मा रतिः सैव यूनोरन्योन्यसक्तयोः ॥ प्रकृष्यमाणः शृङ्गारो मधुरांगविचेष्टितैः ।" इति दशरूपके ( ४।४८ ) । यथा वा काव्यालंकारे–"व्यवहारः पुंनार्योरन्योन्यं रक्तयोः रतिप्रकृतिः । शृङ्गारः" ( १२।५ ) इति । तथा ] पुलकः रोमाञ्चः, [ आदिना अन्ये स्तम्भादयः सप्त सात्त्विका भावा ग्राह्याः, तैः सूचिता व्यक्ताव्यक्ततया प्रकाशिता, अन्यतरा अपरा सामान्यव्यतिरिक्ता असामान्या इत्यर्थः, शक्तिः वीर्यं प्रभावः यस्य सः; तथा स्फुटाः सुव्यक्ताः, संनिहिता समीपगाः न दूरवर्तिनः, विभावाः यस्य सः तादृशः, विभावास्तु विशेषेण भावयन्ति रसं उत्पादयन्ति ये ते, ते च आलम्बनाः उद्दीपनाः इति द्विविधाः, तत्र यमालम्ब्य रस उत्पद्यते स आलम्बनविभावः, यः रसं उद्दीपयति स उद्दीपनविभावः, प्रकृते नायकः नायिका च आलम्बनविभावौ, स्त्रीविलासचन्द्रोदयवसन्तर्तुमद्यपाननृत्यादयः उद्दीपनविभावाः । तेषां अभावे दूरवर्तित्वे वा न शृङ्गाररसोत्पत्तिः, एतद्द्योतकौ स्फुटसंनिहितविशेषणौ । तादृशः शृङ्गारः–नवसु रसेषु शृङ्गं प्राधान्यं इयर्ति गच्छति इति शृङ्गारः आद्यो रसः, यथोक्तं ध्वनिकारेण–" शृंगार एव ' मधुरः ' परप्रह्लादनो रसः । " ( २।८ ) इति, यः रतिस्थायिभावकः, कान्ताद्यालम्बनः, स्रक्चन्दनाद्युद्दीपितः, कटाक्षाद्यनुभावितः, व्रीडादिसञ्चारितश्च रसः; केन निवार्यते प्रतिषिध्यते, आक्षेपेण न केनापि तत्प्रकाशो बाध्यः इत्यर्थः । अतः स उच्चैः उत्कर्षेण वा ज्वलति प्रकाशते इति ' उज्ज्वलः ' इत्यपि उच्यते; तथा च अमरः–"शृङ्गारः शुचिरुज्ज्वलः ।" इति । ] ॥ ५०६ ॥

[ स्त्रीपुंसरत्यात्मकस्य शृंगारस्य प्राबल्यं विवृणोति अन्तःकरणेत्यादिभिः पञ्चभिः ।

५०६ तान्यतनु (प) । विचार्यते (प) (लिपिसंभ्रमजोऽयं पाठः) ५०७ बुध्यन्ति तद० ( प. कापा )

तत्रादौ रागज्ञानं आह अन्तरिति। कुलटा—कुलात् कुलान्तरं व्यभिचारार्थं अटति गच्छति भ्रमति वा इति पांसुला असती व्यभिचारिणी—तासां अन्तःकरणस्य हृदयस्य, विकारं विविधां विरुद्धां वा कृतिं विकृतिं भावं इति यावत्, गुरवः श्वशुरादयः ज्येष्ठाः, परिजना नियतसंनिधिवर्तिनः सेवकादयः, तैः सङ्कटे संबाधे संकीर्णतायां अपि; तदभियुक्ताः तासु रक्ताः तत्कामुका इति यावत्, यद्वा तस्मिन् अभियुक्ताः तत्कोविदाः; तासां भ्रूभङ्गः आरेचितादिकं भ्रूचेष्टितं, तद्युक्तं अपाङ्गे नेत्रप्रान्ते, मधुरं मनोहारि, यत् दृष्टं दर्शनं तेन—सभ्रूविलासकटाक्षावलोकितेन, स्निग्धदृष्टिना इति यावत्। अत्र भ्रूभङ्ग इत्यनेन उत्क्षेपादिसप्तभ्रूकर्मसु चतुरं निकुञ्चितं वा भ्रूव्यापारः उद्दिष्टः; तल्लक्षणादिकं भरते यथा—"चतुरं किञ्चिदुच्छ्वासान्मधुराश्रयता भ्रुवोः ॥ (८ । ११५) एकस्या उभयोर्वाऽपि मृदुभङ्गो निकुञ्चितः ॥" इति। "शृङ्गारे ललिते सौम्ये स्पर्शे च चतुरं भवेत् ॥ (८ । १२०) मोट्टायिते कुट्टमिते विलासे किलकिञ्चिते। निकुञ्चितं तु कर्तव्यम् ।" इति च ॥ अपाङ्गः अपाङ्गति तिर्यक् चलति नेत्रं यत्र सः नेत्रप्रान्तः। अपाङ्गदर्शनं कटाक्षः, "अपाङ्गे तारविक्षेपः कटाक्ष इति कथ्यते" इत्युक्तेः, (तारः तारा कनीनिका।) तल्लक्षणं सङ्गीतरत्नाकरे—"यद्गतागतविश्रान्तिवैचित्र्येण विवर्तनम्। तारकायाः कलाभिज्ञास्तं कटाक्षं प्रचक्षते ॥" (७ । ३८६) इति; अनेन कान्ताख्या शृङ्गाररसदृष्टिः लक्षिता, तथा च तत्रैव—"आपिबन्तीव दृश्यं या सविकासाऽतिनिर्मला। सभ्रूक्षेपकटाक्षा सा कान्ता मन्मथवर्धिनी ॥" (७ । ३८५) इति; भरतोऽपि—"हर्षप्रसादजनितकोपामर्षसमन्मथा। सभ्रूक्षेपकटाक्षा च शृङ्गारे दृष्टिरिष्यते ॥" (८ । ४४) इति। यद्वा एतद्दृष्टिमूलभूता स्निग्धाख्या स्थायिदृष्टिः (स्थायिभावव्यञ्जिका दृष्टिः) उक्ता, तथा च संगीतरत्नाकरे—"विकासि(स?)स्निग्धा(ग्ध?)मधुरा चतुरे बिभ्रती भ्रुवौ। कटाक्षिणी साभिलाषा दृष्टिः स्निग्धाऽभिधीयते ॥ अत्रैकभ्रूसमुत्क्षेपमाहुः कीर्तिधरादयः ॥"(७।३९८) इति; (अत्र चतुरे भ्रुवौ इति पूर्वोक्तचतुराख्यव्यापारविशेषवत्यौ भ्रुवौ।) एवं भरतोऽपि—"व्याकोशा स्नेहमधुरा स्मितपूर्वाऽभिलाषिणी। अपाङ्गभ्रूकृता दृष्टिः स्निग्धेयं रतिभावजा ॥" (८।५३) इति; (व्याकोशा प्रफुल्ला, समन्मथविकासा) ॥ जानन्ति अवगच्छन्ति ॥ यथोक्तं—"स्वभावमधुराः स्निग्धाः ('वक्राः') शंसन्त्यो रागमुल्बणम्। दृशो दूत्यश्च कर्षन्ति कान्ताभिः प्रेषिताः प्रियान् ॥" (काव्यादर्शे २।३१६) इति। प्रकृतार्थसदृशी कस्याश्चिदुक्तिरपि—"यद्यपि गुरुजनपुरतः सततं विनिवार्यते ह्रिया चक्षुः। प्रियमुखदर्शनलुब्धं तदपि सलीलं बलाद्वलति ॥" इति ॥ "चक्षुःप्रीतिर्मनःसंगः" इत्यादिषोडशसंयोगशृंगाराणां मध्ये चक्षुःप्रीतेरेवाद्यत्वात् कटाक्षस्य अत्र ग्रहणम् ॥ मानसिको रतिभावः मधुरैः भाषणनेत्रादिविकाररूपवाक्कायव्यापारैः व्यङ्ग्यः अनपह्नव एव इति

अन्या विहाय पतिगृहमविचिन्तितकुलकलङ्कजनगर्हाः ।
रागोपरक्तहृदया यान्ति दिगन्तं मनुष्यमासाद्य ॥ ५०८ ॥
अपमानः पतिविहितो गुरुपरिकरतीव्रता गृहे दौःस्थ्यम् ।
शीलक्षतये यासां तासामतिरागतोऽन्यनरसक्तिः ॥ ५०९ ॥
या अप्यचलितवृत्ता भर्तुः परिचरणतत्पराः प्रमदाः ।
ता अपि रागवियुक्तास्तिष्ठन्त्यौचित्यमात्रेण ॥ ५१० ॥

---

भावः ॥ ] ५०७ ॥ [ यत् काश्चित् पतिं त्यक्त्वा कामुकैः सह देशान्तरगमनरूपं साहसं कुर्वन्ति तदपि रागमूलकमेवेत्याह अन्या इति । कुलस्य कलङ्कं पितृमातृश्वशुरवंशानां दोषप्राप्तिः, जनगर्हा लोकनिन्दा । रागोपरक्तहृदयाः अनुरागिण्यः कामिन्यः । रागः तु—"इच्छायाः सहकारिसामग्र्यादिना प्रचितायाः प्रवृत्त्युन्मुखायाः विवेकोपदेशादिभिः अनिवार्यः परिपोषः ।" इति नागानन्दविमर्शिन्याम् । दिगन्तं बहुदूरदेशं अपि, मनुष्यं वल्लभं इत्यर्थः । तदुक्तं कौमुदीमित्रानन्दनाटके—"पुरन्ध्रीणां प्रेमग्रहिलमविचारं खलु मनः ।" (४।२) इति, अपि च तत्रैव—"देसं वयंति विसमं सहंति णिव्वं भमंति दुहिआओ । तहवि महिलाण पिम्मं दइयंमि न सयणवग्गंमि ॥" (४।५) ( देशं व्रजंति विषमं, सहन्ते दुःखं, भ्रमंति दुःखिताः । तथापि महिलानां प्रेम दयिते, न स्वजनवर्गे ॥ ) इति । उक्तमपि वादिराजसूरिविरचितश्रीपार्श्वनाथचरित्रकाव्ये—"रूपं कुलं यौवनमाभिजात्यं नतभ्रुवस्तत्र विचारयंति । क्वचिन्निकृष्टेऽपि रसान्निविष्टाः कंदर्पदेवं परितर्पयंति" ॥ (२।४६) इति ] ॥ ५०८ ॥ [पतिगृहे कदाचित् विद्यमानेषु अपि वैमनस्यकारणेषु यत् काश्चित् स्वधर्मं विहाय भ्रष्टशीला भवन्ति तत्रापि अन्यराग एव प्रभवति इति प्रकटयति अपमान इति । यासाम् । अपमानः तिरस्कृतिः । पतीति श्वशुरादीनां उपलक्षणम् । गुरवः श्वश्रूश्वशुरज्येष्ठादयः, तद्रूपः यः परिकरः परिवारः, तत्कृतोपालम्भनादिरूपा या तीव्रता तैक्ष्ण्यं उद्वेजकत्वम् । अत एव, गृहे पतिगृहे, दौःस्थ्यं दुःस्थितिः गृहकार्यबाहुल्यात् उपालम्भादिश्रवणात् वा दुःखेन अवस्थानं; इमानि कानिचित् पतिगृहे विरागकारणानि; तासां अन्यनरे पतिव्यतिरिक्ते उपपतौ, अतिरागतः सक्तिः आसक्तिः मनःसङ्गः, शीलक्षतये पातिव्रत्यरूपसुचरितस्य नाशाय, "शुचौ तु चरिते शीलं" इति अमरः, भवति जायते । असतां योगे समुच्चयालंकारः । ]५०९॥ [विरक्तानामपि अव्यभिचारिणीनां तत्त्वमाह—या इति । याः रागवियुक्ताः इति दूरेणान्वयः, भर्तरि प्रेमरहिताः इत्यर्थः, अपि, प्रमदाः

---

५०८ जनगेहाः (का) । मनुष्यलाभाय (गो. का) ५०९ गृहेऽपि दौर्गत्यं (प)। ०मपि (प) ५१० भर्तुश्चरणाब्जतत्पराः प्रमदाः (गो २. का)। रागविमुक्ता ( गो. का )

तस्मादस्त्वभिगमनं विविधनिमित्तं निवार्यते केन ।
निजपरपण्यस्त्रीणां रागाधीनं तु हृदयनिर्वहणम् ॥ ५११ ॥
एवंविधदृष्टान्तैरुपपत्तियुतस्तैथेदृशैर्वाक्यैः ।
अन्यैरपि चाटुपदैरावर्जितमानसं गम्यम् ॥ ५१२ ॥
विहितस्वापविबोधं किञ्चित्प्रकटीकृतक्लमग्लान्या ।
उत्पादितजृम्भिकया परिरभ्य घनं निशापगमे ॥ ५१३ ॥

स्त्रियः, अचलितवृत्ताः अनष्टचारित्राः । परिचरणं सपर्या सेवा । तिष्ठन्ति वर्तन्ते, तत्तु औचित्यमात्रेण उचितस्य कर्म भावो वा इति कृत्वा; स्त्रीणां अव्यभिचारित्वं पतिसेवा च धर्म इति निःस्नेहत्वेऽपि उभयं परिपाल्यते ताभिः इति भावः । ] ॥५१०॥ [ प्रकृतं उपसंहरति तस्मादिति । तस्मात् यस्मात् एवं सर्वत्र दृष्टं तस्मात्, अस्तु तिष्ठतु तत्, अलं तद्विषयकबहुविचारेण इत्यर्थः । विविधनिमित्तं रागप्राबल्यपतिविरक्त्याद्यनेककारणकं, अभिगमनं अभितो गमनं व्यभिचारः, केन निवार्यते केन प्रतिषेद्धुं शक्यः, न केनापि इत्यर्थः । सिद्धान्तयति निजेत्यादि । निजस्त्री स्वपाणिगृहीती परिणीता स्वीया, परस्त्री अन्यभार्या परकीया, पण्यस्त्री मूल्यलभ्या रमणी वेश्या, तासां सर्वप्रकाराणां अपि, ] हृदयनिर्वहणं मानसावर्जनं, [ यद्वा हृदयस्य भावस्य इच्छाया वा, निर्वहणं सिद्ध्यन्तानुष्ठेयत्वं—स्वेप्सितकामुकसंयोगान्तगमनं इति यावत्, तु अवधारणे "तु पादपूरणे भेदावधारणसमुच्चये । पक्षान्तरे नियोगे च प्रशंसायां विनिग्रहे ॥" इति विश्वलोचने, रागाधीनं प्रीतिपरतन्त्रम् । त्रिविधा अपि नायिकाः रागतंत्रा एव ईप्सितं पराभियोगं अप्रतिबाधं साधयन्तीति स्थितं इति भावः ॥ ] ५११ ॥ [ एवं विलासान्ते कर्तव्यायाः कथाचर्चाया मार्गं दर्शयित्वा तत्फलं बोधयन्ती विकराला प्रातः स्वापत्यागप्रकारं प्रदर्शयति एवमित्यादिना । एवंविधैः उक्तनिश्चितप्रकारकैः दृष्टान्तैः स्वेष्टस्थापकैः हारलतोपाख्यानादिसदृशैः उदाहरणैः, उपपत्तियुतैः सोपपत्तिकैः युक्तियुक्तैः, तथा ईदृशैः एवंविधैः ऊहापोहयुक्तैः, वाक्यैः वचनसन्दर्भैः, अन्यैरपि अत्रानुक्तैरपि प्रियवल्लभ-प्राणनाथ-हृदयेश्वरेत्यादिप्रसिद्धैः, चाटुपदैः नायकश्लाघापराक्षरसमूहैः,] "अस्त्री चाटुश्चटुः श्लाघा प्रेम्णा मिथ्याभिशंसनम् ।" इति कोशः । आवर्जितं प्रसादितं [ मानसं अन्तःकरणं यस्य तं, गम्यं अभिगमनयोग्यं कामुकम् , समनन्तरार्यागतपरिरभ्येति पदेन अन्वयः ॥ ] ५१२ ॥ [ विहितः कृतः स्वापात् निद्रायाः विबोधः जाग-

५११ तस्मात्तास्वभिगमनं ( गो ) तस्मादात्माभिगमनविविधनिमित्तं ( गो २. का ) । विधार्यते केन (गो. का) ५१२ उपपत्तिषु ( प ) ५१३ विहितस्वापरबोधं ( गो. का) । कृतश्रमं दाक्ष्यात् ( गो. का )

विघटितविनिमुद्रदृशा विलोक्य ककुभः सुदीर्घनिःश्वासम् ।
वक्तव्यमिति भवत्या 'रजनि खले किं प्रभाताऽसि ॥ ५१४ ॥

रणं यस्य तं, निशापगमे प्रभाते, त्वया, किञ्चित् अल्पमात्रया प्रकटीकृतौ प्रदर्शितौ क्लमः सन्तापः ग्लानिः व्यापारासहः अवसादश्च सुरतश्रमभरात् यया तया, तथा उत्पादितजृम्भिकया कृतः गात्रविनामः निद्रात्यागसूचकः मुखविकासादिरूपः शरीरविन्यासविशेषः यया तया । "जृंभिका गात्रभंगः स्यात्" इति अजयः, स्त्रीजृम्भणे केशविश्लथनं बाहुमूलवक्षोदर्शनं नीविस्रंसनादि च रसिकहृदयहारीणि भवन्तीति तत्करणोपदेशः । वर्णितं तदन्यैः यथा—"आस्येन्दोः परिवेषवद्रतिपतेश्चाम्पेयकोदण्डवद्धम्मिल्लाम्बुमुचः क्षणद्युतिवदासज्जौ क्षिपन्ती भुजौ । विश्लिष्यद्वलि लक्ष्यनाभि विगलन्नीव्युन्नमन्मध्यमं किञ्चित्किञ्चिदुदञ्चदञ्चलमहो कुम्भस्तनी जृम्भते ॥" इति । "चक्रीकृतभुजलतिकं वक्रीकृतमध्यमुन्नमद्ग्रीवम् । नो हरति कस्य हृदयं हरिणदृशो जृम्भणारम्भः ॥" इति च ॥ जृंभिकायां सुदीर्घीकृतभुजयोः कर्कटो हस्तो भवति, यथोक्तं भारतीये—"अंगुल्यो यस्य हस्तस्य ह्यन्योन्यान्तरनिःसृताः । स कर्कट इति ज्ञेयः करः कर्म च वक्ष्यते ॥ (९।१२६) एष मदनांगमर्दे सुप्तोत्थितजृंभणे बृहद्देहे । अनुधारणे च योज्यः शंखग्रहणेऽथ तत्त्वज्ञैः ॥" (१२७) इति ॥ "मिथोऽन्तरा बहिश्चान्तर्भवंत्यंगुलयो यदा । हस्तयोः, कर्कटः सोऽयं चिंताजृंभणयोर्मतः ॥" इति च डुंगरराजालंकाररत्नाकरे ॥ अशिथिलं दृढं परिरभ्य आलिङ्ग्य, ॥ ५१३ ॥ ] विघटितविनिमुद्रदृशा उद्घाटितातन्द्रदृशा [ शीर्णमुद्रनयनेन ] [ उन्मीलितचक्षुषा ककुभः दिशः, विलोक्य अवलोक्य प्रभातं जातं न वा इति दर्शनार्थं, भवत्या सुदीर्घनिःश्वासं आयतमुखमारुतं, प्रातःकाल इति समुपस्थितविरहजदुःखं सूचयितुं—तथाहि अहर्मुखं प्रत्यूषति रुजति कामुकान् इति 'प्रत्यूष' इत्यपि उच्यते, वक्तव्यं, किमिति तदाकारं आह—भोः रजनि रजन्ति अनुरक्ता भवन्ति रागिणः अस्यां इति साभिप्रायपदं रात्रेः । खले इति रात्र्याः संबोधनं, खलति पापानि संचिनोति, चलति वा साधूनां निग्रहाय सा खला पैशुन्यकृत् पापा, तस्याः संबुद्धिः खले पैशुन्यकारिणि—आदौ संयोगसुखं प्रदाय इदानीं प्रियविप्रयोगदुःखदायिनी इति । किं प्रभाता असि । प्रभातोऽपि क्वचित् निशाभागत्वेन गण्यते यथा "प्रभातशेषा रजनी बभूव ।" इत्यत्र । अपि च रजनी प्रभाता जाता इति तस्याः स्वरूपविपर्ययेण खलत्वं उचितं, विरोधाभासोऽपि सूचितः ॥ तथाहि प्रार्थितं केनापि रसिकमित्रेण—"दूरारूढप्रणयमधुरप्रेमगर्भौक्तिभाजां, गाढाश्लेषव्यतिकरधृतैकात्म्यसंभावनानाम् । अव्युच्छिन्नाधरमधुरसासारके प्रार्थये त्वां, यूनां मा भूद्भगवति

५१४ विघटितपुटमुद्रितदृशावलोक्य (प) । प्रयातासि (प) (कुलकं)

अबला विषहेत कथं दृढशक्तिमनुष्यरतिरसप्रसरम्।
मदनजनितोऽनुरागो न विदध्याद्यदि बलाधानम् ॥ ५१५ ॥
धन्या चक्राह्ववधूः प्रियतमसंघटनसमयसंप्राप्त्या।
शशिना वियुज्यमाना कुमुदिनि किं क्षीणपुण्याऽसि ॥ ५१६ ॥
विकसितसुरभिमनोहरसंस्थानं सरसकुसुममप्राप्तम्।
न करोति तथा पीडामास्वादितविच्युतं यथा भृङ्ग्याः ॥५१७॥

---

निशे सङ्गमे ते प्रभातम् ॥ " इति। ] ५१४ ॥ [ इतः त्रिभिः प्रस्तुतं समर्थयति। तत्रादौ स्वस्याः मदनावेशरागं नायकरतिशक्तिप्रशंसागर्भं आह अबलेति। न विद्यते बलं वीर्यं यस्याः सा—अबला, तादृशां अतिसुकुमाराणां स्वाङ्गानामपि धारणे अशक्ता इव दृश्यमाना, कथं बलिनः पुरुषस्य रतावेगं सहेत, यदि तस्यां कामजः प्रेमा बलं न संचारयेत् इत्यर्थः। अबलाः शृङ्गाररसेन सबला भवन्तीति भावः। उक्तं च अमरुकशतके "शूरोऽस्ति ('नन्वस्ति') पुङ्खितशरो मदनः सहायः।" इति। ॥ ५१५ ॥ अत्र अप्रस्तुतचक्रवाकीकुमुदिन्यवस्थाकथनेन दिवसे प्राप्तविरहायाः स्वस्याः अधन्यत्वं सूचयति धन्येति। धन्या प्रशंसनीया, चक्राह्वः रथाङ्गनामा यामिनीविरही पक्षी, तद्वधूः चक्रवाकी 'चकवी' इति प्रसिद्धा। संघटनं संयोगः। रात्रौ चक्राह्वयोः वियोगः दिवसे तत्संयोगश्च प्रसिद्धः, तद्विपर्ययेण रात्रौ शशिसंयोगेन कुमुदिन्या विकसनं, प्रातस्तद्वियोगेन च मुकुलितत्वं प्रसिद्धम्। क्षीणपुण्या यतः प्रियवियोग-विपत्तिमती। किं प्रश्ने। अप्रस्तुतप्रशंसालंकारः। ]५१६॥ विकसितेति। [विकसितं च सुरभि च मनोहरं च संस्थानं अवयवसंनिवेशः यस्य तत्। आदौ आस्वादितं पश्चात् विच्युतं भ्रष्टं आस्वादितविच्युतम्। अतः आरूढपतितसत्पुरुषसदृशं,] विकसितं सुरभि सुगन्धं मनोहरसंस्थानं सुस्थि(ति)मदपि अप्राप्तं कुसुमं कर्तृ भृंगीं न तथा पीडयति यथा आस्वादितं अनन्तरमेव विच्युतं कुसुमं पीडां करोति। प्राप्तहानितोऽप्राप्तिरेव श्लाघ्या इत्यर्थः, ["नहि वन्ध्याऽश्नुते दुःखं यथा हि मृतपुत्रिणी।" इति न्यायेन। उक्तं च—"न तथा बाधते कृष्ण प्रकृत्या निर्धनो जनः। यथा भद्रां श्रियं प्राप्य तया हीनः सुखैधितः॥" इति। उक्तं च—" अकृतस्नेहोऽपि वरं न पुनः संजातविघटितस्नेहः। उज्झितनयनस्ताम्यति तथा यथेहो न जात्यंधः॥" इति। रविगुप्तेनापि—" अकृतप्रेमैव वरं न

---

५१५ अवशा ( कापा )। ममुष्य ( गो. का )। जनितानुरागो ( गो ) तुलितानु० ( गो २. का ) ५१६ चक्राङ्क ( गो २. )। चक्राह्ववधूप्रिय० ( का )। संघट्टन ( का ) ५१७ स्थानं कुसुम० ( गो. का )। विच्युतिं ( गो २. का )। भृङ्गम् (गो) भृंगः (गो २. का ) ( अनर्थकः पाठः )

विज्ञापयाम्यतस्त्वां रचिताञ्जलिमौलिना विधाय नतिम् ।
परिचारकजनमध्ये गणनीयाऽहं प्रसादेन ॥' ५१८ ॥ (युग्मम्)

अथ दीपितरागाङ्गैरपहस्तितलाभविभ्रमोपचितैः ।
मृदुभिश्चित्तानुगतैरुपचारैः पातितस्य विश्वासे ॥ ५१९ ॥

'अवलोकितोऽसि लम्पट किमपि वदन् कर्णसन्निधौ निभृतम् ।
शङ्करसेनाधात्र्या अद्य मया जालमार्गेण ॥ ५२० ॥

---

पुनः संजातविघ्नितः प्रेमा । उद्धृतनयनो हि यथा ताम्यत्येवं न जात्यंधः ॥ " इति । अत्र भृङ्गीकुसुमवृत्तान्तेन विप्रयोगान्तसंयोगात् असंयोग एव वरः इति सूचयति । अत्र कुसुमाप्राप्तेः दोषत्वेऽपि गुणत्वकल्पनात् लेशालंकारोऽपि, तल्लक्षणं तु "लेशः स्याद्दोषगुणयोर्गुणदोषत्वकल्पनम् " इति कुवलयानंदे । अपि च अत्र अप्रस्तुतकुसुमभृङ्गीवृत्तान्तेन प्रस्तुतनायकनायिकावस्थानयोः गम्यत्वात् अप्रस्तुतप्रशंसालंकारः । नतु समासोक्त्यलंकारः, यतः स एतद्विपर्ययेण प्रस्तुतादप्रस्तुतप्रतीतौ प्रवर्तते इति ज्ञेयम् ॥] ५१७॥ [एवं वियोगदुःखं सूचयन्ती दीनताख्यापनेन नायकं दयार्द्रमानसं करोति विज्ञापयामीति । रचिता अञ्जलिः हस्तयोः संयोगः यत्र तादृशेन मौलिना मस्तकेन, नतिं विधाय अधोमुखं शिरः कृत्वा प्रणम्य, अञ्जलिलक्षणं तु—" पताकाभ्यां तु हस्ताभ्यां संश्लेषादञ्जलिः स्मृतः" (नाट्यशास्त्रे ९ । १२१ ) इति; पताको हस्तस्तु—" प्रसारिताः समाः सर्वा यस्यांगुल्यो भवन्ति हि । कुञ्चितश्च तथांऽगुष्ठः स पताक इति स्मृतः ॥" ( ९ । १८ ) इति । परिचारकेत्यादि ] परिचारकः सेवकः, [ सेवकाविशेषमवेक्षणीया, प्रियादृष्ट्यभावेऽपि सेवकदृष्टिर्मयि कृपया न त्याज्येति भावः । प्रसादः अनुग्रहः कृपा । ] ५१८॥ [ आवर्जितमानसं नायकं भिक्षुपादप्रसारिकान्यायेन रूढरागं कर्तुं सेर्ष्योक्तीः उपदेष्टुकामा कराला उपक्रमते अथेत्यादि । अथ अनन्तरम् । उपचारैः अभ्युत्थानादिकैः सत्कारैः, कीदृशैः तैः, दीपितरागाङ्गैः दीपितानि समुत्तेजितानि रागस्य स्नेहस्य अङ्गानि उपकारकाः यैः तैः, तथा अपहस्तितः दूरीकृतः लाभस्य अर्थादिप्राप्तेः विभ्रमः विशेषेण भ्रान्तिः तेन उपचितैः पुष्टैः, लाभगन्धलेशविरहितैः इत्यर्थः, "विभ्रमस्तु विलासे स्याद्विभ्रमो भ्रान्तिहावयोः।" इति विश्वलोचने; तथा मृदुभिः कोमलैः हृदयावर्जकैः इत्यर्थः; तथा चित्तानुगतैः कामुकमनोवृत्त्यनुवर्तिभिः,—एवंविधैः उपचारैः,] पातितस्य विश्वासे संप्रापितविश्वासस्य इत्यर्थः, [ अपरवेश्यावत् इयं न वञ्चिका इति विशिष्टोपचारैः विश्वासितस्य, तदुक्तं—"उपचारः कर्तव्यो यावदनुत्पन्नसौहृदाः पुरुषाः " । इति । ]—५१९ ॥ [ नायकानुरागं

---

५१८ °लिमाविधाय ( का ) ५१९ अपहस्तितमार्गसंभ्रमो० ( गो. का ) । श्चित्रानुगतैः ( गो. का ) ५२० नियतम् ( का ) । संकटसेना ( गो २. का )

मालत्या सह किञ्चिदभिदधासि सखी ममेति न विरोधः
यत्तु चिरं स्निग्धदृशा पश्यसि तां तत्र मे शङ्का ॥ ५२१ ॥
त्वामागता न वीक्षितुमनुबध्य न याचितः प्रयत्नेन ।
आहूय वद किमर्थं ताम्बूलं ग्राहिता कमलदेवी ॥ ५२२ ॥

---

वर्धयितुं सप्तभिः मानसूचकसेर्ष्योक्तिप्रकारं शिक्षयति अवलोकित इत्यादिना । तदुक्तं शृङ्गारतिलके—"स्नेहं(हो?) विना भयं न स्यान्मन्मथो नेर्ष्यया विना । तस्मान्मानप्रकारोऽयं द्वयोः प्रीतिप्रवर्धनः ॥" ( २।५३ ) इति । ईर्ष्यया सहिता उपन्यासाः सेर्ष्योपन्यासाः ईर्ष्यामानोद्भवाः उक्तयः; तथाहि—विप्रलंभशृंगारस्य पूर्वानुराग–मान–प्रवास–करुणभेदेन चतुर्धा विभक्तस्य मध्ये यो मानविप्रलंभः स सहेतुको निर्हेतुकश्चेति द्विप्रकारकः; तत्राद्यः ईर्ष्यामानसंज्ञकः अन्यनायिकास्निग्धदर्शनपरनायकदर्शनात् प्रत्यक्षात्, नायकस्य भोगचिह्नदर्शनेन गोत्रस्खलनश्रवणेन उत्स्वप्नायितश्रवणेन वा अनुमानात्, नायिकाया जायते । तदुक्तं रसार्णवसुधाकरे—"ईर्ष्यया संभवेदीर्ष्या त्वन्यासङ्गिनि वल्लभे । ( २।२०३ ) असहिष्णुत्वमेव स्याद्दृष्टेरनुमितेः श्रुतेः ॥" इति । तत्र प्रथमो लघुमानः, दर्शनमात्रमतिक्रम्य वार्तालापादेः अनुरागवृद्धिसूचकतत्तच्चेष्टानां वा दर्शने मध्यमो मानः, शेषो गुरुर्मानः, तदुक्तं शृंगारतिलके—"स प्रायशो भवेत्त्रेधा कामिनीनां प्रियं प्रति । अवेक्ष्य दोषमेतस्य गरीयान्मध्यमो लघुः॥ ( २।३३ ); प्रतिनार्यां(र्री?) गते कान्ते स्वयं दृष्टे नखाङ्किते । तद्वासोदर्शने गोत्रस्खलिते च गुरुर्यथा ॥ ( २।३४ ); दृष्टे प्रियतमे रागादन्यया सह जल्पति । सख्याऽऽख्यातेऽथवा दोषे मानोऽयं मध्यमो यथा ॥ (२।३५); सविलासं स्फुरच्चक्षुर्वीक्षमाणे परां प्रिये । किंचिदन्यमनस्केव जायते स लघुर्यथा ॥" ( २।३६ ) इति । लम्पट कामुक । निभृतं गुप्तं, परेषामविदितं स्यात् तथा; 'नियतं' इति पाठे नियमेन वारंवारम् । धात्री उपमाता, "धात्री त्वामलकीक्षित्योरुपमातरि मातरि ।" इति विश्वलोचने । ] जालमार्गेण लघुवातायनद्वारा, [गवाक्षेण । अत्र अन्यालापदर्शनजो मध्यम ईर्ष्यामानः । ] ५२० ॥ [ पुनश्च–किञ्चित् अल्पं, अभिदधासि वदसि, तत्र सा मम सखी इति हेतोः न मे विरोधः त्वया सह कलहः । चिरं दीर्घकालं, स्निग्धदृशा स्निग्धदृष्टिः पूर्वं ( आ. ५०७ टी. ) व्याख्याता तया पश्यसि स्निग्धायाः दृष्टेः अविच्छेदपातं करोषि, इति दर्शनस्य अविश्रांततया औत्सुक्यापरिसमाप्तिः प्रकाशिता; तत्र तस्मिन् तव तादृशदर्शनकर्मणि, शङ्का वितर्कः तव तया सह संगमाभिलाषो वर्तते इत्यादिरूपा, " शंका वितर्कभययोः " इति वैजयंती । अत्र लघुः ईर्ष्यामानः ।] ५२१॥ [त्वां वी-

---

५२१ किञ्चिद्भिदधासि (गो.) केलिं विदधासि (प)। सखे (गो.का)। दृगापश्यसि (प)

कञ्चुकमपकर्षन्त्याः प्रकटीभवदंसकक्षकुचपार्श्वम् ।
साभिनिवेशं दृष्टं भवता किं कुन्दमालायाः ॥ ५२३ ॥
परिहासेन गृहीता यच्चंशुकपल्लवे त्वया रामा ।
आच्छिद्यापक्रान्ता किं मामवलोक्य पृष्ठतः सहसा ॥ ५२४ ॥
विज्ञानेन ख्यातां कुसुमलतां त्वं तु वर्णयस्यनिशम् ।
नृत्यन्तीं मृगदेवीं विस्फारितलोचनः पश्यन् ॥ ५२५ ॥

---

क्षितुं तव दर्शनार्थं, तथागमने ताम्बूलदानं शिष्टाचार इति उचितम् ।] अनुबध्य विशेषतः, [ वारंवारं; ताम्बूलं न च याचितः देहि इति न तया प्रार्थितः । त्वया तु तां आकारयित्वा ताम्बूलं दत्तं, तत् किमर्थं किं प्रयोजनं उद्दिश्य, तत् वद वाचा प्रकाशय । ताम्बूलदानं अभियोगसूचकं इति ईर्ष्याबीजं, यथाह वात्स्यायनः पारदारिकाधिकरणे— "क्रमेण च विविक्तदेशे गमनं चुम्बनं आलिङ्गनं ताम्बूलस्य ग्राहणं दानान्ते द्रव्याणां परिवर्तनं गुह्यदेशाभिमर्शनं चेति अभियोगाः।"(५।२) इति। अत्र दर्शनालापाभ्यां अधिकपरिचयदर्शनात् मध्यम ईर्ष्यामानः ।] ५२२ ॥ [ कञ्चुकं चोलीं स्त्रीणां कुचादिगोपनवस्त्रं, अपकर्षन्त्याः उत्तारयन्त्याः, प्रकटीभवत् चक्षुर्गोचरं भवत् , अंसौ भुजशिरसी च कक्षौ बाहुमूले 'काख' इति भाषायां च, कुचौ च पार्श्वे कक्षाधोभागौ च अंसकक्षकुचपार्श्वं, प्राण्यङ्गत्वात् एकवद्भावः । साभिनिवेशं आसक्त्या, किं किमर्थम् । तस्याः सौन्दर्येण अपहृतचित्तस्त्वं मयि न्यूनप्रेमा इति भावः । अत्र दर्शनेर्ष्यामानो लघुः । ] ५२३ ॥ [रामाभिधानायाः चेलाञ्चलग्रहः त्वया यदि परिहासार्थं कृतः तर्हि, पृष्ठतः पृष्ठे, सार्वविभक्तिकस्तसिः , स्थितां मां दृष्ट्वा, किं किमर्थं, आच्छिद्य स्ववस्त्राकर्षणेन विश्लेषं कृत्वा, सहसा तत्कालमेव, "तत्कालमात्रे सहसा सहसाऽऽकस्मिकेऽपि च ।" इति विश्वलोचने । अपक्रान्ता निर्गता । युवयोः प्रेमपरिचयं दृष्ट्वा कोपिष्यामि इत्येव अवधार्य इति भावः । अयं चेष्टेर्ष्यामानो मध्यमः ॥ ५२४ ॥ नृत्यन्तीं अङ्गप्रत्यङ्गसौष्ठवप्रकाशकं नृत्यं कुर्वन्तीम् । विस्फारितलोचनः विकसितनेत्रः सन् येन सुष्ठु दर्शनं भवेत् तथा, अनिशं निरन्तरं, पश्यन् , विज्ञानं कार्मणं—औषधमन्त्रादियोगैः उच्चाटनादि षट्कर्म, "विज्ञानं कार्मणे ज्ञाने" इति विश्वलोचने, तेन विज्ञानेन ख्यातां वशीकरणादिकर्मपाण्डित्येन प्रसिद्धां, वर्णयसि उद्योजयसि मृगदेवीवशीकाराय—इत्यतः अनु-

---

५२३ °क्रमाकर्ष° ( प ) । दंगकुच (गो. का) दंसकुच (कापा) ५२४ त्वया बाला (प) । आच्छोट्यापक्रान्ता मामवलोक्य ( प ) क्रान्ता त्वामव ( गो. का. ) ५२५ त्वं नु ( प ) [ अक्षरसंभ्रमात् पाठः ]

कारणमत्र न वेद्म्यहमृजुपन्थानं प्रसिद्धमुत्सृज्य ।
वक्रेण यदेषि सदा माधवसेनागृहाग्रेण ॥' ५२६ ॥
इति सेर्ष्योपन्यासैरन्यैश्चाप्यमर्मवेधिलघुकोपैः ।
प्रणयप्रभवैर्विहिते क्षामोदरि रूढरागत्वे ॥ ५२७ ॥
श्रुतिविषयेऽन्तरिततनुर्जनितस्थितिरायताक्षि सह मात्रा ।
परुषगिरा त्वं कुर्या इत्थं मिथ्यावचःकलहम् ॥ ५२८ ॥
( अन्तःकुलकम् )

मीयते त्वं तस्यां अनुरक्तः इति । विस्फारितलोचनः इति विस्मिता दृष्टिः लक्षिता ॥ यद्वा मृगदेवीं विस्मयेन सर्वदा पश्यन् सन् कुसुमलताया विज्ञानं कलाकौशल्यसंगति मत्समक्षं श्लाघसे इत्यर्थः, तेन वस्तुतः मृगदेव्यां आसक्तः त्वं मद्वंचनार्थं अपरस्याः स्तुतिं करोषि इति जाने इति भावः ।" वर्ण त्क स्तुतिविस्तारशुक्लाद्युद्युक्तिदीपने ।" इति कविकल्पद्रुमः । अयं लघुः दर्शनेर्ष्यामानः ॥ ५२५ ॥ ऋजुपन्थानं येन शीघ्रं निर्बाधं गृहप्राप्तिः भवेत् तं सरलमार्गं, उत्सृज्य परित्यज्य, वक्रेण दूरगामिना, परन्तु माधवसेनागृहस्पर्शिना मार्गेण । अत्र तव तादृशाचरणे, कारणं विशिष्टहेतुं न वेद्मि, वक्रोक्त्या जानामि एव तत्कारणं यत् त्वं तत्रानुरागवान् इति । अयं नायकचेष्टाजन्यो मध्यम ईर्ष्यामानः ॥ ५२६ ॥ इति उक्तप्रकारैः, ईर्ष्या परोत्कर्षासहिष्णुता, प्रकृते अनुरागविषयिणी, तया सहिताः अन्तर्निहिताक्षमाः उपन्यासाः कथनानि तैः सेर्ष्योपन्यासैः, अनेन मध्यमो मानः सूचितः । यथा वक्ष्यति चायं कविः—"सत्यं प्रेमणि वृद्धे व्यथयति हृदयं मनागपि स्खलितम् ॥" (आ.७१३) इति तथा प्रियस्खलनासहिष्णुत्वं प्रेमोत्कर्षप्रकाशकं मतम् । अन्यैश्च उपन्यासैरिति शेषः, कीदृशैः तैः, कोपस्य मर्मवेधित्वे विघटनं स्यात्, रागवृद्धिश्चः न स्यात् इति न तथाविधैः, अमर्मवेधीति लघोरेव विवरणं तेन मृदुकोपैः इत्यर्थः; उभयान् विशिनष्टि, प्रणयप्रभवैः प्रणयः प्रीतिः रतिकेलिपरिचयो वा तस्मात् प्रभवः उद्भवः येषां तैः स्नेहमूलकैः, तथा च बालरामायणे रावणोक्तिः—"ईर्ष्यायितं हि स्त्रीणां प्रकाशकं प्रेमभरस्य" इति (५), तादृशैः कामवर्धनफलैः इति भावः, तदुक्तं शृङ्गारतिलके—"स्नेहं(हो?) विना भयं न स्यात्, मन्मथो नेर्ष्यया विना । तस्मान्मानप्रकारोऽयं द्वयोः प्रीतिप्रवर्धनः ॥" (२।५३) इति । "प्रणयप्रकर्षेण स्खलितेषु कोपो भवति" इति वस्तुस्थित्या च । रूढरागत्वे विहिते कामुकस्य अनुरागवृद्धौ संपादितायां; क्षामोदरि हे तनूदरि कृशोदरि, । ५२७ ॥ वियोगासहत्वं कामुकस्य रूढरागत्व-

५२६ चक्रेण (प) ५२७ विंदिते (गो) विविधैः (प) । गूढरागत्वे ( गो. का )
५२८ श्रुतविषयान्तरिततनुः (प)

'अक्लेशोपनतधनः प्रेमप्रह्वो निरर्गलत्यागः ।
भट्टानन्दस्य सुतो निधिभूतोऽभव्यया त्वया त्यक्तः ॥ ५२९ ॥
व्यसनोपहतविवेको दानैकरतिः स्वदारविद्वेषी ।
मामविगणय्य मूढे निर्भर्त्सित एव केशवस्वामी ॥ ५३० ॥

लक्षणं, तस्मिन् सिद्धे अर्थागमोपायभूतं मात्रा सह कूटवाक्कलहं बोधयति श्रुतीत्यादिना । आयताक्षि कमलपत्रवत् दीर्घनेत्रे, अन्तरिततनुः नायकदृष्टयगोचरा सती, तथापि तस्य श्रुतिविषये जनितस्थितिः यथा स वार्तालापं शृणुयात् तथा नातिदूरे स्थिता, मात्रा सह, परुषगिरा कठोरवचनैः, मिथ्यावचःकलहं अवास्तवं विग्रहं, स्वस्यां प्रभूतधनादिमतां कामुकत्वप्रदर्शनेन नायकप्रतारणाय तेन च अर्थावर्जनाय, इत्थं वर्णयिष्यमाणवचनप्रकारैः, त्वं कुर्याः ॥ तथाहि वैशिके अर्थागमोपायप्रकरणे वात्स्यायनः—"पूर्वयोगिनां च लाभातिशयेन पुनः सन्धाने यतमानानामभिष्क्तः प्रतिषेधः । तत्स्पर्धिनां त्यागयोगिनां निदर्शनम् ।" इति ॥ एतत्प्रसङ्गतः समनन्तरान्तःकुलके बहुधनदातॄणां विटानां प्रकाराः प्रदर्शिताः ॥ ५२८ ॥ इतः आरभ्यमाणे अन्तःकुलके नानाविधा वेश्यानां अर्थदृष्टया गम्याः कामुका वर्णिताः । तथा च वात्स्यायनः ( अधि० ६. अ० १. प्र० ५० ) "केवलार्थास्त्वमी गम्याः—स्वतन्त्रः, पूर्वे वयसि वर्तमानो, वित्तवानपरोक्षवृत्तिरधिकरणवानकृच्छ्राधिगतवित्तः, संघर्षवान्, संततायः, सुभगमानी, श्लाघनकः, पण्डकश्च पुंशब्दार्थी, समानस्पर्धी, स्वभावतस्त्यागी, राजनि महामात्रे वा सिद्धो, दैवप्रमाणो, वित्तावमानी, गुरूणां शासनातिगः, सजातानां लक्ष्यभूतः, सवित्त, एकपुत्रो, लिङ्गी, प्रच्छन्नकामः, शूरो, वैद्यश्चेति ॥" ( अपरोक्षवृत्तिः प्रत्यक्षाजिविकासाधनः, अधिकरणवान् राज्याधिकारी, संघर्षवान् स्पर्धावान्, संततायः राजदत्तग्रामादेः निर्वाहभूमेः मूलधनवृद्ध्यादेर्वा अविच्छिन्नधनागमः, श्लाघनिकः स्वश्लाघाकर्तुः बहुप्रदः, पण्डकः नपुंसकः पडि गतौ, तस्मात् अच्, गतौ वातादिदोषेण वीर्योत्पादकशक्तिहानिं प्राप्तौ अण्डौ यस्य सः; सजाताः सहोदराः तेषां लक्ष्यभूतः प्रधानः कुटुंबज्येष्ठः, महामात्रः अमात्यः, लिंगी ब्रह्मचारी प्रव्रजितो वा । ) तत्र अयं 'अकृच्छ्राधिगतवित्तः ।' अक्लेशोपनतधनः भूम्यगारादिभ्यः पितृश्वशुरादिभ्यो वा अप्रयासावाप्तद्रव्यः,] प्रह्वः नम्रः, निरर्गलः अप्रतिबन्धः त्यागो दानं यस्य सः, [ निधिभूतः अपरिमितद्रव्यवान् । ] अभव्या भाग्यहीना ॥५२९॥[व्यसनं पानस्त्रीमृगयादिषु आसक्तिः, तेन उपहतः नष्टः, विवेकः सारासारबुद्धिः यस्य सः, अत एव दानैकरतिः प्रभूतधनदाता, स्वदारविद्वेषी स्वपत्नीपराङ्मुखः ततो वि-

५३० विवेको दैवैकगतिः ( प ) । केशवः स्वामी ( प )

अगणितराजापायोऽविच्छिन्नायः स्वभावतस्त्यागी ।
किमुपेक्षितोऽनुरक्तो वामधिया शौल्किकाध्यक्षः ॥ ५३१ ॥
पितुरेक एव पुत्रश्चतुर्थवयसो गदाभिभूतस्य ।
द्रविणवतः प्रमुरातो निराकृतो भूरिकामया सोऽपि ॥ ५३२ ॥
स्वकरेण परित्यक्ता त्वया विभूतिः करोमि किं पापा ।
सर्वभरेणोपनतं वसुदेवमनादरेण पश्यन्त्या ॥ ५३३ ॥

रक्तः अतः सुसाध्यः, मां अविगणय्य मम मतं अगृहीत्वैव, मूढे अल्पमते, त्वया निर्भर्त्सितः तिरस्कृतः॥ अयं 'स्वभावतस्त्यागी' ।]५३०॥ [अगणितराजापायः अधिकशुल्कादिग्रहणे उत्कोचादिग्रहणे वा तुच्छीकृतराजदण्डादिभयः, तत्र निर्भयः निःशंको वा; अविच्छिन्नः धारावाही, ] आयः द्रव्यादेः लाभः [ यस्य सः । एवं न केवलं धनहानिभयवर्जितः अपि तु मयि अनुरक्तः प्रीतिमान् , अत एव अवश्यंदाता, किं किमर्थं, त्वया वामधिया विपरीतमत्या सत्या, यद्वा वामा प्रतीपा च सा धीश्च वामधीः तया मूर्खतया, उपेक्षितः अनादृतः, शौल्किकाध्यक्षः रक्षानिर्वेशो राजभागः 'शुल्कः' 'दाण' इति भाषायां, 'जगात' इति पारसीकभाषायां च प्रसिद्धः; शुल्के तदादाने नियुक्ताः शौल्किकाः, "तत्र नियुक्तः" (पा. ५।४।६९) इति ठक्, तेषां अध्यक्षः अधिपतिः, ।'शौण्डिकाध्यक्षः' इति पाठे सुराध्यक्षः, यः सुराकिण्वव्यवहारान् पश्यति सः, पानागारावेक्षकः ॥ अयं बहुगुणः 'राजनि महामात्रे वा सिद्धः,' 'संततायः,' 'स्वभावतस्त्यागी,' 'अधिकरणवान्' च ॥५३१॥ चतुर्थवयः बाल्यकौमारयौवन-वार्द्धक्यरूपेषु चतुर्षु चतुर्थं वयो यस्य सः वृद्धः; न केवलं वृद्धस्य अपि तु गदाभिभूतस्य रोगाक्रान्तस्य, अतः मरणोन्मुखस्य इति अभिप्रायः; एक एव पुत्रः, तेन अतिवत्सलः अप्रतिषेध्यतदीययावत्कृत्यः इत्यभिप्रायः । भूरिकामया वर्तमानकामुका-देव बहुधनलाभदुराशया ॥ अयं 'एकपुत्रः' ॥ ५३२ ॥ सर्वभरेण सर्वेषां अन्नव-स्त्रालंकारधनादीनां भरेण अतिशयेन समृद्ध्या, उपनतं संगतं, अत एव सार्थनामानं वसुदेवं, अनादरेण पश्यन्त्या उपेक्षयन्त्या, त्वया मात्रीभूतया, स्वकरेण इति लोकोक्तिः स्वयमेव इत्यर्थः, विभूतिः समृद्धिः, परित्यक्ता हस्तच्योतिता, अतः अस्मिन् विषये, अहं पापा इति लोकोक्तिः नैराश्यमूलकस्वधिक्कारे, दुर्भाग्या इत्यर्थः, किं करोमि । "स्वयंकृतापराधोऽयं तत्र का परिदेवना ।" इति भावः ॥ 'पापे' इति पाठे मातुः प्रमादेन स्वस्या भूरिवसुलाभहान्या तस्याः क्रोधमाश्रित्य संबोधनम् ॥ अयं 'सवित्तः'

५३१ स्वकरेण परित्यक्तो वामधिया शौण्डिकाध्यक्षः ( गो. का ) ५३२ तृतीयवयसो ( का )। प्रमुरात्तो ( प )। तोऽभूतिकामया ( प ) [ दुरर्थः पाठः ] ५३३ पापे ( प )

पुरुषान्तरसंघर्षप्रोत्सादितचित्तवृत्तिरनपेक्षम् ।
वसु विसृजति यो रभसात्तस्य न वार्ता त्वया पृष्टा ॥ ५३४ ॥
चित्रादिकलाकुशलः स्मरशास्त्रविचक्षणो वृषप्रकृतिः ।
उपकुर्वन्नपि सर्वो विद्वेषिगणे त्वया क्षिप्तः ॥ ५३५ ॥
चन्द्रवतीमाभरणं दत्तं मधुसूदनस्य पुत्रेण ।
पश्यन्ती बिभ्राणामयि रागिणि किं न ह्रीताऽसि ॥ ५३६ ॥

---

॥ ५३३ ॥ अन्यपुरुषेण कामुकान्तरेण संघर्षः स्पर्धा संघट्टः वा, "संघर्षः स्पर्द्धने घर्षे प्रमोदेऽपि प्रभञ्जने" इति विश्वलोचने; तेनापि अप्रोत्सादिता अविनाशिता चित्तवृत्तिः मत्सङ्गबुद्धिः यस्य सः; अनपेक्षं निःस्पृहं यथा स्यात् तथा, वसु द्रव्यं, विसृजति ददाति, रभसात् वेगेन, तस्य वार्ता वृत्तान्तः 'खबर' इति भाषायाम् ॥ 'पुरुषान्तरसंघर्षात्प्रोत्साहितचित्तवृत्तिनिरपेक्षम् ।' इति पाठे अन्यकामिस्पर्धया उत्तेजितमनस्कतया निरपेक्षं, अन्यत् पूर्ववत् । एतस्मात् मूलपाठः बलवत्तरार्थप्रत्यायकः ॥ अयं 'संघर्षवान्' ॥ ५३४ ॥ आदिना गीतवाद्यादिका । स्मरशास्त्रं कामशास्त्रम् । विचक्षणः कुशलः । वृषप्रकृतिः वृषजातीयो नायकविशेषः, तदुक्तं स्मरदीपिकायां—"उपकारपरो नित्यं स्त्रीवशः श्लेष्मलस्तथा । दशांगुलशरीरश्च धीमान् धीरो वृषो मतः ॥" (१६) इति; रतिरहस्यादिमते तु नवांगुलगुह्यः सः, तेन शशहयजातीयविलक्षणः अलघुदीर्घगुह्यः प्रायः सर्वासां नायिकानां प्रियः । वर्धति वीर्यं इति च वृषः कामुकः । अत्र चित्रादिकलाकुशलत्वेन नायकस्य मोहकत्वं उक्तं, स्मरशास्त्रविचक्षणत्वेन च तस्य रमणत्वं, वृषप्रकृतित्वेन तस्य स्त्रीवशीकारित्वं चोक्तम् । एवं सति कामपुरुषार्थसिद्धये वेश्यादिभ्यः धनदानकारणाभावेऽपि उपकुर्वन् धनादित्यागपरः, एतादृशःसर्वप्रकारैः लोभनीयोऽपि, सर्वः तन्नामा कामुकः, विद्वेषिगणे क्षिप्तः आत्मीयो न कृतः, प्रत्युत प्रकृते एव स्थिरबुद्धिः कृता ॥ अत्र आर्यायां स्त्रीषु सिद्धपुरुषाणां केचन गुणा उक्ताः, तथा च रतिरहस्ये—"शूरः समुचितभाषी रतितन्त्रज्ञः प्रियस्य कर्ता च ।···( १३ । २४ ) । आख्यानशिल्पकुशलः···( २५ ) । परिचारः स्मरशीलः···( २७ ) । प्रेक्षणरसिको, वृष इति विख्यातः, सद्गुणाधिकः पत्युः । अभिमतमहार्हवेशाचारः सिद्धा इमे नराः स्त्रीषु" ॥ ( २८ ) इति ॥ अयं 'पूर्वे वयसि वर्तमानः' ॥ ५३५ ॥ [ इतः पंचकेन स्वकामुकेभ्यः प्राप्तप्रभृतद्रव्यादिकाः अन्याश्च कामुकोत्तेजनाय उदाहरति चंद्रेत्यादिना । अयि रागिणि धनविषये इति

---

५३४ °घर्षात्प्रोत्साहितचित्तवृत्तिनिरपेक्षम् ( गो. का ) ५३५ शास्त्रविलक्षणो ( गो. का )। शर्वो ( गो २ )।

ग्रामोत्पत्तिरशेषा प्रविशन्ती सिंहराजविनियोगात् ।
मन्मथसेनावासं लघयति ते रूपसौभाग्यम् ॥ ५३७ ॥
आस्तामपरो लाभो भट्टाधिपनन्दिसेनतनयेन ।
शिवदेव्या उपचारः क्रियते यस्तेन पर्याप्तम् ॥ ५३८ ॥
पश्येदं धवलगृहं पाशुपताचार्यभावशुद्धेन ।
कारितमनङ्गदेव्या विभूषणं पत्तनस्य सकलस्य ॥ ५३९ ॥
आपणिकार्थस्य कुतो राजा लभते चतुर्थमपि भागम् ।
हट्टपतिरामसेनप्रसादतो नर्मदा यमुपभुङ्क्ते ॥ ५४० ॥

---

सूचनं, प्रकृतकामुके इति प्रकाशं, तच्च वक्रोक्त्या । मधुसूदनस्य पुत्रेण दत्तं आभरणं बिभ्राणां चन्द्रवतीं पश्यन्ती त्वं किं न ह्रीता असि इत्यन्वयः । ] ह्रीता लज्जिता ॥ [ अत्र कामुकः 'स्वतंत्रः' ॥५३६॥ सिंहराजः कश्चित् ग्रामपतिः । ] विनियोगः समर्पणम् । [ आवासं गृहम् । ते तव, रूपसौभाग्यं रूपेण मत्संबन्धिरूपेण यत् सौभाग्यं सुभगत्वं तत् । ] [ 'ग्रामोत्पत्तिमशेषां पश्यन्ती' इति पाठे ] लघयतीति--त्वं केवलं पश्यन्ती किमपि कर्तुमसमर्था विलोकयन्ती एव तिष्ठसि, यद्वस्तु ते स्वरूपं संपत्तिगर्वं लघूकरोति इत्यर्थः ॥ [ अत्र कामुकः 'संततायः' ॥ ] ५३७ ॥ उपचारः सेवा । [ तेन पर्याप्तं तावतैव अलं, नायकेन तस्यै उपचारमात्रनिमित्तेन यत् दीयते तदेव तावत् प्रभूतं, अतः उपचारव्यतिरिक्तस्य लाभस्य वार्ता तु दुर्निरूपा इत्याशयः । शिवदेवीसौभाग्यमुद्दिश्य सासूयोक्तिरियम् । 'हेडावुकनन्दिषेण' इति पाठे हेडावुकः हेडाबुक्को वा अश्वविक्रेता । अयं 'वित्तावमानी,' पाठान्तरे तु 'सुभगमानी' ] ॥ ५३८ ॥ [ धवलगृहं सौधम् । पाशुपताचार्यः—पशुः संसारबद्धः जीवः, तेषां पतिः नियन्ता ईश्वरो वा पशुपतिः शिवः, तं अधिकृत्य प्रवृत्तं दर्शनं पाशुपतं शैवशास्त्रं, तस्य आचार्यः तन्मन्त्ररहस्यसिद्धान्ताद्युपदेष्टा पाशुपताचार्यः । भावशुद्धः एतन्नामा, अत्र भावः पण्डितार्थवाचकः शैवाचार्याणां मानद उपाधिः, यथा न्यायभूषणकर्ता भाव—सर्वज्ञः, सप्तपदार्थीटीकाकृत् भाव—विद्येश्वरः इत्यादिषु । यद्यपि मूलपाशुपतदर्शने न कोऽपि भ्रष्टाचारावकाशः, तथापि समयबलात् अन्यत्र इव तत्रापि कथंचिदाचार्यपदं गुरुपदं वा प्राप्तैः पतितैः कुगुरुभिः केचन अनाचाराः दृढं दत्तहस्तावलम्बा जाताः, अत एव मत्तविलासप्रहसनादिषु तत्तच्चरितानामुपहासः । पत्तनं पट्टनं वा नगरी राजधानी ॥ 'अयं लिङ्गी' ॥ ५३९ ॥ आपणिकः क्रयविक्रयकर्ता वणिक्, तस्य अर्थस्य लाभरूपेण

---

५३७ ग्रामोत्पत्तिमशेषां पश्यन्ती सिंह० (गो. का) । वासे (गो. का) ५३८ हेडावुकनंदिशेन (प) नन्दिषेण (गो. कापा)। क्रियते यत्नेन (गो. का) ५३९ देव्या आभरणं (प)

पुंस्त्वाख्यापनकामो न स्त्री न पुमान्किल प्रभुस्वामी ।
अनुबध्नन्नुपहसितस्त्वया जडे स्वार्थमनपेक्ष्य ॥ ५४१ ॥
वाजीकरणैकमतिर्नरनाथानुग्रहेण विख्यातः ।
प्रत्याख्यातः स तथा रविदेवः किङ्करत्वमाकाङ्क्षन् ॥ ५४२ ॥
किं कन्दर्पकुटुम्बे जातोऽसावुत वशीकरणयोगम् ।
जानाति कमपि सिद्धं येनाकृष्टाऽसि सर्वभावेन ॥ ५४३ ॥

---

प्राप्तस्य धनस्य, चतुर्थमपि भागं कररूपं राजभागं, राजा, ] कुतः परिश्रमेण इत्यर्थः, [यद्वा कुतो लभेत काका नैव लभते इत्यर्थः । हट्टपतिः—हट्टः आपणः विक्रेयवस्तुशाला, तेषां पतिः; राज्ञा तद्व्यवहारिभिः वा नियुक्तः अध्यक्षः—पण्याध्यक्षः वणिक्श्रेष्ठः ॥ अयं 'अधिकरणवान्' ॥ ५४० ॥ प्रभुस्वामी एतन्नामा, न स्त्री न पुमान् अर्थात् नपुंसकः पण्ढः, किल प्रसिद्धौ, तथापि वेश्यानुसरणेन स्वस्य पुंस्त्वप्रकाशनेच्छां स्वस्य संभोगशक्तिं प्रतिपिपादयिषुः, अनुबध्नन् प्रसादाय प्रयतमानः, त्वया उपहसितः त्वं किं करिष्यसि इत्यादि उपहासयुक्तसंभाषणेन लज्जां प्रापितः । जडे मूर्खे युक्तायुक्तविचारशून्ये, यतः तादृशाचरणेन स्वार्थभ्रंश एव फलित इति । अयं 'पण्डकः पुंशब्दार्थी' ॥ ५४१ ॥ वाजीकरणं वाजिवत् अश्ववत् अत्यर्थसुरतक्षमत्वापादकद्रव्यौषधादि; यद्वा वाजः शुक्रं तदस्यास्तीति वाजी वाजीक्रियते पुरुषः येन तत् वाजीकरणम् , तथा चोक्तं चरके—"येन नारीषु सामर्थ्यं वाजिवल्लभते नरः । येन चाभ्यधिकं बीजं वाजीकरणमेव तत्" ॥ इति । तस्मिन् तत्सेवने इति यावत् , एका मुख्या, मतिः यस्य सः, चिकित्साशास्त्रोक्तवाजीकरणप्रयोगाणां ज्ञाता अनुष्ठाता च, अत एव तरुणीकाम्यः इति सूचनं; अपि च नरनाथः नृपतिः, तस्य अनुग्रहेण कृपया, विख्यातः प्रसिद्धः, नृपवल्लभोऽयं इति सुप्रसिद्धः; अनेन तस्य धनाढ्यत्वं राजमण्डलानुकूल्यं च सूचितम् । तादृशोऽपि मद्रूपपरिलुब्धः मम किङ्करत्वं दासत्वं आकाङ्क्षन् वाञ्छन् स त्वया, तथा तत्प्रकारेण यद्वा चार्थे, प्रत्याख्यातः तिरस्कृतः । अहो ते मौढ्यं इति भावः । अयं 'राजनि सिद्धः' ॥ आभिः चतुर्दशभिः आर्याभिः 'माणिक्यपरिहारेण गैरिकपरिग्रहतुल्यं' ते वर्तनं इति उद्घुष्टम् ॥ ५४२ ॥ एवं स्वकामुकस्य ईर्ष्यासंधुक्षणद्वारा रागसंवर्धनार्थं प्रकृतकामुकार्थं अन्यानेककामुकानामनादरो मातृकृत इति दर्शयन्ती मातरं अधिक्षिप्य, प्रकृतनायकस्योपरि तदीयपक्षपाते कारणकल्पनापूर्वकं

---

५४० तमुप० (प) ५४१ जडः ( गो. का ) ५४३ योगात्—कामप्यवैति सिद्धिं ( गो. का )

बाल्ये तावदयोग्या पश्चादपि वृद्धभावपरिभूता ।
तारुण्ये रागहृता यदि गणिका भ्रमतु तद्भिक्षाम् ॥ ५४४ ॥
उपनय भाण्डकमेतद्यदर्जितं मामकेन देहेन ।
विदधामि तीर्थयात्रामास्स्व सुखं प्रेयसा सार्धम् ॥' ५४५ ॥

( अन्तःकुलकम् )

आर्यजननिन्दितानां पापैकरसप्रधाननारीणाम् ।
एतावानेव गुणो यदभीष्टसमागमो निरावरणः ॥ ५४६ ॥

---

तां द्वाभ्यामुपालभते ] किमिति । किं असौ [ भट्टपुत्रनामा प्रकृतकामुकः ] कामवंश्यः [ कन्दर्पवंशसम्भूतः ] लोकोत्तरसौन्दर्यवान् , वशीकरणाद्यभिज्ञो वा येन त्वं सर्वस्वार्थपराङ्मुखी तदेकासक्ता इत्यर्थः ॥ ५४३ ॥ [ बाल्यावस्थायां तावत् गणिका अयोग्या अपक्ववयस्कतया संभोगाय अत एव धनार्जनाय, एवं वृद्धभावपरिभूता वृद्धा सती अतिपक्ववयस्का तथैव; अतः एवंविधा तारुण्ये तरुणीभावे संभोगक्षमकाले इति यावत् , अत एव धनार्जनानुकूलसमये यदि रागहृता धनार्जनमनादृत्य एकस्य कामुकस्य स्नेहपरवशा, तत् तदा, सा भिक्षां भ्रमतु धनलवप्राप्त्यर्थं दरिद्रस्य इव तस्याः याचकवृत्तिरेव शरणम् इत्यर्थः । 'द्वितीये नार्जितं धनं चतुर्थे किं करिष्यति' इति भावः । उक्तं च पूर्वं अनेनैव कविना—"सद्भावजाऽनुरक्तिर्न हि पथ्यं पण्यनारीणाम् ।" ( आ. २७७ ) इति ॥ ५४४ ॥ कलहोपसंहारे मिथ्यावाच्यमुपदिशति उपनयेति । उपनय आनीय मह्यं प्रयच्छ इति भावार्थः, भाण्डं एव भाण्डकं तत् , "भाण्डं पात्रे वणिङ्मूलधने भूषाश्वभूषयोः ।" इति मेदिनी । ] द्रव्यपूर्णपात्रं, [ भूषणादिकं वा, यत् मदीयं रूपवन्तं देहं कामुकैः उपभोजयित्वा तेभ्यः भाटकरूपेण संगृहीतम् । ततः पापप्रक्षालनाय तीर्थाटनं अहं विदधामि करिष्यामि, " वर्तमानसामीप्ये वर्तमानवद्वा " ( पा. ३।३। १३१ ) इति भविष्यार्थे लट् । तीर्थं तु—" ऋषिजुष्टजले गुरौ " इत्यमरः,—तेषां पुण्यतामूलं तु—" प्रभावादद्भुताद्भूमेः सलिलस्य च तेजसा । परिग्रहान्मुनीनां च तीर्थानां पुण्यता स्मृता ॥ " इति महाभारते । ( अत्र मुनिपदं देवादीनां उपलक्षणम् ॥ ) त्वं तु तव प्रेयसा प्रीतिपात्रेण कामुकेन यदर्थं अपरे धनाद्यधिका अपि अनादृताः तेन साकं, सुखेन तिष्ठ ॥ ५४५ ॥ अन्तःकुलकमिति—विकरालाख्यकुट्टन्या उपक्रान्तस्य कामुकावर्जनविविधप्रकारोपदेशस्य

---

५४६ पापैकरसप्रकाशनारीणां ( प ) रसप्रकाशनैकनारीणां ( का )

नो धनलाभो लाभो लाभः खलु वल्लभेन संयोगः ।
अक्षिगतादर्थाप्तिर्न भवति मनसः प्रसादाय ॥ ५४७ ॥
गाढानुरागभिन्नं तारुण्यरसामृतेन संसिक्तम् ।
न भजति सहृदयहृदयं विभवार्जनसम्भवा चिन्ता ॥ ५४८ ॥

---

मध्ये मात्रा मिथ्यावचःकलहरूपोपदेशकुलकस्य पतितत्वात् इदं मिथ्यावचःकलहं अन्तः-कुलकम् ॥ एवं कामुकावर्जनप्रकारोपदेशाधिकारे प्रथमं ५२० आर्यामारभ्य ५२७ आर्यान्तं ईर्ष्यामानग्रहणं उपदिश्य, ततः ५४५ आर्या यावत् तदर्थमेव स्वस्याः धनहानि-प्रकाशिकां मिथ्यावचःकलहधाटीं प्रदर्श्य, अनन्तरं ५५५ आर्यान्तं यावत् अपरकुलकेन तद्वैपरीत्येन धनलाभनिःस्पृहताप्रकाशनप्रयोज्यां अर्थरसगर्भां वाक्यावलिमनुवदति आर्ये-त्यादिना । प्रकारान्तरेण तु—अर्थग्रहणैककुशलानां वेश्यानां दानोपायासंभवात् ईर्ष्या-मानग्रहणेन "दण्डस्त्वविनयादीनां दृष्ट्वा श्रुत्याऽथ तर्जनम् ।" इति दण्डप्रयोगः उपदिष्टः; ततः मिथ्यावचःकलहस्वरूपेण "भेदस्तु कपटालापैः सुहृदां भेदकल्पना ।" इति भेदप्र-योगः कथितः; इदानीं शेषे " तत्र सामप्रियं वाक्यं स्वानुवृत्तिप्रकाशकम् । " इति लक्षिते सामप्रयोगे उपयोज्यं वाक्यप्रकारमनुवदति आर्येत्यादिना ॥ ]
[ वेश्यानामर्थैकमनस्कत्वेऽपि कामुकविनोदादिकमेव स्वस्या बहुमतं इति प्रत्याययितुं ] आर्यजनेत्याद्या नायकप्रतारणोक्तियुक्तयो मातरं प्रति [ कामुकश्राव्यं ] प्रयोक्तुं सूचिताः । [ आर्यैः अभ्यर्हितैः । पाप एव एकः मुख्यः प्रधानः रसः शृङ्गारादिवत् स्वाद्यः यासां तासां पापकर्मसु एव निरतानां वेश्यानाम् । अभीष्टेन कामुकेन सह समागमः संयोगः । निरावरणः केनापि प्रतिबन्धेन अविहतः, यथा स्वीयानां गुरुजनसा-न्निध्यादिभिः, परकीयानां च पतिभयादिभिः ॥ अत्र सामान्यात्वस्य दोषत्वेऽपि तत्रैव गुणदर्शनात् अनुज्ञालङ्कारो व्यङ्ग्यः, तल्लक्षणं, तु—" दोषस्याभ्यर्थनाऽनुज्ञा तत्रैव गुण-दर्शनात् ।" इति कुवलयानन्दे ॥५४६॥ ] धनलाभो न लाभः लाभानुरूपसुखजनकः इत्यर्थः । अक्षिगतः द्वेष्यः, " द्वेष्ये त्वक्षिगतः । " इत्यमरः । [ अपि च कामुकात् या द्रव्यप्राप्तिः सा तु न अन्वर्थो लाभः, अपि तु प्रियेण एव कामुकेन समागमः । खलु निश्चये । नात्र अपह्नुतिरलंकारः, अनारोपेण भूतार्थकथनात् ॥ एतदेव व्यतिरेकेण समर्थयति । यत इति शेषः, सर्वानुभूतिविषयं इदं यत् स्नेहाभाजनेन प्रदत्तं बहु अपि द्रव्यं मनसः प्रसन्नतायै न भवति, प्रत्युत प्रीतिपात्रात् प्राप्तं अल्पमपि बहुमतं भवतीति इति भावः । पूर्वार्धे परिसंख्यालंकारः, समग्रे काव्यलिङ्गं अलंकारः, "समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनम् । " इति कुवलयानन्दीयलक्षणात् ॥ ] ५४७ ॥ [ गाढानुरागेण

---

५४७ वल्लभेन संसर्गः ( प ) ५४८ तारुण्यसुखामृतेन ( गो. का. )

लाभः स एव परमः पर्याप्तं तेन तृप्ताऽस्मि।
विनिवेश्य यदुत्सङ्गे निक्षिपति मुखे मुखेन ताम्बूलम् ॥५४९॥

दृढस्नेहेन ] भिन्नं विकसितं [ व्याप्तं वा, तारुण्यं मध्यमं वयः, तस्य यः रसः विषयभोगादितृष्णारूपः, स एव सर्वेन्द्रियतर्पकत्वात् अमृतं सुधा, तेन संसिक्तं अभिषिक्तं, यत् सहृदयस्य रसिकस्य हृदयं तत् कर्म, धनार्जनोपायसंसिद्ध्यादिचिन्तनं न स्पृशति इत्यर्थः। स्निग्धः सहृदयः तरुणजनः धनार्जनादिचिन्तया विषयभोगेभ्यो नापह्रियते इति भावः, अनेन स्वस्याः गाढानुरागता द्रव्यनिःस्पृहता च प्रकाशिता। ॥५४८॥ "वैदग्ध्यक्रीडितं नर्म प्रियोपच्छन्दनात्मकम्।" (उपच्छन्दनं वशीकरणम्।) इति लक्षितस्य नर्मणः शृङ्गारहास्यभयरूपेण त्रिविधस्य प्रत्येकं वेषभाषाचेष्टारूपेण त्रिधा विभक्तस्य मध्ये अत्र शृङ्गारनर्मणः चेष्टाप्रकारं द्वाभ्यामाह लाभ इति। पर्याप्तं अत्यर्थम्। उत्सङ्गे अङ्के। ] निक्षिपति अर्पयति। [ मुखे इत्यादि–स्वचर्वितं ताम्बूलं मामङ्के स्थापयित्वा मदुपभोगाय मम मुखे सञ्चारयति तेन अलं सन्तुष्टाऽस्मि, प्रियभुक्तशेषं प्रियया सप्रेम भुज्यते प्रियप्रसाद इति। तथा चोक्तं–"उत्साहसीमा हि पतिप्रसादः।" (विक्रमांकदेवचरिते १०। ३८) इति। प्रकारान्तरेण इदं नैषधकाव्ये (२०।८२)–"जागर्ति तत्र संस्कारः स्वमुखाद्भवदानने। निक्षिप्यायाचितं यत्ता न्यायात्ताम्बूलफालिकाः ॥" इति। ('यदीयो निक्षेपः स तस्मै दातव्योऽन्यथा दण्ड्यः' इति न्यायः। फालिकाः शकलानि।) क्वचिद्वैपरीत्यमपि–"तालाकारपयोधरे तनुभुवस्तन्त्राधिकारप्रिये ताम्यन्मध्यलते तडित्समरुचे तन्त्रीसमालापिनि। ताटङ्कान्ततरङ्गिताक्षियुगले तन्वङ्गि ताम्राधरे तारानाथनिभानने तव मुखात्ताम्बूलमादीयताम् ॥" इत्युक्तेः। ताम्बूलमवश्यं सेव्यं, तदुक्तं–"धिक् ताम्बूलविहीनमाननबिलं, धिक् पुण्ड्रहीनं मुखं, धिग्वेदोक्तिविवर्जितां च रसनां, धिक् पाणिमस्वर्णदम्। धिग्ग्रामं च तरङ्गिणीविरहितं, धिक् प्राज्ञहीनां सभां, धिग्भुक्तं घृतवर्जितं, धिगबलाशून्यां च शय्यामपि"॥ रसिकेन ताम्बूलयाचनं यथा–"त्वन्नेत्राञ्चलवत्प्रदीपितपदं, त्वन्मध्यवन्मुष्टिना ग्राह्यं, त्वत्कुचकुंभवन्नखमुखव्यापारलीलास्पदम्। त्वच्चेतोवदमन्दरागजननं, त्वन्मूर्तिवत्कामदं, स्वादिष्टं च तवौष्ठवत्, तरुणि मे ताम्बूलमानीयताम् ॥" ताम्बूलभक्षणसमयमधिकृत्य उक्तं केनापि–"प्रत्युषसि भुक्तसमये युवतीनां चैव संगमे विरमे। विद्वद्राजसभायां ताम्बूलं यो न खादयेत्स पशुः॥" इति॥ "लाभः स एव परमः" इत्याद्युक्त्या स्वस्याः प्रेमगर्वितात्वं व्यञ्जितम्, यथा उदाहृतं शृंगारामृतलहर्याम्–"अन्यास्ताः सखि योषितः सहचरं लावण्यलीलाग्रहाः सेवाभिः प्रचुराभिरुन्मिष-

५४९ तेन तेन तृ० (प)। मुखे स ताम्बूलम् (गो. का)।

सुरतश्रमवारिकणान् परिमार्ष्टि निजांशुकेन गात्रेषु ।
यदुरसि निधाय विहसंस्तस्य न मूल्यं वसुन्धरा सकला ॥ ५५० ॥
शिथिलितनिजदाररतिर्मयि सक्तमना अनन्यकर्तव्यः ।
यदसौ जितनलरूपस्तिरस्कृतं तेन गाणिक्यम् ॥ ५५१ ॥

---

दुरुप्रेमाणमातन्वते । अस्माकं तु समीरणं वितनुते चेलाञ्चलैरादराद्वीटीमाननपङ्कजे विसृजति प्राणेश्वरः किं क्रिये ॥ " इति ॥ ५४९ ॥ अपरं चेष्टानर्म आह सुरतेति । गात्रेषु गण्डादिमुखावयवेषु, सुरतश्रमेण संभोगायासेन उद्भूतान् वारिकणान् स्वेदाम्भोल्वान् । कणानित्यनेन स्वेदस्य तद्द्वारा च तस्याः उत्तमत्वं ध्वनितं—" स्वेदो हि त्रिविधः प्रोक्त उत्तमाधममध्यमाः ॥ श्रमे महति योऽत्यल्प उत्तमः स प्रकीर्तितः । ललाटे गण्डयोः क्वापि चिबुके चापि दृश्यते ॥ श्रमानुरूपः स्वेदो यो मध्यमः स प्रकीर्तितः। स ललाटशिरोग्रीवावक्षोदेशेषु जायते ॥ अल्पश्रमे महास्वेदोऽत्यधमः सर्वदेहगः॥" इत्युक्तेः । तथाहि आर्यासप्तशत्याम्—" अभिनवकेलिक्लान्ता कलयति बाला क्रमेण घर्माम्भः । ज्यामर्पयितुं नमिता कुसुमास्त्रधनुर्लतेव मधु ॥" ( ६९ ) इति । ( क्रमेण कपोलाद्यंगक्रमेण सुरतावेगक्रमेण वा । मदनधनुर्लता इक्षुः । ) मां सुरतान्ते स्ववक्षसि पातयित्वा स्ववस्त्रेण यत् ] परिमार्ष्टि प्रोञ्छति, [ किं कुर्वन्, विहसन् स्वयं तव दास्यं करोमीति मध्यमहासेन व्यञ्जयन्, तस्य आराधनवत्तस्य, सकला समग्रा, वसुन्धरा वसु द्रव्यं धरति बिभर्ति इति वसुन्धरा पृथ्वी, मूल्यं न भूलोकचक्रवर्तित्वप्राप्तेरपि तत्स्नेहकर्मजन्यो हर्षः अधिकः इति भावः । अनेन कामुकस्य नायिकाप्रीणने औत्सुक्यं सूचितं तेन च तस्य रागातिशयोऽपि व्यञ्जितः ॥ एवं शाकुन्तले ( ३।१८ )–" किं शीतलैः क्लमविनोदिभिरार्द्रवातान् सञ्चारयामि नलिनीदलतालवृन्तैः । अङ्के निधाय करभोरु यथासुखं ते संवाहयामि चरणावुत पद्मताम्रौ ॥ " इति दुष्यन्तोक्तिरपि चेष्टानर्मोदाहरणम् ॥ अत्र अतिशयोक्त्यलङ्कारभेदः । ] ५५० ॥ [ गर्वाख्यं भावं प्रकाशयति शिथिलितेति । यत् असौ कामुकः निषधनाथात् सौन्दर्येण प्रसिद्धात् नलात् अपि अधिकरूपवान् । तथा च नलः दमयन्त्याः पुरः हंसमुखेन वर्णितो नलचम्प्वां–" निर्माय स्वयमेव विस्मितमनाः सौन्दर्यसारेण यं स्वव्यापारपरिश्रमस्य कलशं वेधाः समारोपयत् । कंदर्पं पुरुषाः स्त्रियोपि दधते दृष्टे च यस्मिन् सति, द्रष्टव्यावधिरूपमाप्नुहि पतिं तं दीर्घनेत्रे नलम् ॥ " ( ४।७ ) इति । अनन्यकर्तव्यः मत्प्रसादनादि विहाय अन्यत् किमपि कार्यं यस्य नास्ति तादृशः । तिरस्कृतम्

---

५५० निधाय पञ्जंस्तस्य ( का. )

बहुकुसुमरसास्वादं कुर्वाणा मधुकरी विधिनियोगात् ।
ईदृक्प्रसवविशेषं लभते खलु येन भवति कृतकृत्या ॥ ५५२ ॥
अयि सरले तावदिमा उपदेशगिरो वसन्ति कर्णान्तः ।
यावन्नान्तर्भूतं तच्चेतसि मामकं चेतः ॥ ५५३ ॥
श्रीरस्तु दुर्गतिर्वा, वेश्मनि वासो भवत्वरण्ये वा ।
स्वर्लोके नरके वा, किं बहुना, तेन मे सार्धम् ॥ ५५४ ॥

---

पराजितम् । ] गाणिक्यं गणिकासमूहः, [ "गणिकायाश्च यञ् वाच्यः" इति वार्तिकात् (४।२।४०)॥ अनेन अहमेव वारमुख्या जाता इत्यभिप्रायः ॥ गर्वभावलक्षणं तु—"ऐश्वर्यरूपतारुण्यकुलविद्याबलैरपि । इष्टलाभादिनाऽन्येषामवज्ञा गर्व ईरितः ॥" (२।२३) इति रसार्णवसुधाकरे। प्रकृते रूपतारुण्याभ्यां सः कामुकः सर्वातिशायी, तादृशलाभेन च स्वस्याः सौभाग्योत्कर्षः, तन्मूलकश्च गर्वः ॥ ५५१ ॥ [ अप्रस्तुतप्रशंसामुखेन तुल्यावस्थमधुकरीदृष्टांतव्याजेन स्वस्याः दैववशात् उत्कृष्टं सौभाग्यमाह बहु इति । मधुकरी मधुमक्षिका, मधुकर इति विटस्यापि वाच्यत्वात् मधुकरीशब्दसामर्थ्यात् तस्या लम्पटता सूचिता, रसग्रहणाय नानाकुसुमान् संभुञ्जाना अपि, विधेः ब्रह्मणः नियतेर्वा, नियोगात् प्रेरणात्, ईदृशं अवर्णनीयं लोकोत्तरं इति यावत्, ] प्रसवविशेषः कुसुमविशेषः, [ "प्रसवो गर्भमोक्षे स्याद्वृक्षाणां फलपुष्पयोः । परंपराप्रसंगे च लोकोत्पादे च पुत्रयोः ॥ " इति विश्वलोचने, ] रूपणेन पुरुषविशेषश्च [ तं, " येन सा कृतकृत्या कृतार्था प्राप्तप्राप्तव्या, भवति । अत्र अप्रस्तुतकुसुममधुकरवृत्तान्तेन प्रस्तुतनायिकानायकयोः सम्बन्धविशेषः प्रतीयते ॥ 'मधुकरीव' इति 'ईदृक्पुरुषविशेषं' इति च पाठे उपमा, सा च न अप्रस्तुतार्थप्रशंसावत् प्रकृताभिप्रायव्यञ्जिका ॥ ] ५५२ ॥ [ अयि इति कोमलामन्त्रणे । सरले यतः तत्त्वमनवबुध्यैव प्रलपनशीला ततः तथासम्बुद्धिः । इमाः त्वया उदीर्यमाणाः, अत्र तु अनुक्ताः उपदेशगिरः " गणिकायाश्च गम्यं प्रति सज्जतैव न सङ्गः, सत्यामपि प्रीतौ न मातुर्मातृकाया वा शासनातिवृत्तिः ।" (द० कु० २ ) इत्यादिप्रकाराः । ] अन्तर्भूतं विलीनं, [ द्रवीभूत्वा एकतां गतम् । यावत् हृदयैक्यं न जातं तावत् इत्यर्थः ॥ ५५३ ॥ बहुना उक्तेन किम् ? श्रीः धना-

---

५५२ मधुकरीव विधियोगात्-ईदृक्पुरुषविशेषं ( का ) ५५३ अपि ( प )। कर्णान्तम् ( प ) ५५४ महत्यरण्ये ( गो. प )

इदमास्तेऽलङ्करणं दुर्जननि गृहाण किं ममैतेन ।
तेनैव भूषिताऽहं गुणनिधिना भट्टपुत्रेण ॥ ५५५ ॥
उचितस्थाननियुक्तान्यपनीय विभूषणानि सावेगम् ।
एवमभिधाय यास्यसि मातुः पुरतः समुत्सृज्य ॥ ५५६ ॥
(कुलकम्)

इति रागान्धः श्रुत्वा चेतसि कुरुते कदाचिदेवमिदम् ।
स्नेहाधिष्ठितमनसामविधेयं नास्ति नारीणाम् ॥ ५५७ ॥
जननीं जन्मस्थानं बान्धवलोकं वसूनि जीवं च ।
पुरुषविशेषासक्ताः सीमन्तिन्यस्तृणाय मन्यन्ते ॥ ५५८ ॥

---

दिसमृद्धिः, दुर्गतिः दारिद्र्यं, वा विकल्पे । तेन मम प्रियेण, सार्धं सह, द्वयमपि समानम् । एतादृशी चित्तवृत्तिः स्नेहेङ्गितं, प्रकृते तु वाङ्मात्रम् ॥ ५५४ ॥ प्रयोज्यवाक्येषु चरमं उपदिशति इदमिति । अलङ्करणं भूषणम् । दुर्जननी दुष्टा जननी, तस्या लोभग्रस्तत्वात् विशिष्टोक्तिः । अन्यभूषणादिभिः मे किमपि न प्रयोजनं, स एव मम प्रियभूतो मयि च स्निग्धः भट्टपुत्रः मम भूषणसर्वस्वं इति भावः । " स्त्रीणां प्रियप्रणय एव हि भूरि भूषा । " इति (राष्ट्रौढवंशकाव्ये १४।५८) । " प्रियेषु सौभाग्यफला हि चारुता । " (कुमारसंभवे ५।१) (सौभाग्यं स्पृहणीयत्वं प्रियवाल्लभ्यं वा ।) इति चोक्तेः । " संभोगकेलिकुशलं रमणं रसज्ञाः स्त्रीणामकृत्रिमविभूषणमामनन्ति । " ८६) इति रत्नसिंहमुनिकृतप्राणप्रियकाव्ये एतच्छायः श्लोकः ॥ ५५५ ॥ वाक्यान्ते तदनुकूलां चेष्टां विकराला उपदिशति उचितेति । एवं अभिधाय, भूषणानि सावेगं अपनीय, मातुः पुरतः तानि समुत्सृज्य, यास्यसि इत्यन्वयः । भूषणानां सावेगं अपनयनं क्रोधानुभावः, क्रोधश्च मातुर्लोभमुद्दिश्य । यास्यसि दूरीभविष्यसि ॥५५६॥ रागान्धः अनुरागवशात् विवेकशून्यः कामुकः भट्टपुत्रः । एवं इदं वर्णयिष्यमाणप्रकारम् । चेतसि कुरुते विचार्य निश्चिनुते । अविधेयं अकरणीयम् । तथा हि उक्तं—" युक्तायुक्तविचारणा यदि भवेत् स्नेहाय दत्तं जलम् । " इति ॥ ५५७ ॥ तदेव विवृणोति जननीमित्यादि । बान्धवलोकं बंधुजनं मातृपितृगोत्रसंबंधिनः । सीमन्तिन्यः सीमन्तः केशविन्यासः अस्याः अस्ति इति सिमन्तिनी वनिता ताः । तृणाय तृणवत् तुच्छम् । यथोक्तं विक्रमांकदेवचरिते—" मरणमपि तृणं समर्थयंते मनसिजपौरुषवासितास्तरुण्यः । " (६।१३)

---

५५७ रागात्स (गो. का)

रणीशरसि हते वज्रे वज्रोपमयन्त्रनिर्गतग्राव्णा ।
प्राणान्मुमोच गणिका न मन्त्रविधिना हृता नाम ॥ ५५९ ॥
कालवशेनायासीत् पञ्चत्वं दाक्षिणात्यमणिकण्ठः ।
प्रेमोपगता वेश्या तेनैव समं जगाम भस्मत्वम् ॥ ५६० ॥
भास्करवर्मणि याते सुरवसतिं वारिताऽपि भूपतिना ।
तद्दुःखमसहमाना प्रविवेश विलासिनी दहनम् ॥ ५६१ ॥
ज्वालाकरालहुतभुजि नग्नाचार्यः पपात नरसिंहः ।
तस्मिन्नेव शरीरं निजमजुहोच्छोकपीडिता दासी ॥ ५६२ ॥
प्रीतिभराक्रान्तमतिस्त्रिदशालयजीविकां क्रमोपगताम् ।
अङ्गीचकार मुक्त्वा कदम्बका भट्टविष्णुमा मृत्योः ॥ ५६३ ॥

---

इति ॥ ५५८ ॥ इतः अष्टकेन जनन्यादित्यागानां कैमुतिकन्यायेन उपलक्षणार्थं प्रस्तुतत्वेन च वेश्यानामेव जीवत्यागदृष्टान्तान् उदाहरति रणेत्यादि । वज्रोपमः वज्रवत् प्राणनाशकः, यः यन्त्रनिर्गतः यन्त्रं गोफणा गोफणिका इति वा नाम्ना प्रसिद्धं दूरात् प्रस्तरनिक्षेपकं यन्त्रं तस्मात् निर्गतः निक्षिप्तः, ] ग्रावा उपलः । हृता वशीकृता । [ न केनापि वशीकरणमंत्रेण वशीकृता, अतः स्नेहाधीनैव इत्यर्थः, तादृशी । नाम विस्मये । " नाम कोपेऽभ्युपगमे विस्मये स्मरणेऽपि च । संभाव्यकुत्साप्राकाश्यविकल्पेष्वपि दृश्यते ॥ " इति मेदिनी ॥ ५५९ ॥ पञ्चत्वं देहकारणीभूतपृथ्व्यादिपञ्चमहाभूतमयत्वं अयासीत् प्राप्तवान्, मृत इत्यर्थः । भस्मत्वं जगाम तच्चितायां सहगमनविधिना दाहं प्राप्ता ॥ ५६० ॥ तद्दुःखं प्रियमृत्युरूपं, विलासिनी वेश्या ॥ ५६१ ॥ ज्वालाभिः कराले भीषणे अतिप्रज्वलिते इत्यर्थः, हुतभुजि अग्नौ । नग्नाचार्यः नग्नानां 'निर्ग्रन्थ' 'दिगम्बर' इति प्रसिद्धानां भिक्षुविशेषाणां आचार्यः महत्तमः, तथा च तेषां वस्त्रापरिधानहेतुत्वे वचनं—" सुखानुभवने नग्नो, नग्नो जन्मसमागमे । बाल्ये नग्नः, शिवो नग्नो, नग्नश्छिन्नशिखो यतिः ॥ नग्नत्वं सहजं लोके, विकारो वस्त्रवेष्टनम् । नग्ना चेयं कथं वन्द्या सौरभेयी दिनेदिने ॥ " इति यशस्तिलकचम्वाम् ( ५ आ० ) ॥ अग्नौ पपात अकस्मात् वा स्वर्णपुरुषसिद्धिप्राप्त्यै स्वशरीरबलिदानार्थं वा । दासी वेश्या ॥ ५६२ ॥ त्रिदशाः " तृतीया यौवनाख्या दशा सदा येषां, त्रिशब्दस्य तृतीयार्थता

---

५५९ मुमोच दयिता ( गो. का ) । विधिना हृता रामा ( गो ) हता नामा ( प ) ५६० जगाम पञ्चत्वम् (गो. का) ५६१ वसतिं भूभुजा निवार्यमाणापि (प) ५६३ क्रमोपनताम् ( प. कापा ) । मुक्त्वाऽजीर्णा खलु मिश्रपुत्रमा ( गो. का ) भट्टपुत्रमा (कापा ) ।

देशान्तरादुपेता प्रसादमात्रेण वीक्षिता वनिता ।
तत्याज न पादयुगं समरे निहतस्य वामदेवस्य ॥ ५६४॥
भट्टकदम्बकतनये याते वसतिं परेतनाथस्य ।
चक्रे देहत्यागं रणदेवी वारयोषितां मुख्या ॥ ५६५ ॥
अस्यामेव नगर्यां द्रविणमदात् कालसञ्चितमशेषम् ।
प्रेम्णाऽऽकृष्टा गणिका मिश्रात्मजनीलकण्ठाय ॥ ५६६ ॥
इयमपि मयि विहितास्था मातृवचःकलुषिता गता क्वापि ।
त्यक्त्वाऽऽभरणं सर्वं प्रविजृम्भितमन्युसंवेगा ॥ ५६७ ॥
उत्सृष्टालङ्करणां परिशेषितमातृमुक्तपरिवाराम् ।
संतपर्यामि सम्प्रति सर्वस्वेनापि हरिणाक्षीम् ॥ ५६८ ॥

---

त्रिभागवत् ।" इति अमरव्याख्यासुधायां, ते त्रिदशाः सुराः, तेषां आलयः स्वर्गः, त्रिदशालयस्य जीविका इव जीविका जीवनसाधनं भोजनसुवस्त्रालंकारादिसमृद्धिः, उपमितसमासः, तां, क्रमोपगतां एकस्याः प्राप्तेः अनन्तरं द्वितीयस्याः प्राप्तिः इत्यादिपरिपाट्या संभृतां, यद्वा मातृवंशपरंपरागतां, मुक्त्वा त्यक्त्वा, भट्टविष्णुं नातिधनिनं कंचित् ब्राह्मणम् । 'भुक्त्वा जीर्णा खलु मिश्रपुत्रमा' इति पाठे ] तारुण्यात् प्रभृति अङ्गीकृतवती, अधुना च जीर्णा वृद्धा समभूत् इत्यर्थः । ५६३ ॥[ प्रसादमात्रेण तस्याः हीनपात्रत्वेऽपि केवलं दृष्टिपातरूपः अनुग्रहः कर्तव्यः इत्येव बुद्ध्या वीक्षिता दृष्टा, दृष्टिपातमात्रेण अनुगृहीता इत्यर्थः । वनिता अनुरक्ता स्त्री । ५६४ ॥ परेताः मृताः तेषां नाथः भर्ता परेतनाथः यमः । वसतिं सदनम् । वारयोषितां गणिकानां, मुख्या प्रधाना, वारमुख्या इति संज्ञिता, " अथ सा जनैः । सत्कृता वारमुख्या स्यात् ।" इत्यमरः ॥५६५॥ अस्यामेव नगर्यां वाराणस्याम् । द्रविणं धनं, अदात् दत्तवती इत्यर्थः ॥५६६॥ उदाहरणेभ्यः प्रस्तुतार्थं निगमयति इयमिति । इयं मालती । ] विहितास्था धृतादरबुद्धिः, [ यद्वा गृहीतमदालंबना, "आस्था त्वालम्बनापेक्षायत्नास्थानेषु दृश्यते ।" इति विश्वलोचनः । प्रस्तुतनायकपरित्यागनिर्बन्धात्मकानि मातुः वचनानि तैः ] कलुषिता प्राप्तचित्तोद्वेगा [ अप्रसन्ना । क्वापि अज्ञातस्थले । ] मन्युः क्रोधः । ५६७॥ [ एवं स्थितौ स्वकर्तव्यं प्रति-

---

५६४ डुपेते···विक्षिते ( गो. प ) । वनिते (गो) विनते (प) । पादयुगं तत्यजतुर्न॰ वामदेवस्य समिति निहतस्य ( गो ) पादयुगं त्यजति न वाम॰ ( प ) ५६६ भट्टात्मज ( प. कापा ) ५६७ इयमपि विहितास्था मां मातृ···षिता क्व गता ( गो. का) नु गता ( कापा )। परिवर्धितमन्यु ( गो. का ) ५६८ परिसेवितमातरं विपरिवाराम् ( प )

गेहेन किं प्रयोजनमन्यैरपि बन्धुदारपरिवारैः ।
संसारग्रहकारणमेका खलु मालती मम हि ॥ ५६९ ॥
अमृतकरावयवैरिव घटिता या दृढतरं परिष्वक्ता ।
चेतो नयति समत्वं ब्रह्मण आनन्दरूपस्य ॥ ५७० ॥

---

जानीते उत्सृष्टेति। परिशेपितः परिशेषेण वर्तमानः, मात्रा मुक्तः त्यक्तः स्वसेवाया निष्कासितः, परिवारः दासादिः, यस्याः तां अल्पपरिजनां; संतर्पयामि प्रसादयामि सन्तुष्टां करोमि, सर्वस्वेनापि स्वकीयधनादिसर्वदानेनापि, हरिणाक्षीं हरिणस्य अक्षिणी नेत्रे इव चञ्चले अक्षिणी यस्याः सा हरिणाक्षी (मध्यमपदलोपीसमासः) ताम् । ५६८ ॥ स्वसर्वस्वत्यागमतिं समर्थयति गेहेनेति । गेहं गृहम् । ग्रहः ग्रहणं स्वीकारः, यद्वा ग्रहः आग्रहः आसक्तिः इति यावत् । खलु निश्चये । हि हेतौ यतः इत्यर्थः, "हि विशेषेऽवधारणे । हि पादपूरणे हेतौ" इति विश्वलोचनः । ५६९॥ इतः त्रयोदशभिः आर्याभिः स्वस्य संसारात्यागे उक्तं मालत्याः कारणत्वं स्मृतिपथमुपागततद्विशिष्टगुणगणस्य सङ्कीर्तनेन द्रढयति । तत्रादौ "आदौ रतं बाह्यमिदं प्रयोज्यं, तत्रापि चालिङ्गनपूर्वमेतत् ।" (५।२६) इति रतिरहस्योक्तकामशास्त्रन्यायात् तदालिङ्गनमेव प्रशंसति अमृतेति । अमृतं सुधा तन्मयाः कराः किरणाः यस्य स अमृतकरः सुधांशुः चन्द्रः, तस्य अवयवैः कलाभिः, इव उत्प्रेक्षायां तस्याः सर्वेन्द्रियसंतर्पकत्वात्, घटिता निर्मिता, यथोक्तं भट्टोद्भटेन—"किं कौमुदीः शशिकलाः सकला विचूर्ण्य, संयोज्य चामृतरसेन पुनः प्रयत्नात् । कामस्य घोरहरहुंकृतिदग्धमूर्तेः संजीवनौषधिरियं विहिता विधात्रा ॥" इति । ] परिष्वक्ता आलिङ्गिता । [ चेतः चित्तम् । समत्वं तुल्यत्वम् । आनन्दरूपः "विगलितवेद्यान्तरत्वमानन्दस्य रूपम् ।" इति एकावल्याम् । ब्रह्मणः आनन्दरूपत्वं च "विज्ञानमानन्दं ब्रह्म" (बृहदा० उप० ३।९।२८) "प्रज्ञानघन एवानन्दमयः" (माण्डू० ५) इत्यादिश्रुतिषु प्रसिद्धम् । यस्या दृढालिङ्गनं ब्रह्मानन्दतुल्यमानन्दं प्रापयति इति भावार्थः । तथाहि पंचदश्याम्—"कुमारादिवदेवायं ब्रह्मानन्दैकतत्परः । स्त्रीपरिष्वक्तवद्वेद न बाह्यं नापि चान्तरम् ॥" (११।५४) इति । ( अयं सुषुप्तः, स्त्रीत्यादि 'यथा प्रियया आलिंगितः कामी बाह्याभ्यन्तरविषयज्ञानशून्यत्वात् सुखमूर्तिर्भवति—तथा सुषुप्तौ परमात्मना ऐक्यं गतो जीवः बाह्यादिविषयज्ञानाभावादानन्दरूप एव भवति '। ) श्रुतिरपि—" तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किंचन वेद

---

५७० घटिता सा (प)

आविर्भवदात्मभवक्षोभक्षतधीरता घनं रभसात् ।
विगलितकुचयुगलावृतिरालिङ्गति मालती धन्यम् ॥ ५७१ ॥
निर्दयतरौष्ठखण्डनसव्यथहुङ्कारमूर्छितं सुरते ।
अहहेति वचस्तस्या अपुण्यभाजो न शृण्वन्ति ॥ ५७२ ॥
स्मृतिजन्मजनितविकृतिव्रततिच्छन्नं करोति संसारम् ।
आवद्धसुरतसङ्गरविमर्दसंक्षोभिता दयिता ॥ ५७३ ॥
गाढतराश्लिष्टवपुर्भजते कान्ता प्रमोदसम्मोहम् ।
शिथिलीकृता तु किञ्चिद्विविधविकारं समुच्छ्वसिति ॥ ५७४ ॥

---

नान्तरं" ( बृहदा० ४।३।२१ ) इत्यादि ॥ ] ५७०॥ [पुनरपि तदालिङ्गनं एव प्रशंसति आविरिति । ] आत्मभवक्षोभः मदनविकारः [ आविर्भवन् प्रकटीभवन् यः आत्मभवात् कामात् क्षोभः व्याकुलत्वं तेन क्षता विद्धा भिन्ना वा धीरता धैर्यं यस्याः सा स्मरातुरा इत्यर्थः , घनं निबिडं, रभसात् वेगात् , कुचयुगावरकं पटं विगलितं यस्याः तादृशी, अनेन पीनपयोधरयोः साक्षात्स्पर्शसुखलाभः सूचितः, अतः धन्यं पुण्यवन्तं, मालती आलिङ्गति । अत्र आविर्भवदादेः विगलितादेश्च साभिप्रायत्वात् परिकरालङ्कारः, "अलङ्कारः परिकरः साभिप्राये विशेषणे ।" इति लक्षणात् । ५७१॥ तस्याः सुरतकालिकशब्दोद्गारविशेषं प्रशंसति निर्दयेति । अपुण्यभाजः अकृतशोभनकर्माणो जनाः । अहह इति परिक्लेशद्योतकं अव्ययं, "अहह स्यादनुशये परिक्लेशप्रहर्षयोः ।" इति विश्वलोचनः । कीदृशं तत् अहह इति वचः, सुरतकाले आवेगात् कामुकेन कृतं यत् निर्दयतरं ओष्ठखण्डनं अधरदंशनं तेन सव्यथः पीडासहितः यः हुङ्कारः पीडादर्शकः तत्सम्मर्दासहत्वेन वारणार्थो वा हुं इति ध्वनिः तेन ] मूर्छितं प्रसृतं [ व्याप्तम् । ] ॥ ५७२ ॥ [ आवद्धः प्रवर्तितः यः सुरतसङ्गरः रतियुद्धं तस्मिन् यः विमर्दः अङ्गानां निपीडनं तेन संक्षोभिता व्याकुला, दयिता प्रियतमा । स्मृतिजन्मा स्मरः कामः, तेन जनिताः नानाप्रकाराः ] विकृतयः क्षोभाः [ तद्रूपा या व्रततयः लताः ताभिः च्छन्नं आवृतं संसारं करोति । सुरतकालसंजातसंक्षोभप्रियारामणीयकावलोकिनः कामिनः सकलोऽपि संसारः कामजनितविकारमय इव शृङ्गाररसमय इव भाति इत्यभिप्रायः ॥ ५७३ ॥ आलिङ्गनस्य गाढशिथिलभेदयोः प्रयोगे तस्या अवस्थे प्रकटयति गाढेति । निबिडतरं आलिङ्गिता, कान्ता कमनीया प्रिया, प्रमोदः इष्टार्थस्य भोगजन्य-

---

५७१ धीरताद्य धृतरभसा (का)। ५७४ तु संप्रति वि० ( गो ) नु किञ्चित् (प) । विकारैः ( प )

सन्त्यन्या अपि सत्यं पुरुषोचितकर्मपण्डिताः प्रमदाः ।
सृष्टाऽनया तु नियतं विपरीतरतक्रियागोष्ठी ॥ ५७५ ॥
तन्त्रीवाद्यविशेषान् प्रोद्दामानन्यजन्मनस्तस्याः ।
कुहरितरेचितकम्पितसम्पादननैपुणं करोति जडान् ॥ ५७६ ॥

---

सुखविशेषः, तेन सम्मोहः नष्टसंज्ञत्वरूपः प्रलयाख्यः सात्त्विकभावः यत्र सान्तःकरणानां इन्द्रियाणां वृत्तेः नाम स्वस्वविषयव्यापारस्य संस्तम्भः जायते तं, भजते प्राप्नोति । " तु पादपूरणे भेदाऽवधारणसमुच्चये । पक्षान्तरे नियोगे च प्रशंसायां विनिग्रहे ॥ " इति विश्वलोचनः । तु अत्र पक्षान्तरे, आलिङ्गनस्य किञ्चित् स्वल्पमपि शिथिलीकरणे तु, ] विकारः सञ्चार्यादिः, [ ग्लानिक्रोधादिः । ] समुच्छ्वसिति प्रकटयति ॥ ५७४ ॥ [ मालत्याः विपरीतरते नैपुण्योत्कर्षं प्रशंसति सन्तीति । पुरुषोचितं कर्म पुरुषायितं विपरीतरतम् । पण्डिताः विचक्षणाः । प्रमदा प्रमदो हर्षो यस्याः सा प्रमदा, अर्श आद्यजन्ताट्टाप्; यद्वा प्रकृष्टो मदः तारुण्यसौन्दर्यकलावत्त्वाद्युत्कर्षजः गर्वः यस्याः सा प्रमदा, ताः वनिताः । नियतं निश्चयेन, विपरीता स्त्रीपुंसयोः विपर्ययेण उत्तराधरसंस्थानेन या रतक्रिया सुरतं, तस्याः गोष्ठी तत्सम्बन्धी संलापः विपरीतरतस्य आद्यचर्चा इति यावत्, अनया मालत्या, तु अवधारणे एव इत्यर्थः, सृष्टा उत्पादिता । मालती एव विपरीतरतस्य उद्भावयित्री, अन्या ललनास्तु तदनु प्राप्तज्ञानाः प्राप्तनैपुण्याश्च इति निर्विवादं इत्यर्थः ॥ विपरीतरतं पुरुषायितं—"नायकस्यानुमत्या वा स्वमनीषिकयाऽथवा । पुंवत् स्त्री रमते रागात् पुरुषायितमुच्यते ॥" इति रतिरत्नप्रदीपिका; तत् 'वीरायितं' 'उपरिक्रीडा' इत्यपि आख्यायते । तच्च व्याख्यातं पूर्वं ३८९ आर्यायाम् ॥ अतिशयोक्तिमूलकव्यतिरेकध्वनिः ॥ ५७५ ॥ ] कुहरितादयः स्वराद्यारोहावरोहादिविशेषाः । [ प्रोद्दामः उच्छृङ्खलः, अनन्यजन्मा आत्मभूः स्मरः, यस्याः; तस्याः चण्डकामवेगायाः तीव्रकामावेशायाः वा मालत्याः; कुहरितं रतकाले कोकिलस्वरसदृशः कण्ठजः स्वरः, रेचितं तत्कालीनं निःश्वसितं, कम्पितं च स्मरावेशात् देहे शब्दोच्चारणे वा, तेषां सम्पादने करणे, नैपुणं कौशल्यं; तन्त्रीवाद्यं—तन्त्री वल्लकीगुणः, 'तार' इति भाषायां, "तन्त्री स्याद्वल्लकीगुणे । शिरायां च गुडुच्यां च ।" इति विश्वलोचनः, तन्त्री वाद्या वादनीया यस्मिन् तत् तन्त्रीवाद्यं ततादिचतुर्विधवाद्येषु ततं वाद्यं, तेषां विशेषान् वीणादिकान् कुहरिताद्युत्पादकान् वीणादेः

---

५७५ पंडिता वेश्याः (गो. का) । तया (प. कापा) । रति (प) ५७६ शेषादुद्दामा ( गो. का ) संदाननैपुणं ( प ) । करोति रुजं ( गो. का )

**ललिताङ्गहारजृम्भितवलितस्मितवेपनानि मालत्याः ।**
**पश्यञ्जहाति कामो रतिमोहनचेष्टितेषु बहुमानम् ॥ ५७७ ॥**

---

कुहरितादीनां कारणत्वेन कार्यकारणयोः अभेदेन तथोक्तिः । वीणादेः कुहरितादि– कुहरितादयः गाने वर्णालंकारविशेषाः, तेषां लक्षणानि भरते ( १९ । ४५-४६ )– " रेचितः शिरसि ज्ञेयः, कम्पितस्तु कलात्रयम् । कण्ठे निरुद्धपवनः कुहरो नाम जायते ॥ " इति, इमे वीणादिवाद्ये कुहराद्याख्यहस्तव्यापारैः उद्भाविताः तत्तत्संज्ञां लभन्ते, कुहरहस्तश्च निर्दिष्टः संगीतरत्नाकरे–"करस्य किंचित्सांगुष्ठसकलांगुलिकुंचने । कनिष्ठांगुष्ठसंस्पर्शस्तंत्र्याः स्यात् कुहरः करः ॥" ( ६।८७ ) इति । तान् जडान् अनेन मूकान् मूर्खान् इति अर्थः सूच्यते, "मूर्खे मूके हिमग्रस्ते जडः" इति विश्वलोचनः, करोति ॥ अत्र उपमानभूततन्त्रीवाद्यस्वरेभ्यः उपमेयभूतानां तस्याः स्वरविशेषाणां आधिक्यसूचनात् व्यतिरेकालङ्कारो व्यङ्ग्यः । "व्यतिरेको विशेषश्चेदुपमानोपमेययोः" इति च तल्लक्षणं कुवलयानन्दे । वीणादीनां च वस्तुतः जडत्वेऽपि श्लेषमूलकारोपः, नैपुणं जडान् करोति इत्यत्र कुवलयानन्दानुसारेण विभावनाविशेषः (पञ्चमी विभावना), "विरुद्धात् कार्यसम्पत्तिर्दृष्टा काचिद्विभावना ।" इति लक्षणात्, विरोधाभासश्च, इति तेषां संसृष्टिः ॥५७६॥ मालत्याः ये ललिताः सुकुमाराः सुन्दरा वा, इदं विशेषणं लिङ्गविपरिणामेन वेपनान्तप्रत्येकशब्दान्वयि; यद्वा " सुकुमारतयाऽङ्गानां विन्यासो ललितं भवेत् । " (३।१०५) इति साहित्यदर्पणे लक्षितं तानि; अङ्गहारः अङ्गं ह्रियते इतस्ततः चाल्यते यत्र सः अङ्गहारः अङ्गविक्षेपः, "अङ्गानामुचिते देशे प्रापणं सविलासकम् ।" (७।९९६) इति सङ्गीतरत्नाकरे उक्तः सविलासं सौचित्यं शिरोहस्तपादाद्यङ्गचालनात्मकः; यद्वा 'गर्बा' इति भाषायां प्रसिद्धे स्त्रीणां वलयितवृन्दगाने लास्याङ्गविशेषः, यथा लक्षितः संगीतरत्नाकरे—" सताललिलतोपेता क्रमात्कार्या द्वयोर्नतिः । धनुर्वेदङ्गहारः स्यादिति निःशंकभाषितम् ॥ " ( ७।१२२३ ) ( द्वयोः ताललययोः, क्रमात् अनुकरणक्रमेण इत्यर्थः; निःशंकः शार्ङ्गदेवः ॥ ) वलितानि वलनानि विवर्तनानि; स्मितानि मन्दहास्यानि, " स्मितं चालक्ष्यदशनं दृक्कपोलविकासकृत् । " ( २।२३० ) इति रसार्णवसुधाकरे लक्षितं; वेपनानि हर्षत्रासक्रोधादिजनितानि कम्पनानि; तानि च स्वभावभूतानि न रताङ्गभूतान्यपि वीक्ष्य, मदनः, रतिः स्वभार्या तस्याः मोहनचेष्टितानि मोहनानि चेतोहरत्वात् इन्द्रियव्यापारनिरोधीनि, न तु सुरतानि अप्रस्तुतत्वात्, चेष्टितानि ललितादिकरणानि, तेषु बहुमानं श्रद्धां गौरवबुद्धिं वा, जहाति त्यजति, मालतीचेष्टिताग्रे रतिचेष्टितानि कामदेवस्य रमणीयानि न भान्ति इत्यर्थः । व्यतिरेकालङ्कारो व्यङ्ग्यः॥५७७॥

न ग्राम्यं परिहसितं, नाविभ्रमतरलिताक्षिविक्षेपः ।
सुरतानुद्योगविधौ दोहददानं न पुष्पबाणस्य ॥ ५७८ ॥

---

त्रिभिर्विशेषकेण तस्या अन्याभ्यो निषेधमुखेन व्यतिरेकमाह नेत्यादि । परिहसितं परिहासः नर्मकेलिरूपहासक्रीडा, ग्राम्यं हालिकाद्यविदग्धमात्रप्रयोज्यं न, नर्मवती सा इति यावत्, "अग्राम्यपरिहासोक्तिर्नर्म इत्यभिधीयते ।" इति वचनात् । अविभ्रमः विलासरहितः, चासौ तरलिताक्षिविक्षेपः चञ्चलनेत्रपातः न, सदैव सविलासमीक्षते इत्यर्थः; अत्र अविमृष्टविधेयांशः पददोषो भाति यतः अविभ्रमत्वं विधेयाङ्गं, तच्च समासे गुणीभावात् उद्देश्यत्वप्रतीतिकृत् इति । तस्याश्च सुरते सम्प्रयोगे अनुद्योगविधौ अप्रवृत्तिकर्मणि सुरतहीनायां तस्यां इति यावत्, पुष्पबाणस्य कामदेवस्य, दोहददानं—दोहदं वृक्षविशेषाणां पुष्पादिसमृद्ध्यर्थं यत् द्रव्यं दीयते तत्, "दोहलं(दं) तु नपीच्छायां···श्रद्धासंज्ञे, स्थावराणां पुष्ट्यर्थं यत् प्रदीयते ।" इति केशवः, तच्च प्रियंग्वादिदशवृक्षाणां भेदेन दशविधं, यथोक्तं—"स्त्रीणां स्पर्शात्प्रियङ्गुर्विकसति, बकुलः सीधुगण्डूषसेकात्, पादाघातादशोकस्तिलककुरबकौ वीक्षणालिङ्गनाभ्याम् । मन्दारो नर्मवाक्यात्, पटुमृदुहसनाच्चम्पको, वक्त्रवाताच्चूतो, गीतान्नमेरुर्विकसति च, पुरो नर्तनात्कर्णिकारः" ॥ इति; स्पर्शादिदशानां सुरतांगत्वेन, सर्वान् सुरतांगान् उपलक्ष्य मूले सुरतमेव उपात्तं इति ज्ञेयं, तस्य दानं वितरणं न भवति इति शेषः; "मूलं नास्ति कुतः शाखा" इति न्यायेन अलब्धसुरतायां तस्यां कामदेवस्य पुष्टिलाभो अभिलाष( मनोरथ )संपूर्णीकरणं वा न भवति, सः असन्तुष्टः अकृतकृत्य एव वर्तते इति भावार्थः; तस्याः सुरतोद्योगे एव कामः पूर्णाभिलाषो जायते इति भावः ॥ यथोक्तं भर्तृहरिणा शृंगारशतके–"आमीलितनयनानां यः सुरतरसोऽनुसंविदं भाति । मिथुनैर्मिथोऽवधारितमवितथमिदमेव कामनिर्वहणम् ॥" इति । ( आमीलितं ईषन्मुकुलितं, संवित् ज्ञानं, अवधारितं निश्चितं, अवितथं सत्यं, कामनिर्वहणं कामदोहदपूर्त्तिः कामपुरुषार्थस्य प्रतिपादनं, इति ॥ ) ॥ "सुरतोद्योगनिरोधः" इति पाठे तस्या वामत्वं इत्यर्थः, स च कामस्य दोहददानं अभिलाषपूरकं तृप्तिदायकं वा न भवति, प्रत्युत कामवर्धकमेव भवति, अपरासां तादृशनिरोधः अनिपुणतया कामुकानां वैरस्याधायकः इत्यर्थः ॥ अत्र हीनधर्मनिषेधद्वारा गुणाधिक्यरूपो व्यतिरेकोऽनुप्रविशति, तेन न अन्यासां एवं इति तस्या व्यतिरेको ध्वन्यते ॥ ५७८ ॥

---

५७८ सुरतोद्योग निरोधः (प) सुरतानुद्योगविधौ ( का॰ग ) सुरतोद्योग विधौ ( काप)

नार्थपरो नयनरसो, न पराशयवेदने विचक्षणता ।
नासौष्ठवं प्रसङ्गे, न चान्यगुणकीर्तनेषु भारत्याः ॥ ५७९ ॥
नापरपुरुषश्लाघा, न त्यागः कालदेशवेषस्य ।
वैदग्ध्यजन्मभूमेर्गुरुजघनभरेण मन्दयातायाः ॥५८०॥ ( विशेषकम् )

---

अर्थो द्रव्यादिरूपं प्रयोजनं [ तस्य परः प्रवणः तद्गतः, ] नयनरसः नेत्रासक्तिः [स्निग्धदर्शनं न; सा न धनलुब्धा इत्यर्थः; परेषां अन्येषां आशयाः अभिप्रायाः कूटाः अन्यथा वा, तेषां ज्ञाने ग्रहणे, विचक्षणता कौशल्यं न, तस्याः अतिसरलत्वात्; न पराशयेत्यादिना मौग्ध्यबोधनद्वारा धौर्त्याभावः प्रतिपादितः । ] प्रसङ्गः प्रवृत्तिः, [प्रसंगे कार्यकाले असौष्ठवं अरमणीयत्वं ग्राम्यत्वं वा न; एवं परेषां गुणकीर्तनेषु गुणश्लाघासु अपि, भारत्याः वाचः, असौष्ठवं न ॥ ५७९ ॥ अपि च मां विहाय अन्यस्य कस्यापि प्रसंशनं अपि न, अनेन तस्याः स्वस्मिन्नेव अनुरागः सूचितः; कालदेशवेषस्य कालोचितस्य देशोचितस्य च वेषस्य नेपथ्यस्य त्यागः न, अनेन तस्याः नेपथ्यप्रयोगकलाविज्ञानं सूचितं, तथा च कामसूत्रटीकायां गीतादिचतुःषष्ट्यंगविद्याव्याख्याने जयमंगलः–" नेपथ्यप्रयोगा इति— देशकालापेक्षया वस्त्रमाल्याभरणादिभिः शोभार्थं शरीरस्य मण्डनाकाराः । " इति । इदं सर्वं कीदृश्याः तस्याः ? वैदग्ध्यजन्मभूमेः वैदग्ध्यस्य रसादियोगिचातुर्यस्य उत्पत्तिस्थानभूतायाः, अनेन तस्याः मानसगुणोत्कर्पः सूचितः; गुरोः अलघोः, जघनस्य कटिपुरोभागस्य 'पेडु' इति भाषायां प्रसिद्धस्य, भरेण भारेण, मन्दं शीघ्रविरुद्धं मन्थरं यातं गमनं यस्याः सा, तस्याः गजगामिन्या इति यावत्,–यथोक्तं भिक्षाटनकाव्ये— " किं चित्रमत्र जघनं परमुद्वहंत्या मंदीभवंति यदि ते गतयो वरांगि । यद्वीक्षणेऽपि गतधैर्यगुणा युवानो गंतुं मनागपि पुनर्न हि शक्नुवंति ॥ ( ५।९ )" इति । अनेन तस्याः शारीरगुणोत्कर्पः सूचितः; जघनं च घनं प्रशस्तं, तथाहि कादंबरीवर्णने भट्टबाणः–"प्रजापतिदृढनिष्पीडितमध्यभागगलितं जघनशिलातलप्रतिघाताल्लावण्यस्रोत इव द्विधागतमूरुद्वयं दधानां " इति । तथा मानवेदचंपूकाव्ये शकुंतलावर्णने–" पयोधरधराधराधित्यकापतल्लावण्यतरंगिणीचंडवेगोत्खातपिचण्डस्थलसंश्लेषादिव पीनपीनेन पुलिनदेशदेशीयेन······घनतरेण जघनभरेण जगदन्तरासीनजनतान्तरंगं तरंगयन्तीं "(स्त. ४.) इति ॥ ( अनेन रुपकोत्प्रेक्षोपमालंकाराणां संकरेण उदरस्य क्षामत्वं जघनस्य च

---

५७९ लपनरसो ( प )। न वान्य० ( कापा ) नोल्बणगुणकीर्तने कथावसरः ( प ) ५८० न त्यागो देशकालपात्रस्य ( प )। वैदग्ध्या ( प )। यानायाः ( प )।

चक्राह्वपरिष्वजनं हंससमाश्लेषनकुलपरिरम्भम् ।
पारावतावगूहनमाचरति सुमध्यमा यथावसरम् ॥ ५८१ ॥

घनत्वं व्यञ्जितम् । ) एवं विशेषकेण तस्या विविधेङ्गितनिरूपणेन तस्याः स्वस्मिन्नेवा-नुरागः इति प्रतिपादितम् ॥ ५८० ॥ अनुरागप्रवृत्तानां बाह्यरतप्रकाराणां आनुरूप्यभू-तस्य आलिंगनस्य भेदादिषु तस्याः प्रमोदनं कौशलं स्मृत्वा प्राह चक्रेति । परिष्वजनं समाश्लेषः परिरंभः अवगूहनं आलिंगनपर्यायाः । ] चक्राह्वपरिष्वजनादयः आलिंगन-भेदाः । [ चक्राह्वः चक्रवाकः 'चकवा' इति प्रसिद्धः पक्षी, हंसः प्रसिद्धः, नकुलः सर्प-वैरी लघुः चतुष्पाद्, पारावतः ' परेवा ' ' कबूतर ' इति वा प्रसिद्धः । तेषां आश्ले-षप्रकाराः तत्तन्नामपूर्वकं ख्याताः प्रत्यक्षग्राह्याः कामशास्त्रेषु अनुपदिष्टाः । एवमेव अपराणि वात्स्यायनीये अनुक्तानि पद्मचुंबनवेणुदारितचुंबनादीनि गौणीसुतादिकामशास्त्रेषु उपलभ्यंते । एवं "तत् (आलिंगनं) सप्तधा यथा—आमोदालिंगनं, मुदितालिंगनं, प्रेमालिं-गनं, आनंदालिंगनं, रुच्यालिंगनं, मदनालिंगनं, विनोदालिंगनं, इति कामशास्त्रम् । " इति शब्दकल्पद्रुमः ॥ तत्र चक्रालिंगनं रथाङ्गपक्षिणोरिव शरीरसंघट्टनरूपं, हंसालिंगनं हंसयोरिव श्लेषविश्लेषयोः पुनरावृत्तिमयं; नकुलालिंगनं नकुलवद्गाढं चिरकालं च यत् क्रोडीकरणं तत्, यथा योगवासिष्ठे—" गलदङ्गं घनस्नेहं मुग्धघ्राणं स्फुरत्स्पृहम् । आलिलिंग चिरं कान्तां नकुलो नकुलीमिव ॥" (६।१०९।१३-१४) इति । गलदंगं गाढं इत्यर्थः । ) पारावतावगूहनं साम्मुख्येन मुखसंयोजनमात्रम् । सुमध्यमा शोभनो मध्य-भागः कटिप्रदेशो नाभ्याः आरभ्य अधोगतः उदरभागः यस्याः सा, शोभनत्वं च तस्य तनुत्वात् त्रिवलिभूषितत्वाच; तथाहि—" तनुत्वरमणीयस्य मध्यस्य च भुजस्य च । अभवन्नितरां तस्या वलयः कान्तिवृद्धये ॥ " इति; राष्ट्रौढवंशमहाकाव्ये च— " वितानवेदी—हरिणाधिराज—देवाङ्गनानामपि मध्यभागः । इति त्रयीयं विजितेति यासां मध्यो वलीभिस्तिसृभिः शशंस ॥ " ( १४।३२ ) इति । ("परिष्कृता यज्ञार्थं पशुबन्ध-नाय यज्ञपात्रासादनाय चाति ( च जात ? ) संस्कारा भूमिर्वेदिरुच्यते, सा च डमरुका-द्याकारा पिण्डिका । " इति शब्दकल्पद्रुमे । अनेन अन्यत्र यत्र मध्यभागवर्णने वेदिरिति उपमानं मुद्रिका इत्यर्थे कैश्चिट्टीकाकारैर्व्याख्यातं तदसमञ्जसं ज्ञेयम् ।) अपि च—" प्रद्यु-म्नेन जगज्जयाय विधृतं मध्ये दृढं मुष्टिना तन्वंग्या रसनिर्भरं वपुरिदं मुख्यं धनुः कान्त-वम् । तेनोर्ध्वं सरसश्चचाल कुचयोर्व्याजेन, मुष्टेः पुनर्मुद्राणां मिषतस्तदा परिणतं तस्मिन् वलीनां त्रयम् ॥ " ( १।६९ ) इति मदालसाचम्वाम् । ( प्रद्युम्नः कामः, मध्ये दृढं धृतं अत एव मध्यं संकुचितं तन्जातं, रसनिर्भरं अत एव मुष्टिनिष्पीडनेन रसः ऊर्ध्व-

५८१ चक्राह्वे ( प ) । पारापतावचुम्बन ( प )

तद्वक्रवचनहास्यव्यवहृतिहृतमानसस्य जायन्ते ।
अनुकूलसुन्दरा अपि भरणीयाः केवलं दाराः ॥ ५८२ ॥
सूचयति पृथक्करणं भ्रातॄणां, वक्ति विषमशीलत्वम् ।
विवृणोति गृहविसंस्थामभिनन्दति पितृकुलस्य गुणवत्ताम् ५८३॥

देशं प्राप्य कुचयोः व्याजेन पिण्डितोऽभूत्, मुग्ध्याः अंगुलित्रयस्य तत्र निष्पीडनस्थाने मध्ये तिस्रः मुद्रारेखाः समुद्भूताः ता एव वलित्रयम् । अत्र व्यंग्यहेतूत्प्रेक्षागर्भिता अपःह्नुतिः अलंकारः ॥ कन्तोः कामदेवस्य इदं कान्तवम् । ) यथावसरं अवसरं कालं उचितकालं अनतिक्रम्य, सामान्येन विशेषतश्च तत्तदुचितकाले इत्यर्थः । सामान्यतः आलिंगनावसरस्तु—“ कोपप्रशमने भीतौ वियोगे पुनरागमे । संभोगे च समाश्लेषो विशेषेण सुखावहः ॥ ” इति । चक्रालिङ्गनादीनां अवसरास्तु अन्यतः ऊह्याः ॥५८१॥]
तदित्यादि । [ ‘ व्यवहितिहृतमानसस्य ’ इति पाठे ] तस्या उद्दीपकनानाप्रकारोक्तिहास्ययोर्व्यवहित्या व्यवधानेन हृतं प्रतारितं मानसं यस्य तस्य, केवलं अनुकूलतयैव सुंदराः न तु रूपादिना, केवलं पोषणीया दारा जायन्ते । तद्वचनश्रवणादौ तु आहृ(हृ?)त्य आसज्यते चेतसा इति भावः ॥ [ वस्तुतस्तु ‘ व्यवहृतिहृत ’ इत्येव पाठः । अर्थश्च—तस्याः वक्रवचनानि वक्रोक्तयः तैः, तथा हास्यं हसनं तैः, व्यवहृतिभिः वचनविशेषैः आचरितैः च; यद्वा हास्ययुक्ताः स्मितपूर्विकाः वचनव्यवहृतयः ताभिः, हृतमानसस्य आहृतचित्तस्य, अन्यस्य कस्यचिदपि, दाराः स्वभार्या, अनुकूलाश्च सुन्दराश्च अनुकूलसुन्दराः—न केवलं अनुकूलाः अनुवृत्तिपरायणाः मनोहारिण्योऽपि दुर्लभगुणद्वयाश्रयाः, केवलं भरणीयाः अन्नवस्त्रादिभिः पोषणीया भार्या एव भवंति, तथा चोक्तं आत्मपुराणे—“ भार्येति प्रोच्यते यस्माद्भरणीयाऽशनादिभिः । ” ( ७ । २४५ ) इति; न तु तस्य स्नेहसमागमादीनां भाजनानि । एवं विलक्षणा मालत्या वाग्विलासस्यैव आकर्षणशक्तिः, किमु वाच्या सा तस्याः अपरेषां विलासानां इत्यभिप्रायः ॥५८२॥ परिणीताप्रसंगेन तासां दुर्व्यापारान् वर्णयन्, तथात्वेऽपि पतीनां तद्वशंवदत्वं अनुवदन्, तद्द्वारा मदनप्राबल्यं प्रशंसन् युग्मेन उपसंहरति सूचयतीति । यद्यपि इत्यध्याहर्तव्यम् । परिणीता स्वपतयं भ्रातॄणां पतिज्येष्ठकनिष्ठसोदरासोदराणां बाल्यादारभ्य परमप्रेम्णा विश्लेषासहिष्णुतया एकत्रैव स्थितानामपि भावुकानां देवराणां च, पृथक्करणं पितृदायं स्वं स्वं विभज्य पृथग्देशे भिन्नभिन्नस्वेच्छाविहारव्यवहारयोग्ये स्थाने स्वातंत्र्येण अवस्थानं

५८२ वदन ( गो॰—का ) । व्यवहिति ( गो ) । अपि मन्ये भरणाय केवलं दाराः ( प )

अन्यसुतपक्षपातं कथयति मातुस्तिरस्करोति पतिम् ।
पार्श्वनिमग्नां जायां मानयति विमुच्य कार्मुकं मदनः ॥५८४॥(युग्मम्)
एवं कृतेऽपि सुन्दरी यदि तिष्ठति नायकः प्रकृत्यैव ।
इत्थं पथि परिमोषस्त्वत्सख्या नैपुणेन वक्तव्यः ॥ ५८५ ॥

---

उपदिशति; यथोक्तं–"तावदेव प्रधानं स्यात्तावद्गुरुजने रतः । पुरुषो योषितां यावन्न शृणोति रहो वचः ॥" इति । तेषां च विषमशीलत्वं असत्स्वभावत्वं पृथक्करणसूचनफलकं वक्ति; गृहस्य पतिगृहस्य, विसंस्थां अव्यवस्थां, विवृणोति प्रकाशयति, सखीप्रतिवेशिन्यादीनां पुरतः, न तु तदुपायं करोति; स्वस्याः पितृकुलस्य गुणवत्तां प्रशस्तगुणतां इत्यर्थः, अभिनन्दति प्रशंसति ॥५८३॥ मातुः पतिमातुः श्वश्र्वाः, अन्यसुते ज्येष्ठे देवरे वा, पक्षपातं प्रीतिमत्त्वं, अनुवदति; पतिं च प्रसङ्गेषु अप्रसङ्गेषु च तिरस्करोति न्यक्कुरुते । तथापि इत्यध्याहार्यं, एवं दोषगणवत्त्वेऽपि इत्यर्थः, मदनः कामदेवः,–कार्मुकं धनुः, विमुच्य मुक्त्वा–तद्विनैव इत्यर्थः, जायां तादृशीं स्वपत्नीं, मानयति पूजयति, मान पूजायां इति धातोः णिजन्तस्य रूपम्॥ यत् पतिः स्त्रीवश्यो भूत्वा तदुक्तमेव सर्वं करोति, तत् धनुर्ग्रहणं विनैव मदनेन कार्यते इत्यहो प्रभावः मदनस्य, किमु वाच्यं 'का कथा बाणसन्धाने' इत्यभिप्रायः । एतद्दोषैः रहिता मालती, येन केनाप्युपायेन तस्याः पुनःसंग्रहणं न दोषाय इत्यपि सूचितम् ॥ 'विमुच्य कामुकं' इति पाठे ] मदनः, कामुकं विमुच्य तं अननुलक्षीकृत्य, जायां मानयति अनुसरति तद्गृह्य एव भवति, यतः प्राप्तसाहाय्या स्वेष्टं उक्तं आचरति इत्यर्थः । [ अयं पाठः अग्राह्यः ] ॥ ५८४ ॥ [ इतो विंशत्या, वात्स्यायनीये कामसूत्रे वैशिकाधिकरणे ( ६ ) अर्थागमोपायप्रकरणे यदुक्तं "तदभिगमननिमित्तो रक्षिभिश्चौरैर्वाऽलंकारपरिमोषः" इति तस्य विधां दर्शयति एवमित्यादिना । एवं कृतेऽपि भूषणादित्यागपुरःसरं प्रस्थाने कृतेऽपि (आ. ५५६) । प्रकृत्यैव स्वभावेन अविकृततया, तिष्ठति वर्तते, पूर्वप्रयोगे विफले जाते इत्यर्थः, तदा तदावर्जनाय, इत्थं वर्णयिष्यमाणवचनावलिप्रकारेण, (आ. ५८६–६०४), पथि मार्गे, ] परिमोषः वञ्चनं, [ वस्तुतः चौरैः आभूषणादीनां लुण्टनं, त्वत्सख्या दूतीभूतया, तल्लक्षणं तु–" स्वात्मनोऽप्यधिकं प्रेम कुर्वाणाऽन्योन्यमच्छलम् । विस्रंभिणी वयोवेषादिभिस्तुल्या सखी मता ॥" इति उज्ज्वलनीलमणौ उक्तं तया ।

---

५८४ पार्श्वनिमग्ना जाया मायातु वि० ( गो२ ) । पार्श्वनिषण्णा जाया मायातु(तु?) विमुच्य कामुकं मदनः ( गो. का )

'गृहकार्यव्यग्रतया चित्तग्रहणाय वा कुलस्त्रीणाम् ।
नायाते भवति, सखी प्रावृड्घनकलुषिते दिशां चक्रे ॥५८६॥
प्रग्रीवकशयनगता स्फारीभवदात्मसम्भवविकारा ।
त्वद्वर्त्मनिहितनेत्रा गीतामन्येन गीतिकामशृणोत् ॥ ५८७ ॥
'यदि जीवितेन कृत्यं संभावय विरहिणि प्रियं तूर्णम् ।
घनरसितस्य हि पुरतः कदलीदलकोमलः कुलिशपातः'॥५८८॥

---

नैपुणेन चातुर्येण, कथयितव्यः वक्तव्यः ।५८५॥ तत्रादौ प्रियाभिगमनबीजं युग्मेन निक्षिपति गृहेति । मम सखी मालती, भवति अत्यादरे भवान् इति उत्तमपुरुषप्रयोगः, तस्याः सर्वस्वभूते त्वयि इत्यर्थः; न आयाते तद्गृहं अनागते, अनेन सा 'विप्रलब्धा' इति सूचितं; अनागमनकारणं वितर्कयति—गृहकार्यव्यग्रतया कस्मिंश्चित् स्वकार्ये व्यापृततया, अथवा अपरासां कुलस्त्रीणां परकीयानां कुलवतीनां, चित्तग्रहणाय प्रलोभनार्थं, तादर्थ्ये चतुर्थी; इयं असूयोक्तिः परकीयारतप्राप्तये यतमानः स्वरक्तामपि सामान्यां कथं स्मरेत् इति । एवं विरहपीडां अनुभवत्याः तस्याः गण्डस्योपरि पिटकोद्भेद इव मेघदर्शनं जातं इत्यग्रे कथयति प्रावृडिति । दिशां चक्रे समूहे सर्वासु अष्टासु दिक्षु इत्यर्थः, प्रावृषि ये घनाः ते प्रावृड्घनाः वर्षाकालीनमेघाः, तैः ] कलुषिते व्याप्ते [ मेदुरे मलिनीकृते वा । ] ५८६ ॥ [ प्रग्रीवके प्रासादे, "प्रग्रीवमस्त्री कलशे ग्रीवाप्रासादयोरपि ।" इति केशवः, प्रग्रीव एव प्रग्रीवकः, तत्र शयनगता नैराश्येन शय्यापतिता, अनेन सा 'वासकसज्जा' इति सूचितं, स्फारीत्यादि—मेघदर्शनविभावितोद्दीपितमन्मथविकारा, यथोक्तं मेघदूते ( १ । ३ )—"मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः, कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे ।" इति; "अनेन पुनर्निर्वृतानामप्युत्कण्ठाकारिणा मेघोदयेनाप्रतीकारो भविष्यतीति तर्कयामि ।" इति विक्रमोर्वशीये ( अं. ४ ) चित्रलेखावाक्यम्; "विरहमविरहं वा नानुरुंधंति मेघाः, सुखिनमसुखिनं वा सर्वमुत्कण्ठयन्ति ।" ( ५ । २८ ) इति बालरामायणे च । अत एव त्वद्वर्त्मनि तव नियते आगमनमार्गे, निहिते स्थापिते नेत्रे नयने यया सा, त्वां व्याकुलतया प्रतीक्षमाणा इत्यर्थः ॥ उक्तं च काव्यमीमांसायां वर्षास्वभावाख्याने—'··वियोगिनीवीक्षितनाथवर्त्मा '···'या तुङ्गहर्म्याग्रविलासशय्या '···इत्यादिकम् । गीतिरेव गीतिका, तल्लक्षणं—उक्तं प्राक् ( आ. ३२५ )॥ अत्र 'प्राग्रीवकशयनगता' इति पाठः अर्थानवबोधमूलक इति भाति ॥ ५८७॥ जीवितेन प्राणविरहाभावेन । ]

---

५८७ प्राग्रीवकशयन ( गो. का )। त्वन्मार्गनि० ( प )

आकर्ण्य मामवादीद्धन्यास्ता युवतयः सखि कठोराः ।
या विषहन्ते दीर्घं प्रियतमविरहानलासारम् ॥ ५८९ ॥
मम तु दिनान्तरितेऽपि प्रेयसि लब्ध्वा सहायसामग्रीम् ।
विदधाति मकरकेतन उत्कलिकाविधुरितं हृदयम् ॥ ५९० ॥

---

संभावय अनुसर [यद्वा सम्मानय अभिसरणादिना इत्यर्थः । तूर्णं त्वरितं शीघ्रम्] । हि यतः, [घनरसितस्य मेघगर्जितस्य, पुरतः अग्रे,] घनगर्जिते सति इत्यर्थः; कुलिशपातः वज्रप्रहारोऽपि, कदलीदलवत् कोमलः। विरहपीडातो वज्रपातमपि विरहिण्यः सुसहं मन्यन्ते न तु विरहं इत्यर्थः ॥ [ अत्र दण्डिमतानुसारेण हेतूपमा, कुलिशपातकदलीदलयोः कोमलत्वेन साम्यप्रतीतेः घनरसितसत्त्वहेतूत्थापितत्वात् ॥ ५८८ ॥ आकर्ण्य प्रसंगगीतां गीतिं श्रुत्वा, मां सखीम् । युवतयः मध्यमवयसि वर्तमानाः तरुण्यः, कठोराः वज्रहृदयाः । प्रियतमेन विरहः स एव अनलः वह्निः तस्य आसारं प्रसरणं, "आसारस्तु प्रसरणे धारावृष्टौ सुहृद्बले ।" इति विश्वलोचनः ॥ अत्र अलंकारसर्वस्वकारानुसारेण अप्रस्तुतप्रशंसालंकारः 'कठोरा युवतयः धन्याः' इत्यप्रस्तुतादर्थात् 'अहं अधन्या' इति वैधर्म्येण प्रस्तुतार्थप्रतीतेः । वस्तुतस्त्वत्र व्याजोक्तिरलंकारः, विरहसहिष्णूनां कठोराणां स्तुत्या तासां निन्दाभिव्यक्तिरूपवैचित्र्यविशेषसद्भावात्; "व्यक्तिर्व्याजस्तुतिर्निन्दास्तुतिभ्यां स्तुतिनिन्दयोः ।" इति तल्लक्षणात्॥ अत्रार्थे अभियुक्ता आहुः—"अतसीपुष्पसंकाशं खं वीक्ष्य जलदागमे । ये वियोगेऽपि जीवन्ति न तेषां विद्यते भयम् ॥" इति । ( अयं विक्रमादित्यस्य इति केचित् । अतसीपुष्पं नीलवर्णम् । नेत्यादि ते अकुतोभयाः कठोराः इत्यर्थः । ) ॥ ५८९ ॥ ममेति । तु पूर्वोक्तभेदे । दिनान्तरिते एकदिवसमात्रं व्याप्य अन्तरिते व्यवहिते विरहितेऽपि, सहायसामग्रीं समनन्तरश्लोकयोः कथयिष्यमाणं समीरणविशेषाद्युद्दीपनवस्तुजातं, लब्ध्वा प्राप्य, बलवत्तरो जातः, मकरकेतनः—यद्यपि मकरः नक्रः 'मगर' इति भाषायां प्रसिद्धः मीनात् अन्यः जलचरविशेषः, तथापि कविसमयात् तयोः प्रकृते ऐक्यं, तदुक्तं काव्यमीमांसायां—"कामकेतने मकरमत्स्ययोरैक्यं यथा—" चापं पुष्पमयं गृहाण, मकरः केतुः समुच्छ्रीयताम् ।" इत्यादि ( १।१६ ), तेन मकरः मीनः केतने ध्वजे व्यावर्तकचिह्नतया अंकितः यस्य सः; यथा मीनग्रहात् छोरणं दुःसंपाद्यं यथोक्तं—" वज्रलेपस्य मूर्खस्य नारीणां कर्कटस्य च । एको ग्रहस्तु मीनानां नीलमद्यपयोस्तथा ॥" इति । ( वज्रलेपः प्रस्तरादीनां संधिदार्ढ्याय देयः कल्कविशेषः, स च बृहत्संहितायां ५६ अध्याये विस्तरेण निर्दिष्टः ।

---

५८९ दीर्घप्रिय० (गो. का) । नलासङ्गम् ( प. कापा ) ५९० दिगन्तरिते (प)

उत्कण्ठयति नितान्तं समीरणो बकुलकुसुमसन्नाहः ।
प्रच्यावयन्ति धैर्यान्मधुरध्वनिभिः कलापभृतः ॥ ५९१ ॥
सतडिन्मिलद्बलाकामसिताम्बुधरावलीं समुद्यन्तीम् ।
उत्सहते सा वीक्षितुमविरलमालिङ्गितो यया कान्तः ॥ ५९२ ॥

---

कर्कटः जलचरविशेषः 'करचलो' इति भाषायां प्रसिद्धः । नीलस्तु 'गळी' इति प्रसिद्धं नीलवर्णं द्रव्यम् । ) तथा मम ग्राह्याक्रान्तस्यापि—इति सूचयितुं कामस्य ध्वजे मीनचित्रनिवेशः बोध्यः, तेन मकरकेतनः मीनकेतुः झषध्वजः वा कामः कीर्त्यते । ] उत्कलिका उत्कण्ठा [ तया विधुरितं दुःखितम् । अनया सा 'उत्कण्ठिता' इति सूचितम् । ] ५९० ॥ [ तामेव सामग्रीं सार्धैकस्यामाह—उत्कण्ठयतीत्यादिकायाम् । उत्कण्ठा तु—" सर्वेन्द्रियसुखास्वादो यत्रास्तीति मनः स्त्रियः । तत्प्राप्तीच्छां ससंकल्पामुत्कण्ठां कवयो विदुः ॥" इति भावप्रकाशे लक्षिता । उत्कण्ठयति सुखसाधनत्वेन अभिमतेप्सितां करोति, नितान्तं अत्यन्तं, समीरणः वायुः, ] बकुलकुसुमैः संनाहः सज्जता सहायसंपत्तिः यस्य सः, [ यद्वा बकुलकुसुमानि 'बोरसली' इति प्रसिद्धानि चिरस्थायिसुगंधीनि पुष्पाणि तानि, संनाहः परिकरः, यस्य सः । ततोऽप्यधिकं धैर्यनाशं आह प्रच्यावयन्ति इति । धैर्यात् गांभीर्यात् मनःस्थैर्यात्, मधुरध्वनिभिः केकाभिः, कलापभृतः कलापं बर्हं मयूरपिच्छं बिभ्रति ते मयूराः ॥ ५९१ ॥ सर्वतोऽपि प्रबलतमं उद्दीपकं संयोगिनां दर्शनमाह सतडिदित्यादि । असिताः कृष्णाः, अनेन तेषां यौवनश्रीः सूचिता, ये अम्बुधराः मेघाः, तेषां आवलीं पंक्तिं, दीर्घान्तोऽपि आवलीशब्दः, कीदृशीं, सतडितं विद्युद्वतीम् । अत्र मेघविद्युतोः दाम्पत्यं कविसमयसिद्धं; तथा च " मा भूदेवं क्वचिदपि च ते विद्युता विप्रयोगः । " ( १२० ) इति मेघदूते, " मुदिर इव रिरंसुर्विद्युताऽऽत्मीयपत्न्या " ( १५।२७ ) इति हीर सौभाग्यकाव्ये च ॥ मिलद्बलाकां च—बलाकाः विसकंठिकाः; पुल्लिंगो बलाकः बलाकनामकसित पक्षिभेदः न तु बकः, तेन " बलाका बकपंक्तिः स्यात् " इति त्रिकाण्डशेषे तच्चिन्त्यम् । कोशान्तरे तु—"बलाका बकपंक्तौ स्याद्बलाका बिसकण्ठिका । बलाका कामुकी प्रोक्ता बलाका रवको मतः ॥ " इति । मिलन्त्यः संयोगं प्राप्नुवन्त्यः बलाकाः यत्र तां; तथाहि बलाकानां मेघनिकटसंचरणे गर्भधारणं इति प्रसिद्धिः, उक्तं च मेघदूते—" गर्भाधानक्षम('ण')परिचयान्नूनमाबद्धमालाः सेविष्यन्ते नयनसुभगं खे

---

५९१ उत्कंठयति यतो मां समी० सुमगन्धाढ्यः ( प ) सुमसंवाहः ( कापा ) ध्वनितैः ( प ) ५९२ समुद्यन्ती ( प ) । मविरतमा० ( कापा )

स्वेच्छागमनलघुत्वं बहुलापायं निशासु पन्थानम्।
न विचारयन्ति महिला अभीष्टजनसङ्गतावुत्काः ॥ ५९३ ॥
क्रियतां भूषणशोभा त्वरयति मे मानसं मनोजन्मा।
रञ्जयति मनो नितरां कलधौतनिवेशितं रत्नम्' ॥ ५९४ ॥

---

भवन्तं बलाकाः ॥" (११९) इति; तट्टीकायां संजीविन्यां च—"उक्तं च कर्णोदये—'गर्भं बलाका दधतेऽभ्रयोगान्नाके निबद्धावलयः समन्तात्' इति।" हीरसौभाग्यकाव्यटीकायां (७।३) तु "प्रायो वर्षाकाले बकास्तु वृक्षादिषूपविश्य तिष्ठन्ति बकांगनास्तानाहारैः पोषयन्त्यत एवाम्बरे भ्राम्यन्ति" इति समाधानमुक्तम् ॥ अत्रापि पूर्ववत् मेघबलाकानां नायकनायि काभावः अवगन्तव्यः। केचन मेघाः तडित्प्रियाभिः सङ्गताः, केचन परकीयाभिःबलाकाभिः अभिसृताः इति बहूनां नानाविधानां संयोगियुग्मानां संदर्शनेन वियोगिन्या अतीवसन्तापोदयः सूचितः; तथा च मृच्छकटिके—"गर्जद्भिः सतडिद्बलाकशबलैर्मेघैः सशल्यं मनः।" (५।१८) इति। तादृशीं मेघमालां तादृशं प्रकृति—सौन्दर्यं वा, सा एव, वीक्षितुं प्रकर्षेण द्रष्टुं, उत्सहते शक्नोति, यया न केवलं प्रियः उपगतः अपि तु अविरलं दृढं आलिंगितः ॥ ५९२ ॥ एवं विषमावस्थायां कान्तोपगमनमेव शरणं, यथोक्तं माघकाव्ये—"गजकदंबकमेचकमुच्चकैर्नभसि वीक्ष्य नवाम्बुदमम्बरे। अभिससार न वल्लभमंगना न चकमे च कमेकरसं रहः ॥" (६।२६) इति; (नभसि श्रावणमासे।) अभिसारं अंकुरयति स्वेच्छेति। स्वेच्छया सूचनामन्त्रणादिकं विनैव, यत् गमनं कामुकसमीपे, तेन यत्] लघुत्वं सम्भावनापकर्षः [मानहानिः, तत्; निशासु रात्रिषु बहुलाः अपायाः दोषाः कण्टकवेधसर्पदंशादयः, यत्र तं, पन्थानं मार्गं, न विचारयन्ति न गणयन्ति, महिलाः स्त्रियः, कीदृश्यः—अभीष्टजनः प्रियः तेषां, संगतये संगमाय संयोगाय, उत्काः उत्कण्ठिताः, दयिताभिमुखहृदयाः इति यावत्। अनेन सा 'अभिसारिका' इति सूचितम् ॥ ५९३ ॥ "स्त्रीणां प्रियालोकफलो हि वेषः।" (कुमारसंभवे ७।२२) (वेषः मंडनम्।) इति न्यायेन त्वन्मनोहरणैकवृत्त्या तया अलंकारादिधारणं कृतं इति चौर्यं सत्यापयितुं नायिकावचनमनुवदति क्रियतामिति। भूषणैः कंकणहारादिभिः, शोभा कान्तिः। तत्करणे शीघ्रतां प्रार्थयते त्वरयतीति। मनोजन्मा कामः। अलंकरणस्य हेतुं आह रञ्जयतीति। कलधौतं—कलः मलः धौतः अस्येति कलधौतं सुवर्णं, तत्र निवेशितं संयोजितं रत्नं हीरकादि, अर्थात् बहुमूल्यं रत्नान्वितं सुवर्ण-

---

५९३ अभीष्टवर (प) ५९४ मनो नितान्तं (प) (मात्राधिक्येन पाठो दुष्टः)

घनजलदावृतककुभि प्रदोषसमये प्रदोषगमनाय ।
विदधानया कुबुद्धिं रागान्धे किमिदमारब्धम् ॥ ५९५ ॥
वचनप्रपञ्चसारं जायाश्रितमन्यदेशसम्बन्धम् ।
पुरुषमभिगन्तुकामा नवेयमभिसारिका दृष्टा ॥ ५९६ ॥

भूषणं, नितरां अत्यन्तं, मनः कामुकस्य इति शेषः, रञ्जयति प्रीणाति, यतः स्वाभाविकमपि सौन्दर्यं उचितालंकारैः काव्यमिव काामपि रामणीयकवृद्धिं प्राप्नोति, यथा वर्णितं श्रीकालिदासेन–" सा संभवद्भिः कुसुमैर्लतेव, ज्योतिर्भिरुद्यद्भिरिव त्रियामा । सरिद्विहंगैरिव लीयमानैरामुच्यमानाभरणा चकाशे ॥" ( कुमारसंभवे ७।२१ ) इति ॥ ५९४ ॥ यत् सा वर्षाकष्टान् अविगणय्य, निषेद्ध्रीं मातरमपि तिरस्कृत्य त्वत्समागमैकार्थिनी निर्गता तत्कारणं त्वयि अतिभूमिं गतोऽनुराग एव इति नायकमनसि द्रढयितुं मातुः मालतीं प्रति प्रवृत्तां इव परुषां निषेधोक्तिं अनुवदति घनेत्यादिनार्याकुलकेन । घनैः सान्द्रैः, जलदैः मेघैः, आवृताः छन्नाः, ककुभः दिशः यस्मिन्; तादृशे ] प्रदोषसमये सन्ध्यासमये [ रात्र्याः प्रथमे यामे रजनीमुखे, भयप्रदे इति सूचनं, प्रदोषगमनाय ] प्रकृष्टाः दोषाः [ परिस्खलनकंटकवेधादयः ] यस्मिन् तादृशगमनाय, [ तादर्थ्ये चतुर्थी, कुबुद्धिं कुत्सितां दुःखावहां मतिं, विदधानया कुर्वन्त्या, त्वया, इदं अभिसरणरूपं कर्म, किमिति प्रश्ने, " किं कुत्सायां वितर्के च निषेधप्रश्नयोरपि । " इति मेदिनी, आरब्धं प्रस्तुतं कोऽयमुद्योगः कृतः, किंवा साहसं—सहसा असमीक्ष्यकरणं–क्रियते इत्यर्थः। रागान्धे कामाकुलिते इति समुचिता संबुद्धिः, यथोक्तं–"न पश्यति मदोन्मत्तो ह्यर्थी दोषं न पश्यति । न पश्यति च जन्मान्धः कामान्धो नैव पश्यति ॥ " इति ॥ अत्र घनजलद इति पुनरुक्तवदाभासः शब्दालंकारः, प्रदोषसमये प्रदोषगमनाय इत्यत्र यमकावलिश्च, तद्विवेकः पूर्वं उक्तः ( आ० ३०५ ) ॥ इयं उपालंभोक्तिः ( सनिन्दभाषणं इत्यर्थः । ) ॥ ५९५ ॥ अभिसरन्ती अपि अभिसारिकासमयमुल्लंघयन्ती त्वं काऽपि अपूर्वैव इति सोल्लुण्ठमाह वचनेति । वचनप्रपञ्चसारः मिथ्याप्रियभाषी शठः, यतः प्रतिश्रुत्य अपि न आगतः; जायाश्रितः पत्नीसङ्गतः; अतः परानपेक्षः; अन्येत्यादि दूरवर्ती इत्यर्थः; एवंस्थितः सर्वथा अभिसरणायोग्यः, तादृशम् । नवा अश्रुतदृष्टपूर्वा । अभिसारिका नायिकाविशेषः, तल्लक्षणं तु–" उद्दाममन्मथमहाज्वरवेपमाना रोमांचकंटकिततगात्रलतां वहन्ती । निःशंकिनी व्रजति या प्रियसंगमाय सा नायिका निगदिता त्वभिसारिकेति ॥ " इति

५९६ संबद्धं ( प. गो. )

जलधौततिलकरचनां गलदम्भोलुलितकेशान्ताम् ।
तिम्यत्तनुलीनावृतिचण्डानिलसलिलपातकण्टकिताम् ॥ ५९७ ॥

---

अष्टनायिकालक्षणे, ''मदेन मदनेनापि प्रेरिता शिथिलत्रपा । योत्सुकाऽभिसरेत्कान्तं सा भवेदभिसारिका ॥ '' इति वसंतराजीये च । या तु एवंविधा कान्तमेव अभिसारयति साऽपि अभिसारिका अभिसारयित्री वा उच्यते; तथाहि विक्रमोर्वशीये ( अं. ३ ) उर्वशीवाक्यं सखीं प्रति—''त्वमानय तं शीघ्रं, नय मां तस्य वा सुभगस्य वसतिम् ॥ '' इति। अत्रेदं बोध्यं—अष्टस्वपि नायिकाभेदेषु नायकदृष्टया अभिसारिकाया एव प्राधान्यं, नायिकायाः स्नेहस्य पराकाष्ठाप्रत्यये नायिकास्वयंगमनात् प्रमाणान्तराणां दौर्बल्यात् । अतः उक्तमपि केनापि—'' संस्कृतात्प्राकृतं मिष्टं, ततोऽपभ्रंशभाषणम् । ततः प्रियतरा वेश्या, सर्वतश्चाभिसारिका ॥ '' इति ॥ इयं सोत्प्रासोक्तिः ( सोपहासं वचनं इत्यर्थः । ) ॥ ५९६ ॥ अभिसारनिषेधाय मात्रा वर्णितां सम्भावितां मालतीदुरवस्थां अनुवदति जलेत्यादिभिः षड्भिः अन्तःकुलेकन । तत्रादौ द्वाभ्यां वर्षानिशाभिसारिकावर्णनम् । जलेत्यादीनां द्वितीयान्तपदानां 'द्रक्ष्यन्ति सुकर्माणः' इत्यत्र अग्रे संबंधः ॥ जलेन मेघधाराभिः, धौता विलुप्ता प्रनष्टा, तिलकरचना यस्याः सा, ताम्। तिलकं पत्रवल्ल्यादि आलेख्यं चित्रकं, तस्य रचना; सा च प्रायः स्त्रीणां ललाटे कपोलयोः कुचयोश्च भुजशिखरयोः कण्ठे च शोभावर्धनार्थं क्रियते सख्या, स्नेहप्रकर्षद्योतनार्थं प्रियेणापि, यथा गीतगोविन्दे—'' रचय कुचयोः पत्रं, चित्रं कुरुष्व कपोलयोः । '' ( १२।९ ) इति । तत्रापि कुचयोः आम्रादिफलसाम्यद्योतनाय पत्रवल्ल्यादीनां, कपोलयोः चुम्बनप्रधानपात्रत्वदर्शनाय शुकादिपतत्रिणां, कपाले च सौभाग्यप्रकाशाय ललाटिकाख्याः तोरणादीनां आकाराः चित्रीयन्ते इति भाव्यम् ॥ गलत् निःपतत्, अम्भः जलं, तेन लुलिताः मर्दिताः केशान्ताः यस्याः सा ताम् । प्रशस्ताः केशाः केशान्ताः, '' अन्तशब्दोऽत्र प्रशंसावचनः, यथा—' धूपेन संत्याजितमार्द्रभावं केशान्तमन्तःकुसुमं तदीयम् । ' इति । '' इति हरविजयटीकायाम् ( ५।१७ ) । तिम्यन्ती 'तीम्यन्ती' अपि आर्द्रीभवंती, या तनुः 'तनूः' अपि शरीरं, तस्यां लीना संलग्ना अत एव स्वेन अदृश्यमाना, आवृतिः आवरणवस्त्रं यस्याः सा, तथा चासौ, वर्षाकालीनझंझामरुता धारावर्षेण च ] कण्टकिता सरोमाञ्चा [ च, तां तादृशीम् । तथा चोक्तं— '' रोमाञ्चः क्रोधरुग्भीतिहर्षशीतादिभिर्भवेत् । '' इति । अत्र शरीरदशा कथिता ।

---

५९७ दरधौत ( गो ) । केशाग्राम् ( प ) । तीम्यत् ( प ) । लीला ( प. का ) । सलिलघात ( प )

अविभावितसमविषमां प्रस्खलदङ्घ्रिं सहायकरलग्नाम् ।
पुरतोऽध्वनः प्रमाणं मुहुर्मुहुः साध्वसेन पृच्छन्तीम् ॥ ५९८ ॥
अन्यस्त्रीषु च पत्यौ व्यग्रे कृच्छ्रेण कथमपि प्राप्ताम् ।
तत्कालयोग्यपरिजननिवेदितामिति विकल्पसदृशविधौ॥ ५९९ ॥
किं प्रेम्णोऽयं महिमा किमुतानन्त्यं धनप्रलोभस्य ।
किंवाऽन्यतः प्रवृत्ता प्रवेपिता वातवर्षेण ॥ ६०० ॥

---

जातिरलंकारः ॥ ५९७ ॥ अपि च—अंधकारे अलक्षितनिम्नोन्नतसमभूतलां, अत एव प्रस्खलन्तौ अंघ्री चरणौ यस्याः तां पतन्तीं पतीपत्यमानां वा, अत एव च सहायस्य सख्युः परिचारकस्य वा करे लग्नां धृततत्करावलंबाम् । ] प्रमाणं अवधिः । साध्वसं भयम् । [ पुरत इत्यादि 'गन्तव्यमस्ति कियदित्यसकृद्ब्रुवाणा' (बा. रा.) इत्यर्थः ॥ अनया मध्येमार्गं भवित्री दशा कथिता ॥ ५९८ ॥ युग्मेन कामुकगृहप्राप्तिं वर्णयति अन्येत्यादिना । अन्यस्त्रीषु स्वीयासु, अत एव पत्यौ इति पदं, व्यग्रे व्यापृतचित्तत्वे, तद्गृहं ] कृच्छ्रेण [ वर्षाबाधया ] अतिकष्टेन, [ कथमपि येन केनाप्युपायेन प्राप्ताम् । तत्कालयोग्यपरिजनेन अंतःपुराधिकृतेन रहसि अनियन्त्रितप्रवेशेन आभ्यंतरिकेण अन्तःपुरपरिजनेन निवेदितां कृतविदितागमनां, कथं निवेदितां इत्याह ] विकल्पसदृशविधौ नानाविधसंकल्पकल्पनानुरूपं, [ यद्वा कल्पनोचितप्रकारे अनेककल्पनाविषये इत्यर्थः, इति कथयिष्यमाणस्वरूपे । अत्र ' विकल्पसहसचिवैः ' इति पाठः सरलतरः—विकल्पसहाः विकल्पं तर्कं कुर्वाणाः ये सचिवाः भृत्याः, " सचिवो भृत्यमंत्रिणोः । " इति विश्वलोचनः, तैः तत्कालोचितपरिजनद्वारा, निवेदितां इत्यन्वयः ॥ भृत्याः बाह्याः कर्मकराः, परिजनः आन्तरिकः इति सेवकविभागः ॥ ५९९ ॥ अज्ञातायाः तरुण्याः आगमनदर्शनेन भृत्यविकल्पान् आह किमिति । किं प्रश्ने, किमियं प्रेमाकृष्टा धनलुब्धा वा इति पूर्वार्धस्य अर्थः । किंवा विकल्प्य प्रश्ने, इयं, वातवर्षेण वातश्च वर्षं च वातवर्षं, समाहारद्वन्द्वः, तेन प्रवेपिता प्रभूतं कंपिता सती, अन्यतः प्रेमलोभव्यतिरिक्तात् अज्ञायमानात् कारणात्, प्रवृत्ता अत्र आगता । अस्या आर्यायाः पूर्वस्यां ' इति ' इति पदेन सम्बन्धः ॥ ६०० ॥

---

५९८ विषमप्र ( गो. का. ) । ५९९ अन्यस्मिन् प्रेमपतौ ( प ) अ···प्रेतपतौ (कापा) । तत्कालोचितपरि० (गो) विकल्पसहसचिवैः (प) ६०० किमुतात्यन्तं (गो. का.) । प्रवेशिता ( प. )

'सन्निहितकलत्राणामनुचितमि'ति बाह्यलोकसंवदनात् ।
अन्यस्मिन्नुदवसिते विसर्जितामिष्टमालतीकेन ॥ ६०१ ॥
लोकेन हास्यमानां बिभ्राणां वाससी जलक्लिन्ने ।
रूपमदमुत्सृजन्तीं वैलक्ष्याद्विहसितेन नतवदनाम् ॥ ६०२ ॥
पश्चात्तापगृहीतां कण्टकदर्भाग्रभिन्नपादतलाम् ।
अस्मद्वचः स्मरन्तीं द्रक्ष्यन्त्यभिसारिकां सुकर्माणः' ॥ ६०३ ॥

---

एवं कृतेऽपि कामुकदर्शनालब्धि अनुमितां वदति संनिहितेति । एवं नायके निवेदितामपि उत्तरलब्धेः प्राक्, बाह्यलोकसंवदनात् बाह्यलोकः प्रातिवेश्मिकाः रथ्याचारिणो वा जनाः, ये प्रायः छिद्रान्वेषणतत्पराः, तेषां संवदनात् परस्परेण संवादात् आलापात्, "स्यात् संवदनमालोचे संवादे च वशीकृतौ ।" इति विश्वलोचनः, कीदृशात्, सपत्नीकानां अन्यरमण्याह्वानं अयोग्यं इत्याकारकात्, इष्टमालतीकेन इष्टा नायकसमागमनाय मालती येन तादृशेन विटेन रहस्यवेदिना सेवकेन वा, अन्यस्मिन् परकीये,] उदवसितं गृहं [ तस्मिन्, विसर्जितां अपनीतां, सर्वथा अप्राप्तेष्टसमागमां इति यावत् ॥ ६०१ ॥ अत एव, लोकेन प्रेक्षकैः इत्यर्थः, हास्यमानां हास्यविषयीक्रियमाणां; जलार्द्रे, वसने–एकं परिधानं अंतरीयं अधोंशुकं अपरं उत्तरीयं उपरिवस्त्रं इति द्विवचनं, धारयन्तीं; रूपमदं सौंदर्यहेतुकविकारविशेषं "मदो विकारः सौभाग्ययौवनाद्यवलेपजः ।" ( ७५ ) इति रसरत्नहारे; उत्सृजन्तीं परित्यजन्तीं, वैलक्ष्यात् इष्टासिद्ध्या लज्जातिरेकात्, वैलक्ष्यं च– "आत्मनश्चरिते यस्य ज्ञातेऽन्यैर्यत्र जायते । अपत्रपे(पा?)तिमहती तद्वैलक्ष्यमुदाहृतम् ॥" इति उक्तम् । इदं पूर्वान्वयि । विहसितेन लोकस्य इति शेषः, विहसितं च–" सशब्दं मधुरं कालागतं वदनरागवत् । आकुञ्चिताक्षिगण्डं ('मंद्रं') च विदुर्विहसितं बुधाः ॥" ( ७।१४३८ ) इति सङ्गीतरत्नाकरे, तेन नतवदनां अधोमुखीं, संभ्रमात् ॥ ६०२ ॥ एवं अविमृश्यकारित्वात् भ्रष्टोभयार्थत्वात् वा पश्चात्तापेन अनुशयेन गृहीतां कलितां, कण्टकादिभिः विद्धपादतलां, अयमेव मातरमनादृत्य स्वीकृतस्य अभिसारस्य लाभः इति कटाक्षः, अत एव ] अस्मदिति–तथैवं निषिद्धा तद्वचनानि च अनादृत्य अहं कृतगमना एवं विपत्तिमापन्ना इत्यादि शोचन्तीं इत्यर्थः; [ अस्माकं इति गर्वोक्तौ बहुवचनं, मातुः इत्यर्थः, वचः निषेधवाक्यं, स्मरन्तीं यथानुभवं मनसि परिवर्तयन्तीं, द्रक्ष्यन्ति अभिसारिकां त्वां, सुकर्माणः कृतपुण्याः इति सोल्लुण्ठवचनं, हास्योत्पादकसंकटपतितां

---

६०१ संवदनं ( नां ? ) ( प )। ॑न्नुद्वसिते ( प ) ६०२ वैलक्ष्यव्रीडितेन (प)

इति परुषमभिदधानां मातरमवधीर्य युष्मदभ्याशम् ।
चौरहतका व्रजन्तीं विद्रावितरक्षिणः सखीं मुमुषुः ॥' ६०४ ॥
( महाकुलकम् )

एषा प्रपञ्चरचना यदि भवति वृथा पुरस्तस्य ।
वणिगिदमुपेत्य वक्ष्यति सहायसंचोदितो भवतीम् ॥ ६०५ ॥
' पूर्वं दत्तस्योपरि मुक्ताहारस्य केदराखिंशत् ।
परिचारिकया नीता अन्यानपि मृगयते वयस्यकृते ॥ ६०६ ॥

---

त्वां पश्येयुः ते तादृशविलोकनेन धन्या एव इति तात्पर्यम् ॥ ६०३ ॥ इति उक्त-प्रकारोपसंहारे, परुषं कर्कशम् । अवधीर्य अवज्ञाय । ] अभ्याशं समीपम् । [ चौरहतकाः नीचचौराः; विद्राविताः भयजननेन पलायनं कारिताः दूरदेशं प्रापिताः, रक्षिणः दाण्डपाशिकाः यद्वा मार्गे रक्षार्थं सहनीताः पुरुषाः, यैः ते; सखीं मालतीं, मुमुषुः तस्याः आभरणादीन् अपजन्हुः ॥ ' सखीं मुमुषुः ' इत्यत्र ' आभरणानि ' इति अध्याहार्यं, मुषधातोः द्विकर्मकत्वात्, यथाहुः–" दुह्याच्पच्दंडरुधिप्रच्छिचिञ्ब्रूशासुजिमंथ्मुषाम् । कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम् ॥ " इति । अत्र न्यूनपद-दोषभिया अनध्याहारे सख्युरेव मोषः अपहरणं कृतं इत्यर्थप्राप्तौ कामसूत्रविसंवादः, कामुकस्य च द्रव्यादिवितरणस्थानाभावे प्रकृतार्थहानिरिति ॥ यतः त्वामेव उरसि कृत्य सा गृहे मातुरवधीरणां, पथि क्लेशं अर्थनाशं च अनुभूतवती. ततः तत्प्रति-क्रिया त्वया तस्यै प्रभूतार्थवितरणेन कार्या इति अभिसंधिः ॥ ६०४ ॥ पुनः वात्स्यायनीये तत्रैव सूत्रितं " तदर्थमृणग्रहणं " ( ६।२ ) इति तद्विशदयति एषा इत्यादिना पद्येन । प्रपञ्चरचना कपटग्रथना । वृथा निष्फला । पुरः अग्रे । वणिक् पण्याजीवः । सहायसंचोदितः नायिकायाः सहायेन चेटादिना प्रेरितः, कृतसंकेत इति यावत्, तेन वणिजः ऋणकथनादिकं कूटमेव ॥ तथाहि कामसूत्रटीकायां जयमं-गलः–" वणिजः कृतसंकेतस्य नायकसमक्षं दर्शनं कर्तव्यं, येनायं नास्त्यस्याः किमपि यच्छीलितमपि विक्रेतुमारब्धं इति प्रयच्छति । " इति ॥ ६०५ ॥ पूर्वमिति । मत्स-काशे त्वया उपनिधितया स्थापितस्य उपनिधीभूतस्य मुक्ताहारस्य मौक्तिकमालायाः उपरि मया यत् पूर्वं प्रथमं दत्तं तस्यापि, उपरि काकाक्षिगोलकन्यायेन अत्रापि संब-

---

६०४ दधाना ( प ) । रक्षणा( णाः ? ) ( प ) ६०५ पुरस्ततस्तस्य ( प ) । सहायपरिचो० (प) ६०६ व्ययस्य कृते ( प )

यत्तु घनसारकुङ्कुमचन्दनधूपादि मुक्तकं दत्तम् ।
तत्संपुटके लिखितं शृणु पिण्डलिकां करोमि ते पुरतः ॥६०७॥
एतावन्तं कालं नावसरेऽभ्यर्थिता मया त्वमसि ।
रिक्तं भाण्डस्थानं सांप्रतमिति याचनं क्रियते ॥' ६०८ ॥

---

ध्यते, अधिकतया इत्यर्थः, त्रिंशत् ] केदराः तात्कालिकरूपकविशेषाः, [ रौप्यमुद्राः, तव परिचारिकया दास्या, नीता गृहीताः; न केवलं एतावत्, अपि तु अन्यानपि केदरान्, वयस्यस्य ते प्रियस्य, कृते अर्थे, " अर्थे कृते च शब्दौ द्वौ तादर्थ्येऽव्ययसंज्ञितौ ।" इति कोशः, मृगयते अन्वेषयति याचते इत्यर्थः; अहं तु ऋणाधिक्यात् न दास्ये इत्यभिप्रायः ॥ ' व्ययस्य कृते ' इति पाठः पूर्वोक्तसूत्राननुगुण इति त्याज्यः, व्ययः ' खरच ' इति भाषायाम् ॥ ६०६ ॥ " अलंकारभक्ष्यभोज्यपेयमाल्यवस्त्रगन्धद्रव्यादि व्यवहारिषु कालिकमुद्धार्यमर्थप्रतिनयनेन" (६।३) इति ('व्यवहारिषु विक्रेतृषु व्यवस्थितं, कालिकं कालेन देयं, उद्धार्यं आदातव्यं इत्यर्थः, अर्थप्रतिनयनेन मूल्यप्रतिदानेन न तु द्रव्यस्यैव प्रतिनयनेन,' इति जयमंगलः । कालिकं काले देयं इत्यर्थे " देयमृणे " (पा. ३।४।४७) इति कालात् ठञ् ।) कामसूत्रानुसारि आह यत्तु इति । घनसारः कर्पूरं, कुंकुमं केशरं, चन्दनं प्रसिद्धं, धूपः धूपवर्तिः, आदिना माल्यवस्त्रादि, ] मुक्तकं विभागशः [पृथक्पृथक् यथा अपेक्षितं तथा, दत्तं, तत्काले मूल्यमगृहीत्वैव इति भावः, तत् मया, संपुटके आयव्ययलेख्ये ' चोपडा ' इति भाषायां, लिखितं यतः व्यवहाररीत्या आदौ लिखितं पश्चात् दत्तं, शृणु श्रवणे दत्तावधाना भव, ते पुरतः त्वत्समक्षं, पिण्डलिकां संहतिं संकलनविधिना एकीकरणं 'सरवालो' इति भाषायां, करोमि, तेन मुक्ताहारमूल्यस्याप्युपरि कियदधिकं दत्तं इति ते चक्षुरुद्घटिष्यते इति भावः ॥ अथवा ] संपुटके—लिखित्वा पिण्डलकरूपेण स्थापितं पत्रादिकं, पिण्डलिका संपुटीकृतपत्राणि ॥ ६०७ ॥ [एतावंतं कालं तदुद्ग्रहणं ('उधराणी' इति भाषायां,) किं न कृतं तत्राह एतावंतं इति । ] अवसरे आवश्यककार्यप्राप्तौ अपि । [ अभ्यर्थिता याचिता न । सांप्रतं इदानीं अधुना, तु, ते संपुटके भाण्डस्थानं मूलधनस्थानं यत् त्वदीयं इति धृतं, तत् रिक्तं शून्यं, वर्तते इति अधुना याच्यते ॥ ६०८ ॥ तस्मिन्

---

६०७ पिण्डनिकां ( प ) ६०८ नावसरेऽत्यर्थिता ( गो. का. ) नावष्टभ्यार्थिता मया त्वमिति ( प ) नाचेष्टेऽत्यर्थिता ( काप ) । याचना ( प )

एवंवादिनि तस्मिन्किञ्चिह्रज्ज्ञानतेक्षणं दृष्ट्वा ।
प्रियपूर्वं प्रश्रितया वाचा वाच्यः सवैलक्ष्यम् ॥ ६०९ ॥
'हारस्तवैव तिष्ठतु मध्यस्थस्थापितेन मूल्येन ।
शेषं ततो यदन्यत्तद्दिवसैः पूरयिष्यामि ॥' ६१० ॥
इयमपि कपटग्रथना पूर्वसमा चेत्तदेदमभिधेयम् ।
'आशङ्कन्तेऽनिष्टं कातरहृदया हि योषितः प्रायः ॥ ६११ ॥
अपटुशरीरे स्वामिनि विज्ञप्ता भगवती मया गत्वा ।
भवतु निरामयदेहो जीवितनाथस्तव प्रसादेन ॥ ६१२ ॥

---

वणिजि । लज्जा व्रीडा वणिजा अधिकं देयं नास्तीति निषेधेन, तया नतेक्षणं दृष्ट्वा भूमिं निरीक्ष्य, इदं लज्जानुभावः; प्रियपूर्वं प्रियं पूर्वं प्रथमं यथा भवति तथा, मधुरं इति यावत्; यद्वा प्रियेत्यादिसान्त्वनकृतसंबोधनपदपूर्वं; ] प्रश्रितया किंचिद्दीनतया नम्रया । [ वाच्यः स वणिक्, सवैलक्ष्यं सलज्जम् ॥ ६०९ ॥ तिष्ठतु भवतु, मध्यस्थेन उभयपक्षसंमतेन अपरेण तटस्थेन, स्थापितेन निर्णीतेन । शेषं हारमूल्यात् अधिकत्वेन देयं ऋणं । ] पूरयिष्यामि दास्यामि । केषुचित् दिनेषु येन केनाप्युपायेन ऋणशेषं शोधयिष्यामि इत्यर्थः । तथा च ऋणशोधनाय आत्मानं अन्यकामुकेभ्यः विक्रेष्यामि इति वणिजे संसूच्य कामुकेर्ष्योत्पादनेन अधिकार्थग्रहणाय, त्वदर्थं वा मया ऋणं कृत्वा धननाशः समधिगम्यते इति कामुकप्रत्यायनार्थं वा, इदं कूटवचनम् ॥ ६१० ॥ इयमित्यादिविशेषकेण "व्रतवृक्षाराम"–इत्यादिकामसूत्रस्थव्रतपदवाच्यप्रकारं उपदिशति । कपटग्रथना मायारचना वञ्चना, ] पूर्वसमा [ वृथा ] अकृतकार्या इत्यर्थः । [ कातरहृदयाः भीरवः, योषितः स्त्रियः, प्रायः बाहुल्येन, अनिष्टं अप्रियं दुःखं संकटं वा इति यावत्, प्रियाणां इति शेषः, आशंकन्ते, हि निश्चये, "प्रेम पश्यति भयान्यपदेऽपि ।" [ किरात० ९।७० ) इति न्यायात् । प्रियानिष्टशंकनं स्त्रीस्वभावसुलभं इति भावः ॥६११॥ आशंकास्वरूपं स्पष्टयति अपटु इति ।] अपटुशरीरे गदाभिभूते सति । [ स्वामिनि प्रिये, भगवती अम्बा देवी । निरामयदेहः रोगमुक्तः । जीवितनाथः इत्यनेन तस्य प्राणव्यपाये स्वस्याः मृत्युः निश्चितं भविष्यतीति सूचितम् । प्रसादेन

---

६०९ लज्जान्विता क्षणं स्थित्वा ( प )। प्रसृततया ( प )। वाच्यं ( प )
६१० संपादयिष्यामि ( प. ) ६११ षण्ढसमा चेत्तदीदृगभिधेयं ( प )

संपन्नवाञ्छितार्था बल्युपहारेण पूजयिष्यामि ।
सामग्रीविरहेण तु न वितीर्णं तत्र मे शङ्का' ॥६१३॥ (विशेषकम्)

अस्मिन् व्यर्थीभूते रिक्तीकृतशून्यवेश्मनो दाहम् ।
उत्पाद्य मन्दगामिनि सर्वविनाशः प्रकाशमुन्नेयः ॥ ६१४ ॥

स्निग्धत्वमलं बुद्ध्वा सहभोजनशयनवसनलिङ्गेन ।
एभिरुपायद्वारैः कान्तो रिक्तस्त्वया कार्यः ॥ ६१५ ॥

---

अनुग्रहेण ॥ ६१२ ॥ संपन्नेत्यादि सिद्धमनोरथा प्राप्तप्रियारोग्या इति भावः, बलिः पूजा, "बलिः पुंस्यसुरान्तरे । बलिश्चामरदण्डेऽपि करे पूजोपहारयोः ॥ सैन्धवेऽपि बलिः ।" इति विश्वलोचनः; तद्रूपेण उपहारेण उपायनेन । सामग्रीविरहेण द्रव्याभावेन पूजोपकरणाभावः तेन औपहारिकाभावेन, न ] वितीर्णं पूजितं, [ पूजा न कृता इत्यर्थः; तत्र तेन, मे शंका देवतायाः भयं किमपि पुनः अमंगलं भवेदित्येवंरूपा, "शंका त्रासे वितर्के च" इति विश्वलोचनः । अतः पूजननिर्वृत्त्यर्थं भूरि दातव्यं इति कूटेन सूचितम् ॥ ६१३ ॥ कामसूत्रे तत्रैव अर्थागमोपायप्रकरणे अपरं सूत्रं—"दाहात् कुड्यच्छेदात् प्रमादाद्भवने चार्थनाशः ।" तत्र दाहोपायं उपदिशति अस्मिन्निति । अस्मिन् पूर्वोक्ते प्रपञ्चप्रकारे, व्यर्थीभूते निष्फलतां गते, कामुकस्य कृते एव देवतापूजां निमित्तीकृत्य द्रव्यलाभस्य अभावे इत्यर्थः, आदौ गृहं द्रव्योपकरणादिभिः शून्यं रहितं कृत्वा, केनचित् रहस्यसचिवेन, तत्र दाहं ज्वलनं उत्पाद्य कारयित्वा, मन्दगामिनि हे गजराजवत् लीलागमनशीले, गृहदाहेन सर्वविनाशः अन्नवस्त्रधनगृहादिरूपस्य सर्वस्य निःशेषतया नाशः, प्रकाशं उन्नेयः लोकप्रसिद्धः कार्यः, येन परोक्षं अपरजनेभ्यः तत् श्रुत्वा सर्वनाशं सत्यं मत्वा अन्नादिवितरणं कुर्यात् इत्यभिप्रायः ॥ विषयभूतकामसूत्रस्थदाहांशो व्याख्यातः जयमंगलेन—"प्रमादादुत्थितेऽग्नौ च दग्धमिति नाशः प्रकाश्यः । न तु स्वयमादीप्यः, अनेकप्राण्युपघातदोषात् ।" इति; सूत्रान्तरव्याख्यायां च "दाहादिना नाशे प्रकाशितेऽवश्यं प्रयच्छति स्वकीयं च न मृगयते ।" इति ॥ ६१४ ॥ "अथ दीपितरागाङ्गैः" रित्यार्यया (५१९) आरब्धं अर्थागमोपायोपदेशप्रकरणं उपसंहरति स्निग्धत्वमित्यादिना । कामुकस्य ] स्निग्धत्वं स्नेहं, [ स्नेहस्तु—"दर्शने स्पर्शने वाऽपि श्रवणे भाषणेऽपि वा । यत्र द्रव-

---

६१३ वाञ्छिताऽहं (प)। °हारेण तोषयिष्यामि (प) ६१४ शीर्णवेश्मनो (प)। °विनाशप्रकाश उपनेयः (प) ६१५ लिंगेषु (प)। °द्वारैर्नातिविरक्तस्त्वया कार्यः (गो. का)

वार्धुषिककदर्थनया भोगध्वंसात् सहायवचनैर्वा ।
अवधारितेऽपि निपुणं वरगात्रि विलुप्तसारत्वे ॥ ६१६ ॥
परुषवचोनिर्धारणमायत्यामीहितोपघातीति ।
यत्नादमी विधेया गम्यस्य विमोक्षणोपायाः ॥६१७॥ (युग्मम्)

---

स्यन्तरङ्गं स स्नेह इति कथ्यते ॥ " इति लक्षणलक्षितः । ] अलं पर्याप्तं [ पूर्ण, बुद्ध्वा ज्ञात्वा, कथं ? सहभोजनं एकस्मिन् पात्रे समानकाले वा भोजनं, सहशयनं अपृथक्शय्यायां सालिंगनं वा सुप्तिः, सहवसनं सर्वदा अविनाभावेन अवस्थितिः, च, तान्येव लिंगं लीनं अर्थं गमयतीति ( अनुमीयते अनेन इति ) अनुमानं, " लिंगं चिह्नानुमानयोः " इति विश्वलोचनः, तेन, कामुकस्य स्निग्धत्वं बुद्ध्वा इत्यन्वयः, तस्य स्नेहाधिक्यं निश्चित्य इत्यर्थः, एभिः उक्तैः, उपायद्वारैः अर्थप्रवेशमार्गैः, तेषु च अत्र केचित् वर्णिताः–कामुकस्पर्धिनः त्यागयोगिनः उद्दिश्य मात्रा मिथ्यावचःकलहः ( आ. ५२९–५४५ ), कृतककलहेन मात्रे एव अलङ्काराद्यर्पणं (आ. ५४६–५५६), पथि परिमोषप्रवेदनं ( आ. ५८५–६०४ ), वणिजः ऋणं ( आ. ६०५–६१० ), कामुकारोग्यार्थं देवताप्रसादाय बलिप्रतिश्रुतं (आ. ६११–६१३ ), गृहदाहश्च (आ. ६१४) इति । रिक्तः अर्थेन शून्यः अकिञ्चनः दरिद्रः, कार्यः निर्वर्तितव्यः ॥६१५॥ एवं रिक्तीकृतस्य निष्कासनोपायान् विवक्षुः युग्मेन तत्कथनं उपक्रमते, तत्रादौ लुप्त-सारत्वप्रतिपत्तिं वक्ति वार्धुषिकेति । वरगात्रि वराणि सुन्दराणि गात्राणि अङ्गानि यस्याः सा तत्संबुद्धौ, ( अंगने प्रशस्ताङ्गवति), अनेन अर्थप्राप्तौ न काऽपि चिंता उद्भाव-नीया इति सूच्यते; कामुकस्य] विलुप्तसारत्वे तत्सांशविमोषे [नष्टधनत्वे रिक्तत्वे, निपुणं सम्यक्, अवधारिते निश्चिते, अपि, कथमित्युच्यते—वार्धुषिककदर्थनया ] वार्धुषिकः वृद्ध्याजीवः, "कुसीदिको वार्धुषिको वृद्ध्याजीवश्च वार्धुषिः ।" इत्यमरः; [तेन कृता या कामुकस्य कदर्थना दत्तोद्धारद्रव्योद्ग्रहणार्थं निर्बन्धादिपीडा तया; किंवा भोगानां स्वाद्व-न्नपानवस्त्रालङ्कारादीनां, " पुंसि भोगः सुखेऽपि स्यादहेश्च फणकाययोः । निर्वेशे गणि-कादीनां भोजने पालने धने ॥" इति विश्वलोचनः, ध्वंसात् नाशात् विनाशेन तदभावेन उपभोगाभावात् इत्यर्थः; अथवा सहायानां चेटादीनां तच्चरितहेरिकाणां वचनैः कथनैः ॥६१६॥ तत्र परुषवचःप्रयोगं निषेधति परुषेति । परुषवचोनिर्धारणं क्रूरवचनावलंबनं,] आयत्यां उत्तरकाले, " उत्तरः काल आयतिः" इत्यमरः, [ ईहितोपघाति वाञ्छितार्थ-

---

६१६ °नया परिभोगपरिक्षयात् सहाय० ( प ) । °तिनिपुणं (प) ६१७ °मीहितो-पातीनि ( गो ) । ( +इदानीं निःसारणोपायं व्याख्यास्यामः ॥ ( प )

पृथगासननिर्देशः, प्रत्युत्थानादिकेऽपि शैथिल्यम् ।
सासूयसोपहासा आलापा, मर्मवेधि परिहसितम् ॥ ६१८ ॥

सिद्धिबाधकं, तत्स्मरणं कालान्तरे प्रयोजनवशात् चिकीर्षितमन्यः प्रतिबंधक इति, इतिः हेतौ हेतोः इत्यर्थः; अत्र 'ईहितोपपातीनि' इति पाठः अक्षरभ्रमोत्थः त्याज्यः, तथापि तदर्थस्तु ] ईहितस्य वाञ्छितार्थस्य उपपातीनि संपादकानि कार्याणि कर्तव्यानि न तु तद्विघातीनि [ इति कथञ्चित् अनुसन्धेयः । अमी वक्ष्यमाणाः परोक्तिप्रकारं विहाय अन्ये पुरस्तादेव कथनीयाः, गम्यस्य भुजंगस्य कामुकस्य, "गम्यो विटः पल्लविको भुजंगः" इति भागुरिः, रक्तस्यापि निर्धनस्य, 'विरक्तस्य स्वस्यैव निष्कासितत्वात्, ' विमोक्षणस्य निष्कासनस्य, उपायाः, यत्नात् प्रयत्नेन, विधेयाः कर्तव्याः; तदुक्तं—"साधारणस्त्री गणिका कलाप्रागल्भ्यधौर्त्ययुक् । छन्नकामसुखार्थ-ज्ञस्वतंत्राहंयुपण्डकान् । रक्तेव रञ्जयेदाढ्यान्, निःस्वान् मात्रा विवासयेत् ॥" ( २ । २१—२२ ) इति दशरूपके । अत्रैव वैशिकं प्रतिष्ठितम् ॥ ६१७ ॥

तानेवाह पृथग्-इत्याद्यष्टकेन । तत्र च कविना सामान्यामधिकृत्य सर्वासामपि विरक्तानां नायिकानां इंगितानि बोधितानि इति ज्ञेयम् । तानि च–" पश्यत्यभिमुखं नैव, संयोगेऽतीव सीदति । असौम्यनेत्रवदना, स्पृष्टाऽङ्गानि धुनोति च ॥ १ ॥ करोत्युक्ता कथाभङ्गं, पृष्टा वदति निष्ठुरं । नान्यासक्ता करोतीर्ष्यां, तस्मान्मानं च नेच्छति ॥ २ ॥ अस्थाने कुरुते कोपं, वदनं मार्ष्टि चुम्बिता । वराङ्गं छादयेत्स्पर्शे, रते क्लेदमुपैति न ॥ ३ ॥ शेते पराङ्मुखी पूर्वं, पश्चादुत्तिष्ठते ध्रुवं । कृतं न मन्यते किंचित्, दुष्कृतं च प्रघुष्यति ॥ ४ ॥ विक्षेपवचनं ब्रूते, दोषान् वक्ति सखीपुरः । व्यसने मुदमाप्नोति, प्रवासे तु प्रहृष्यति ॥ ५ ॥ अमित्रैस्तनुते प्रीतिं, मित्रैर्द्वेषमुपैत्यलम् । विरक्ता लक्षणैरेभिर्लक्ष्या योषिद्विचक्षणैः ॥ ६ ॥ निर्लज्जा क्रूरदृष्टिः सकपटहृदया गर्विता नीचवृत्ता दोषज्ञा क्रोधयुक्ता, कथयति न गुणं, नादरं जातु धत्ते । निन्दां कर्तुं प्रवीणा, सकठिनवचना, दुःखहीना वियोगे, संयोगे दुःखयुक्ता, परपुरुषरता भाषितं नो शृणोति ॥ ७ ॥ इष्टं रक्षति, संमतिं न कुरुते, कांतस्य खेदं रते धत्ते, चुंबनमानने न सहते, ब्रूते शिरोवेदनाम् । दृष्ट्वा दुःखमुपैति, दुःखसहिते तुष्यत्यसद्भावना, स्पृष्टाऽङ्गं विधुनोत्यमित्रवशगा पत्युः सुहृद्द्रोहिणी ॥ ८ ॥ पश्चाज्जागर्ति, निद्रां प्रथयति पुरतो, मन्यते नोपकारं, नालिङ्गत्यादरेण, प्रकटति न कलाः कामकाले कदाचित् । मिथ्या ब्रूते समाया, स्वपिति न शयने संमुखी स्नेहहीना, पंचत्रिंशद्गुणेति प्रियतमविषये

६१८ °दिके च ( प ) । मर्मभेदि ( प )

तत्प्रतिपक्षश्लाघा, तदधिकगुणरागकीर्तनावृत्तिः ।
वदति प्रियमाभीक्ष्ण्यं बहुप्रलापित्वदूषणाख्यानम् ॥ ६१९ ॥
वचनान्तरोपघातैस्तत्प्रस्तुतसंकथासमाक्षेपः ।
तद्व्यवहारजुगुप्सा, सव्यपदेशस्तदान्तिकत्यागः ॥ ६२० ॥

---

कामिनी स्याद्विरक्ता ॥९॥ पराङ्मुखी या शयनं करोति, तनोति पीडां सुरते व्यलीकम् । निष्कारणं कुप्यति गर्वयुक्ता, विरक्तभावा वनिता मता सा ॥१०॥ " इति वृद्धनगरीयब्राह्मणेन–अनंतेन कामसमूहे संग्रथितानि अत्राष्टके यथायथमूह्यानि ॥६१८॥ पृथगासननिर्देशः न पूर्ववत् एकासनासिकादानं, एतत् अपमानस्थानं, एवमग्रेऽपि बोध्यं, इदं उत्सूत्रमुपदिष्टं; प्रत्युत्थानं आगतस्य संभावनार्थं आसीनस्य उत्थानं, यथोक्तं–" अभ्युत्थानमुपागते गृहपतौ, तद्भाषणे नम्रता, तत्पादार्पितदृष्टिरासनविधिस्तस्योपचर्या स्वयम्" इत्यादि तदादौ, शैथिल्यं मन्दता; आलापाः वार्ताः, सासूयाः असूयया सहिताः, "असूया तु दोषारोपो गुणेष्वपि" इत्यमरः, यथा दानादिगुणेषु दांभिकत्वादिरूपदोषारोपणं; सोपहासाश्च उपहसितसहिताः, उपहसितं तु–" निकुञ्चितांसशीर्षश्च जिह्मदृष्टिविलोकनः । उत्फुल्लनासिको हासो नाम्नोपहसितं मतः ॥ " ( ७ । १४३९ ) इति सङ्गीतरत्नाकरे । अत्र निर्धनः कामुक एव उपहास्यः; मर्मवेधि दुःखकरं, च, परिहसितं वचसा कर्मणा वा स्वपरनिष्ठहास्योत्पादनम् । उत्सूत्रणं एतदार्याविपयः ॥ ६१८ ॥ तस्य कामुकस्य, प्रतिपक्षस्य शत्रोः प्रतिस्पर्धिनो वा, श्लाघा प्रशंसा; तस्य तत्प्रतिपक्षस्य कामुकात् अधिकगुणानां अधिकस्य च रागस्य स्वस्य उपरि स्नेहस्य कीर्तनस्य कथनस्य, आवृत्तिः पौनःपुन्येन कथनं, तस्य वैलक्ष्योत्पादाय; तस्मिन् प्रिये च, प्रियं नायिकायाः प्रीतिकरं श्रुतिसुखं वा,] आभीक्ष्ण्यं अभीक्ष्णमेव आभीक्ष्ण्यं, स्वार्थे ष्यञ्, [यद्वा अभिगतः क्षणं अभीक्ष्णं, पृषोदरादित्वात् साधुः, अभीक्ष्णस्य भावः आभीक्ष्ण्यं, ] अनेकशः इत्यर्थः, [ वदति सति, तस्य बहुप्रलापित्वरूपं दूषणं आरोपणीयम् ॥ इदं सर्वं उत्सूत्रं ज्ञेयम् ॥६१९॥ अपि च तेन कामिना, प्रस्तुतायाः आरब्धायाः, संकथायाः वार्तालापस्य, वचनान्तरैः अप्रस्तुतैः अन्यथानीतैः वा, तद्रूपैः उपघातैः विघ्नैः, कथाप्रसंगविध्वंसैः इत्यर्थः,] समाक्षेपः अवधीरणा । [तस्य व्यवहारे आचारादिक्रियायां, जुगुप्सा " दोषेक्षणादिभिर्गर्हा," यद्वा अहृद्यत्वेन मनःसंकोचः ।] सव्यपदेशः सव्याजः [कार्यान्तरादिनिमित्तदर्शनपूर्वकः इत्यर्थः, तदन्तिकत्यागः तत्सान्निध्यपरिहारः तस्मादपसर्पणं इति यावत् । अत्र पूर्वार्धार्थे कामसूत्रं–"आहत्य चास्य कथामन्याः कथाः" (६।३) इति ॥ ६२० ॥

---

६१९ आभीक्ष्णं ( प. गो २. का. ) ६२० प्रस्तुतशंकया ( कापा )

व्याजेन कालहरणं, स्वापावसरे विवर्तनं शयने।
निद्राभिभवख्यापनमुद्वेगः सम्मुखीकरणे ॥ ६२१ ॥
गुह्यस्पर्शनिरोधः, स्वभावसंस्थापनाऽनुयोगेषु।
चुम्बति वदनविकम्पनमालिङ्गति कठिनगात्रसङ्कोचः ॥ ६२२ ॥
असहिष्णुत्वं प्रहणनकररुहदशनक्षतिप्रसङ्गेषु।
दीर्घरतौ निर्वेदः, स्वपिहीति रताभियोजके भूयः ॥ ६२३ ॥

---

इतः पंचकेन रहसि रतमधिकृत्य सूत्रोक्ताः उत्सूत्राश्च उपदेशाः उच्यन्ते--व्याजेनेत्यादिना। व्याजेन अपदेशेन 'बहाना' इति भाषायां, "व्याजो मिषं छलं छद्म निभं च कपटोऽस्त्रियाम्।" इति वैजयंती, कालहरणं तत्समीपगमने रतसमये वा तददानाय विलंबकरणम्। स्वापावसरे निद्रारंभकाले, विवर्तनं शय्यायां परिवृत्य पृष्ठदर्शनेन शयनम्। सम्मुखीकरणे आकृष्य स्वाभिमुखीं कुर्वाणे, निद्राभिभवः निद्रया अभिभवः आक्रान्तत्वं, यद्वा निद्रायाः अभिभवः प्राप्तायाः निद्रायाः नाशः, तस्य ख्यापनं कथनं, तेन उद्वेगः व्याकुलचित्तता वा, प्रकाश्यः इति शेषः ॥ ६२१ ॥ गुह्यस्य अनंगमन्दिरस्य। ] अनुयोगेषु प्रश्नेषु [ "प्रश्नेऽनुयोगः" इति उपसर्गवर्गः, स्वस्य भावः प्रकृतिः तत्र संस्थापना पुनरानयनेन स्थिरीकरणं, 'अस्मिन् विषये तव कः संबंधः, त्वं कः प्रष्टा' इत्याद्युक्त्या अनादरेण वा भावशान्त्यापादनं संयमनं वा स्वभावसंस्थापना ॥ बाह्यरतमधिकृत्य तु चुंबति चुंबनाय प्रवृत्ते, वदनविकम्पनं मुखविधूननं यथा चुंबनं न घटेत। आलिंगति आश्लेषाय उद्युक्ते, कठिनगात्राणां कूर्परादीनां संकोचः संकोचनं, यद्वा कठिनः अभेद्यः एवंप्रकारकः गात्रसंकोचः हस्तपादाद्यवयवानां उपसंहरणम् ॥ अत्रार्थे कामसूत्राणि--" जघनस्य रक्षणम्। मुखस्यादानम्।"..."परिष्वंगे भुजमय्या सूच्या व्यवधानम्। स्तब्धता गात्राणाम्" ॥ (६।३) इति। ( एतट्टीकायां जयमंगलः--" भुजौ व्यत्यस्य स्तनस्कंधयोर्निदध्यात्, ततो भुजावेकीकृत्य सूचीव सूची तया व्यवधानं परिष्वंगस्य।" इति )॥ ६२२॥ असहिष्णुत्वं अक्षमत्वं सव्यथत्वं इत्यर्थः। प्रहरणानि ताडनानि व्याख्यातानि (आ.३७७)। कररुहाः नखाः ॥ आन्तररतं अधिकृत्य तु--दीर्घरतौ चिरकालविसृष्टिलक्षिते सुरते, निर्वेदः ग्लानिः खिन्नचित्तता वा। भूयः पुनःपुनः, रताभियोजके बाह्यं आन्तरं वा रतं प्रति परिचयं कुर्वति, स्वपिहि स्वापं कुरु, न रतोद्यमं,

---

६२१ कालकरणं ( गो. )। भवाख्या० ( प ) भवस्वा ( का ) ६२२ स्वभावसं-०ऽरताभियोगेषु ( प )। वदनविधूनन (प) वियोजन ( कापा ) ६२३ दीर्घरते (गो.का) स्वपेहीति वचोऽभियोगके ( प )

तदशक्तावनुबन्धो, वैदग्ध्यविकासने तथा हासः ।
रात्र्यवसानस्पृहया पुनःपुनर्यामिकप्रश्नः ॥ ६२४ ॥
निःसरणं वासगृहादुषसि समुत्थाय तल्पतस्त्वरया ।
रभसमुदीरयन्त्या निशा प्रभाताप्रभातेति ॥ ६२५ ॥
'उभयेच्छया प्रवृत्तं निरुपाधि प्रेम भवति रमणीयम् ।
अन्योन्यसमासक्तौ संस्थानमिवाभिजातमणिहेम्नोः ॥ ६२६ ॥

---

मह्यं च स्वापं देहीति, इतिः प्रकारे, वक्तव्यं इति शेषः । अत्र कामसूत्रं—" नखदशनक्षतेभ्यो जुगुप्सा ।"'निद्रापरत्वं च ॥" इति ॥ ६२३ ॥ तस्य प्रियस्य, अशक्तौ श्रान्त्या रोगाभिभवेन चिन्तया वा रतविरक्ते हीनशक्तौ वा, अनुबन्धः आग्रहः दोषोत्पादः वा अपहासगर्भोक्त्यादिभिः, "अनुबन्धः प्रकृत्यादेर्नश्वरेऽप्यनुयायिनि । दोषोत्पादे शिशौ च स्यात् प्रवृत्तस्यानुवर्तने ॥ " इति विश्वलोचनः । रताधिकारं समाप्य आनुषंगिकमाह वैदग्ध्येति । रताप्रवृत्तौ विषयान्तरे वा वैदग्ध्यविकासने स्वचातुर्यप्रकाशने, हासः उपहसनं ' विज्ञातं ते नैपुण्यं ' इत्याद्युक्त्या ॥ रात्र्यवसानस्पृहया तत्परित्यागाय अरुणोदयाकांक्षया, वारंवारं, ] यामिकः प्रहरपालः, [ तं प्रति, प्रश्नः पृच्छा—कः प्रहरः, का कालकला, ' कियदवशिष्टं रजन्याः ' इत्यादिप्रकारकः ॥ तथा च कामसूत्रं—" श्रान्तमुपलभ्य चोदना । अशक्तौ हासः ।" (६।३) इति । ( चोदना रतार्थं प्रेरणा । )६२४॥ निःसरणं निर्गमनं, वासगृहात् वासागारात् शयनमंदिरात्, " उशंति शयनस्थानं वासागारं विशारदाः । " (२।१४०) इति हलायुधः । उषसि प्रातःकाले । तल्पतः शय्यायाः । सरभसं सवेगम् । प्रभाताप्रभाता इति संभ्रमे द्विरुक्तिः । प्रातरुत्थानकालातिक्रमव्याजेन अनादरसूचकतत्संनिधित्यागपूर्वकं परोक्षगमनस्थित्यादिकं कार्यं इति उत्सूत्रोऽयमुपदेशः ॥ ६२५ ॥ " मर्मणां च चेटिकयोपक्षेपणम् । " ( ६।३ ) इति कामसूत्रं पञ्चत्रिंशद्भिः महाकुलकेन विशदयति उभयेच्छया इत्यादिना । तत्रादौ चेटी मूढकामुकस्य उद्बोधनाय प्रशस्ततमनैसर्गिकप्रेमस्वरूपं प्रकाशयति । उभयोः नायकस्य नायिकायाश्च, न तु एकस्यैव, इच्छया वाञ्छया अभिलाषेण वा, प्रवृत्तं संजातं, निरुपाधि निष्कपटं निर्हेतुकं वा, यत् प्रेम—यूनोः परस्परं भावनिबन्धनं स्नेहः, तदेव रमणीयं मनोहरं आह्लादकं इति यावत्, भवति जायते । उपमालंकारेण तत् रमणीयत्वं उदाहरति अन्योन्येति । इव यथा, अभिजातमणेः अभिजातस्य कुलीनस्य शोभनखनिजस्य, अपि च शाणोल्कषणेन प्राप्तरूपस्य रत्नस्य, " अभिजातस्त्रिषु

---

६२४ वैदग्ध्यविनाशने (गो २. का) ६२६ प्रवृद्धं (प)

**यस्त्वेकाश्रयरागः परिभवदौर्बल्यदैन्यनाशानाम् ।**
**स निदानमसन्दिग्धं सीतां प्रति दशमुखस्येव ॥ ६२७ ॥**

न्याय्ये कुलीनप्राप्तरूपयोः । " इति विश्वलोचनः; हेम्नः काञ्चनस्य च, अन्योन्यसमासक्तौ परस्परसंयोगे, यत् संस्थानं अलंकारतया परिणामित्वेन संस्थितिः, रमणीयं तथा । उपमानेन सुवर्णरागमणिरागौ ध्वनितौ, तौ च–" सौवर्णश्छेदनिर्घर्षतापैस्तुल्यरुचिः सदा । ( ५।२३ )˙˙˙मणिनामा च निर्व्याजः सहजस्वच्छनिश्चलः । " ( ५।२५ ) इति समयमातृकायाम् ॥ अनया शृंगाररसः वर्णितः, यथोक्तं—" प्रमोदात्मा रतिः सैव यूनोरन्योन्यसक्तयोः । प्रकृष्यमाणः शृंगारः । " इति ॥ मूले निरुपाधि प्रेमेति, तदधिकृत्य भावप्रकाशे–" आर्द्रता शिशिरत्वं यत्सर्वावस्थासु मानसम् । ययोः परस्परस्यास्ते तदपि स्नेह ईरितः ॥ द्विधा भवेत्स च स्नेहः कृत्रिमाकृत्रिमात्मकः । सोपाधिः कृत्रिमः स्नेहो निरुपाधिरकृत्रिमः ॥ उपाधौ विनिवृत्ते तु तज्जन्योऽपि निवर्तते । स्नेहः स्वभावजो यावद्द्रव्यभावी भविष्यति ॥ " इति ॥ तथा हि उत्तररामचरिते सुमन्त्रोक्तिः–" भूयसा जीवधर्म एष यद्रसमयी कस्यचित्क्वचित्प्रीतिः, यत्र लौकिकानामुपचारस्तारामैत्रकं चक्षूराग इति । तमप्रतिसंख्येयमनिबन्धनं प्रेमाणमामनन्ति । अहेतुः पक्षपातो यस्तस्य नास्ति प्रतिक्रिया । स हि स्नेहात्मकस्तन्तुरन्तर्भूतानि सीव्यति ॥ " ( ५।१७ ) इति ॥ ६२६ ॥ एतद्वैपरीत्येन एकनिष्ठरागं–शृंगाराभासं निरूपयति यस्त्विति । यः रागः, एकाश्रयः एकस्मिन्नेव व्यक्तौ पुरुषे स्त्रियां वा वर्तमानः, सः रागः, असंदिग्धं निश्चयेन, परिभवः तिरस्कारः, " अत्याकारः परिभवो निकारश्च पराभवः । अनादरश्चाभिभवस्तिरस्कारश्च कथ्यते ॥ " इति हलायुधः; दौर्बल्यं दुष्टं बलं यस्य तत् दुर्बलं, तस्य भावः दौर्बल्यं शक्तिराहित्यं; दैन्यं शोभाविरहः, आत्मनिकृष्टतामननं वा; नाशः लयः निधनं; तेषां; परिभवादीनां उत्तरोत्तरं कारणत्वं वेद्यम्; ] निदानं आदिकारणम् । [ उदाहरणेन समर्थयति सीतामिति । सीतां जनकतनयां रामप्रियां, प्रति, दशमुखस्य लंकाधिपतेः रावणस्य, इव यथा, रागः तस्य परिभवादीनां कारणं अभूत् । तदुक्तं–"अनुरागोऽनुरक्तायां रसावह इति स्थितिः । अभावे त्वनुरागस्य रसाभासं जगुर्बुधाः॥" इति । उदाहृतरागः केवलं प्रतिनायकनिष्ठ एव, न तु नायिकानिष्ठः आसीत् इति प्रसिद्धमेव । यथा वा महाश्वेतावैशम्पायनयोः कादंबर्याम् ॥ अपरो नायिकानिष्ठो यथा विरक्ते भर्तृहरौ तत्प्रियायाः । तथा चोक्तं रसतरंगिण्यां—" द्वयोर्यूनोर्यत्र मिथो रतिस्तत्रैव रसः । एकस्यैव रतिश्चेद्रसाभास एव । एकस्या एव रतिश्चेद्रसाभास एव । " इति । समरागयोरेव संभोगादेः रसोत्पादकत्वात्

एकनिष्ठस्य तदादेः आभासत्वं ततश्च विरसत्वं स्पष्टम्। तथाहि मालविकाग्निमित्रे शृंगारदीक्षागुरुः श्रीकालिदासः—"अनातुरोत्कण्ठितयोः प्रसिध्यता समागमेनापि रतिर्न, मां प्रति। परस्परप्राप्तिनिराशयोर्वरं शरीरनाशोऽपि समानुरागयोः ॥" (३।१५) इति; (रतिः शृंगारः, मां प्रति अस्मन्मते इत्यर्थः।) एवं एकाश्रयरागस्तु शृंगाराभास एव। तदुक्तं—"एकत्रैवानुरागश्च, बहुसक्तिश्च योषितः। अनौचित्यप्रवृत्तत्वाच्छृंगाराभास इष्यते ॥" इति। (एकत्र पुरुषे स्त्रियां वा, अधिकरणे सप्तमी; चः पक्षान्तरे, एकस्याः कामिन्याः अनेकपुरुषेषु रतिः अनुरागः, स शृंगाराभासः। "एकत्रैवानुरागः" इति पदानां पर्यायेण एकत्र रागाभावः इत्यर्थः; पूर्वानुरागावस्थायां नायके नायिकायां एव वा आदौ रागे जातेऽपि अन्यत्र तदानीं तत्प्रागभावेऽपि दर्शनादिकारणैः रागोत्पत्तिसंभावनया न आभासत्वं, रागाभाव इत्यत्र अभावशब्दस्य प्रागभावं विहाय अत्यंताभावप्रध्वंसाभावपरत्वात्। केचित्तु स्त्रिया एव रागाभावे आभासत्वं मन्यंते, तन्न रुचिकरं, पुरुषेऽपि रागाभावे रसस्य अनास्वादनीयत्वात् ॥ "बहुसक्तिश्च योषितः" इत्यत्र एकस्याः अनेकपुरुषगतरागत्वे शृंगाराभासत्वं, तदानीं रागस्य खंडशः खंडितत्वात् हीनांगत्वात्। इदं पुंसोऽप्युपलक्षणं, तस्य अनेकत्र रागे तादृशत्वात् ॥ आभासत्वे हेतुमाह 'अनौचित्यप्रवृत्तत्वात्' इति, यथोक्तं—"अनौचित्यादृते नान्यद्रसभंगस्य कारणम्।" इति; अनौचित्यं तु प्रकृतेरसविषयकं, तच्च तत्तद्रसानां सामग्रीरहितत्वे एकदेशयोगित्वं, रसप्रतिकूलत्वं वा; द्विविधमपि तत् उद्वेगकरम्। केचित्तु अनौचित्येन न रसात्महानिः, अपि तु सदोषत्वं, तेन च आभासव्यवहारः इति मन्यन्ते। अनौचित्यप्रकारा: प्रदर्शिताः साहित्यदर्पणे—"उपनायकसंस्थायां, मुनिगुरुपत्नीगतायां च। बहुनायकविषयायां रतौ, तथाऽनुभयनिष्ठायाम् ॥ प्रतिनायकनिष्ठत्वे, तद्वदधमपात्रतिर्यगादिगते। शृंगारेऽनौचित्यं; रौद्रे गुर्वादिगतकोपे ॥" (३।२६३–२६४) इति ॥ शृंगाराभासोदाहरणं तु—"तद्वक्त्रं यदि मुद्रिता शशिकथा, तच्चेत्स्मितं का सुधा, तच्चक्षुर्यदि हारितं कुवलयैस्ताश्चेद्गिरो धिङ्मधु। धिक्कंदर्पधनुर्भ्रुवौ यदि च ते; किं वा बहु ब्रूमहे, यत्सत्यं पुनरुक्तवस्तुविरसः सर्गक्रमो वेधसः ॥" इति। इयं स्वानुरागविमुखीं सीतां उद्दिश्य रावणस्य उक्तिः। (अत्र सीतायां रावणविषयरागात्यंताभावात् आभासत्वं, रावणस्य च सीताविषयकं स्पृहणीयताशयत्वं प्रतिपाद्यते, न तु कश्चिद्रसोपनिबंधः। इयमेव उक्तिः यदि रामस्य मुखे स्यात् तदा न रसाभासः, स्वानुरक्तां उद्दिश्य तस्याः परमौचित्यात् ॥) ॥ प्रसंगादत्र शृंगाररसाभासविषये किंचित् विचार्यते।—अत्र शृंगाररसाभासे आभासबीजं तु—अस्य रसस्य आलंबनविभावः नायकः नायिका च द्वौ समुच्चये-

नैव, न पृथक्तया, यतः नायकसमवेतायां रतौ नायिका विषयः, नायिकासमवेतायां च नायकः इति उभयस्य विषयभूतस्य रतौ असाधारणकारणत्वं, अतः रागस्य एकत्र अवस्थितौ यथा खंडितैकपक्षस्य पक्षिणः उड्डयनं न भवति, तथा एतद्विधे शृंगारे एकपक्षखंडिततया रत्युद्बोधः न प्रजायते, न वा रतिः रसप्रयोजकं स्थायित्वं भजते, इति ॥ स्वीयादित्रिविधासु नायिकासु, अनुकूलादिचतुर्विधेषु नायकेषु, ग्राम्यादिषु अधमपात्रेषु, पश्वादिषु च तस्य व्यवस्था एवम् । धर्मशृंगारपरायाः स्वीयायाः साध्वीत्वेन शुद्ध एव शृंगाररसः ॥ कामशृंगारपरायाः परकीयायाः शृंगारः पूर्वोक्तप्रकारेणैव न आभासतां भजते, तत्र अनुरागस्य उभयनिष्ठत्वात् प्रौढित्वात् च । अतः भाणाख्यरूपके वीथ्याख्योपरूपके च परकीया प्रायः नायिकात्वेन समादृता दृश्यते । तस्याः बहुसक्तित्वे तु आभास एव । एवं काव्येषु तत्रतत्र परकीयावर्णनं रसदृष्टया संगच्छते । परंतु पुरुषस्य परस्त्रीविषयतया स्त्रियाः अपि परपुरुषविषयतया श्रोतृणां अधर्मपरिणामः स्यात् इति धर्मदृष्टया अनौचित्यात् तत् हेयं इति केचित् मन्यंते । किंच पंचसु अपि पांडवेषु द्रौपद्यनुरागस्य महाभारतोक्तरीत्या धर्म्यत्वात् न स शृंगाराभासः । यत्तु रसाभासादपि चमत्कारानुभूतिं मन्वानः कर्णभूषणकारः गंगानंदः—"यद्यपि परकीयायां न रसाभासः, स्वीयायामिव तद्वर्णनं निर्विगानं महाकविभिः क्रियते, तच्चमत्कारोऽपि तादृश एव, तथापि ममैवेयमस्या एव अहं इति स्नेहाख्या रतिः सा च परकीयायामाभासरूपैव भ्रमत्वात् ।" इत्याह तत्र उत्तरांशो न रमणीयः, क्वचित् परकीयानुरागस्य कारणवशात् चिरस्थित्यभावेऽपि रागकाले तस्य मात्रयाऽपि न्यूनत्वाभावात् आभासस्य अनुभवविरुद्धत्वात् ॥ अर्थशृंगारपरायाः सामान्यायाः तु अर्थहरणैकदृष्टित्वात् रागबीजस्य अभाव एव । तथापि नैवं सर्वत्र, सृष्टिवैचित्र्यात् । तथाहि विक्रमोर्वशीये उर्वश्याः पुरूरवसि, मृच्छकटिके वसंतसेनायाः चारुदत्ते, प्रकृतकाव्ये च हारलतायाः सुंदरसेने शुद्धः स्वीयानुरागप्रतिस्पर्धी अनुरागः प्रसिद्धः । तथाच वेश्यायाः रक्ता विरक्ता च इति भेदद्वयं, तत्र आभासः विरक्ताविषय एव, न अन्यत्र । अतः सर्वथा भावानुबंधाभावे एव नायिकात्वपराहतेः क्वचित् प्रकरणाख्यरूपकभेदे प्रहसने वीथ्याख्यरूपकभेदे च वेश्या अपि नायिकात्वेन स्वीकृता । उक्तं च "नायिका-कुलजा, क्वापि वेश्या, क्वापि द्वयं क्वचित् ।" ( ६।२२६ ) इति साहित्यदर्पणे । ( तेन प्रकरणं त्रिविधं भवति; कुलजा मालतीमाधवे, वेश्या कामदत्ते, द्वे अपि मृच्छकटिके ) ॥–अथ नायकभेदेषु एकनिष्ठस्य अनुकूलस्य न रसाभासः, तदनुरागस्य अपंकिलत्वात् । तथापि तस्य पुत्रमरणशोकावस्थायां स्वकांतायामपि रति-

वर्णनं आभासरूपं, अनौचित्यप्रवर्तित्वात् ॥ बहुनिरतस्य दक्षिणनायकस्यापि अनुरागस्य न आभासत्वं, तस्य अनेकासु वृत्तिमात्रेण साधारण्यात्, न रागेण; नायकरागस्य एकस्यामेव प्रौढत्वात्, अन्यत्र मध्यमत्वात् मन्दत्वात् वा; यथा सूचितं शृंगाररहस्यविदा कालिदासेन विक्रमोर्वशीये—" राजा—उर्वशीगतमनसोऽपि मम देव्यां स एव बहुमानः ।" ( २ अं. ) इति, तत्रैव अन्यत्र च—" चित्रलेखा—अयि मुग्धे, अन्यसंक्रान्तप्रेमाणो नागरा भार्यायामधिकं दक्षिणा भवंति ।" ( ३ अं. ) इति ( दक्षिणाः चतुराः । ) । रसतरंगिणीकारस्तु इदं प्रकारान्तरेण समाहितवान् "यस्य व्यवस्थिता बह्व्यो नायिका भवंति न तत्र रसाभासः, तथा सति कृष्णस्य सकलनायकोत्तमस्य बहुकामिनीविषयाया रतेराभासत्वापत्तेः । तस्मादव्यवस्थितबहुकामिनीकवैशिकनायकपरमेतत् । अत एव वैशिकानां वेश्यानां च रसाभासः इति प्राचीनमतम् ।" इति ॥ प्रत्यक्षदोषवतः धृष्टस्य, बहुनायिकानिबद्धभावस्य गूढविप्रियकृतः शठस्य च रागाभावात् रसाभासत्वं प्रकटमेव ॥ म्लेच्छहालिकादिजडपात्ररागे तिर्यगादिरागे च तेषां शृंगारस्य कामविकारशान्तिप्रयोजकबुद्धित्वात् केचन आभासत्वं पश्यंति तच्चिन्त्यमेव । तथाहि माऽस्तु हालिकाद्येषु ग्राम्येषु कामकलाकौशलं तथापि दृश्यते तत्र रतिः तत्फलं च; माऽस्तु च तेषां विभावादिज्ञानं, वर्तते तथापि तत्र तेषां सद्भावः । एवं सचेतनेषु पशुपक्ष्यादिषु अपि मनुष्यवत् दृश्यते चिन्तादिभावः, विकारादिसत्त्वं च । अत एव सूक्ष्मदर्शिभिः कालिदासादिमहाकविभिः पश्वादिगतः शृंगारो वर्णितः, यथा—" मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्तमानः । शृंगेण च स्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः ॥ " ( कुमारसंभवे ३।३६ ) इति, " कण्डूकुड्मलितेक्षणां सहचरीं दंतस्य कोट्या लिखन् पर्यायव्यतिकीर्णकर्णपवनैराह्लादिभिर्वीजयन् । जग्धार्धैर्नवसल्लकीकिसलयैरस्याः स्थितिं कल्पयन्नन्यो वन्यमतंगजः परिचयप्रागल्भ्यमभ्यस्यति ॥ " ( मालतीमाधवे ९।३२ ) इत्यादिभिः । अत एव निर्णीतं एकावल्यां—" विभावादिसंभवो हि रसं प्रति प्रयोजको, न विभावादिज्ञानं, ततश्च तिरश्चामप्यस्त्येव रसः ।" ( ३ ) इति ॥ एवं मालतीमधुकरादीनां लतावृक्षादीनां अपि रत्यादिभाववर्णनानि कविकृतानि संगच्छंते, स्थावरेषु अपि वर्तमानायाः चिदानंदकलायाः प्राकृतदृष्टिभिः अनवगमे तन्निर्वर्तितभावादीनां स्फुटं अदृश्यत्वेऽपि, तद्गतजीवभावादेः अपोहितुं अशक्यत्वात् , क्रान्तदर्शिभिः कविभिश्च तद्दर्शनात् । प्रकाशितं हि एतत्तत्त्वं आदिकविना महर्षिणा—" संनिकर्षाच्च सौहार्दं जायते स्थावरेष्विव ।" ( रामायणे २ । ८ । २८ । ) इत्युक्तवता । अत एव रसान्तरे कालिदासोऽपि—"नृत्यं मयूराः कुसुमानि वृक्षा दर्भानुपात्तान्विजहुर्हरिण्यः ।

**यानि हरन्ति मनांसि स्मितजल्पितवीक्षितानि रक्तानाम् ।**
**तान्येव विरक्तानां प्रतिभान्ति विवर्तितानीव ॥ ६२८ ॥**

---

तस्याः प्रपन्ने समदुःखभावमत्यन्तमासीद्रुदितं वनेऽपि ॥ " ( रघु० १४।६९ ) इति । न च तादृशानि चेतनारोपमात्रेण प्रवृत्तानीति वक्तुमुचितं, तथा सति तेषां अवस्तुत्वात् आभासापत्तेः ॥–यत्तु केचन कुमारसंभवे अष्टमसर्गे पार्वतीपरमेश्वरविलासवर्णने गीतगोविंदादिषु राधाकृष्णविलासवर्णने च अनौचित्यं पश्यंति, तदरमणीयं, तेषां शृंगारस्य अलौकिकत्वादगम्यत्वेऽपि "लोकवत्तु लीलाकैवल्यम् । " ( ब्रह्मसू० २।१।३३ ) इति न्यायात् तत्तद्वर्णनस्य लौकिकदृष्ट्या लीलानुवादमात्रत्वात्, तद्द्वारा च कामिनां भगवति चित्तावर्जनतात्पर्यवत्त्वाच्च ॥–अत्र " रसो वै सः " ( तैत्तिरीयोप० २।६।१) " अन्यानि भूतानि मात्रामुपजीवंति " ( बृ० उ० ४।३।३२ ) इत्यादिश्रुतिभिः राधाकृष्णयोरेव शृंगारः शृंगाररसः, अपरेषां तु रसाभासः इति वदद्भिः कैश्चिद्वाल्भैः स्वशिरश्छेदन्यायेन प्रपञ्चे आभासवाद एव स्वीकृतः भवति । वस्तुतस्तु लौकिकानंदस्य मात्रात्वेऽपि आनंदस्वरूपत्वाक्षतेः न रसक्षतिः ॥–अथ स्त्रीणां असाध्यमानप्रकारः अनौचित्यात् रसाभास एव, एवं हास्यभूयिष्ठः शृंगारोऽपि ॥–यौवनसंस्कारादिजः वेगः कामाख्यः तु रतिस्थायिनः शृंगाररसात् अन्य एव, इति अलम् ॥ ] ६२७॥

[ तादृशशृंगारस्य अनुभावा अपि दुःखदाः इति निवेदयति यानीति । ] हरन्ति वशयन्ति । [ रक्तानां स्त्रीणां इति शेषः । ललित इति पाठे तत् भावविशेषः पूर्वं ( आ० ४७९ ) व्याख्यातः, यद्वा विशेषणं सुंदरं नयनादिसुखकरं इत्यर्थः, स्मितं अदृष्टदंतं ईषद्धसितं, विशेषेण मृदुः; जल्पितं वचनादि, विशेषेण वक्रोक्त्यादि; वीक्षितं अवलोकनं, विशेषेण सकटाक्षादि; इमानि अनुरागेंगितानि । तानि स्मितादीनि, एव अवधारणे, विरक्तानां तादृक्स्त्रीणां, ] विवर्तितानि प्रतिकूलानि, [ विरुद्धानि वर्तितानि वर्तनानि येषां ते विवर्तितानि तिरस्कृतिपरायणानि; इव–वस्तुतः स्मितादीनि स्वरूपतः पूर्वेभ्यः अभिन्नानि अपि भावरहितत्वात् विपरीतानि दुःखकराणि इव, कामुकानां प्रतिभान्ति कामुकैः प्रतीयंते, तादृशाह्लादकत्वाभावात् इत्यर्थः । तथा चोक्तं केनापि–" अविशदचलं नेत्रप्रान्तावलोकनमस्फुटं, चकितचकिता वाचः, स्पर्शः क्वचिज्जनसंकुले । इति तव मया प्रेमारंभे य एव निरीक्षिताः, कठिनमनसो दृष्टा भावास्त एव विरज्यतः ॥ " इति ॥ तथाहि नयनविकारादि स्वाभाविकं आनुरागिकं कृत्रिमं वा इति त्रिविधं; ततः यत् पूर्वं आनुरागिकं इति गृहीतं तत् इदानीं कृत्रिमं इति

---

६२८ मनांसि च ललितस्मितवीक्षितानि ( गो. का )

विद्धातु किमपि, कथमपि निगृह्यमाणा मुहूर्तमासिष्ये ।
इति यत्र मनः स्त्रीणां तत्रापि रमन्त एव पशुतुल्याः ॥ ६२९ ॥
यत्र न मदनविकाराः सद्भावसमर्पणं न गात्राणाम् ।
तस्मिन्मुद्रितभावे पशुकर्मणि पशव एव रज्यन्ते ॥ ६३० ॥

---

दृश्यमाणं दुःखायैव भवतीति भावः । ६२८ ॥ साङ्गं शृंगाराभासं विनिंद्य तत्प्रसंगेन सामान्यतः प्रत्यक्षविरक्तानां चेष्टाविशेषकथनपुरःसरं तादृश्यामपि नायकसदृश सक्तं अष्टाभिः विनिंदति विदधात्वित्यादिभिः । विदधातु करोतु, किमपि यत् तन्मनसि वर्तते, सामान्ये नपुंसकत्वं, कामुकः पतिः वा इति शेषः; अहं तु तेन निगृह्यमाणा संयम्यमाना नियंत्र्यमाणा; मुहूर्तं द्वादशक्षणं घटिकाद्वयं वा, कंचित्कालं इत्यर्थः, आसिष्ये स्थास्यामि । इति एवंप्रकारेण, यत्र स्त्रीणां कुलटानां इत्यर्थः, मनः चेतोवृत्तिः, तत्रापि तादृशीषु, पशुतुल्याः चतुष्पादोपमाः जडाः मूर्खाः इति यावत्, एवकारः अन्ययोगव्यवच्छेदार्थः, रमन्ते ताः स्वच्छन्दाः अपरित्यज्य तासु स्नेहं धारयंति ॥ ६२९ ॥ पुनश्च—यत्र यस्मिन् रते, मदनस्य कामस्य रतेच्छायाः इति यावत्, विकाराः ओष्ठस्फुरणादिविकृतयः रत्युदयसूचिकाः तदनुभावभूताः संयोगात्पूर्वं जायमानाः, न न आविर्भवंति इत्यर्थः। मदनविकारा उक्ता रतिरहस्ये (४।२६)—"ओष्ठाग्रं स्फुरतीक्षणे विचलतः कूपोदरे मत्स्यवद्धम्मिल्लः कुसुमाञ्चितो विगलितः प्राप्नोति बन्धं पुनः । प्रच्छन्नौ व्रजतः स्तनौ प्रकटतां, श्रोणीतटं दृश्यते, नीवी च स्खलति स्थिताऽपि सुदृढं, कामेङ्गितं योषिताम् ॥" इति;—तथा "स्निग्धं दृष्टिपथं, विभूषितवपुः, कर्णस्य कण्डूयनं, केशानां च मुहुर्मुहुर्विवरणं, वार्ता च सख्या सह । नाभेर्दर्शनमग्रतश्च गमनं, बालस्य चालिंगनं, कुर्वीरन् विवशाः स्त्रियः समदना दृष्ट्वा नरं कांक्षितम् ॥१॥ 'वेण्याः संयमनं, विलासगमनं, कर्णादिकंडूयनं, निश्वासोऽङ्गनिदर्शनं स्मरकथा हस्तांगुलिस्फोटनम् । स्निग्धालोकनमालिभिः सह वचो, वक्त्रे तथोज्जृंभणं, दृष्ट्वा बालकचुंबनं सहसनं, गाढं च निष्ठीवनम् ॥२॥ संज्ञाव्याहरणं, प्रणामकथनं, संतर्जनं छद्मना, सख्या सद्गुणवर्णना सह, गुणैः स्वेदादिभिर्वेपनम् । मालाकर्षणमादरेण कथनं, सद्भूषणोद्घाटनं, भावैस्त्रिंशतिभिंगितानि कुरुते सैतानि कामाकुला ॥ ३ ॥' प्रियं प्रेक्ष्य महान् हर्षो मुखनेत्रप्रसन्नता । अपूर्वं सस्मितं गुप्तं संततं वा विलोकनम् ॥ ४ ॥ हस्तांघ्रिहृन्मुखे स्वेदः, ..र्वांगे गद्गदं वचः । नाभिपार्श्ववलिश्रोणीस्तनमंडलदर्शनम् ॥ ५ ॥ नीवीस्रंसन-नभा..ंगोष्ठदशनानि च । कण्डूयनं श्रवणयोः, रोमांचः, कचमोक्षणम् ॥ ६ ॥ सुल-

---

६२९ ...ति रति रमंति पशु (प) ६३० तस्मिन्नुज्झितभावे (प)

अवधीरणयोपहतः प्रतिदिवसं हीयमानसद्भावः ।
अभिमानवान् मनुष्यो योषितमूढामपि त्यजति ॥ ६३१ ॥
साक्षिनिकोचं सख्याः पाणितलं पाणिना समाहत्य ।
यन्नरमुपहसति स्त्री ददातु तस्मै मही रन्ध्रम् ॥ ६३२ ॥

---

भार्यार्थिता बालचुम्बनालिङ्गनानि च । सखीकण्ठग्रहः, श्वासो, वासःसंयमनं मुहुः॥७॥ दर्शनं हस्तमुद्राणां, भ्रूविक्षेपः, प्रियं वचः । अंगुलीस्फोटनं, स्वीयपाणिना स्तनपीडनम् ॥ ८ ॥ नखैर्विलिखनं भूमेस्तृणच्छेदो रहःस्पृहा । भावानुरक्तां जानीयाच्चिह्नैरेभिर्नितम्बिनीम् ॥ ९ ॥ रसिको रमयेन्नारीं रागान्धामनुरागिणीम्। निपुणो वर्जयत्येव दूरतः परिवर्जिताम् ॥ १० ॥" इति कामसमूहे ॥ संयोगे न गात्राणां चुंबनमर्दनादियोग्यानां कपोलकुचादीनां अंगानां, सद्भावेन प्रीतिपूर्वं सोल्लासं, समर्पणं सम्यक् संपूर्णतया प्रियाय दानं न, अर्थात् अंगसंकोचः क्रियते, तस्मिन् तादृशे, ] मुद्रिते निरर्थप्राये इत्यर्थः [ इति टिप्पणी, मुद्रितभावे मुद्रिताः अनुन्मीलिताः अविकसिताः भावाः अभिलाषादिमानसविकाराः यस्मिन् तादृशे, पशुकर्मणि मैथुने, "ग्राम्यधर्मो निधुवनं कामकेलिः पशुक्रिया । व्यवायो मैथुनं" इति हैमः, पशवः जडाः स्वाभिमानरहिताः वा, एवकारः अन्ययोगव्यवच्छेदार्थकः, न तु अन्ये इत्यर्थः, रज्यंते तेन संतुष्टाः हृष्टा वा भवंति । भावरहितं रतं पशूनां इव कामकंडूत्युपशममात्रफलं, अतः तादृशसंभोगवाचि पशुकर्म इति पदं परं समुचितम् । पशवः इति उपमेयान् जडान् पुरुषान् निगीर्य उक्तमिति अतिशयोक्तिः । 'पशुकर्मणि पशव एव रज्यंते' इति अनुरूपद्वयसंघटनात् समालंकारो व्यंग्यः ॥ प्रस्तुतार्थे क्षेमेन्द्रः–" परपुरुषरागिणीनां विमुखीनां प्रणयकामवामानाम् । पुरुषपशवो विमूढा रज्यंते योषितामधिकाः ॥" ( ३।५० ) इति कलाविलासे ॥ ६३० ॥ तद्विपरीतस्य साभिमानस्य करणमाह अवेति । अवधीरणया अवज्ञया तिरस्क्रियया, उपहतः घातितः, अवमानित इत्यर्थः । हीयमानः हानिं तनुतां प्राप्यमाणः क्षीयमाणः । अभिमानवान् "मानश्चित्तसमुन्नतिः" ( इति अमरः ) तद्वान् मानी । योषितं स्त्रियं, ] ऊढां विवाहितां [ परिणीतां, स्वीयाम् । अपिना किमु वाच्यं सर्वसामान्यां स्वस्मिन् विरक्तां वेश्यां त्यजति इति अर्थापत्तिर्व्यंग्या । अनया मध्यमो वैशिकः नायकः उपलक्षितः, तथाच भावप्रकाशे–" दृष्टे दोषे विरज्येत स भवेन्मध्यमः पुमान् ।" इति ॥ ६३१ ॥ तत्र चेष्टावमानमाह साक्षीति । ] अक्षिनिकोचः साभिप्रायः नेत्रनिमेषोन्मेषः, [तेन सहितं यथा स्यात्तथा साक्षिनिकोचं क्रियाविशेषणम् । सख्याः इत्यादि सख्याः हस्ते उपहासप्रदर्शिकां

पुरुषान्तरगुणकीर्तनमन्योद्देशेन चात्मनो निन्दाम् ।
शृण्वन्नपि यः स्वस्थः स्वस्थोऽसौ कालपाशबद्धोऽपि ॥ ६३३ ॥
अवगम्याभिप्रायं स्वामिन्याः परिजनोऽपि यं पुरुषम् ।
अवहसति तिरस्कार्यं तस्य न मूल्यं वराटिकाः पञ्च ॥ ६३४ ॥
तत्त्वातत्त्वसमुत्थव्यवहृत्योर्योऽन्तरं न जानाति ।
स्थानं भवति स पशुपतिरपसंशयमर्धचन्द्रलाभस्य ॥ ६३५ ॥

करतालिकां दत्त्वा इत्यर्थः । ] ददातु इत्यादि अतिहीनत्वात् पृथ्वीप्रवेशार्हः स इत्यर्थः । [ ददातु मही रन्ध्रं इति लोकोक्तिः, भूतलनिवासायोग्यं तं पृथ्वी स्वस्या अधः वासाय अवकाशं दातुं कृपां करोतु इति तात्पर्यम् ॥ तथा च समयमातृकायां— " हेमन्तमार्जार इवातिलीनः स चेन्न निर्याति निरस्यमानः । तदेष कार्यस्तनुमर्मभेदी प्रवर्धमानः परुषोपचारः ॥ " ( ५।७९ ) इति ॥ ६३२ ॥ क्रमप्राप्तं वचनावमानमाह पुरुषेति । स्वं विहाय अन्यः पुरुषः पुरुषान्तरः । अन्यस्य स्वसदृशस्य परस्य, उद्देशेन अपदेशेन । स्वस्थः स्वस्मिन् आत्मनि तिष्ठति इति स्वस्थः निर्विकारः, असौ पुरुषः, कालः कलयति आयुः इति कालः यमः, तस्य पाशेन बंधनरज्ज्वा यया जीवाः परलोकनयनाय बद्ध्वा आकृष्यन्ते, तेन बद्धोऽपि, यमहस्तपतितः मृत्युग्रस्तोऽपि इत्यर्थः, स्वस्थः निश्चिन्तः निर्भयो वा । विरलौ तादृशौ इति भावः । तत्सादृश्येन ऐक्यारोपात् निदर्शना; अत्र स्वस्थः इति पदस्य भिन्नतात्पर्येण आवृत्तत्वात् लाटानुप्रासः शब्दालंकारश्च, तयोः द्वयोः संसृष्टिः ॥ ६३३ ॥ ततोऽपि मर्मभेदकं अन्यद्वारा अवमाननं आह अवेति । अवगम्य ज्ञात्वा, अभिप्रायं हृद्गतभावं आशयं कामुकनिष्कासनाय तदवमाननरूपं, स्वामिन्याः सेव्यायाः, परिजनः परिचारकादिनिकृष्टवर्गः, तिरस्कार्यं अवधीरणीयं कामुकं, अवहसति अवहसितस्य विषयं करोति, अवहसितं तु—" फुल्लनासापुटं यत्स्यान्निकुंचितशिरोंसकम् । जिह्मावलोकिनयनं तच्चावहसितं मतम् ॥" इति रसार्णवसुधाकरे; ] तस्येत्यादि अतिनिंद्यत्वात् पंचकपर्दिकायोग्योऽपि न इत्यर्थः । [ वराटिका कपर्दिका ' कोडी' इति भाषायां प्रसिद्धा, या पूर्वं क्वचित् काश्यादौ अद्यापि अत्यल्पतममूल्यप्रतिनिधिनाणकत्वेन व्यवहारे स्वीकृता । तस्येत्यादि लोकोक्तिः । क्षुद्रैः परिजनैरपि अवहस्यमानो यो न जिगमिषुः स वराटिकावदतितुच्छः इति औपम्यं गम्यम् ॥ ६३४॥ अबुधं जडं विनिंदति तत्त्वेति । "यथा चित्ते तथा वाचि, यथा वाचि तथा क्रियाः । " इत्यनुसारेण हृदयपूर्वकं वर्तनं अत्र तत्त्वं

६३४ परिजनोऽप्रियं पुरुषं—व्यवहरति तिरस्कार्यं ( कापा ) । व्यवहरति तिरस्कर्तुं (१) ६३५ तत्त्वावहासमुत्थव्यवहृतयोर्यो (कापा)

**क्रमगलितगौरवांशो रिक्ततया लाघवं परापतितः।**
**अप्राप्तपरिच्छेदः प्लवतेऽसौ युवतिसरिति कुमनुष्यः॥ ६३६॥**
**यत्नेन कपटघटिताङ्गशृङ्गारोद्दीपनार्थमनुभावान्।**
**रतिशिल्पजीविकाभिर्मूढास्तत्त्वेन गृह्णन्ति॥ ६३७॥**

तद्विपरीतं कूटं अतत्त्वं, आभ्यां समुत्थिताः समुद्भूताः याः व्यवहृतयः व्यवहाराः क्रियाः वा, तासां, अन्तरं भेदं, यो न जानाति विविच्य ज्ञातुं न शक्नोति, सः मूढः, तथा चोक्तं–"उदीरितोऽर्थः पशुनाऽपि गृह्यते,....परेङ्गितज्ञानफला हि बुद्धयः॥" इति, ] 'पशुपतिः अतिमूढत्वात् बलीवर्दतुल्यः' [ इति टिप्पणी, तदरमणीयं प्रकृतश्लेषा-निर्वाहात्; पशूनां गवादीनां पतिः पालकः पशुपतिः गोपालः, ] पक्षे [ पशूनां अविद्यापाशबद्धानां नराणां पतिः निग्रहानुग्रहसमर्थः ] शिवः, अर्धचंद्रो गलचिचिका [ गलहस्तः 'गलची' इति भाषायां, तदभिनयस्तु–" यस्यांगुलयस्तु विनताः सहांगुष्ठेन चापवत्। सोऽर्धचन्द्र इति ख्यातः करः।" ( ९।४० ) इति भरतः, ] पक्षे चन्द्रकला-भागः, [ तस्य यः लाभः प्राप्तिः तस्य स्थानं पात्रं, भवति बहुप्रकारैः अवमानितोऽपि स्वयं न निर्यातः गलहस्तिकया सापमानं निष्कास्यते इत्यर्थः। काव्यलिंगेन संकीर्णः श्लिष्टरूप-कालंकारः, तन्निष्पत्त्यै निष्कासनस्य अर्धचंद्रेत्यादिभंग्यन्तरेण कथनात् पर्यायोक्तं अलंका-रश्च, पशुपतेः अनुरूपो योऽर्धचंद्रयोगस्तस्य कथनात् समालंकारोऽपि, इत्येतेषां संकरः ॥ ६३५॥ तत्र हेतुभूतदरिद्रत्वस्य परिणामं वर्णयति क्रमेति। क्रमेण शनैःशनैः, गलितः नष्टः, गौरवस्य गुरोः भावः गौरवं तस्य उत्कर्षस्य आदरस्य वा, पक्षे गुरुत्वस्य, अंशः लवः अपि यस्य सः, अत एव प्राप्तया ] रिक्ततया निःसारतया [ निर्धनतया, पक्षे अतिल-घुतया; लाघवं लघोर्भावं अनादरं, पक्षे लघुत्वं; परापतितः प्राप्तः, असौ वर्णितप्रकारः, कुमनुष्यः कुत्सितः मनुष्यः गर्ह्यः इत्यर्थः, युवतिः अंगना एव सरित् नदी तस्यां, अप्राप्तपरिच्छेदः ] 'परिच्छेदः इयत्ता' [ इति टिप्पणी, तदचारु इष्टार्थाप्रदानात्, न प्राप्तः परिच्छेदः सीमा पारः येन तादृशः सन्, प्लवते तरति; रिक्तः तत्र सक्तः अलब्धफल एव वर्तते इति भावः। यथा कुनौः पण्यद्रव्यरहिता अपगतपोतस्थैर्यद्रव्या च निःसारा सरित्प्रवाहे तीरं प्राप्तुं न शक्नोति तथा इति समासोक्तिः रूपकोत्थापिता॥ अपि च "परिच्छेदो हि पाण्डित्यं" ( हितोपदेशे १।१४८ ) इत्युक्तेः अप्राप्तपरि-च्छेद इति तिरस्कृतोऽपि अप्रबुद्धः मूर्खं एव फलालाभेऽपि तत्र निरतो भवति इति सूचितम्॥ ६३६॥ उक्तविधस्य मूढस्य आसक्त्याः हेतुं विवृणोति यत्नेन इति।

---

६३६ क्रमकृशित ( गो२.का ) क्रमहसित ( प. कापा ) ( अधिकमात्रः पाठः )
६३७ शृंगारख्यापनार्थमनु० ( प )

**या धनहार्या नार्यो निर्मर्यादाः स्वकार्यतात्पर्याः ।**
**सह ताभिरपीहन्ते बत मन्दाः सङ्गतमजर्यम् ॥ ६३८ ॥**

---

रतिः कामकेलिः संभोगः सैव शिल्पं कला तत् जीविका जीवनसाधनं वृत्तिः यासां ताभिः वेश्याभिः इत्यर्थः, धनाहरणाय कामुकानां शृंगारोद्दीपनार्थं रतिस्थायिभावस्य रसस्य वर्धनाय, यत्नेन प्रयत्नेन, कपटघटितान् मायारचितान् अवास्तवान् कूटान् इत्यर्थः, अनुभावान् स्मितकटाक्षभ्रूविक्षेपादीन्, अनुभावः तु " बहिः प्रकाशयन् भावमुद्बुद्धं स्वस्वकारणैः । लोके कार्याभिधो यः सोऽनुभावः काव्यनाट्ययोः ॥ " इति ( कर्णभूषणे २।१ ) लक्षणेन लक्षितः, ( स्वैः स्वैः कारणैः आलंबनोद्दीपनरूपैः उद्बुद्धं रत्यादिकं भावं बहिः प्रकाशयन् लोके यः ( भावस्य ) कार्यं इत्यभिधीयते स अनुभावः इत्यर्थः) । तत्र इमे कटाक्षादयः नायिकायाः स्वात्मनि रसानुभवकरणत्वेन जाताः अनुभावाः, नायकस्य पुनः ते दृष्टिपथं गताः तन्मनो विकारयंति, अतः तं प्रति ते च विषयत्वेन उद्दीपनविभावाः । "तथा च कटाक्षादीनां करणत्वेन अनुभावकता, विषयत्वेन उद्दीपकता च, इति ध्येयम् " इत्यपि तत्रैव । एतदनुसारेण मूले पूर्वार्धस्य भावः । एतादृशान् अनुभावान्, मूढाः कामेन मोहं आपन्नाः मूर्खाः जडबुद्धयो वा, तत्त्वेन स्वरूपेण गृह्णंति इमे स्मितादयः तस्याः प्रीतिं प्रकाशयंति इति मन्वते कृत्रिमान् अनुभावान् आनुरागिकान् मूढा मन्वते इति भावः ॥ उक्तं च शृंगारतिलके ( १।६५ )–"धनार्थं कृत्रिमैर्भावैर्ग्राम्यं व्यामोहयंति ताः।" इति । ( ग्राम्यं मूर्खम् । ) ॥६३७॥ अपरं हेतुमाह या इति । याः नार्यः स्त्रियः, केवलं धनहार्याः धनेन द्रव्येणैव न तु रूपगुणादिभिः हार्याः हर्तुं वशीकर्तुं शक्याः, यथोक्तं–"हारहीरकहिरण्यभूषणैस्तोषमेति गणिका धनैषिणी । प्रेमकोमलकटाक्षवीक्षितैरेव जीवति कुलाङ्गनाजनः ॥ " इति ; तथा " वहसि हि धनहार्यं पण्यभूतं शरीरम् । " ( १।१७ ) इति चारुदत्ते गणिकां प्रति विटोक्तिः । निर्मर्यादाः उल्लंघिताचारनियमाः त्यक्तलज्जाः इत्यर्थः, स्वकार्यतात्पर्याः स्वेष्टसाधनैकदृष्टयः, विशेषणैः वेश्याः इति लाभः, ताभिः सह, मंदाः मूर्खाः, " मंदः काकमूर्खयोः । " इति अमरः, ] अजर्यं न जीर्यति इति अजरं नियतं [ अनपायं, संगतं सख्यं, अत्र विशेष्यत्वेन उपात्तं संगतं, तद्विशेषणं अजर्यं; यन्मते "अजर्यं संगतं" (पा.३।१।१०५) इति निपातः तन्मते अजर्यं मैत्रीं सख्यं, कीदृशं संगतं समयक्रमेण उचितं इत्यर्थः उन्नेयः । " सख्यं साप्तपदीनं सौहार्दं सौहृदं तथा स्नेहः । मैत्री प्रीतिरजर्यं सभाजनं संगतं प्रोक्तम् ॥" इति हलायुधात् अत्र 'संगतमजर्यं' इति पुनरुक्त-

---

६३८ ताभिरपि समीहन्ते ( प )

अपरोक्षधनो गम्यः श्रीमानपि नान्यथेति निर्दिष्टम् !
कन्दर्पशास्त्रकारैः, कुतः कथा लुप्तविभवस्य ॥ ६३९ ॥
व्यासमुनिनाऽपि गीतौ द्वावेव नराधमौ लोके ।
* योऽनाढ्यः कामयते कुप्यति यश्चाप्रभुत्वयुक्तोऽपि ॥ ६४० ॥

---

वदाभासः । ] ईहंते वाञ्छन्ति, [ बत इति खेदे, तेषां दुष्करसंपादनाभिलाषमौर्ख्येण ॥ ६३८ ॥ तासां धनहार्यत्वं धनैकपुरुषार्थवत्त्वं च शास्त्रदृष्टान्तादिभिः प्रतिपादयति अपरोक्षेत्यादिभिः सप्तभिः । कं सुखं तेन तत्र वा दृप्यति इति कंदर्पः कामदेवः, तत्तद्विषयविशेषान् सांगं सकलं सरहस्यं शास्ति इति शास्त्रं, कंदर्पविषयकं शास्त्रं ये कुर्वंति ते कंदर्पशास्त्रकाराः दत्तकवात्स्यायनादयः, तैः, इति निर्दिष्टं एवंप्रकारेण कथितं, कथं तत् इत्याह अपरोक्षेत्यादि । श्रीमान् अपि धनवान् अपि, अपरोक्षधनः प्रत्यक्षीकृतद्रव्यः तत्कालदाता न तु कृपणः इत्यर्थः, वेश्यानां इति शेषः, गम्यः संगमनीयः संभोगार्थं स्वीकर्तव्यः, " न यस्य हस्ते तरमूल्यमस्ति स किं समारोहति नावमग्रे ।" ( समयमातृकायां ५।८५ ). इति न्यायेन; ] 'अन्यथा अस्वायत्तधनः इत्यर्थः' [ इति टिप्पणी, न अन्यथा–यदि श्रीमानपि न दाता तदा स न गम्यः इत्यर्थः । एवं वेश्यानां श्रीमंतोऽपि यदा अविशेषेण न गम्याः, तदा कुतः कथा किमु वाच्यं अगम्यतायां लुप्तविभवस्य नष्टसमृद्धेः अकिञ्चनस्य ॥ ६३९ ॥ अत्रार्थे सर्वविदो व्यासस्यापि संमतिं अनुवदति व्यासेति । व्यासः पाराशर्यः कृष्णद्वैपायनः श्रीमहाभारतव्याससमृत्यादीनां कर्ता। मुनिः–"निर्वित्तः सर्वतत्त्वज्ञः कामक्रोधविवर्जितः । ध्यानस्थो निष्क्रियः शान्तस्तुल्यमृत्काञ्चनो मुनिः ॥ " इति ; गीतौ कथितौ । एवकारः अन्ययोगव्यवच्छेदार्थः, तेन कथ्यमानौ द्वौ विहाय अपरे न अधमाः इति तात्पर्यम् । नरेषु अधमौ कुत्सितौ । तौ उत्तरार्धेण निर्दिशति यः इत्यादीना । अनाढ्यः द्रव्येण हीनः, कामयते स्त्रीविषयिणीं रतिं सुरतेच्छां वा करोति; यश्च द्वितीयस्तु, अप्रभुत्वयुक्तः शक्तिरहितः निग्रहीतुं दण्डयितुं वा असमर्थः, अपि, कुप्यति अन्यस्मै क्रुध्यति । तथाहि प्रकृते श्रीव्यासवाक्यं– "द्वाविमौ पुरुषौ लोके सुखिनौ न कदाचन। यश्चाधनः कामयते यश्च कुप्यत्यनीश्वरः"॥ ( उद्योग० ३३।६१ ) इति महाभारते । ( अत्र पूर्वार्धे 'द्वाविमौ कंटकौ तीक्ष्णौ शरीरपरिशोषिणौ' इति पाठः क्वचिद्दृश्यते ॥ ) क्वचित्पुस्तके " धर्मः परो न विहितः,

---

* इतः ६५१ आर्याङ्कपर्यन्तः पाठः काव्यमालामुद्रितपुस्तके प्रभ्रष्टः ।

६३९ लुप्तविभवेषु ( प ) ६४० गीतं"धमौ मनो दहतः ( प )। धर्मः परो न विहितः कामकलायां मतिः स्थिरा यस्य ( इत्युत्तरार्धं का. )

क्षीणद्रव्ये देहिनि दारा अपि नादरेण वर्तन्ते ।
किमुतादानैकरसाः शरीरपणवृत्तयो दास्यः ॥ ६४१ ॥
अविदितहेयादेयास्तिर्यञ्चोऽपि त्यजन्ति पीतरसम् ।
कुसुमं, किमु कार्यविदो वेश्या नरमात्तसर्वस्वम् ॥ ६४२ ॥

---

कामकलायां मतिः स्थिरा यस्य ।" इति प्रकृतार्यायाः उत्तरार्धं दृश्यते तस्य, येन धर्मानुष्ठानं न कृतं, येन च धर्मार्थौ बाधित्वा सर्वदा कामः सेव्यते तौ उभौ नराधमौ इत्यर्थः । अयं पाठः उदाहृतव्यासश्लोकाननुगुण्यात् निर्धनकामुकस्यैव प्रस्तूयमानत्वाच्च अनादरणीयः॥ ६४० ॥ कैमुतिकन्यायेनापि तासां निर्धनेषु अनादरं प्रबोधयति क्षीणेति । क्षीणद्रव्ये विगतविभवे, देहिनि मनुष्ये, दाराः निजाः परिणीताः भार्याः अपि, आदरेण सम्मानेन बहुमानेन, न वर्तन्ते वाक्क्रियादिषु सादरं व्यवहारं न कुर्वन्ति, यदुक्तं-- "धनहीनः स्वपत्नीभिस्त्यज्यते किं पुनः परैः ।", "कष्टं निर्धनिकस्य जीवितमहो दारैरपि त्यज्यते ।" "स्वजन इति पुराणशब्द एषो, धनलवमात्रनिबंधनो हि लोकः।" (तंत्राख्यायिकायाम् २।२६ ) इत्यादि । किमुत किमु वाच्यं बलवत् इत्यर्थः "बलवत्सुष्ठु किमुत स्वत्यतीव च निर्भरे ।" इति अमरः, आदानं ग्रहणं धनादीनां तदेव एकः मुख्यः रसः रागः अभिनिवेशः यासां ताः, शरीरं स्वदेहः एव पणः विक्रय्यपदार्थः "पणो विक्रय्यशाकादि(दौ?) बद्धमुष्टौ ग्रहे धने । द्यूतेऽशीतौ वराटानां कार्षिकव्यवहारयोः । मूल्ये भृतौ व्यवस्थायां विक्रयेऽपि ॥" इति केशवः, शरीरपणः एव वृत्तिः आजीवः जीवितसाधनं यासां ताः रूपाजीवाः, दास्यः वेश्याः पूर्वं (आ. ४१५) व्याख्याताः, नादरेण वर्तन्ते इति अत्र अनुषंजनीयम् । तथाहि--"दासी दासो तावद्यावत्पुरुषस्य किंचिदस्ति करे । क्षीणधनपुण्यराशेर्दुष्प्रापा स्वर्गनगरीव ॥" (८।११५ ) इति समयमातृकायाम् ॥ अत्र मूले न अर्थापत्त्यलंकारशंका, यथास्थितवर्णनात्, "अर्थान्तरं लोके अविद्यमानमपि कविना स्वप्रतिभया कल्पयित्वा ( संयोज्य वा ) यद्यापाद्यते तदाऽलंकारत्वं" इति स्थितेश्च । 'निदारा' 'नादरे' इति वृत्त्यनुप्रासः । ॥ ६४१ ॥ उक्तं उदाहरणेन द्रढयति अविदितेति । अविदितानि अज्ञातानि हेयानि त्याज्यानि आदेयानि ग्राह्यानि च यैः ते वस्तुविवेकरहिताः इत्यर्थः; तिर्यञ्चः तिर्यक् अंचंति गच्छन्ति ते, योगार्थमात्रस्य प्रकृतोपयोगित्वात् भ्रमराः इत्यर्थः;ते अपि,पीतः रसः मरंदः यस्य तं पीतरसं, कुसुमं पुष्पं, त्यजन्ति जहति; तथाहि, कार्यविदः हेयोपादेयज्ञानवत्यः, अत एव स्वकर्तव्यं सुष्ठु जानंत्यः,

---

६४१ दारा अप्यनादरेण ( प ) [ मात्राधिक्यमत्र ]

उत्पादयति सदानो रागं रागात्मको यथा नियतम् ।
निर्दानोऽपि सदा नो निःसन्देहं तथैव मनुजन्मा ॥ ६४३ ॥
यदतीतं तदतीतं, भाविनि लाभे च नास्ति बहुमानः ।
तत्कालहस्तनिपतितमनियतपुंसां मुदे वित्तम् ॥ ६४४ ॥
पीडितमधु मधुजालं तुच्छीभूतं च मन्मथग्रस्तम् ।
मुञ्चन्ति मदनशेषं क्षुद्राश्च प्रकटरामाश्च ॥ ६४५ ॥

---

वेश्याः, आत्तसर्वस्वं आत्मने (वेश्यार्थे) प्रापितसर्वस्वं चूषिताम्रवत् रिक्तीकृतं,नरं पुरुषं त्यजंति इति किमु वक्तव्यं इत्यर्थः, "किमु संभावनायां स्याद्विमर्शे चापि दृश्यते।" इति मेदिनी ॥६४२॥ अपरोक्षधनस्य प्रियत्वमाह उत्पादयति इति । रागात्मकः अनुरक्तः, मनुजन्मा मनुः ब्रह्मणः पुत्रः प्रजापतिः तस्मात् जन्म यस्य सः मनुष्यः, जातावेक-वचनं, ] सदानः उदारः [ वितरणशीलः सन्, यथा, नियतं निश्चितं, रागं प्रीतिं उत्पादयति जनयति; तथैव निर्दानः धनाभावेन धनसत्त्वे वा कृपणतया धनस्य अदाता, नेःसंदेहं निश्चयेन, सदा सर्वदा अव्यभिचारेण इत्यर्थः, रागं प्रीतिं, नो नहि, उत्पाद-यति इति अनुषज्यते ॥ अत्र 'सदानो' 'सदा नो' इति व्यपेतयमकाख्यः शब्दा-लंकारः, 'रागं रागा—' इत्यत्र आदिभागयमकं, 'निर्दानोऽपि सदानो' इत्यत्र शाब्दो विरोधाभासः च, इति शब्दालंकाराः ॥ ६४३ ॥ तस्य न्याय्यत्वं निरूपयति यदिति अनियतपुंसां नैकभोग्यानां सामान्यानां वेश्यानां, यत्, अतीतं भूतकाले प्राप्तं, वित्तं धनं, तत् तु अतीतं गतं भुक्तं वा, "ह्यो भुक्तं नाद्य तृप्तिकरम्।" (समयमातृका ८।११४) इति न्यायात्; भाविनि भविष्यत्कालसंबंधिनि, च, लाभे प्राप्तौ द्रव्यस्य कामुकात्, बहुमानः संमानः श्रद्धा वा, न, "वरमद्य कपोतः श्वो मयूरात्।" (काम-सूत्रं १।२) इति न्यायात् । अतः तत्काले वर्तमानकाले एव यत् हस्तनिपतितं करतलगतं भवति, तत् द्रव्यं एव, तासां मुदे हर्षाय प्रीत्युत्पादाय वा। 'तत्क्षण-धनदानभोग्याः' वेश्याः भवंति इति भावः ]॥६४४॥ [ तासां धनैकमतिमुक्त्वा असार-परित्यागशालित्वं वक्ति पीडितेति । पीडितमधु निष्पीडितक्षौद्रं उद्रसं, मधुजालं मधुच्छत्रं 'मधपुडो' इति भाषायां; तुच्छीभूतं रिक्तीभूतं द्रव्यापगमेन निःसारं,मन्मथग्रस्तं मदना-विष्टं कामिनं; उभयमपि मदनशेषं—मदनं मधूच्छिष्टं 'मोम' 'मीण' इति वा भाषायां

---

६४३ यथाऽभ्यधिकम् (प. गो २) ६४४ लाभेऽपि नातिबहु० (गो)। हस्तप-तितमनि० (गो) [न्यूनमात्रः पाठः]। चित्तम् (गो) [अनुचितार्थः पाठः] ६४५ भूतं तु मन्मथायत्तम् (प)

एकः क्रीणात्यद्य, प्रातर्भविता तथाऽपरः क्रेता ।
अन्यवशे क्षणमेकं, न विक्रयः शाश्वतोऽस्ति वेश्यानाम् ॥६४६॥
संदर्शितपरमार्थं भ्रूक्षेपकटाक्षदृष्टहसितादि ।
शृण्वन्ति ये सकर्णास्तत्कृतमन्यत्र संक्रान्तम् ॥ ६४७ ॥

---

प्रसिद्धं, पक्षे मदनः कामः लक्षणया कामाभिलाषः, तत् स वा शेषः यस्य तादृशं,क्रमेण, क्षुद्राः मधुमक्षिकाः, विशेषेण तु--"पिंगला मक्षिका ज्ञेया महत्यल्पा च सा द्विधा । महती पुत्तिकानाम्नी स्वल्पा क्षुद्रेति कथ्यते ॥" इति। प्रकटरामाः प्रकटाः सर्वप्रसिद्धाः रामाः रमण्यः प्रकाशनार्यः वेश्याः, क्षुद्राः इति अत्रापि विशेषणत्वेन अनुषज्यते, तुच्छाः इत्यर्थः, मुंचन्ति परित्यजन्ति । "क्षुद्रा व्यंगा नटी वेश्या सरघा कंटकारिका ।" (३०) इति शाश्वतः ॥ 'पीडितमधु मधुजालं' इत्यत्र आद्यपादयमकं, 'क्षुद्राश्च प्रकटरामाश्च' इत्यत्र पुनरुक्तवदाभासः, 'मदनशेषं' इति श्लिष्टपदेन अनुप्राणितः दीपकं अलंकारः, "सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम् । सैव क्रियासु बह्वीषु कारकस्येति दीपकम् ॥" (काव्यप्रकाशे १०।१०३) इति लक्षणात् ॥ ६४५ ॥ तासां पूर्वं उक्तं (आ. ६४१) शरीरपणवृत्तित्वं विशदीकरोति एकः इति । एकः कश्चित् कामुकः, तां अद्य अस्मिन्नेव दिवसे क्रीणाति, एकदिनोपभोगस्य मूल्यं दत्त्वा तां भुंक्ते; प्रातः अपरेद्युः, अपरः अन्यः, क्रेता पणं दत्त्वा भोक्ता, भविता भविष्यति; अपि च, एकं क्षणं अत्यल्पकालं भाटकप्रदानानुसारेण, अन्यवशे अन्यदीया इत्यर्थात्, भवति; एवं वेश्यानां विक्रयः अपरद्रव्याणामिव ] शाश्वतः नित्यः [ नास्ति । अन्यपदार्थानां सकृत् मूल्यदानेन क्रेतुः शाश्वतं बहुकालं वा स्वत्वं स्वामित्वं वा भवति, न तथा वेश्यारूपपण्यार्थस्य इति भावः । तथाहि उक्तं-"वेश्यानामनेकैः सह (अनेकैः सह वेश्यानां ?) रमणक्रीडो(क्रीडिको ?)चिता । निर्यात्येको विशत्यन्यः परो द्वारि प्रतीक्षते ॥" इति तंत्राख्यायिकायाम् (५।५५) (क्रीडैव क्रीडिका, स्वार्थे कः ।) ॥ ] ६४६ ॥ 'सकर्णाः सशक्तिकर्णेन्द्रियाः निपुणा इत्यर्थः, तेऽपि यदि शृण्वंति तत् तदा, अन्यत्र साधारणे, संक्रान्तं वृत्तिमत्, तर्ह्यपि, कृतं न विरुद्धं इति यावत् । यदि निपुणा अपि वेश्याभ्रूक्षेपादिकं तथ्यतया गृह्णंति तदा के नाम साधारणा जनाः इत्यर्थः । ' [ इति टिप्पणी । संदर्शितेत्यादिभ्यां द्वाभ्यां बुद्धिमतो वर्णयति । तत्कृतं ताभिः वेश्याभिः कृतं निर्वर्तितं निष्पादितं, अनेन कृत्रिमत्वं व्यजते, संदर्शितपरमार्थं मायाकार्यमिव आपाततः सत्यवद्भासमानं वस्तु-

---

६४७ परमार्थभ्रू (गो) । शृण्वन्तु ये सुकर्णाः पूत्कृत० (प)

यदि नाम निराकरणे न समर्था छिन्नकार्यबन्धेऽपि ।
काचिन्महानुभावा बोद्धव्यं तदपि चेतनावद्भिः ॥ ६४८ ॥
तेनार्थेनोपकृतं तयाऽपि तस्य स्वदेहदानेन ।
तच्चातीतं सम्प्रति, निरर्थकः शुष्कशृङ्गारः ॥ ६४९ ॥

---

तस्तु कूटं, यत्, भ्रूक्षेपकटाक्षदृष्टहसितादि–भ्रूक्षेपः भ्रूभंगः प्रणयकोपादिप्रकाशकः, कटाक्षदृष्टं कटाक्षेन अवलोकितं रतिभावादिसूचकं,हसितं "विकासितकपोलान्तमुत्फुल्लाननलोचनम्। किंचिल्लक्षितदन्ताग्रं हसितं तद्विदो विदुः ॥" इति लक्षणलक्षितं हर्षादिव्यञ्जकं, आदिना व्याजेन कुचांशुकापनयनादि; अन्यत्र अन्यस्मिन् कामुके, संक्रान्तं पूर्वं स्वविषयीकृतं इदानीं परविषयीकृतं इत्यर्थः, ये शृण्वंति लक्षणया धातूनां अनेकार्थत्वात् वा बोधंति इत्यर्थः, यद्वा अन्येभ्यः श्रुत्वा जानन्ति, ते सकर्णाः सफलश्रवणाः सारासारविवेकचतुराः इत्यर्थः । ये तादृशपरवचनं श्रुत्वाऽपि तस्मिन्नविश्वासं कृत्वा वेश्यानां कपटानुरागं परमार्थतया गृह्णंति ते बुद्धिहीनाः परिणामे विनश्यंति इति व्यंग्यार्थः । क्लिष्टार्था इयमार्या ]॥ ६४७ ॥ ' छिन्नकार्यबंधेऽपि स्वापेक्षासंबंधे छिन्ने सत्यपि इत्यर्थः । महानुभावा अत्युदाराशया ।' [ इति टिप्पणी । कार्यं फलं देहदानार्थदानरूपं परस्परप्रयोजनं, तद्रूपः बन्धः निगलं बंधनं संयोजकं वा, देयादेयभावरूपः सम्बंधः; तस्मिन्, छिन्ने खण्डिते, अपि, यदि, नाम संभावनायां, निराकरणे निष्कासने, काचित् न, समर्था शक्तिमती, तत्र साभिप्रायं विशेषणं महानुभावा इति तादृशी सती; तदपि तथापि, चेतनावद्भिः बुद्धिमद्भिः, " चेतनश्चेतनायुक्ते त्रिषु, संविदि चेतना ।" इति विश्वलोचनः, बोद्धव्यं वस्तुस्थितिः अवगन्तव्या; नायिकायाः महानुभावत्वेन प्रत्यक्षनिराकरणाभावेऽपि तस्याः विरक्तायाः स्नेहाभावः तदिंगितादिभिः अनुलक्ष्य शीघ्रं उचिततया वर्तितव्यं इत्यर्थः । तादृशी विरक्ता स्वयमेव परित्याज्या इति भावः ॥६४८॥ छिन्नकार्यबंधत्वं विवृणोति तेनेति । तेन कामुकेन, द्रव्येण तद्दानेन इत्यर्थः, उपकृतं उपकारः कृतः । तया वेश्यया, तस्य कामुकस्य, स्वदेहदानेन स्वदेहरूपद्रव्यविनिमयेन उपभोगाय स्वशरीरं दत्त्वा उपकृतं इत्यर्थः । अतः " समेन समं गतम् । " ( तंत्राख्यायिके ४ । १७ ) इति न्यायेन कस्मिंश्चिदपि पक्षे ऋणशेषो नास्ति इति तात्पर्यम् । तदेवाह–एवं तत् उपकृतं अतीतं भूतकालिकं अतिक्रान्तं सत् वर्तमानकालिकापेक्षणीयार्थेन संबंधाय अप्रयोजकं

---

६४८ समर्थेश्छिन्न० ( प ) । कश्चिन्महानुभावो ( प ) [ अरमणीयार्थः पाठः ]
६४९ एनार्थेनो० (प)

अवधीरणा रसायनमपमानो भवति यस्य परितुष्टयै ।
योग्योऽसौ पुरुषखरः खरतरनिर्भर्त्सनोक्तिलगुडानाम् ॥ ६५० ॥
दीपज्वालाललने व्रजतः खलु निर्वृतिं तयोस्त्वियान् भेदः ।
प्रथमा स्नेहेन विना, तथाऽपरा स्नेहयोगेन ॥ ६५१ ॥

---

जातमिति भावः । फलितमाह--निरर्थक इति; ततः कामुकेन द्रव्यादानतः वेश्यया देहादानतश्च अनिष्पन्नः अत एव शुष्कः नीरसः मिथ्याभूतः सकपटो वा, यथा शुष्करुदितशुष्ककलहादौ, शृंगारः संभोगेच्छादिरूपः, "पुंसः स्त्रियां स्त्रियः पुंसि संभोगं प्रति या स्पृहा । स शृंगार इति ख्यातः क्रीडारत्यादिकारकः ॥" इति लक्षणलक्षितः, निरर्थकः निष्फलः फलोत्पादनासमर्थः वंध्यः इति यावत् । द्वयोरपि उपकारकारणाभावात् न शृंगारकार्यसमुद्भवः इति भावः ॥ ६४९ ॥ एवं सति, अपमानितं अपि न निःसरन्तं कामुकमूर्खं निंदति अवेति । अवधीरणा अवज्ञा । ] रसायनं सर्वेन्द्रियपुष्टिकार्यास्वाद्यपदार्थविशेषः, ["यज्जराव्याधिविध्वंसि वयसः स्तंभकं तथा । चक्षुष्यं बृंहणं वृष्यं भेषजं तद्रसायनम् ॥" इति लक्षितः औषधविशेषः;] यस्य कुलटानादरः तदिव सुखकरः सोऽसौ अतिमूढत्वात् खरतुल्यः पुरुषः इति भावः । अपमानः तिरस्कारः, परितुष्टयै संतोषाय आह्लादाय वा; असौ पुरुषखरः पुरुष एव खरः रासभः, वेश्यानां या खरतराः अतिपरुषाः, निर्भर्त्सनोक्तयः संतर्जनवचनानि ता एव लगुडाः यष्टयः तेषां लक्षणया तत्प्रहाराणां योग्यः समुचितः । 'खरः खर' इत्यत्र यमकं, 'खरः खरतर' इत्यत्र अनुप्रासः, अर्थालंकारेषु रूपकं स्पष्टं, खरश्च लगुडानां योग्यः इति समालंकारोऽपि॥ ]६५०॥ [धर्मादयः चत्वारोऽपि पुरुषार्थाः वेश्यानां स्वातंत्र्येण अल्पयत्नसाध्याः इति अपूर्वं वैशिकरहस्यं दीपेत्यादिभ्यां चर्चति । तत्र पुरुषार्थचतुष्टये परमानंदस्वरूपमोक्षस्य प्राधान्यात् आदौ तमाह दीपेति । दीपज्वाला दीपशिखा, ललना ललयति ईप्सते कामान् इति ललना कामिनी, इदं पदं सर्वासां स्त्रीणां उपलक्षकं न तु केवलं वेश्यानां, उभे, खलु निश्चये, निर्वृतिं, व्रजतः प्राप्नुतः, परंतु तत्र कश्चित् भेदोऽस्ति, स तु, प्रथमा आद्या दीपज्वाला स्नेहेन तैलेन विना ] निर्वृतिं निर्वाणावस्थां [ अस्तमनं व्रजति, तथा अपरा अन्या ललना, चः त्वर्थकः, स्नेहस्य प्रेम्णः, योगेन उपायेन, निर्वृतिं ] आनंदानुभवं [ चतुर्थपुरुषार्थस्वरूपभूतं, " निर्वृतिः सुस्थितासौख्यनिर्वाणास्तग-

---

६५० °मवमानो यस्य ( गो ) । °क्तिकुलटानाम् ( गो ) [लकुटानाम् इति स्थाने लेखकस्खलनात् अक्षराणां परिवर्तनं भाति ] ६५१ दीपकलोले ललने व्रजतो निर्वृतिमयं तयोर्भेदः ( प )

**धर्मः कामादभिनवगुणवान्निःस्वस्य मदनरोगवतः।**
**अर्थोऽर्थवतोऽभिगमात्, कामः समरतनरोपभोगेन ॥ ६५२ ॥**

---

माधवसु। " इति विश्वलोचनः, व्रजति ॥–अधिकारिणां भेदात् उपायभेदेन अन्यान्यैः कर्मयोगेन अष्टांगयोगेन भक्तियोगेन ध्यानयोगेन ज्ञानयोगेन वा परमानंदप्राप्तिस्वरूपा निर्वृतिः प्रतिपादिता, सैव तदधिकारिणीभिः ललनाभिः स्नेहयोगाख्योपायेन प्राप्यते इति तात्पर्यम् ॥ मूले ललनासाम्याय दीपज्वालायाः ग्रहणे बीजं तु उभयोः प्रकाशमानत्वं, "ग्राह्यत्वं ग्राहकत्वं च द्वे शक्ती तेजसो यथा।" इति हर्युक्तेः परोद्दीप्यत्वं तथा परोद्दीपकत्वं स्नेहोपजीव्यत्वं च। तेन उभयोः गम्यं औपम्यं, निर्वृतिस्नेहशब्दयोः श्लिष्टत्वात् श्लेषानुप्राणितः, उभयभेदकथनात् व्यतिरेकालंकारः, स च अत्र उपमेयस्य उपमानात् आधिक्ये न्यूनत्वे वा अपर्यवसानात् अनुभयपर्यवसायी, स्ववैचित्र्यविश्रांतिमात्रत्वात्। "शब्दोपात्ते प्रतीते वा सादृश्ये वस्तुनोर्द्वयोः। तत्र यद्भेदकथनं व्यतिरेकः स कथ्यते ॥" इति काव्यादर्शे ( २।१८० ) व्यतिरेकालंकारलक्षणम्। प्रकृते 'निर्वृतिं व्रजतः' इति सादृश्यं शब्दोपात्तं, भेदश्च 'स्नेहं विना' 'स्नेहयोगेन' च इति विरुद्धधर्मोपादानेन स्फुटतरः इति बोध्यम् ॥ अत्र ललनापदेन स्वीयादिभेदभिन्नानां सर्वासां नायिकानां अविशेषेण बोधात् स्त्रीमात्रस्य स्नेहयोगेन मोक्षस्वरूपभूतानन्दप्राप्त्या तुरीयपुरुषार्थः सुलभः इति ध्वनितम् ॥] ६५१ ॥[अस्यां नानारमणानां वेश्यानां धर्मादिशेषपुरुषार्थप्राप्तिं उद्घाट्य तासां व्यतिरेकं ध्वनयति धर्म इति। तथा हि मदनरोगवतः कामातुरस्य, निःस्वस्य धनविहीनस्य दरिद्रस्य, कामात् लक्षणया कामस्य संभोगदानेन संतर्पणात्, अभिनवगुणवान् भाटकदानाशक्त्या तस्मात् अर्थलाभाभावेन निष्कामकर्मत्वात् विशिष्टगुणकः, धर्मः "यतोऽभ्युदयनिःश्रेयससिद्धिः" तादृशं कर्म, कार्यकारणयोरभेदेन तज्जन्यं शुभादृष्टं च भवति, "आर्तेषु दीयते दानं, शून्यलिंगस्य पूजनम्। अनाथप्रेतसंस्कारमश्वमेधफलं लभेत् ॥" इति न्यायेन; एवं आद्यपुरुषार्थसिद्धिः प्रतिपादिता ॥ द्वितीयं अर्थलाभमाह अर्थ इति। अर्थवतः धनवतः, अभिगमात् संभोगात्, अर्थः धनं तत्प्राप्तिः इत्यर्थः; प्रसिद्धेयं द्वितीयपुरुषार्थसिद्धिः, उक्तं च–"पुण्यप्रागल्भ्यलभ्याय वेश्याभ्याय मंगलम्। यत्र प्रतीपाः शास्त्रस्य कामादर्थप्रसूतयः ॥" ( ४।७ ) इति मत्स्यहरिश्चंद्रनाटके ॥ कामः कामाख्यः तृतीयः पुरुषार्थः, वर्णितो यः दशकुमारचरिते

---

६५२ धर्मः परो न विहितः कामकलायां मतिः स्थिरा यस्य। इति का. ६२८ श्लोकोत्तरार्धेन सहायं सार्धश्लोकः गो पुस्तके, तदयुक्तमस्मिन् ग्रन्थे सार्धश्लोकस्याभावात्। प पुस्तके इयं पंक्तिर्नास्त्येव। कामो न वा प्रकामं गुणवन्निःस्वस्य मदनयोगवतः। (गो)

( ३०२ ) यथा—"कामस्तु विषयातिसक्तचेतसोः स्त्रीपुंसयोर्निरतिशयसुखस्पर्शविशेषः । परिवारस्त्वस्य यावदिह रम्यमुज्ज्वलं च । फलं पुनः परमाह्लादनं परस्परविमर्दजन्म स्मर्यमाणमधुरमुदीरिताभिमानमनुत्तमं सुखमपरोक्षं स्वसंवेद्यमेव ।" इति । ( निरतिशयं श्रेष्ठं सुखं आनंदः यत्र तादृशः स्पर्शविशेषः संभोगः, 'स्त्रीपुंसयोः यत् अधोव्यंजनं संबाधकादि' तयोः त्वगिन्द्रियत्वात् तत्संयोगः स्पर्शविशेष एवेति । परिवारः परिजनः सहायकः । विमर्दः आलिंगनचुंबनादिरूपः सोऽपि स्पर्शविशेषात्मकः । स्मर्यमाणमधुरं यस्य स्मरणमपि सुखजनकं इत्यर्थः । उदीरिताभिमानं विकसितप्रणयं यद्वा उदीरितः जनितः अभिमानः सार्थक्यबुद्धिः यतः इत्यर्थः । न विद्यते उत्तमं अन्यत् यस्मात् तत् अनुत्तमम् । अपरोक्षं प्रत्यक्षम् । स्वसंवेद्यं अवाग्गोचरम् । अनुत्तमभित्यादिपदचतुष्टयेन कामस्य मोक्षसुखतुल्यत्वं सूचितम् । ) नरस्य पुरुषस्य उपभोगः सेवनं, समरताख्यः यः नरोपभोगः तेन, तृतीयः पुरुषार्थोऽपि सिद्धो भवति । तदुक्तं—"संभोगे तु समे कान्ता मरणांतं वशं ययुः ।" ( शृं.दी.३।१२ ) । (तादृशस्य सुरतस्य रमणीनां तृप्त्याधायकत्वात्, तृप्तिलक्षणं तु—"रोमाञ्चो वेपथुः स्वेदो लुलिते च विलोचने । मज्जन्त्या इव देहेषु त्वाश्लेषस्तृप्तिलक्षणम् ॥" इति । ) तच्च समरतं प्रशस्तं हरिहरेण शृंगारदीपिकायां—"रेतःस्रावकसंभवा प्रतिदिनं संतोषसंवर्धिनी, मोहोत्पादनकारणाऽतिविमला हृल्लोचनानंदिनी । अन्योन्यप्रणयान्मिथो नरवधूयुग्मेष्वनष्टप्रिया, वश्या सर्वसुखप्रदा समरतिः संप्रार्थिता निर्जरैः ॥" ( ३।४१ ) इति ॥ समरतम्—समप्रमाणसाधनवेगभावयोः स्त्रीपुंसयोः रतं समरतम् । तेषु पुरुषगताधिक्ये उच्चरतं इति, स्त्रीगताधिक्ये नीचरतं इति संज्ञा । अन्त्ये विजातीयसंयोगवशेन विषमरते इत्यपि उच्येते ॥ वात्स्यायनीये स्त्रीपुंसगुह्ययोः षण्नवद्वादशां (६–९–१२)–गुलायामेन क्रमात् शशः वृषः अश्व इति नायकाः, मृगी वडवा हस्तिनी इति नायिकाश्च, समाम्नाताः । अन्यमते तु—"हरिणी छागी वडवा करिणी करभीति पंचधा नार्यः । मृग–बर्कर–वृष–तुरग–रासभ–संज्ञा नराः पञ्च ॥ ऋतु ६ लोकपाल ८ पंक्ति १० द्वादश १२ भुवनाङ्गुलो १४ न्मितैर्गुह्यैः । अनुपूर्वतस्तु युक्ता हरिणीहरिणादयो ज्ञेयाः ॥ " इति सौराष्ट्रीयमाधवकृतायुर्वेदप्रकाशान्तर्गतकामशास्त्राध्याये । रुद्रकृतस्मरदीपिकायां तु षडङ्गुलशरीरः शशः, अष्टाङ्गुलसाधनः मृगः, दशाङ्गुलमेढ्रः वृषभः, द्वादशाङ्गुलमेढ्रः हयः इति लक्षयित्वा—"शशकः पद्मिनीं चैव, चित्रिणीं तु मृगस्तथा । शंखिनीं वृषभश्चैव, हस्तिनीं च हयस्तथा ॥ (२०) । रमते तुल्यभावेन तथा समरतं भवेत् ॥" इति कथितम् । हरिहरेण तु शृंगारदीपिकायां प्रकारान्तरेण षडष्टदशद्वादशाङ्गुलायामेन क्रमात् पद्मिनी–शंखिनी–चित्रिणी–हस्तिनी इति नायिकाः,

तथैव तदनुक्रमिकाः पांचालकूचिमारदत्तभद्राः नायकाः कथिताः । ( अत्र आयामपदेन पौरुस्यं उन्नतं प्रमाणं ग्राह्यं, स्त्रैणं तु निम्नं; न तु परिणाहः तस्य अनौचित्यात् योनिसंकोचकप्रयोगैः तद्वैषम्यस्य सुपरिहार्यत्वात् । तेन रतिरहस्ये ( ३।१ ) प्रयुक्तपरिणाहपदस्य निम्नत्वं इत्यर्थः ग्राह्यः । षडङ्गुलः इति चतुरङ्गुलं आरभ्य षडङ्गुलं यावत् येन केनापि प्रमाणेन युक्तः, नवाङ्गुलः इत्यस्य षडङ्गुलाधिकः नवाङ्गुलावधिः इत्यर्थः । एवं अन्यत्र ॥) तत्र आद्यभेदेषु सदृशयोः संप्रयोगे नाम शशस्य मृग्या, वृषस्य वडवया, अश्वस्य हस्तिन्या सह रन्ध्रेन्द्रियसमाप्तिलक्षणे त्रीणि रतानि, तानि, समयोः सदृशयोः समस्वस्वव्यञ्जनप्रमाणयोरिति यावत्, रतेन समरतानि इत्युच्यन्ते । तानि प्रशस्तानि, तत्र यंत्रसाम्यात् अनतिपीडनाशैथिल्याभ्यां उभयोः सुखातिशयात् ॥ आदौ उक्तप्रकारेण वैषम्ये तु षट् अपराणि, तदुक्तं रतिरहस्ये–" मृगीवृषं च वडवाहयमुच्चरतं द्वयम् । नीचद्वयं च वडवाशशकं हस्तिनीवृषम् ॥ अत्युच्चमतिनीचं च मृग्यश्वं हस्तिनीशशम् । इति प्रमाणभेदेन नवधा रतमूचिरे ॥ उत्तमानि समान्याहुर्मध्यमुच्चरतद्वयम् । नीचद्वयं तथाऽत्युच्चमतिनीचं महाधमम् ॥ " ( ३।३–४–५ ) इति ॥ ( मध्यमं अर्धसमं इत्यपि आख्यातम् । ) अत्र रहस्यं तु यदा मदनांकुशमुखं वरांगस्योपरि स्थितं अधोमुखकमलमुखं स्पृशति तदैव अंगनानां कामसंतुष्टिः आनन्दोदयश्च । आविष्कृतं चेदं केवलं हरिहरेण, तथाहि–"यथा पुष्पं लिङ्गं कमलवदनं मन्मथगृहे प्रसन्नाग्रं मन्दं विशति यदि रेतोविरहितम् । ततस्तस्य प्रान्ते स्थितविवरयुग्मं च शनकैः स्रवद्रेतःसान्द्रं मदनसदनं तत्र कुरुते ॥" (३।२८) इति शृङ्गारदीपिकायाम् । ( मन्दं विशति स्पृशति इत्यर्थः, विवरयुग्मं मदनदोलापूर्णचन्द्रेति नाड्यौ स्मरमन्दिरे वामदक्षिणपार्श्वयोः स्थिते कामसलिलक्षरणात् विवरयुग्मं इत्यत्र उक्ते । अत्र रेतः स्त्रीकामसलिलं, "रेतो वीर्ये जले चाथ।" इति केशवः । तेन नीचरते द्वयोः अग्रयोः असंबंधात् कामासंतुष्टेः, उच्चरते च तयोः पीडनेन दुःखोदयात्, न सम्यक् सुखावाप्तिः । तदुक्तं तत्रैव–"कंडूतेरप्रतीकारादंतर्लिंगाविमर्दनात् । न द्रवन्ति न तृप्यन्ति योषितो नीचमोहने ॥ उच्चेऽपि मृदुगुह्यान्तःसंपीडासव्यथे हृदि । न द्रवन्ति न तृप्यन्ति मनस्तंत्रो हि मन्मथः । " (३।६–७) इति । ( स्मरालयजकृमिबलानुसारेण जनितायाः कण्डूतेरप्रतीकारस्तु संबाधस्य योनिमार्गाव्यापनात् । अन्तर्लिङ्गं कमलमुखम् । ) अत्र कमलरोहणावरोहसंपादनेन विषमरतगततत्तद्दोषपरिहाराय कामशास्त्रेषु चतुरशीति बंधाः आसनानि वा करणापरनामानि बोधितानि । तदुक्तं शृंगारदीपिकायाम्–" एतानि चतुरशीति बंधानि मदनस्मृतौ । प्रथितान्यथ कान्तानां समसंभोगसिद्धये ॥ " ( ३।२७ ) इति । अपि च–" बंधेन येन रमणी विनिमीलिताक्षी स्रस्तांगकाऽर्धगदितानुमेयरावा । विस्मृत्य देहमभितो

नखपीडितानि दीर्घत्वा भवति तेन रतेन भोग्या ॥ ” ( ३।३० ) इति । तत्तद्विप- मरत्याः समीकरणानि करणानि तत्रैवाख्यातानि तस्मात् बोद्धव्यानि । स्थूलतया तु— “विवृतोरुकमुच्चैस्तु नीचैः स्यात्संवृतोरुकम् । यथास्थितोरुकं चैव समप्रं समे रते ॥ ” इति । एवं समधिगतस्य समरतस्य फलानि तु रमणीनां कंडूतिप्रतीकारः, द्रावः, तृप्तिः, परमानन्दावाप्तिश्च ॥ एवं यथा साधनप्रमाणतः नवधा रतम्, तथा भावस्याऽपि मन्दम- ध्यमचण्डवेगतया तत्तदाख्यं नवधा रतम् । तथाहि रतिरहस्ये—“ मन्दमध्यमवेगाः स्युर्वे- गतोऽप्युभयं तथा । वेगः कामुकता ज्ञेयः, तेनापि नवधा रतम् ॥ वीर्यं बहुक्षताघात- सहत्वं रतिलोलता । चण्डवेगस्य चिह्नानि, मन्दवेगे विपर्ययः ॥ एतेषां मध्यवेगे तु मध्यमत्वं समुन्नयेत् । ” ( ३।१२–१३–१४ ) इति । अत्रापि समविषमभेदाः पूर्व- वत् । तदीयवैषम्यपरिहारश्च पुरुषाणां वृष्योद्दीपनप्रयोगसेवनैः, रमणीनां च बल्योद्दी- पनौषधसेवनैर्भवति । फलं तु बाह्यरते विमर्दनादि, आभ्यन्तरे च पुरुषस्य दृढं कामा- ङ्कुशान्दोलनं स्त्रियश्च सर्वसहत्वम् ॥ पुनरपि कालतः पूर्ववत् नवविधं रतम्, अचिर- मध्यमचिरविसृष्टिकाललक्षितम् । ( पुरुषाणां वीर्यस्य स्त्रीणां च कामसलिलस्य लघुम- ध्यचिरकालीनक्रियाधीना विसृष्टिः मोक्षः । ) अत्र आनन्दलाभबीजं तु उभयोः वीर्यादेः समकालीनो मोक्षः । अन्यथा पुरुषस्य शीघ्रशुक्रपाते स्त्रियः कण्डूतेरनपगमात् संक्षो- भन्यूनतया अक्षरणाच्च अतृप्तिः दाहश्च, स्त्रियः शीघ्रद्रावे पुरुषस्योद्दीप्तत्वेऽपि स्त्रियः शैथिल्यात् तस्याः निर्वेदः । एतत्परिहारस्तु यथोचितं स्तंभकद्रावणादियोगप्रयोगैः । तत्रापि उभयोः चिरविसृष्टिः प्रशस्ता, तथात्वे सुरतकालस्य दीर्घत्वात् दीर्घकालं सुरता- नंदानुभवभावात् । तत्सिद्ध्यै पुरुषैः स्तंभकयोगाः स्त्रीभिश्च बल्ययोगाः सेव्याः । स्त्रीणां प्रारंभात्प्रभृति क्षरणे तु नान्ते प्रभूतजलमोक्षः, तेन तावत्प्रमाणा न्यूनसुखप्रतीतिः इति । उभयोः समकालविसृष्टौ तु—“ क्षणं रटन्ती नृत्यन्ती रुदती चातिविह्वला । निः- सहत्वं तदा याति मुकुलीकृतलोचना ॥ ” ( रतिरहस्ये ३।१८ ) ( रटन्ती अव्यक्ता- क्षरं प्रियेत्यादिकं जल्पन्ती, नृत्यन्ती अङ्गचालनं कुर्वती, रुदती निःश्वाससीत्कारादि मुंचती, विह्वला विक्लवा, निःसहत्वं शैथिल्यं, मुकुलीकृतलोचना इति सुरतसुखपारव- श्यानुभावः )॥ तत्र हस्तिनीहययोः समरतमुद्दिश्य उक्तं केनापि–“शुक्रस्तंभी दीर्घलिंगी वज्रघाती तथा बली । चित्ते वसति रामाया न शूरो न च पण्डितः ॥ ” इति । ( शुक्र- स्तंभी इत्यनेन चिरविसृष्टित्वम्, दीर्घलिंगी इत्यनेन महाप्रमाणत्वम्, वज्रघाती इत्यनेन चण्डवेगत्वमुक्तं, बली इत्यनेन बाह्यरतोद्दामत्वं लक्षितम्; यद्वा शक्तेरभावात् अन्यत् सर्वं अप्रयोजकं इति द्योतयितुं बली इति पदं निविष्टम् । बलित्वसिद्धिश्च वाजीकर- [illegible]प्रयोगैः ॥ ) एवं प्रमाणभावकालकृताः सुरतस्य सप्तविंशतिः भेदाः, तत्र

यस्तु न धर्मप्राप्त्यै नार्थाय न कामसाधनोपायः।
स पुमान्सच्चरितधनैः पर्यनुयुक्तः किमाचष्टे ॥ ६५३ ॥
(संदानितकम्)

कामोद्वेगगृहीतं धूर्तैरुपहस्यमानशृङ्गारम्।
दारिद्र्यहतं यौवनमबुधानां केवलं विपदे ॥ ६५४ ॥

---

नवविधं समरतम्। शेषं विषमरतम्॥ ६५२॥ एतद्विपर्ययेण नरस्य वेश्योपभोगात् एकस्य कस्यचिदपि पुरुषार्थस्य असिद्धेः तं निंदति यस्त्विति। तु व्यावर्तने, तेन वेश्योपभोगात् इति लभ्यते, यः पुरुषः, धर्मप्राप्त्यै न भवति इति शेषः धर्मं न प्राप्नोति इत्यर्थः, वेश्याभिगमने प्रायश्चित्तकथनात् तस्य अधर्मत्वात्, तदुक्तं—" पशुवेश्याभिगमने ··प्राजापत्यव्रतं चरेत् ।" (१०।१३) इति पराशरस्मृतौ। न अर्थाय यः धनं न प्राप्नोति, प्रत्युत तस्य हानिं, यथोक्तं— "वेश्याऽसौ मदनज्वाला रूपेन्धनसमेधिता। कामिभिर्यत्र हूयन्ते यौवनानि धनानि च ॥" इति। न कामस्य साधनं सिद्धिः, "साधनं मेहने सैन्ये निवृत्तिगतिसिद्धिषु।" इत्यादि विश्वलोचने, तस्य उपायः उपागतिः यस्य सः, अप्राप्तकामफलः इति यावत्, वेश्यायाः कूटरागादित्वात् तच्छृंगारस्य आभासत्वात् न पुरुषस्य यथातथं कामपुरुषार्थसिद्धिः, सः पुमान् एवंविधः नरः, सच्चरितं पुरुषार्थसाधकं शोभनं चरितं आचारादि तदेव धनं वित्तं येषां तैः सदाचारैः, त्वया दुर्लभपुंजन्मना वेश्यागमनेन कोऽर्थः साधितः इति] पर्यनुयुक्तः पृष्टः, [तदुत्तरे, किं प्रश्ने, आचष्टे वक्ति, न किमपि इत्यर्थः; नैकस्यापि पुरुषार्थस्य सिद्धेः प्रत्युत अर्थहानेः लज्जया मौनमाश्रित्य अधोमुख एव भविष्यति इति भावः॥ संदानितकं युग्मं, " तत्रैकेन च्छंदसा मुक्तकं, द्वाभ्यां युग्मं संदानितकं च, त्रिभिर्विशेषकं, चतुर्भिः कलापकं, द्वादशान्तैः कुलकम्।" इति वाग्भटप्रणीतकाव्यानुशासने। (क्वचित् त्रिभिः तिलकं, चतुर्भिः चक्कलकं इत्यपि संज्ञाः।) अत्र संदानितकोल्लेखः चिन्त्यः ॥६५३॥ पुनरपि दरिद्रं कामुकं निंदति कामेति। कामेन मदनेन, यः उद्वेगः व्याकुलचित्तता, तेन गृहीतं आक्रान्तं, धूर्तैः विटैः, उपहस्यमानः शृंगारः रतिरसः यस्य तत्, दारिद्र्यहतं निर्धनतया शोचनीयं, एतादृशं यौवनं मध्यमं वयः, अबुधानां मूर्खाणां द्रव्यरूपकारणाभावेऽपि वेश्यारतिरूपकार्यप्रेप्सूनां इति भावः, विपदे दुःखाय, एव भवति। उक्तं हि—" मूर्खो द्विजातिः, स्थविरो गृहस्थः, कामी दरिद्रो, धनवांस्तपस्वी। वेश्या कुरूपा, नृपतिः कदर्यो, लोके षडेतानि विडंबितानि॥"

---

६५३ धर्मः प्राप्त्यै (प) सच्चरितनरैः (गो. का)

व्यपगतकोषे रागिणि याति लयं पानमात्रलाभहृता ।
क्षुद्रा मधुकरिकाऽब्जे न तु गणिका चिन्तितस्वार्था ॥ ६५५ ॥
यासां कार्यापेक्षा सकटाक्षनिरीक्षणेऽपि वेश्यानाम् ।
दर्शनमात्रक्षुभितैर्वञ्च्यन्ते ताः कथं पुरुषैः ॥ ६५६ ॥

---

इति ॥ ६५४ ॥ तद्विपर्ययेण गणिकायाः विपदस्पर्शनरूपं चातुर्यमाह व्यपगतेति । क्षुद्रा तुच्छा बुद्धिहीना इति यावत्, मधुकरिका मधुमक्षिका, पानमात्रलाभहृता कमलमधुनः पानं एव लाभः, तेन हृता तदाशया आकृष्टा, अब्जे कमले, कीदृशे, व्यपगतकोषे व्यपगतः दूरीभूतः कोषः कुड्मलं लक्षणया तद्भावः यस्य तस्मिन् विकसिते इत्यर्थः, रागिणि रक्तादिः रागो वर्णः यस्य तस्मिन्, लयं याति मधुपानासक्ता मधुकरी सायं कमलनिमीलनेन तत्रैव बंदी भवति, यथोक्तं तंत्राख्यायिके—"हुताशज्वालाभे स्थितवति स्वावस्तशिखरे, पिपासुः किंजल्कं प्रविशति सरोजं मधुकरः । तदन्तः संरोधं गणयति न संध्यासमयजं, जनोऽर्थी नापायं विमृशति फलैकान्ततृषितः ॥" ( १।११० ) इति । तु व्यावर्तने, परंतु इत्यर्थः, तत्तुल्याऽपि गणिका, चिंतितस्वार्था स्वप्रयोजनसाधनैकव्यापृतचित्ता सती; लयं तदेकनिमग्नत्वं विनाशं वा, न व्रजति, अपि तु स्वार्थं परं साधयति । गणिकाऽपि मधुकरीवत् स्वोचितस्य धनरूपमकरंदस्य यत् पानं लक्षणया ग्रहणं तदेव लाभः तेन हृता, कुत्र, रागिणि अनुरागवति कामुके, तस्मिन् व्यपगतकोषे नष्टधनसंग्रहे, लयं निरोधं आसक्तिं वा न याति, रिक्तीभूतं तं यथाकालं परित्यजति । "कोशोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः ।" इति अमरः, "रागोऽनुरागमात्सर्यक्लेशादौ लोहितादिषु । गान्धारादौ नृपे नागे," "क्षुद्रा वेश्यानटीव्यंगासरघाबृहतीष्वपि ।" इति च विश्वलोचनः ॥ अत्र 'क्षुद्रा मधुकरिका' 'क्षुद्रा गणिका' इत्यत्र शब्दयोः एकार्थताभासेनं पुनरुक्तवदाभासः शब्दालंकारः, व्यपगतेत्यादिश्लेषानुप्राणितः क्षुद्रेति चिंतितस्वार्थेति च उक्तहेतुः व्यतिरेकालंकारश्च । न च अत्र सश्लेषव्यतिरेकालंकारः इति व्यपदेशः, व्यपगतकोशेत्यादिसाधारणविशेषणानां श्लिष्टत्वेऽपि भेदकविशेषणानां अश्लिष्टत्वात् ॥ ६५५ ॥ तासां अपरं चातुर्यं अप्रतार्यत्वरूपं आह यासामिति । यासां वेश्यानां, कटाक्षः कटौ अतिशयितौ अक्षिणी यत्र सः, यद्वा कटं गण्डं अक्षति व्याप्नोति इति कटाक्षः, कटाक्षेण सहितं निरीक्षणं सकटाक्षनिरीक्षणं अपांगावलोकनं तस्मिन्, अपिः समुच्चये अन्यव्यापाराणां, कार्यापेक्षा प्रयोजनालोचनं, "कार्यं हेतौ प्रयोजने" इति विश्वलोचनः, ताः, दर्शनमात्रक्षुभितैः वेश्यानां

---

२५९ लाभकृते ( गो. का ) । चिन्तितस्वार्थे ( गो. का )

क्लेशाय दुर्भगानां मानस्तुतिगात्रभङ्गविन्यासम् ।
गणिकाभिनयचतुष्टयमाकृष्टयै स्वापतेयपुष्टानाम् ॥ ६५७ ॥
किं धक्ष्यति भौमोऽपि ज्वलनः खलु तादृशं कुलाङ्गारम् ।
यो दह्यते न विरसं विरक्तदासीतिरस्कारैः ॥ ६५८ ॥

---

केवलं रूपस्य कटाक्षपातस्य वा अवलोकनेन चलितचित्तैः, पुरुषैः, कथं आक्षेपे, वंच्यंते प्रतार्यन्ते, न कथमपि इत्यर्थः । तथा चोक्तं–"आचार्ये च नटे धूर्ते तर्कज्ञे च चिकित्सके । तत्र माया न कर्तव्या माया तैरेव निर्मिता ॥" इति ॥ ६५६ ॥ गणिकाव्यापाराणां सधननिर्धनविषये फलभेदमाह क्लेशाय इति । गणिकानां, अभिनीयते प्रकाश्यते भावः येन सः अभिनयः, तस्य चतुष्टयं "भवेदभिनयोऽवस्थानुकारः, स चतुर्विधः । आंगिको वाचिकश्चैवमाहार्यः सात्त्विकस्तथा ॥" (६।२) इति साहित्यदर्पणे, तत्र शिरोहस्तोरःपार्श्वकटिपादलक्षणैः षडंगैः नेत्रभ्रूनासिकाधरकपोलचिबुकरूपैः षडुपाङ्गैः च निष्पन्नः आंगिकः, वाचा निष्पन्नः वाचिकः, वेषरचनादिनिष्पाद्यः आहार्यः, स्तंभस्वेदादिरूपः सत्त्वविकारोद्भवः सात्त्विकः । तच्चतुष्टयं उपलक्षणैः आह मानस्तुतिगात्रभंगविन्यासं इति, मानः अभाषणाद्युपलक्षितः स्त्रीगर्वः सात्त्विकः, स्तुतिः गुणकीर्तनात्मकः वाचिकः, गात्रभंगः कटाक्षभ्रूभंगादिरूपः आंगिकः, विन्यासः योग्यतया भूषणादीनां स च आहार्यः, तत्, दुर्भगानां दुष्टं भगं भाग्यं येषां तेषां दरिद्राणां इति यावत्, क्लेशाय दुःखाय दातृत्वशक्तेरभावात्, भवतीति शेषः । तदेव स्वापतेयपुष्टानां ] स्वपतौ [ धनस्वामिनि ] साधु [ हितं ] स्वापतेयं धनं, [ तेन पुष्टानां प्रभूतधनवतां इत्यर्थः, आकृष्टयै चित्तवित्तादिहरणाय, तादर्थ्ये चतुर्थी, भवति । " विषं वेश्या दरिद्राणां" इति भावः, तेन तादृशैः सा शीघ्रं वर्जनीया इति सूच्यते । ६५७ ॥ तिरस्कारेऽपि तदनुयायिनं आक्रोशति किमिति । दासी वेश्या । विरसं विगतः रसः आर्द्रता रागश्च यथा स्यात् तथा, न दह्यते संतप्तान्तःकरणो भूत्वा परिशेषितस्नेहलवं अपि न मुच्यात् इति भावः, तेन च तां न त्यजेत् इति ध्वनिः; तादृशं कुलांगारं–अंगारः साग्निकं दग्धकाष्ठखंडं, रूपकं, कुलदाहकं इत्यर्थः; भौमः पार्थिवदिव्यौदर्यभेदैः त्रिविधस्य अग्नेः आद्यो भेदः काष्ठेन्धनप्रभवः, ज्वलनः अग्निः तं मृतमपि इति शेषः; किं धक्ष्यति दग्धुं समर्थः भविष्यति किं, काका नैव इति प्रतिपत्तिः । खलु इति

---

६५७ दुर्गतानां (प) । नान्यस्थिति गात्र० (प) । विन्यासः (का) ६५८ किं वक्ष्यति भूयोऽपि (प) । ज्वलनस्तं तादृशं (प) [अपुष्टार्थः पाठः] । दह्यते विरामं (प) दह्यतेऽतिविरसं (कापा) । विदग्धदासी (गो)

गृहमेतदीश्वराणां कान्तारं दुष्प्रवेशमन्येषाम् ।
फूत्कृतमिदं सुभुजया, न मालती कामसत्रदानपरा' ॥ ६५९ ॥
इति चोदितगृहचेटी निगदति कटुकाक्षराण्यकृतलक्ष्या ।
आकर्णयतो वाचो दैवोपहतस्य मर्मभिदः ॥ ६६० ॥

( महाकुलकम् । )

---

अव्ययं जिज्ञासायां, "खलु स्याद्वाक्यभूषायां, खलु वीप्सानिषेधयोः । निश्चिते, सांत्वने, मौने, जिज्ञासादौ खलु स्मृतम् ॥" इति विश्वलोचनः । "धरात्मजः कुजो भौमो भूमिजो भूमिनंदनः । अंगारको यमश्चैव सर्वरोगापहारकः ॥" इति वराहपुराणात्, भौमांगारशब्दयोः पुनरुक्तवदाभासः शब्दालंकारः, ज्वलनः अग्निः अंगारकं परदाहकं धक्ष्यति इति विरोधाभासः, वेश्यातिरस्कारैः अदग्धत्वरूपप्राकरणिकात् अर्थात् तस्य भौमाग्निनाऽपि अदाह्यत्वरूपाप्राकरणिकार्थापातात् अर्थापत्तिः अलंकारः, तेन च वेश्यातिरस्कृतीनां भौमाग्नेः अधिकं दाहत्वं ध्वनितं इति व्यतिरेकालंकारध्वनिः, तत्तिरस्कृतैरपि अनपगच्छतः पुरुषस्य अत्यधमत्वं च सूचितम् ॥ ६५८ ॥ उपसंहरणे स्पष्टवचनैः तं तिरस्कुरुते गृहमिति । एतत् वेश्यावेश्म, ईश्वराणां धनाद्यैश्वर्यशालिनां, गृहं वासस्थानं; अन्येषां, दरिद्राणां, दुष्प्रवेशं गाढं, कान्तारं कस्य सुखस्य अन्तं यत्र ऋच्छति गच्छति इति कान्तारं अरण्यम् । इदं तव अनपगमनं, सुभुजया चारुहस्तया मालत्या, ] फूत्कृतं अनादृतं [तिरस्कृतं, इति त्वं अवगच्छ इति शेषः । यतः, मालती, सत्रं सदादानं, "अथो सत्रमाच्छादने वने । द्वादशाहादियज्ञेषु सदादाने" इति केशवः, तच्च देयविशेषणेन विशिष्यते यथा अन्नसत्रं वस्त्रसत्रं इत्यादि, एवं कामसत्रं; कामसत्रदानं कामस्य सर्वेभ्यः सदादानं: ननु सत्रशब्देनैव दानरूपार्थप्राप्तेः किमर्थं पुनः दानपदोपादानं इति चेत्, ' यत्र पर्यायशब्दोपादानं तत्र अतिशयित एवार्थो गम्यते ' इत्युक्तत्वात् तदतिशयद्योतकं तत् ततः उक्तिपोषः; तेन नहि मालती कामरूपदेयद्रव्यस्य नित्यदानरूपधर्मपरायणा इत्यर्थः, अपि तु कामस्य व्यापारिणी इति भावः ॥ ६५९ ॥ इति पूर्वोक्तप्रकारेण, कटुकाक्षराणि कर्णमनस्तोदनानि अक्षराणि परुषवचनानि दोषश्रावणानि इति भावः, चोदितगृहचेटी स्वामिन्या प्रेरिता दासी, " चेटी चिरण्टी दासी च " इति वैजयंती, अकृतलक्ष्या साक्षात् कामुकविशेषं प्रति

---

६५९ पूत्कृत (प) । सभुजया (का.) ६६० तुदित ( का ) । निजचेटी ( गो. का ) । निगदितकटु···क्ष्याः ( गो ) ···क्ष्मा (का) । मर्मरुजः ( गो. का )

एवमभिधीयमानो बुध्यति यदि नो पशुर्नराकारः ।
तदिदं सुन्दरि वाच्यः प्रश्रितवचसा त्वया कामी ॥ ६६१ ॥
'प्रीयत एव तवोपरि हृदयं मे, किन्तु गुरुजनाधीना ।
मातृवचोऽतिक्रमणं न समर्था संविधातुमहम् ॥ ६६२ ॥
अर्हसि तावदतस्त्वं गन्तुमितः कतिपयान्यपि दिनानि ।
पुनरपि भवतैव समं भोक्तव्यं जीवलोकसुखम्' ॥ ६६३ ॥
निर्वासितेऽथ तस्मिन् यः कामी पूर्वमुज्झितो भुक्त्वा ।
तस्य प्राप्तविभूतेर्युक्तिरियं भिन्नसंधाने ॥ ६६४ ॥

---

न. अपि तु अन्यसाधारणतया इत्यर्थः, निगदति वदति, कथं, दैवोपहतस्य दैवेन भाग्येन उपहतस्य उत्पातग्रस्तस्य दुर्भगस्य इति यावत्, तादृशः मर्मभिदः हृदयादिदारुणाः, वाचः शब्दावलीः, आकर्णयतः शृण्वतः सतः । तथा हि उक्तं दशकुमारचरिते ( उ० २ ) " असारस्य वाक्संतक्षणैर्लोकोपक्रोशनैर्दुहितृनिरोधनैर्व्रीडोत्पादनैरन्याभियोगैरवमानैश्चापवाहनम् । " इति ॥ ( महाकुलकं इति पंचभिः पंचदशभिर्यावत् संबद्धश्लोकसमूहः कुलकं. तदूर्ध्वं महाकुलकं; यद्वा यस्मिन् कुलके अंतःकुलकं वर्तते तत् )॥ ६६० ॥ एवमपि " हेमन्तमार्जार इवातिलीनः स चेन्न निर्याति निरस्यमानः" ( समयमातृका. ५।७९ ) तदा " अन्ते स्वयंमोक्षश्च " (६।३) इति कामसूत्रोपदिष्टं कर्तव्यं विवरिषुः वक्ति एवमिति। पशुः मृगः, नराकारः पुरुषाकृतिः, अपह्नुतिः अलंकारः। तत् तदा, इदं वक्ष्यमाणम्। वाच्य उपेत्य स्वमुखेन वक्तव्यः। प्रश्रितं विनयान्वितं अपरुषम् । कामी अतिशयेन कामयते इति कामुकः ॥ ६६१ ॥ प्रीयत इति द्वाभ्यां कुटिलं तद्वचनप्रकारं अभिनयति। तत्रानया स्वस्याः अनुरक्तत्वकथनपूर्वं मातुरेव दौःशील्यमाह। प्रीयत इत्यादि अहं तु अनुरक्तैव इत्यर्थः । गुरुजनाधीना विवशा मात्रादिपूज्यजनपरतंत्रा । तया अर्थपरतया त्वं निष्कास्यसे इति भावः ॥ ६६२ ॥ पुनः संगमाशया आश्वासयति अर्हसीति। जीवलोकः प्राणिवर्गः संसारः इति यावत् ॥६६३॥ " वर्तमानं निष्पीडितार्थमुत्सृजन्ती विशीर्णेन सह संदध्यात् ।" ( विशीर्णेन पूर्वसंसृष्टेन निष्कासितेन ) ( ६।४।१ ) इति कामसूत्रानुसारेण अर्थागमाविच्छेदाय विशीर्णप्रतिसंधानोपायं उपदिदिक्षुः आह निर्वासिते इति । निर्वासिते निष्कासिते, अथ तदनन्तरं, यः भुक्तोज्झितः प्रथमः कामी, स चेत् पुनराप्तश्रीकः, तदा तस्य, भिन्नसंधाने

---

६६१ नो बुध्यति यदि पशु (प) । कामम् (कापा) ६६४ निर्वासिते नु(प)···पि (गो २ प) । °मुज्झितोऽभूत्ते (गो. का)

उपवनलीलाविहरणहावोज्ज्वलमञ्जुलस्य सह तेन ।
वर्णनमितिवृत्तस्य स्मरजविकाराश्च, वीक्षिते तस्मिन् ॥ ६६५ ॥
इदमुपवनमतिधन्यं निर्भरमालिङ्गितं सुरभिलक्ष्म्या ।
मत्कण्ठाश्रितपाणिर्बभ्राम स यत्र जीविताधीशः ॥ ६६६ ॥

---

भिन्नस्य विश्लिष्टस्य पुनः संधाने संधौ, युक्तिः योजनं, इयं अनंतरार्यायां वक्ष्यमाणा । तथा च कथासरित्सागरे—"दोषाग्रदूतो रागो हि वेश्यापश्चिमसंध्ययोः । मिथ्यैव दर्शयेद्वेश्या तं नटीव सुशिक्षिता ॥ (१०।१।६२) । रंजयेत्तेन सा पूर्वं, दुह्याद्रक्तं ततो धनम् । दुग्धार्थं च त्यजेदन्ते, प्राप्तार्थं पुनराहरेत् ॥" (६३) इति ॥ ६६४ ॥ "तस्याश्च साभिज्ञानैः पूर्वानुरागैरेनं प्रत्याययेयुः ।" (६।४।३४) इति कामसूत्रं अनुसंधाय वक्ति उपवनेति । अत्र प्रयोगद्वयं उपदिष्टं—अनुभूतविलासानां स्मृतिकथनं सखीः प्रति कामुकश्राव्यं, कामविकाराविर्भावनं च कामुकदृश्यं, तत्र आद्यविषयिकाः ६६६–६९१ आर्याः, अपरविषयिकाश्च ६९२–६९४ आर्याः । तस्मिन् पुनःसंधेये कामुके, वीक्षिते दृष्टे सति मिलिते इति यावत्, तेन सह यत् इतिवृत्तं पुरानुभूतं पूर्ववृत्तान्तं तस्य, वर्णनं; कथनं कीदृशस्य इतिवृत्तस्य इत्याह उपवनेत्यादि । उपवनं उपमितं वनेन इति उपवनं कृत्रिमं वनं आरामः 'बाग' इति भाषायां, तत्र याः लीलाः खेलाः विलासाः यथा पुष्पावचयदोलाक्रीडादयः, विहरणानि विहाराः परिभ्रमणजलकेल्यादयः; हावाः शृंगारभावजाः चेष्टाः, "भ्रूनेत्रादिविकाराढ्यः शृंगाराकारसूचकः । स्थायिभावः स्थितो हावः" इति लक्षिताः, पूर्वं (आ. ४७७) व्याख्याताः, तैः उज्ज्वलं उद्भासितं लसमानं प्रकाशमानं अत एव मंजुलं मनोहरं यत् तस्य तादृशस्य । स्मरजविकाराः छत्रिन्यायेन अष्टौ स्तंभादयः सात्त्विकाः, त्रयस्त्रिंशत् निर्वेदादयः व्यभिचारिणश्च ॥ उक्तं हि—"ऋतुमाल्यालंकारैः प्रियजनगांधर्वकाव्यसेवाभिः । उपवनगमनविहारैः शृंगाररसोऽपि संभवति ॥" इति, तेन तत्स्मृतिः अपि भावानां पुनरुदयाय भविष्यति इति भावः ॥ ६६५ ॥ तत्रादौ इतिवृत्तवर्णनप्रकारमाह इदमित्यादिभिः षड्विंशत्यार्याभिः "स्मृतिः पूर्वानुभूतार्थविषयज्ञानमुच्यते ।" इति स्मृत्याख्यसंचारिभावप्रकाशिकाभिः आख्यानाख्यनाट्यालंकारप्रतिरूपाभिः । प्रकारान्तरेण, आभिः विलापाख्या मदनावस्था प्रकाशिता, तदुक्तं—"इह दृष्टमिह श्लिष्टमिहागतमिह स्थितम् । इह निर्वृतमत्रैव शयितं चाप्यलंकृतम् ॥ एवमादीनि वा-

---

६६५ मज्जनं च सह (प) । वर्णनमपि तत्तस्य (प) [ लिपिसंभ्रममूलः पाठः ]
६६६ कण्ठार्पित (प) सजीवि० (प)

**सख्य इतो भ्रमरकुलत्रासितया प्रियतमो मया सहसा ।**
**वक्रीभवत्पयोधरमुपगूढो धीरसीत्कारम् ॥ ६६७ ॥**

स्थानि विलाप इति कथ्यते ॥" इति, सोऽपि स्नेहप्रकाशकः ॥ इदं पुरो दृश्यं, उपवनं आरामः, तदपि कामिनां विहारदेशेषु एकः, तथा च भावप्रकाशे—"सरितः पुलिनं वेला कान्तारारामभूधराः । लतागृहाणि चित्राणि शय्या किसलयोचिता ॥ दिवाविहारदेशाः स्युः । " इति । सुरभिलक्ष्म्या वसंतश्रिया, निर्भरं अतिशयेन गाढं, आलिंगितं संश्लिष्टं, अतिधन्यं बहुपुण्यवत् " धन्यः पुण्यवति स्मृतः " इति विश्वप्रकाशात्; अतिप्रशंसनीयं इति यावत्; प्रियेण सह क्रीडाद्यधिकरणत्वेन परिचितत्वात् । तदा तादृशस्य तस्य उद्दीपनविभावत्वेन मन्मथमहातीर्थरूपत्वात्, नपुंसकस्याप्युपवनस्य तरुण्या वसंतलक्ष्म्यालिंगितत्वात् च अतिधन्यत्वं इत्यपि ध्वनितम् । क्षेमेन्द्रेण नायिकाभावविपर्ययेण वसन्तर्तूद्यानश्रियोः समाश्लेषः सचमत्कारमवर्णि—" क्षैण्यक्षामं शिशिरसमयं वृद्धमुत्सृज्य दूरे, त्यक्त्वा शीतं तरुणमसकृद्गाढरागानुबंधम् । उद्यानश्रीर्मधुमभिमतं बालमेवालिलिंग, प्रायः स्त्रीणां वयसि नियतिर्नास्ति कार्यार्थिनीनाम् ॥ " ( समयमातृकायां ७।७ ) इति ॥ उत्तरार्धेण उपवनस्य धन्यत्वे हेतुं आह मदिति । यत्र यस्मिन् उपवने, सः प्रस्तुतः संधेयः, जीविताधीशः प्राणेश्वरः, मत्कंटनिषक्तबाहुः, बभ्राम विनोदार्थं परिक्रमणं वर्तनानि वा चकार ॥ उद्यानगमनस्य शृंगारपोषकत्वं प्रसिद्धम् ॥ अवसरोऽलंकारः—" अर्थान्तरमुत्कृष्टं सरसं यदि वोपलक्षणीक्रियते । अर्थस्य तदभिधानं प्रसंगतो यत्र सोऽवसरः ॥ " इति लक्षितः, अयमेव अन्यैः उदात्त इति व्यवहृतः ॥ ६६६ ॥ आलिंगनप्रसंगविशेषं स्मारयति सख्य इति । सख्यः इति संबोधनम् । इतः अस्मिन् स्थले, सार्वविभक्तिकः तसिः । भ्रमराणां द्विरेफाणां, कुलेन समूहेन, त्रासितया आकस्मिकमनोविक्षोभरूपं त्रासं प्रापितया । सहसा तत्काले एव । वक्रीभवत्पयोधरं गाढालिंगनवशात् वक्रीभवंतौ निर्भुग्नौ पयोधरौ स्तनौ यथा स्यात् तथा, अपि च धीरः मंदः सीत्कारः वेदनाद्योतकः दृढदंतसंयोगनिमित्तो ध्वनिः स यथा स्यात् तथा, उपगूढः आलिंगितः । इदं स्तनालिंगनं, यथा लक्षितं रतिरहस्ये (६।१२)—"उरसि कमितुरुच्चैराविशंतीव रागात्स्तनभरमुपधत्ते यत्स्तनालिंगनं तत् । " इति॥ साध्वसव्याजात् सः दृढालिंगनमहोत्सवभाजनं कृतः इति भावः । स्वयंग्रहाश्लेषसुखं च प्रापितः इति ध्वनितम् ॥ तथाहि 'कामिनीनां सभयालिंगनस्य कामुकानां श्लाघ्यत्वप्रसिद्धिः, ' यथाहुः—" कोपप्रशमने भीतौ वियोगे पुनरागमे । संभोगे च समाश्लेषो

६६७ वक्री० ( गो ) । मुक्तसीत्कारम् ( प ) ।

रणदिन्दिन्दिरवृन्दे कूजत्कलकण्ठरावरमणीये ।
अत्रातिमुक्तकगृहे मरुदीरणविधुतकुसुमसंछन्ने ॥ ६६८ ॥
मयि जाताधिकरागो बलवति मदने सहायसामग्र्या ।
कान्तः पल्लवशयने नो तृप्तिमगाद्विविक्तकार्येषु ॥ ६६९ ॥

( युगलकम् )

---

विशेषेण सुखावहः ॥ ” इति ॥ अपि च अयाचितलब्धेः मुख्यत्वं इष्टत्वं च इति स्वयंग्रहाश्लेषः सर्वोत्कृष्टः । तदुक्तं–“ ··· स्वयंग्रहाश्लेषमुखेन निष्क्रियं ··· ” इति ॥ अत्र चकितं नाम नायिकालंकारः, तदुक्तं साहित्यदर्पणे ( ३ । १२१ )–“ कुतोऽपि दयितस्याग्रे चकितं भयसंभ्रमः । ” इतिः “ रक्षरक्ष मुहुरेष भीषणो धावति श्रवणचंपकं मम । इत्युदीर्य मधुपाद्विशंकिता सस्वजे हरिणलोचना हरिम् ॥ ” इति उज्ज्वलनीलमणौ तदुदाहरणं च ॥ ६६७ ॥ तत्रैव उपवनैकदेशे निर्वृत्तं कामोद्दीपनफलं सुरतं रणदित्यादिना युग्मेन वर्णयति । तत्र रणदितिप्रथमार्यायां उद्दीपकसामग्रीमयं सुरतस्थलं वर्णयति । रणतां गुञ्जतां इन्दिन्दिराणां भ्रमराणां वृंदः समूहः यत्र तस्मिन्। कलकंठाः अव्यक्तमधुरस्वराः कोकिलाः, “ कलकंठः कोकिलः स्यान्मधुरो यस्य च ध्वनिः । ” ( ३५० ) इति शाश्वतः । ] ‘ कलकण्ठाः कोमलमधुरध्वनयः कोकिलादिपक्षिणः ’ [ इति टिप्पणी । ‘ वार ’ इति पाठे वारः समूहः । अत्र अस्मिन पुरोवर्तिनि इति सहस्तनिर्देशं उक्तिः । अतिमुक्तकगृहे वासंतीलताकुञ्जे अतिमुक्तलतावलयनिष्पन्नलीलास्थले, “ अतिमुक्तः माधवी च सुवंसता पराश्रया । अतिमुक्तः कामु( मु )कश्च मण्डनो भ्रमरोत्सवः ॥ ” इति सोढलः, “ माधवी चंपकदलातिलपुष्पा महालता । स्थिरोर्ध्वगा गुच्छपुष्पा सिद्धा वृंदावनादिषु ॥ ” इति च शिवदत्तः, ‘ माधवी ’ नाम्नैव प्रसिद्धा, सा च “ सहकारसंगमे गतसाध्वसा सशोभा च भवति ” इति मालविकाग्निमित्रटीकायां ( ४।१३ ) नीलकंठः । मरुतः पवनस्य, ईरणेन गमनेन विधुतानि चालितानि कुसुमानि तैः संछन्ने आच्छादिते, अनेन पराप्रकाश्यं गूढदेशत्वमुक्तम् ॥ अत्र रणदित्यादिविशेषणेन वाद्यं, कूजदित्यादिविशेषणेन गीतं, मरुदित्यादिविशेषणेन नृत्यं च सूचितं, तेन तौर्यत्रिकसंपत्त्या कामोद्दीपनत्वं च व्यञ्जितम् : अपि च भ्रमराणां सुगंधलौल्यात् प्रथमेन तत्स्थलस्य सौगंध्यं, द्वितीयेन संगीतवत्त्वं, तृतीयेन च मंदसुगंधिमरुद्वत्त्वं तेन सुरतश्रमापहरत्वं, पुष्पालंकृतत्वं च ध्वनितम् ॥ ६६८ ॥ सहायसामग्र्या पूर्वोक्तोद्दीपनविभावरूपया, मदने कामे, ··

---

६६८ °कण्ठवार ( गो २. का ) । वितत ( गो ९. का )

प्रेङ्खाप्रहरणयुक्त्या विध्यन्पार्श्वद्वयं नखैर्धूर्तः ।
चक्रे मां मदनमयीं व्रततिप्रेङ्खामिमां समारूढाम् ॥ ६७० ॥
स्पृहणीयोऽयमशोकः स्पृष्टो यो वल्लभेन हस्तेन ।
अस्मदवतंसकार्थं नूतनदलपल्लवान् विदारयता ॥ ६७१ ॥

---

वति सति, मयि जाताधिकरागः मां उद्दिश्य विवृद्धमदनः मां भोक्तुकामः सन् इत्यर्थः; " स एष चेद्गुणद्रव्यदेशकालादिभिर्हृदि । रज्यते दीप्यते चित्ते स राग इति कथ्यते ॥ " ( सः स्नेहः । ) इत्युक्तः; सः कान्तः शोभनत्वेन मनोरमत्वेन वा काम्यते इति प्रियः; पल्लवाः किसलयाः तैः निर्वर्तिते शयने शय्यायां, आरामे तत्सुलभत्वात्, तथाहि गीतगोविंदे—" किसलयशयनतले कुरु कामिनि चरणनलिननिवेशन् । " ( १२।१।१ ) इतिः ] विविक्तकार्येषु रहःकर्तव्येषु [ बाह्याभ्यंतर- ] सुरतेषु इत्यर्थः; [ तृप्तिं नो अगात् विवृद्धतृष्णो भूयोभूयः आलिंगनरतादिकं भेजे । तदुक्तं—" विहारं भार्यया कुर्याद्देशेऽतिशयसंवृते । रम्ये अव्यांगनागाने सुगंधे सुखमारुते ॥ " इति ॥६६९॥ लतादोलां दृष्ट्वा अपरं वृत्तं स्मरति प्रेङ्खेति । इमां पुरोवर्तिनीं. व्रततिप्रेङ्खां व्रततिः ' व्रतती ' इत्यपि शब्दः लता तस्याः दृढस्थूलशाखया निर्वर्तिता प्रेङ्खा हिन्दोलः तां, दोलाक्रीडार्थे समारूढां अधितिष्ठन्तीं मां, सः, धूर्तः वञ्चकः व्याजेन क्रियान्तरस्य कर्ता, धूर्तत्वं आविष्करोति प्रेङ्खाप्रहरणेत्यादिना, ] प्रेङ्खा दोला; [ तस्याः प्रहरणं आन्दोलनाय हस्तेन प्रचालनं तद्रूपा युक्तिः योजनं तया. मे पार्श्वद्वयं कुक्षिभागौ, नखैः नखरैः, विध्यन् विलिखन्, दोलाचालनं स्वीकृत्य तत्करणे नखप्रहारान् विदधत् इत्यर्थः; तत्फलं च साट्टहासं अंगापनयनं ' गिलगिलि ' 'गलीपची' वा इति भाषायां, मां मदनमयीं उद्दीप्तकामां व्याप्तकामावेगां. चक्रे अकरोत् । नखच्छेद्यभेदस्तु ले( रे )खानामकः, तदुक्तं कामसूत्रटीकायां जयमंगलेन—" ग्रीवाचिकपृष्ठपार्श्वोरुमूलबाहुषु नातिदीर्घस्थानविशेषा द्व्यंगुला त्र्यंगुला वा । " इति । अत्र युक्तिः अलंकारः—" युक्तिः परातिसंधानं क्रियया मर्मगुप्तये । " इति ( कुवलयानंदे ) लक्षणात्, तथाहि प्रेङ्खाप्रहरणक्रियया तत्रैव भ्रांतिं उत्पाद्य पार्श्वयोः नखच्छेद्यवंचनं कृतं इति । चेष्टानर्म इदम् ॥ ६७० ॥ अशोकं प्रत्यभिज्ञापयति स्पृहणीय इति । ] स्पृहणीयः भाग्यवान् । [ अशोकः ' रक्त.

---

६७० प्रेङ्खोलनविहरणयुक्त्या विलिखन् पार्श्वयोर्नखैः (प) । प्रेङ्खद्र (का.) । समधिरूढाम् (गो २. का) ६७१ स्पृष्टो यद्वल्लभेन ( गो. का ) । नूतनदलाङ्करो (प) । विचारयता ( गो. का )

अस्मिन्सहकारतले तस्योत्सङ्गे सलीलमासीना ।
अशृणवमहमिति वाचः पश्यन्ती विलसितानि तरुणानाम् ॥६७२॥
'उत्थापय मानरसे दयितं चरणाग्रनिपतितं तूर्णम् ।
अत्याकृष्टं त्रुट्यति सुदृढमपि प्रेमबन्धनं मूढे ॥ ६७३ ॥

---

पल्लवः' ' 'हेम( पीत )पुष्पः ' 'आम्रदलः ' तन्नाम्नैव प्रसिद्धो वृक्षविशेषः । वल्लभेन प्रियेण, ] 'दुर्लभेन ' [ इति पाठे ] सुभगेन, अवतंसकः कर्णभूषा, [ 'वतंसः ' इत्यपि रूपं, नूतनदलानि प्रत्यग्रपत्राणि, पल्लवः किसलयं नवपत्रादियुक्तशाखाग्रपर्व, "पर्वपत्रादिसंघाते शाखायाः पल्लवो मतः । " इति कोशात्, तान्, विदारयता विच्छेदयता त्रोटयता ॥ अशोकपल्लवानां कर्णाभरणत्वेन उपयोगात् अशोकस्य 'कर्णपूरः ' इति, प्रभूतपल्लवतया 'पल्लवकः ' इति 'पल्लवद्रुः ' इति च नामान्तराणि ॥ तत्पल्लवस्य कर्णाभरणत्वे कालिदासः—" कुसुममेव न केवलमार्तवं नवमशोकतरोः स्मरदीपनम् । किसलयप्रसवोऽपि विलासिनां मदयिता दयिताश्रवणार्पितः ॥ " ( रघुवंशे ९। ३१ ) इति ॥ अत्र विदारयतेतिपदेन व्यंजितपल्लवविदारणदुःखप्राप्तेरपि द्रुमस्य बहुमतप्रियहस्तस्पर्शलाभकथनात् अतिशयोक्तिः, तदस्पृष्टाः अन्ये द्रुमाः अधन्याः इति व्यतिरेकध्वनिश्च ॥ ६७१ ॥ सहकारः आम्रवृक्षः, "अपुष्पफलवानाम्रः, पुष्पितश्चूत उच्यते । पुष्पैः फलैश्च संयुक्तः सहकारः स उच्यते ॥ " इति क्वचित् आम्रादीनां भेदः । उत्संगे अंके प्रियस्य वामोरोः उपरि इति भावः, सलीलं सविलासं, आसीना उपविष्टा, तरुणानां तरुणाश्च तरुण्यश्च तरुणाः, "पुमान् स्त्रिया " ( पा० १ । २ । ६७ ) इति एकशेषः; तेषां विलसितानि व्यापारान् विलासान्, पश्यंती । इति वक्ष्यमाणप्रकाराः, वाचः कर्म ॥ ६७२ ॥ ताः कर्णगोचरीभूताः वाचः द्वादशभिः कुलकेन अनुवदति उत्थापयेति । इयं गुरुमानवतीं प्रति सख्याः प्रार्थनागर्भा उक्तिः । मानरसे माने रसः रागो यस्याः तत्संबुद्धिः, मानशीले इत्यर्थः । मानस्तु " स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासंगिनि प्रिये ।" इति, इदं उपलक्षणं कारणान्तरेणापि स्त्रीकृते प्रियस्य अनादरे स्त्रियः कोपे वा मानशब्दप्रयोगात् । " प्रणामान्तो मानः " इत्युक्तेः मानापनोदनाय ते चरणयोः रचितप्रणिपातं प्रियं उत्थापय, तेन च मानमोचनं प्रदर्शय इति भावः; तथा च उक्तं—" व्रीडायुक्ताऽपि या योषिदतिरुष्टाऽपि या भवेत् । पादे पतन्तं पुरुषमनुवर्तेत सर्वदा ॥ " इति । उक्तावष्टंभनाय सामान्यनीतिमाह अत्येति ।

---

६७२ तरुणीनाम् ( कापा ) ६७३ मानवशे ( गो. का )

तिष्ठन्नपि यातसमः किं तेन निवारितेन सखि पशुना ।
यामीति निष्प्रकम्पा विनिःसृता यस्य साऽधरे वाणी ॥ ६७४ ॥
आयुःसारं यौवनमृतुसारः कुसुमसायकवयस्यः ।
सुन्दरि जीवितसारो रतिभोगरसामृतस्वादः ॥ ६७५ ॥

---

सुदृढं गाढं, अपि, प्रेमरूपं बंधनं बध्यते अनेन इति बंधनं रज्जुः, अत्याकृष्टं सत्, त्रुट्यति छिन्नं भवति, न पुनः संयुज्यते इति भावः । मूढे इति संबोधनं, विचारहीने विवेकरहिते इत्यर्थः । उक्तं हि–" भिन्नस्नेहरसा भवंति पुरुषा दुःखानुवर्त्या यतः । " इति ( अमरुशतके ९१ ) । अत्र उत्तरार्धार्थस्य पूर्वार्धार्थेन समर्थनात् काव्यलिंगं अलंकारः ॥ ६७३ ॥ तिष्ठन्नित्यादि–सखीं प्रति नायकस्य अरसिकतया रुष्टायाः उत्तमायाः नायिकायाः अधिक्षेपगर्भोक्तिः । तिष्ठन् गमनाय त्यक्तासनः, यातसमः गततुल्य एव । कथं एवं, यतः ' यामि' अहं गच्छामि इति, सा अनुचिता वाणी, यस्य अधरे लक्षणया मुखात् इत्यर्थः, निष्प्रकंपा दृढा स्वरभंगादिभावरहिता सती, विनिःसृता निर्गता । अतः हे सखि, तेन पशुना पशुतुल्येन इत्यर्थे रूपकं, निवारितेन ' विलंब्य गम्यताम् ' इत्यादिप्रकारेण निषिद्धेन, भावे क्तः, किं कोऽर्थः । यत् मादृश्याः रूपवत्याः कलावत्याः विलासिन्याः समागमं त्यक्त्वा अन्यत्र गमनोत्सुकः तेन तस्य पशुत्वं अभिव्यक्तमेव, ततः तन्निवारणे लाघवहेतुं वृथाप्रयासं मा कृथाः इति भावः । तथाहि दशकुमारचरिते ( उ० ३ )–" अयोग्यश्च पुमानवज्ञातुं च प्रवृत्तः, तत्किमित्यपेक्ष्यते । " इति ॥ अत्र नायकः अरसिकः नायकाभास एव, यथा अनभिज्ञः । 'तेन निवारितेन' इति यमकं अलंकारः । ॥ ६७४ ॥ आयुःसारमित्यादिप्रलोभनगर्भवचनेन काचित् ज्ञातयौवनां मुग्धां मानिनीं वा उद्बोधयति । आयुषः बालादिभेदेन विभक्तस्य जन्मादिमरणान्तकालस्य, सारं श्रेष्ठं श्रेष्ठभाग इति यावत् स्थिरांशो वा, " सारं स्याद्वाच्यवद्वरे । " इति विश्वलोचने, यौवनं, इन्द्रियाणां अर्थग्रहणे शक्तिपौष्कल्येन मनसः तत्काले भोगोन्मुखतया च तत्र वैषयिकसुखस्य समुचितत्वात् । यौवनं–" रतिव्यायामसहनो मत्तेभस्येव मत्तताम् । विधत्ते युवभावो यस्तद्यौवनमुदाहृतम् ॥ " इति लक्षितम्, स्त्रीपुरुषसामान्यम् । भवभूतिना च स्त्रीयौवनं "यत्र मदनः प्रगल्भव्यापारश्चरति हृदि, मुग्धश्च वपुषि । " ( ९।२९ ) इति मालतीमाधवे परिचायितम् । ( मुग्धः रमणीयः । ) कालिदासेन च–" असंभृतं मंडनमंगयष्टेरनासवाख्यं करणं मदस्य । कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात्परं साऽथ वयः प्रपेदे ॥ " ( कुमार० १। ३० ) इति वर्णितम् ।

---

६७४ उत्तिष्ठन्नपि यातः (का) । निष्प्रकम्पं (प) । यस्य माधवे (प) [ लिपिभ्रमात् पाठः ] । ६७५ भोगसुखामृता (प)

विस्तारितमिव चेदं कर्पूरमञ्जरीसट्टकस्य तृतीये जवनिकान्तरे राज्ञः विदूषकस्य च संवादे (छाया)–" विदूषकः–किं पुनरन्यदपि मे कथय, यत्कुमारत्वे मानुषस्य अमनोज्ञं एतस्मिन्नपि तारुण्ये चङ्गत्वं वर्धते ॥ राजा–नूनं द्वाविह प्रजापती जगति यौ देहनिर्माणयौवनदानदक्षौ। एको घटयति प्रथमं कुमारीणामङ्गमुत्कीर्य प्रकटयति पुनर्द्वितीयः ॥ १७ ॥ अन्न च–...हृदयहरणमन्त्रं यौवनं कामिनीनां जयति मदनकाण्डः षष्ठको बलिष्ठश्च ॥ १८ ॥ तथा च–अङ्गं लावण्यपूर्णं, श्रवणपरिसरे लोचने हारतारे, वक्षः स्थूलस्तनं, त्रिवलिवलयितं मुष्टिग्राह्यं च मध्यम्। चक्राकारो नितम्बः तरुणिमसमये, किन्वन्येन कार्यं, पञ्चभिरेव बाला मदनजयमहावैजयंत्यो भवन्ति ॥ १९ ॥ " इति। ( चङ्गः सुन्दरः इत्यर्थे देशी ॥ ' अत्रोत्कीर्य प्रकटयतीत्यनेन निर्माणकर्तृचतुर्मुखापेक्षया कामस्याधिक्यमभिव्यज्यते। तथा च यौवने अमनोज्ञस्यापि सौभाग्यवृद्धिर्भवतीति भावः। " इति तट्टीकायां वासुदेवः ॥ काण्डः बाणः। हारतारे हारे हरणशीले तारे कनीनिके ययोः ते। अन्येन पुष्पादिना।) तथा च–"श्रीपरिचयाज्जडा अपि भवंत्यभिज्ञा विदग्धचरितानाम्। उपदिशति कामिनीनां यौवनमद एव ललितानि ॥ " इति। ( मदः हर्षः भरः इति यावत्, उपदिशति आविष्करोति इत्यर्थः। "अनाचार्योपदिष्टं स्याल्ललितं रतिचेष्टितम्।" इति ललितम्।) उक्तं च–"दृश्यं दृशां सहस्रैर्मनसामयुतैर्विभावनीयं च। सुकृतशतकोटिभोग्यं किमपि वयः सुभ्रुवः सदने ॥ " इति ॥ पुरुषयौवनं तु इत्थं अवर्णि कविकुलगुरुणा कालिदासेन–"अथ मधु वनितानां नेत्रनिर्वेशनीयं, मनसिजतरुपुष्पं रागबन्धप्रवालम्। अकृतकविधि सर्वांगीणमाकल्पजातं, विलसितपदमाद्यं यौवनं स प्रपेदे ॥ " (१८।५२) इति रघुवंशे। ( आकल्पजातं आभरणसमूहं, विलसितपदं विलासस्थानम्। अत्र मधु इत्यनेन रसः, पुष्पं इत्यनेन गंधः, प्रवालं इत्यनेन मार्दवप्रतीतेः स्पर्शः, आकल्पजातं इत्यनेन च रूपं अनुसंहितं, तेन ज्ञानग्राहकचतुरिन्द्रियविषयसंपत्तिः उक्ता।) इदं स्त्रीयौवने यथायोग्यं अतिदेश्यम्। यौवनं एतादृशगुणवत्त्वात् 'मधुरं वयः' 'चतुरं वयः' 'नवं वयः' 'अरालं (कुटिलं) वयः' 'भोग्यं वयः' इति च निर्दिश्यते॥ एतद्गुणैः आयुषः यौवनमेव सारम् इति स्थितम् ॥ अपि च ऋतूनां शरदादिकानां षण्णां, सारः श्रेष्ठः उत्कर्षो वा, कुसुमसायकः पुष्पशरः कामदेवः वयस्यः मित्रं यस्य सः वसंतः इत्यर्थः, यथोक्तं कुमारसंभवे (३।२१)–" मधुश्च ते मन्मथ साहचर्यादसावनुक्तोऽपि सहाय एव। " इति, तथात्वं च तस्य पुष्पसमृद्ध्या पुष्पबाणसाध्यानुकूलकरणात्, अतः भगवद्गीतासु विभूतियोगाध्याये भगवानपि–" मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः।" (१०।३५) इति तस्य श्रेष्ठ्यं प्राह। (कुसुमाकरः वसंतः, तस्य परमरमणीयत्वात्।) ॥ एवं श्वासोच्छ्वासक्रियाभिलक्षितस्य जीवितस्य

रम्यं कुसुमस्तबकं कुरु मे प्रिय कैङ्किरातमवतंसम् ।
तिष्ठतु वा किमनेन प्रत्यग्रमशोककिसलयं चारु ॥ ६७६ ॥
आस्तामास्तामेतत् प्रापय मां सिन्दुवारमभिरामम् ।
नहिनहि, राजति सुतरां चूतद्रुममञ्जरी कर्णे ॥ ६७७ ॥

---

जीवनस्य, सारः स्थिरांशः; रतिः सुरतं, तस्य भोगः सेवनं, स एव रसः रस्यते स्वाद्यते इति रसः भोग्यपदार्थः, स एव अमृतं पीयूषं तद्वदाह्लादतृप्तिकरत्वात्, तस्य स्वादः आस्वादनं अनुभूतिः, द्विविधसुरतसेवनं इति तात्पर्यम् । सुंदरि रूपलावण्ययुक्ते, यद्वा "प्राप्ते तु षोडशे वर्षे सुन्दरी सुन्दरी भवेत् ।" (८।२९२) इति साहित्यसारवचनात् त्यक्तबालभावे प्राप्तोपभोगक्षमवयस्के वा इत्यर्थः ॥ अत्र साराभासः, उत्कर्षस्य शृंखलाकटकवन्निर्धारणाभावात्, यथोक्तं नमिसाधुना काव्यालंकारटीकायां ( ७।९६ )- "सर्वत्र हि संपूर्णलक्षणाभावे आभासत्वं कविभिर्व्यवस्थापितम् ।" इति, परिसंख्यालंकारो वा॥ ६७५ ॥ रम्यमित्यादि युग्मं स्वाधीनपतिकायाः प्रगल्भायाः प्रणयिनं प्रति मण्डनवाञ्छया सविलासं आदरगर्भं निगदितम् । कैंकिरातं किंकिरातस्य इदं, "किंकिरातः किंकिराटः पीतकः पीतभद्रकः । हेमगौरो विप्रलंबी षट्पदानंदवर्धनः ॥" इति सोढलः, 'रामबावल' 'सुरंगी' इति वा प्रसिद्धः वृक्षः । कुसुमस्तबकं पुष्पगुच्छं, अवतंसं कर्णभूषणं, कुरु । "स्त्रीणां मनश्चञ्चलं" इति प्रसिद्धस्त्रीस्वभावत्वात् तस्य अनादरं कुरुते तिष्ठतु वा किमनेन इत्यादि । अपरत्र चारुत्वबुद्धया तं याचते प्रत्यग्रेति । प्रत्यग्रः नवजातः, अशोककिसलयः व्याख्यातः पूर्वं ( ६७१ आ. ) तं, अवतंसं कुरु तेन कर्णं भूषय; तथाहि मालविकाग्निमित्रे ( ३ ) मालविकां प्रति बकुलावल्युक्तेः छाया—" एषोऽशोकशाखावलंबी पल्लवगुच्छः, अवतंसय तावदेनम् ।" इति ॥ ६७६ ॥ पुनः पूर्वोक्तन्यायेन तं निषेधति आस्तां इति, बलवत्प्रतीत्यै द्विरुक्तिः । अवतंसाय अपरं प्रार्थयते प्रापयेति । सिन्दुवारः 'सिन्धुवारः' इत्यपि शब्दः 'निर्गुण्डी' 'नगोड' इति वा प्रसिद्धः वृक्षविशेषः, तत्पुष्पमपि सिंदुवारः, सिंदुवारशब्दात् "पुष्पमूलेषु बहुलम्" इति वार्तिकात् ( पा. ४।३।१६६ ) विकारावयवप्रत्ययस्य लुपि सिंदुवारशब्दः तत्पुष्पवाची अपि, तं इत्यर्थः । वसंततिलकायमानां आम्रमंजरीं अवलोक्य सिन्दुवारपुष्पं उपेक्षते नहिनहि इति, माऽस्तु ततू । मञ्जरी 'मञ्जरिः' इत्यपि शब्दः, मंजुं मनोज्ञतां राति ददाति इति मञ्जरी अभिनवनिर्गता आयता सुकुमारा अकुसुमा च मञ्जरी, ( सैव चिरभूता वल्लरिः इति उच्यते । ) सुतरां अतिशयेन, राजति शोभते, अतः तामेवानीय मत्कर्णे कुरु इति सूचितम् ॥ ६७७ ॥

धिक्तारुण्यमकान्तं, धिक्कान्तं यौवनेन रहितं च।
धिक्तद्द्वयमपि मन्मथशास्त्रविकासं विना सुरतम्॥ ६७८ ॥
जनितोऽप्यपराधशतैर्वामे तस्मिंश्चिरप्ररूढोऽपि।
अधिगतमधुना सख्या न वसन्तमतीत्य वर्तते मानः॥ ६७९ ॥

---

धिगित्यादि काचित् सुरताय विलासिनीः प्रोत्साहयन्ती सर्वश्राव्यं आक्षेपगर्भं वचनं प्राह। यः काम्यते स कान्तः प्रियः, न विद्यते कान्तः यत्र तत् अकान्तं प्रियेण हीनं विप्रयुक्तं वा, तादृशं स्त्रियः तारुण्यं तरुणीभावः, तथा च नागरसर्वस्वे—"बालेति गीयते नारी यावत् षोडशवत्सरम्। ततः परं च तरुणी सा यावत्त्रिंशतं भवेत्॥ तदूर्ध्वमभिरूढा स्याद्यावत्पंचाशतं पुनः। वृद्धा ततः परं ज्ञेया सुरतोत्सववर्जिता॥" (१६।२–३) इति। (तरुणी योग्या इति भोग्या इति च संज्ञिता। अभिरूढा 'अधिरूढा' 'अतिरूढा' प्रौढा। तत् तारुण्यं, धिक् निंदार्थे निष्फलार्थत्वे वा अव्ययम्, "धिग्भर्त्सने च निंदायां निष्फले कुत्सितेऽपि च।" इति विश्वः। कान्तोऽपि पुनः यदि यौवनेन रहितः बालो वृद्धो वा, तमपि धिक्, तादृशस्य सुरते ष(श)ण्ढवत् वृथात्वात्। सकान्तं युवतितारुण्यं, सतारुण्यं कान्तं च, द्वयमपि मिलितं धिक्, यदि, मन्मथशास्त्रं कामशास्त्रं तात्स्थ्येन तदुपदेशाः इत्यर्थः, तेषां विकासः प्रकाशः दीप्तिः वा तत्प्रयोगैः यत्र तादृशं, सुरतं सुष्ठु रतं रमणं यत्र तत् निधुवनं मिथुनकर्म, न तत्र भवेत्। युवतीनां तारुण्यं सकान्तत्वं द्वयमपि विशिष्टसुरतं विना व्यर्थं निंद्यं च इति भावः। अनेन विषयानन्दसिद्ध्याः तारुण्यं सतरुणकान्तत्वं कामशास्त्रानुसारि सुरतं चेति त्रयमपि समुच्चयेन कारणं इति सूचितम्। तदुक्तं शृंगारदीपिकायां—"नारीविहीनशयनं, नवपञ्चबाणशास्त्रैर्विहीनसुरतं, रसहीनवाणी। लज्जागुणप्रियवियुक्तवराङ्गना चेत्येतानि षण्ढरतवत्सततं वृथा स्युः॥"(१।५) इति॥ प्रस्तुते समुचितं आद्यद्वयं समुचितं, तत्र तृतीयस्य पूरणेन जीवनं सफलत्वं व्रजतु इति वदन्त्या व्यञ्जितम्॥ विनोक्तिः अलंकारः, तल्लक्षणं च—"विनोक्तिश्चेद्विना किंचित्प्रस्तुतं हीनमुच्यते।" (५८) इति कुवलयानन्दे, पूर्वार्धे एकावली च॥ यद्वा, तारुण्यं पुरुषस्य स्त्रियः वा, अकान्तं यथासंभवं कान्तया कान्तेन वा रहितं, धिक्; कान्तं प्रियरूपं प्रियारूपं वा वस्तु, अतरुणं सत् धिक् इत्यप्यर्थः॥ ६७८ ॥ जनित इत्यादि गुरुमानवतीं प्रति सख्युः साश्चर्यमुक्तिः। तस्मिन् प्रिये, विषयसप्तमी, मानः 'प्रेमलडितं,' व्याख्यातश्च सः ५२० आर्या-

---

६७८ मन्मथसामर्थ्यविकासिनं विना सुरभिम् (प) ६७९ 'वामैस्तस्मिं' (प)। अवमतमधुना सख्यो न वसंतमतीत्य (प)

वर्षशतस्य हि सारः काललवः प्रथममेलकस्थानम् ।
सचकितमागच्छन्ती सोत्कलिका यत्र दृश्यते रमणी ॥ ६८० ॥

याम् । अपि च "येन प्रेमानुबंधेन स्वातंत्र्यहृदयंगमम् । बध्नाति भावकौटिल्यं स मान इति गीयते ॥ स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासंगिनि प्रिये । पत्यौ कोपो भवेन्मानो ज्ञातकान्तान्तरस्पृहे ॥ अपराधभवः कोपो यूनोर्मान उदाहृतः । स च प्रणयमानः स्यादीर्ष्यामान इति द्विधा ॥ तत्र प्रणयमानः स्यादन्योन्याज्ञातिलंघने । रमणेन रमण्या वा कृतं तच्च द्विधा भवेत् ॥ ईर्ष्यामानः स यः कोपो ज्ञातेऽन्यासंगिनि प्रिये । अभाषणमुपालंभो भर्त्सनं ताडनं तथा । वैमुख्यमश्रु चामर्ष इत्याद्यैः सोऽनुभाव्यते ॥ तज्ज्ञानं श्रवणाद्दृष्टेरनुमानात्त्रिधा भवेत् ॥ श्रवणं दूतिकादिभ्यो, दृष्टिः साक्षाद्विलोकनम् ॥ अनुमानं स्वप्नभोगगोत्रप्रस्खलनादिभिः ॥" इति रसिकजनमनोल्लासिन्याम् भरतशास्त्रसारसंग्रहेत्यपरनाम्न्याम् ॥ स तु आदौ, तस्य अपराधशतैः बहुभिः अपरस्त्रीसंगमनादिरूपैः स्खलनैः, शतशब्दः संख्यावाचकोऽपि बह्वर्थवाची, जनितः उत्पन्नः, नतु त्रिचतुरापराधैः, अनेन तस्याः उत्तमनायिकात्वं ध्वनितं; ततः परं कालेन तदावृत्तिरूपकारणैः चिरप्ररूढोऽपि दीर्घकालं वृद्धिं गतः रूढमूलो वा, अपिः विरोधे, सः मानः, वसंतं तदाख्यं ऋतुं, लक्षणया तत्प्रभावं इत्यर्थः; अतीत्य अतिक्रम्य, न वर्तते; वसंतगुणबलात् गुरुमानिनीभिः अपि शीघ्रं मानः मुच्यते इति भावः, यथोक्तं—"अशिथिलपरिस्पंदः कुन्दे तथैव मधुव्रतो, नयनसुहृदो वृक्षाश्चैते न कुड्मलशालिनः । दलति कलिका चौती नास्मिंस्तथा, मृगचक्षुषामथ च हृदये मानग्रन्थिः स्वयं शिथिलायते ॥" इति । (चौती चूतस्य इयं आम्रवृक्षसंबंधिनी, तथा यथा वसंततारुण्ये । ) तत् इदं, सख्या मया, अधुना इदानीं अस्मिन् वसंतसमये, अधिगतं ज्ञातं, तव तादृशस्य गुरुमानस्य इदानीं अदर्शनात् इति भावः । "तव सत्त्वमतीत्य" इति पाठे तव ते सत्त्वं आत्मबलं निश्चयं वा, अतीत्य अतिक्रम्य वर्तते; अर्थात् यः ते मानः गुरुतां गतः इति ज्ञातः स त्वया त्यक्तो वर्तते इति तु, मया सख्या सत्या अपि, अधुना अस्मिन् क्षणे, अधिगतं ज्ञातं, प्रियेण सह पूर्ववत् पल्लवितान् ते विलासान् दृष्ट्वा इति भावः ॥ अनेन गुरोरपि मानस्य अनिर्वहणकथनेन वसन्तस्य परमोद्दीपनत्वं ध्वनितम् ॥ वामा—वमति सौंदर्य इति वामा सुंदरी, यद्वा वामः कामः अस्याः अस्ति इति वामा कामिनी, यद्वा वमति प्रतिकूलमेवार्थं कथयति इति वामा, तत्संबुद्धौ वामे ॥ ६७९ ॥ वर्षेत्यादि सख्याः अन्यां प्रति प्रियप्रथमरत-

६८० °स्य स सारः (प)। कलेवरः प्र° (का) [अपार्थकः पाठः]। सोत्कलिकैर्यत्र (गो. का)

किं निर्मितोऽसि धात्रा नवोऽपरः किमु वसन्तगुण एषः ।
कुसुमशरपूर्णतूणः किमुताभवदन्य एव कन्दर्पः ॥ ६८१ ॥

---

मागमाय प्रलोभनगर्भोक्तिः । वर्षशतस्य पूर्णायुषः, आशीर्वचने "शतं जीव शरदो वर्धमानः" इत्यादिश्रुतेः; हि निश्चये, सारः स्थिरांशः, सः काललवः क्षणः, यत्र यस्मिन् क्षणे, रमणी 'या वपुर्गुणोपचारेण कान्तं रमयति सा,' ] सोत्कलिका सोत्कण्ठा [ सती, उत्कण्ठालक्षणं च रसिकजनमनोल्लासिन्यां—"रागेऽप्यलभ्यविषये वेदना महती तु या । संशोषणी च गात्राणां तामुत्कंठां विदुर्बुधाः ॥ सर्वेन्द्रियसुखास्वादो यत्रास्तीत्यभिधीयते । तत्प्राप्तीच्छां ससंकल्पां तामुत्कंठां विदुर्बुधाः ॥" इति । प्रथममेलकस्थानं प्रियेण सह आद्यस्य मिलनस्य स्थलं संकेतितं, सचकितं सविस्मयं सभयं सकंपं वा, आगच्छन्ती दृश्यते, प्रियेण इति शेषः । अतः प्रियस्य जीवनसाफल्याय संकेतस्थलं शीघ्रं गच्छ इति भावः । संकेतस्थले प्रियमेलनाय स्त्रियः गमनं स्नेहाधिक्यप्रत्यायकं मतम् ॥ संकेतं अधिकृत्य उक्तं—"अदृश्यामंधकारे वा शून्ये वाऽपि सुरालये । उद्याने वा सरित्कुंजे प्रदेशे गर्हितेऽथवा ॥ परदारेषु संकेतः कर्तव्यो रतिसिद्धये । दूतीवक्त्रेण निश्चित्य स्वयं तत्र पुरा व्रजेत् ॥" इति । 'सोत्कलिकैः' इति पाठः वचनवैषम्यात् न रसावहः । अत्रापि साराभासः ॥ ६८० ॥ किमित्यादि कस्याश्चित् सुंदरं प्रियं प्रति चाटुगर्भं वचनम् । किं ब्रह्मणा, नवः नूतनः अपूर्वः, सौन्दर्यातिशयस्य अपूर्वतया इति भावः, निर्मितोऽसि जनितोऽसि, किमु संदेहे; एषः पुरो दृश्यमानः प्रियः, आदरात्प्रत्यक्षवदुक्तिः, वसंतगुणाः कुसुमाकरमदकलकोकिलाध्वन्यादयः तेभ्यः अपरः अन्यः विलक्षणः, वसंतगुणः तद्वद्रामणीयकाधायकत्वेन मनोहरः, यथोक्तं—"पदं हि सर्वत्र गुणैर्निधीयते ।" (रघु० ३।६२) इति, त्वं असि इति शेषः, "दग्धेऽन्धकद्विपा रोपात्पुराणे पंचसायके । नवं विनिर्ममे काममृतुराजं प्रजापतिः ॥" ( समयमातृकायां ७।४ ) इतिवत् । किमुत यद्वा विकल्पे, "किमुतातिशये प्रश्ने विकल्पार्थेऽपि कीर्तितः ।" इति विश्वलोचनः; एषः पंचशरत्वेन प्रसिद्धात् अन्य एव अपरः द्वितीयः, कंदर्पः कं सुखं तेन तत्र वा दृप्यति इति कामदेवः, कस्मादन्य इत्याह कुसुमेत्यादि । अगणितानि कुसुमान्येव शराः, मयूरव्यंसकादित्वात् समासः; पक्षे कुसुमानि शरा इवेति "उपमितं व्याघ्रादिभिः" (पा० २।१।५६) इति समासः, लोकव्यवहारानुसारेण पुष्पाणां हारादिरूपेण धृतत्वात् इति भावः; तैः पूर्णः] तूणः इषुधिः ['भाथा' इति भाषायां, यस्य सः, कुसुमशरैः

---

६८१ एव (कापा) । एष कन्दर्पः (गो. का)

नो पश्यसि यदि ककुभः प्रचुरोद्दलकुसुमसुरभिरमणीयाः ।
परभृतकूजनमिश्रं न शृणोषि यदि द्विरेफझङ्कारम् ॥ ६८२ ॥
गन्धं यदि च न लभसे वासितदिग्व्योम सुमनसां हृद्यम् ।
अनुभवसि यदि स्पर्शं नो शीतलदाक्षिणात्यपवनस्य ॥ ६८३ ॥
रसनेन्द्रियैकशेषः परसंचार्यो जनेन परिभूतः ।
नार्हसि ततोऽपि मुक्त्वा निजाश्रमं गन्तुमन्यतो नितराम्' ॥६८४॥
( कुलकम् )

---

पूर्णः तूणः आश्रयः भिन्नभिन्नः शरीरावयवः तत्तद्धारणस्थानानि यस्य सः इति वा, अभवत् । एव अवधारणार्थः । कुसुमेत्यादिविशेषणस्य साभिप्रायत्वात् परिकरालंकारः। संदेहालंकारोऽपि, "संदेहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थितः ।" ( १०।३५ ) इति साहित्यदर्पणे तल्लक्षणम्, शुद्धोऽयम् ॥ ६८१ ॥ नो पश्यसि—इत्यादि विशेषकेण काचित् मिष्टान्नाहारनिमित्तेन अपरया स्वगृहं अपन्हियमाणं पतिं दृष्ट्वा तं उपालभते । यथा अत्र उपवने तथा, तद्गृहे यदि ककुभः दिशः, प्रचुराणि बहूनि, उद्दलितानि विकसितानि, कुसुमानि तेषां सुरभिः सुगंधः तैः रमणीयाः, अर्थात् कुसुमितवृक्षालंकृताः दिशो यदि दृष्टिगोचराः न भवेयुः, अनेन तैजसचक्षुरिन्द्रियतर्पणाभावः सूचितः । परैः काकैः भृताः पुष्टाः परभृताः कोकिलाः तेषां कूजनैः पञ्चमध्वनिभिः मिश्रं संकीर्णं, यदि, द्विरेफाणां द्वौ रेफौ यत्र सः भ्रमरः तेषां, झंकारं झंकार इति भ्रमरस्वरानुकरणं, तं गुंजनं, तत्र न शृणोषि कर्णगोचरीकरोषि, अनेन आकाशगुणकश्रोत्रेन्द्रियतर्पणाभावः सूचितः ॥६८२॥ वासितदिग्व्योम सुरभीकृताशाकाशं हृद्यं मनोज्ञं सुमनसां पुष्पाणां, गन्धं सुवासं, यदि न लभसे न प्राप्नोषि, अनेन पार्थिवघ्राणेन्द्रियतर्पणाभावः सूचितः । अपि च यदि मलयाचलोद्भूतचन्दनवनसंपर्केण शीतलस्य, दाक्षिणात्यस्य दक्षिणदिग्भवस्य, पवनस्य स्पर्शं नो अनुभवसि, अनेन वायवीयस्पर्शेन्द्रियतर्पणाभावः सूचितः; ॥ ६८३ ॥ ततोऽपि एवं चतुरिन्द्रियविषयाभावे सति, ] रसनेति केवलं जिह्वापरायणः इत्यर्थः, [ जनेन अपरया इत्यर्थः, परिभूतः अभिभूतः विह्वलः, अत एव] परसंचार्यः पराधीनः; [ निजाश्रमं प्रकृतं उपवनं, स्वरूपं विश्रामस्थानं च इति सूचितं; मुक्त्वा परित्यज्य, अन्यतः अन्यत्र अन्यमिति वा, उभयत्र सार्वविभक्तिकः तसिः, गन्तुं,

---

६८२ मिष्टान्न (प)। झंकारान् (प) ६८३ यदि नो लभसे (प)। सोढुं (प)
६८४ वसने न्द्रियैकशेषः खलसंचार्यो गुणेन परिभूतः ( गो. २ का ) । नार्हसि तदिति त्यक्तो ( गो. का )। निजाश्रयं ( प )

अस्मिन् सरसि सलीलं करयन्त्रविनिर्यदम्बुधाराभिः ।
दयितेन ताडिताऽहं, मयाऽप्यसावाहतो मृणालिकया ॥ ६८५ ॥
पुनरन्तर्जलमग्नो मामुपगम्याविभावितः सहसा ।
उच्चिक्षेप सहासं हासितसन्निहितपरिवारः ॥ ६८६ ॥
संसक्तार्द्रावरणं जघनं ननु पश्यतस्तदा तस्य ।
प्रथमाकाङ्क्षाकूतं भेजे संभोगशृङ्गारम् ॥ ६८७ ॥

---

नितरां अतिशयेन, न अर्हसि योग्यो नासि । चतुरिन्द्रियतर्पकं उपवनं त्यक्त्वा एकेन्द्रियमात्रतर्पकं अन्यत्स्थानं गन्तुं न युक्तं इति भावः । यद्वा काचित् मिष्टान्नभोजन-प्रियतया इन्द्रियसंतर्पकं उपवनं त्यजन्तं अचतुरं प्रियं तथाकरणे जनोपहास्यतां सूचयंती प्राह रसनेति । जनेन परिभूतः लोकैः अवमानितः तथाविधरामणीयकनिधिं स्थलं त्यक्तुमना इति ॥ इति समाप्तं द्वादशभिः उपवनविहारे तरुणीवचनकुलकम् ॥ ६८४ ॥ इतः त्रिभिः तत्रत्ये सरसि जलक्रीडायाः स्मरणं अभिनयति अस्मिन्नित्यादिभिः । करः एव यन्त्रं जलनिक्षेपार्थं ' पिचकारी ' इति भाषायां ' शृङ्गं ' इति च संज्ञितं, तस्मात् विनिर्यद्भिः निःसरद्भिः । अम्बु जलम् । दयितेन प्रियेण, सलीलं सविलासचेष्टितं, यद्वा 'लीला नाम अपांगव्यापारेण अभीष्टार्थानुकरणं' तेन सहितं यथा स्यात् तथा, ताडिता वक्षःस्थले इति गम्यम् । व्यत्यस्तहस्ततलयोः मध्यं जलेन पूरयित्वा करतलनिष्पेषे जलं उच्चैः उच्छलति इति तरणकलावित्सु प्रसिद्धम् । मृणालिकया अल्पपद्मनालेन, असौ आहतः प्रतिताडितः " कृते प्रतिकृतं कुर्यात् " इति कामशास्त्रनीत्या । अनेन स्त्रयाः प्रगल्भात्वं सूचितम् । अयं क्रियाविषयः परिहासः ( आ. ४६२ व्याख्यातः । ) ६८५ ॥ अन्यं अनुभूतं जलक्रीडाविशेषं प्रकाशयति पुनरिति । पुनः अन्यच, जलमध्ये निमज्ज्य, अविभावितः अलक्षितः क गत इति, सहसा तत्कालं, मामुपगम्य जलान्तर्हित एव समीपं आगत्य, अविभावितः मया अलक्षितः अज्ञातः, सहासं, उच्चिक्षेप, स्वमिति शेषः, मन्निकटे एव जलाद्बहिर्गतोऽभूत्; मां इति शेषे तु निमज्ज्य मन्निकटे अतर्कितागतः मां, सहसा झटिति, हस्तयोः धृत्वा अपसारयामास इति भावः । कथं, हासितेत्यादि । ] परिवारः सखीजनः । [ नायिकावञ्चनेन सखीजनस्य हासः नायिकाविषयकोपहासात्मकः । अत्र युक्तिरलंकारः, पूर्ववच्च क्रियाविषयः परिहासः । ' सहसा ' ' सहासं ' ' हासितसन्निहित ' इति पदैः वृत्त्यनुप्रासः शब्दालंकारः ॥ ६८६ ॥ संसक्तेत्यादिना स्नानोत्थविच्छित्तिविशेषफलं वर्णयति ।

---

६८७ जघनं मम ( प )

कालप्रदेशवेषव्यापारस्थितिविशेषघटनाभिः ।
चिररूढोऽपि हि यूनां नवत्वमुपनीयते रागः ॥ ६८८ ॥

संसक्तं अत्यन्तसंश्लिष्टं अंगलग्नं, तत्र हेतुः आर्द्रमिति, आर्द्रं जलक्लिन्नं आवरणं वस्त्रं यत्र, तादृशं, अतः व्यक्तं स्फुटतया परिदृश्यमानं इति फलितं, घनं जघनं तदा पश्यतः, तृचा नैरन्तर्यं अभिप्रेतं, तेन नायकस्य हर्षो व्यञ्जितः, (तदुक्तं—"स्निग्धाया दृष्टेरविच्छेदपातो हर्षकार्यम् ।" इति नागानन्दविमर्शिन्याम्;) तेन च विकसितं इति विस्तारि इति वा दृष्टिविकारो व्यञ्जितः, तौ च "विकसितं यद्विषये विशेषमवगाहते ।" इति, "येनाश्लिष्टो हि विषयस्तद्विस्तारीति कथ्यते ।" इति लक्षितौ । एवं रमणीयदर्शनास्वादजन्यं आनन्दं अनुभवतः इति भावः, तस्य, प्रथमाकांक्षाकूतं प्रथमं प्रधानं आकांक्षायाः अभिलाषस्य आकूतं आशयः, कर्तृ, संभोगशृंगारं कर्म, संभोगाख्यः यः शृंगारः रसविशेषः, संभोगश्च—"कामोपचारः संभोगः, कामः स्त्रीपुंसयोः सुखम् । सुखमानन्दजं भेदं परस्परविमर्दतः । उपचारस्तथाऽऽनन्दकारकं कर्म कथ्यते ॥ अनुकूलौ निषेवेते यत्रान्योन्यं विलासिनौ । दर्शनस्पर्शनादीनि संभोगः स उदाहृतः ॥" इति रसिकजनमनोल्लासिन्यां उक्तः, तं भेजे सिषेवे । तथाहि—"पाञ्चाल्याः पद्मपत्राक्ष्याः स्नायंत्या जघनं घनम् । याः स्त्रियो दृष्टवत्यस्ताः पुंभावं मनसा ययुः ॥" इति न्यायेन कैमुत्येन तादृशजघनदर्शनं तस्य संभोगप्रवृत्तौ परिणतं इति भावः ।] 'आकूतं चेष्टाविशेषः' [ इति टिप्पणी । अत्र जातिः अलंकारः हेत्वलंकारश्च ॥ ६८७ ॥ कालेत्यादिना पुराणोऽपि रागः यथा नवोनवो भवति तत्प्रकारं सूचयन्ती पूर्वार्योक्तं समर्थयति । विशेषेण विशिष्टतया असामान्यतया विलक्षणतया इति यावत्, या घटना रचना, ताभिः, ताः केषां इति परिगणयति कालेत्यादि, कालः वसन्तवर्षादिसमयः, प्रदेशः उद्यानादिविहारदेशः विविक्तभिन्नस्थलं वा, वेषः श्लक्ष्णवस्त्रकंचुलिकादिरूपतत्तदनुचितपरिधानादिधारणं, व्यापारः शृंगारचेष्टा, स्थितिः अवस्थानं अंगादिनिक्षेपरूपं, तेषाम् । चिररूढोऽपि वृद्धः पुराणोऽपि, रागः प्रीतिः स्नेहः, यूनां, नवत्वं अभूतपूर्वत्वं दर्शनीयत्वं, उपनीयते । अनया "क्षणंक्षणं यन्नवतामुपैति तदेव रूपं रमणीयतायाः ।" (शिशुपालवधे ४।११) इति माघलक्षितरमणीयतासंपादनप्रकारः प्रकाशितः, तेन च तादृशघटनाभिः आरंभावस्थस्य नूतनस्य इव स्नेहस्य अनुभावकतया कामुकस्य नष्टरागप्रत्यानयनं निश्चयेन भवति इति बोधितम् ॥ ६८८ ॥

६८८ प्रदेशभोग (गो. का)

सादरमर्पयतोऽब्जं गोत्रस्खलनापराधिनस्तस्य ।
सख्यः स्मरामि सहसा विलक्षताक्लिष्टहसितस्य ॥ ६८९ ॥
प्रत्यग्रनखव्रणितस्तनान्तरे क्षिपति लोचने स्पृहया ।
प्रेयसि तच्छादनकमकरवमहमब्जिनीपत्रम् ॥ ६९० ॥

---

सादरमित्यादिना तस्य प्रच्छन्नकामुकत्वस्य निरावरणप्रसंगमाह । मह्यं, सादरं मानपुरःसरं अब्जं कमलं, अर्पयतः ददतः, स्वप्रेमप्रकाशनाय इति भावः, तस्मिन् काले गोत्रस्खलनापराधिनः गोत्रे नाम्नि स्खलनं विस्खलितं मन्नाम्ना संबोधनस्थले अपरस्याः नूतनप्रेमास्पदीभूतायाः नामग्रहणं, तेन अपराधिनः दोषवतः, अत एव सहसा तत्कालं, सपत्नीनामग्रहणेन विलक्षतया लज्जया, क्लिष्टं क्लेशेन निर्वृत्तं, हसितं,—" विकासितकपोलान्तमुत्फुल्लामललोचनम् । किञ्चिल्लक्षितदन्ताग्रं हसितं तद्विदो विदुः ॥ " इति लक्षितं, यस्य, तस्य प्रियस्य, सखीं प्रत्युक्तेः तस्येति पारोक्ष्येण उक्तिः, अत्र तस्येत्यादिकं सर्वं कर्मषष्ठ्यन्तं; तादृशं तं उत्कण्ठापूर्वकं स्मरामि स्मृतिपथमुपनयामि इति भावः ॥ ६८९ ॥ प्रत्यग्रेत्यादिना स्वस्याः मुग्धात्वलीलाप्रसंगं प्राह । प्रेयसि प्रियतमे, प्रत्यग्रं नूतनं प्रथमं यथा स्यात् तथा, व्रणितपदस्य क्रियाविशेषणं इदं; नखेन व्रणिते क्षते स्तनयोः अन्तरे मध्यभागे, अर्धचंद्राख्ये नखक्षते कृते इत्यर्थः, तादृशे, स्पृहया तद्रामणीयकदर्शनतृष्णया, लोचने नेत्रे, क्षिपति व्यापारयति सति, अनेन सस्पृहो नाम दृग्विकारो विवक्षितः, तल्लक्षणं तु—"भूयोभूयः स्पृहा यत्र दृष्टेस्तत्सस्पृहं भवेत् ।" इति; तच्छादनकं नखक्षतालंकृतस्तनान्तरापवरकं, अहं, अब्जिनीपत्रं हस्तवर्तिलीलाकमलदलं, अकरवं, शृंगारलज्जाख्यव्यभिचारिभावोद्गमेन इति भावः । 'ह्रीता-' इति पाठे 'लज्जिता', 'हृताच्छादनकं' इति पाठे कमलपत्राणां विच्छेदनं इति चार्थः; अत्र यथास्थितपाठे मात्रान्यूनत्वं, पाठान्तरेषु च यतिभंगः, अतः शुद्धः पाठो मृग्यः । 'प्रेयसि तस्याच्छादनम०' इति पाठे कृते उभयदोषवारणं स्यात् । मुग्धात्वेन लज्जावशात् वर्णितप्रकारेण हर्षं जुगोप इति भावः । तेन अत्र अवहित्थाख्यः संचारिभावोऽपि, तदुक्तं—" अवहित्था तु लज्जादेर्हर्षाद्याकारगोपनम् । " इति । नखक्षतकालास्तु—"माने नवीननुरते विरहे प्रवासे । द्रव्यक्षयेऽथ विरतौ च मदे प्रयोज्याः ।" इति, (द्रव्यक्षये

---

६८९ तोऽब्जं (गो २ का) । विलक्षतां (गो.) विलक्ष्यतां (का) । धृष्टहसितस्य (गो. काषा) कृष्टह (काग) ६९० हृताच्छादनमं (गो २) ह्रीताच्छादनमकं (प)

क्षिप्त्वाऽतर्कितमम्भो गर्भितनलिनीपलाशपुटभावात् ।
आहतया यद्विरुतं स्वस्थधिया नैव शक्यते कर्तुम् ॥ ६९१ ॥
सुश्लिष्टो हावविधिर्मदनालसगात्रजृम्भितं ललितम् ।
गूढस्थानप्रकटनमङ्गुलिविस्फोटनं, स्मितं सुभगम् ॥ ६९२ ॥

---

पुरुषवीर्यस्य स्त्रीकामसलिलस्य वा स्यन्दनकाले । ) ६९० ॥ क्षिप्त्वेत्यादिना चकितस्य प्रसंगं स्मरति । गर्भितात् अंभसा जलेन इति पूर्वपदात् लभ्येन, नलिन्याः कमलिन्याः पलाशानां छदनानां पत्राणां, "पलाशः किंशुके शठ्यां पलाशो निकषात्मजे । क्लीबं पलाशं छदने, पलाशो हरिति त्रिषु ॥ " इति विश्वलोचनः; यः पुटभावः संपुटं, यद्वा पुटः आधारपात्रं द्रोणः 'पडीआ' इति भाषायां, स एव भावः पदार्थः तस्मात्, प्रियेण अतर्कितं क्रियाविशेषणं सहसा इत्यर्थः, यतः पुटगर्भितत्वात् अदृष्टं, अंभः जलं, क्षिप्त्वा आहतया अभिहतया, यत् विरुतं भयेन चीत्कृतं, तत् स्वस्थधिया पुनः शान्तस्थितौ इति भावः, कर्तुं नैव शक्यते ॥ 'पटवासः' इति पाठे ] 'पटवासश्चूर्णद्रव्यविशेषः, "पिष्टातः पटवासकः" इत्यमरः' [ इति टिप्पणी । तत्र पद्यस्यांतत्वं चिन्त्यम् ॥ अत्र त्रासः संचारिभावः " निर्घातविद्युदुल्काद्यैस्त्रासः कंपादिकारकः । " ( ३।१६४ ) इति साहित्यदर्पणे लक्षितः । तेन चकितं नाम नायिकालंकारश्च, "त्रासेन लज्जया वाऽपि निजवल्लभसन्निधौ । संभ्रमातिशयो यस्तचकितं सूत्रकृन्मते ॥ " इत्युक्तः । ( सूत्रकृत् नाट्यशास्त्रकर्ता भरतः, सूत्रशास्त्रशब्दयोः कामसूत्रादिशब्देषु अर्थपर्यायत्वदर्शनात् । ) ॥ ६९१ ॥ इतः ७३२ आर्यापर्यंतं ४२ आर्याभिः कोशेषु अनुल्लिखितमपि महाकुलकम् । तत्र " सुश्लिष्टो हावविधिः " इत्यारभ्य " रतोत्सुकता " ( आ. ६९३ ) इत्यन्तं प्रथमान्तशब्दाः, ततः " एकीभावं " ( आ. ६९५ ) इत्यारभ्य " प्रेष्यभावेन " ( आ. ७३१ ) इत्यन्तं संगृह्य " इति शोकग्रस्तवर्णगिरः " ( आ. ६९४ ) इति प्रथमान्तपदं, तानि सर्वाणि "इति नेत्रादिविकारैः " ( आ. ७३२ ) इत्यनेन अन्वीयन्ते इति बोध्यम् ॥ हावविधिरित्यादयः रतोत्सुकतेत्यन्ताः पदार्थाः ( अनुरागप्रकाशकाः ) रक्तानुरागेंगितानि, तानि च पूर्वं ( आ. ६३० ) विस्तरेण उक्तानि, तत्प्रयोगाश्च आकर्षणवशीकरणयोः साधनानि इति विज्ञेयम् ॥ सुश्लिष्टः सम्यग्युक्तः, हावविधिः हावानां प्रयुक्तिः, हावः पूर्वं ( आ. ४७७ ) विस्तरेण व्याख्यातः । ललितं सुन्दरं नयनानन्दकरं, मदनेन कामेन लक्षणया तदावेशेन

---

६९१ पलाशपटभावात् ( गो. का ) पुटसारात् ( प )' पटवासात् ( गो २ ) यद्विकृतं ( प ) । धिया तत्र ( प )

**नीवीबन्धविमोक्षो, मुहुर्मुहुः केशपाशविश्लेषः ।**
**स्वाधरदशनग्रहणं, बालकपरिचुम्बनं, रतोत्सुकता ॥ ६९३ ॥**

---

इत्यर्थः; अलसानां क्रियाजडानां, गात्राणां शरीरावयवानां, जृंभणं शैथिल्यापादनो विकासः; यद्वा ललितं मृदुपदविन्यास–भुजलतान्दोलन–भ्रूभंगाद्यात्मकः भावविशेषः। गूढस्थानानां गोपनीयाङ्गानां स्तनबाहुमूलनाभिजघनादीनां, वस्त्रसमीकरणादिमिषेण प्रकटनं यथा कामुकः गोपनीयाङ्गानां दर्शनेन उद्दीतकामो भवेत् । तथा च कामसूत्रं–" रुच्यमात्मनोऽङ्गमपदेशेन प्रकाशयति । ( ३।३।२६ ) इति । अंगुलिविस्फोटनं अंगुलिभिः शब्दकरणम् । सुभगं मनोहरं, स्मितं । अदृश्यदशनो मधुरो हासः, प्रसादप्रकाशनाय; तथा च कामसूत्रं–" यत्किञ्चिद्दृष्ट्वा विहसितं करोति । " ( ३।३।३१ ) इति, ( यत्किंचित् दृष्ट्वा तिर्यक् पश्यंती इत्यर्थः । ) । ६९२ ॥

नीवी 'नीविः' इत्यपि रूपं, " नीवी परिपणे ग्रन्थौ स्त्रीणां जघनवाससः । " इति विश्वः, " नीवीति बंधः नीवीबंधः, चूतवृक्षवदपौनरुक्त्यं " इति मेघदूतटीकायां मल्लिनाथः, यद्वा बंधपदं स्फुटत्वार्थं, तेन न पुनरुक्तिः; नीवीबंधस्य विमोक्षः तस्य शैथिल्यमिषेण दृढबंधत्वापादनाय विश्लेषणं, येन स्वरतिप्रेप्सा सूच्येत; कामुकस्य च 'मदनसार्वभौमगर्वसर्वस्वखनिपर्वतस्य जघनस्य दर्शनेन रतोत्कण्ठा जायेत । केशपाशः केशकलापः " पाशः पक्षश्च हस्तश्च कलापार्थाः कचात् परे । " इति अमर–वचनात्, यद्वा प्रशस्ताः केशाः " हस्तयष्टिलतादयः प्रशंसावचनाः" इति वचनात्, तेषां पौनःपुन्येन विश्लेषः वियोगः अव्यवस्थितिः इति यावत्, येन तद्व्यवस्थापनाय उच्चैःकृते हस्ते बाहुमूलादिदर्शनं भवेत् रतान्तावस्थास्मरणमपि कामुकस्य जायेत। स्वस्याः अधरोष्ठस्य, तस्यैव उचितत्वात्, दशनैः स्वस्याः दंतैः ग्रहणं, ईप्सितदशनक्षतसूचनार्थम् । बालकानां आपञ्चवर्षीयाणां शिशूनां स्वहस्तोद्धृतानां क्रीडमानानां वा चुंबनं, स्वस्याः तदभिलाषप्रकटनार्थम् । तथा चोक्तं—" स्त्री कान्तं वीक्ष्य नाभिं प्रकटयति मुहुर्विक्षिपन्ती कटाक्षान्, दोर्मूलं दर्शयन्ती रचयति कुसुमापीडमुत्क्षिप्तपाणिम् । रोमांचस्वेदजृंभाः श्रयति, कुचतटभ्रंशि वस्त्रं विधत्ते, सोत्कण्ठं वक्ति, नीवीं शिथिलयति, दशत्योष्ठभंगं भनक्ति ॥ " इति । अपि च कामसूत्रं—" बालस्याङ्कगतस्यालिङ्गनं चुम्बनं च करोति " ( ३।३।३२। ) इति, ( बालस्य 'लाडीकस्य' । ) रतोत्सुकता सुरते औत्सुक्यं 'अधुनैव तस्य लाभो ममास्तु इति इच्छा ', तत्प्रदर्शनं व्यंग्यवाक्कर्मादिभिः । एतेषां अन्येषां च अनुरागेङ्गितानां संग्रहः पूर्वं प्रसंगात् उद्धृतः

---

६९३ नीविविमोचनबन्धो ( न्धौ? ) ( प )

साकाङ्क्षितं क्षिपन्त्यास्तरलायतलोचने मुहुः कान्ते।
उद्दिश्य तद्वयस्यकमिति शोकग्रस्तवर्णगिरः॥६९४॥ (कुलकम्)
एकीभावं गतयोर्जलपयसोर्मित्रचेतसोश्चैव।
व्यतिरेककृतौ शक्तिर्हंसानां दुर्जनानां च॥ ६९५॥

---

(आ. ६३० टीकायां), न्यूनाधिक्येन कथितः च साहित्यदर्पणे (३।११४–१२६), कर्णभूषणे (२।४३–५५), कामसूत्रे (३।३।२।२४–४१) च॥ अत्रेदं बोध्यं यत्–यथायोग्यं उभयप्रयोज्यानि इंगिताकारसूचनानि, तेषु कानिचित् नायिकामधिकृत्य कामसूत्रे कन्यासंप्रयुक्तके (३) अधिकरणे द्वितीयप्रकरणे उक्तानि, नायकमधिकृत्य च तानि परिचयकारणानि तत्रैव पारदारिकाधिकरणे (५) प्रथमप्रकरणे उक्तानि प्रायः समानानि। इंगिताकारसूचनफलं तु ग्रन्थकर्त्रा "इति नेत्रादिविकारैर्वशमुपनीतं प्रलीनधैर्याभ्रम्" (आ. ७३२) इत्यग्रे स्पष्टमुक्तम्। नायिकाभेदोत्थः अनुरागेंगितप्रयोगभेदः विवृतः कर्णभूषणे–"एतेषु च प्रगल्भाया हतलज्जं विचेष्टितम्। मध्यलज्जं तु मध्याया, बहुलज्जं नवस्त्रियः। तथापि गतलज्जं तु वेश्यायाश्च परस्त्रियाः॥" (२।५६) इति॥ ६९३॥ साकांक्षितमित्यादिना तद्वियोगदोषस्य अन्यत्र तन्मित्रशिरसि एव आरोपणं कर्तुं वक्तव्याया वचनावल्याः अवतरणिकां ददाति। साकांक्षितं साभिलाषं, तरलायतलोचने चंचलदीर्घनयने, क्षिपंत्याः व्यापारयंत्याः, कामुकहृदयं आर्द्रीकर्तुं स त्वां अंगीकरिष्यति न वा इति भयान्वितया दृष्ट्या पश्यन्त्याः, (दृष्टितरलत्वं भयसूचकं), तव, तद्वयस्यं कामुकमित्रं, उद्दिश्य अधिकृत्य, तस्यैव इदं भेदकृत्यं मद्भाग्यविपर्ययफलकं इति सूचनाय, इति वक्ष्यमाणप्रकाराः, शोकग्रस्तवर्णगिरः शोकसंभिन्नवाचः, वाच्याः इति शेषः॥ ६९४ ॥ तत्र तस्य दौर्जन्यमेव कारणं इति ज्ञापयितुं आदौ दुर्जनानां मित्रभेदशक्तिं वर्णयति एकीति। जलपयसोः नीरक्षीरयोः, मित्रचेतसोः सुहृन्मनसोः च, एकीभावं गतयोः एकरसत्वं अद्वैतं प्राप्तयोः, ] व्यतिरेकः पृथक्करणं, [ तस्य कृतौ करणे, शक्तिः बलं, हंसानां तन्नाम्नैव प्रसिद्धानां पक्षिणां, दुर्जनानां कर्णेजपानां च विद्यते एव॥ अत्र गम्योपमानभूतानां हंसानां विषये उक्तं—"अंभोजिनीवननिवासविलासमेव हंसस्य हंतु नितरां कुपितो विधाता। न त्वस्य दुग्धजलभेदविधौ प्रसिद्धां वैदग्ध्यकीर्तिमपहर्तुमसौ समर्थः॥" (नीतिशतके १४) इति; हंसानां इयं प्रसिद्धिः कविसमयसिद्धा, यतः लोके एकीकृतक्षीरजलयोः पृथक्करणे न तेषां सामर्थ्यं, परन्तु ते कमलनालभंगोद्गतक्षीरमेव सरोजलं विहाय

---

६९४ लोचनं (का)। काम्ये (प) ६९५ चेतसोश्च तथा (प. कापा)

**येन तदा मामूचे परिजनमुत्सार्य विवृतनवमन्युः ।**
**दर्शितहितस्वरूपः परपीडाकरणपण्डितः प्रखलः ॥ ६९६ ॥**
**अतिकोमलमतिपरिमितवर्णं लघुतरमुदाहरति शठः ।**
**परमार्थतः स हृदयं दहति पुनः कालकूटघटित इव ॥ ६९७ ॥**

---

वैदग्ध्येन पिबन्ति ॥ अत्र दीपकं अलंकारः, प्रस्तुतदुर्जनानां अप्रस्तुतहंसानां च पृथक्करणशक्तिरूपधर्मस्य सकृदुपादानात्, "सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम् । " इति (काव्यप्रकाशे १०।१०३) तल्लक्षणात् । अत्र औपम्यं गम्यं, तत्रापि हीनानां दुर्जनानां उत्तमैः हंसैः सह गम्यौपम्येन व्याजस्तुतिः ध्वनिता; यथासंख्यालंकारश्च, "यथासंख्यं क्रमेणैव क्रमिकाणां समन्वयः ।" (१०।१०८) इत्यपि तत्रैव; "बहुवचनस्य अतन्त्रत्वात् द्वयोरपि यथासंख्या भवति" इति काव्यालंकारटीकायां नमिसाधुः (७।३४) ॥–अत्र प्रसंगात् केषाञ्चित् गम्यौपम्यालंकाराणां स्थूलतया विवेकः प्रदर्श्यते–तथाहि, निदर्शनायां अभवन् वस्तुसंबंधः बध्यते; अप्रस्तुतप्रशंसायां अप्रस्तुतस्य कथनेन प्रस्तुतं आक्षिप्यते; यदि तत्रैव अप्रस्तुतं अपरं समाक्षिप्येत तदा समासोक्तिः; प्रतिवस्तूपमायां सामान्यधर्मः शब्दान्तरैः पुनरुक्तो भवति; दृष्टान्ते सामान्यधर्मादीनां उपमाङ्गानां बिंबप्रतिबिंबभावेन ख्यापनं, न कस्यापि शब्दान्तरेण; दीपके प्राकरणिकानां अप्राकरणिकानां च धर्मः एकवारं एव उपादीयते; तुल्ययोगितायां तु प्रस्तुतानामेव अप्रस्तुतानामेव वा धर्मः एकवारं इति ॥६९५॥ पूर्वोक्त प्रस्तुते घटयति येनेति । येन यतः दौर्जन्यात् इति भावः, तदा तस्मिन् काले, आवयोः प्रणयस्य स्थैर्ये जाते इति भावः, परिजनं सेवकादिकं, उत्सार्य कार्यनियोगा--दिव्याजेन दूरीकृत्य, निर्जने इति भावः; विवृतनवमन्युः प्रकटीकृताभूतपूर्वशोकः, तव हीयमानरागस्य प्रकटीकरणे इव इति भावः; दर्शितहितस्वरूपः प्रकाशितसुहृद्भावः, मां दयमान इव इति भावः, दर्शित इत्यनेन तस्य कृत्रिमत्वं व्यज्यते, तदेव प्रकटयति–परपीडेत्यादि, अन्यसौख्यनाशप्रवीणः इत्यर्थः, प्रखलः प्रकर्षेण खलः पापः दुर्जनशिरोमणिः इत्यर्थः । "पंडितः प्रथमः" इति पाठे प्रथमः प्रधानः, एतत्पाठः अर्थपर्यालोचने 'पंडितप्रथमः' इति भवितुं युक्तः, तदर्थश्च तादृशेषु प्रथमः आद्यः अग्रगण्यः इति, एवं वक्ष्यमाणं ऊचे अवदत् ॥६९६॥ तदुक्तिं पद्येन अनुवदति । तत्रादौ सः शठोक्तीनां स्वरूपं परिचाययति अतीति । शठः कपटपटुः वञ्चकः, अतिकोमलं–शब्दार्थाभ्यां

---

६९६ विधृतनटमन्युः (गो. का) । पण्डितः प्रथमः (गो. का) ६९७ वहति पुनः कालकूटघटितमिव (प)

**अविदितगुणान्तराणां नो दोषः प्राप्तदेशवासानाम् ।**
**स्वाधीनकुङ्कुमा अपि यद्विदधति बहुमतिं नीले ॥ ६९८ ॥**

कोमलत्वं द्विविधं, तत्र शब्दकोमलत्वं बंधस्य अपरुषत्वं, अर्थकोमलत्वं परुषेऽप्यर्थे अपरुषत्वं, तदुभययुक्तं अतिकोमलं; अतिपरिमितवर्णं प्रमिताक्षरं अल्पाक्षरं; लघुतरं अतिमनोज्ञं, "लघुर्मनोज्ञनिःसारागुरुलघुषु वाच्यवत् । पृक्कायां स्त्री, लघु क्लीबं कृष्णागुरुणि सत्वरे॥" इति, मनोज्ञत्वं मधुरत्वं द्विविधं शब्दगतं अर्थगतं च, तत्र शब्दमधुरत्वं पृथक्पदत्वं, अर्थमधुरत्वं च उक्तिवैचित्र्यं, एतद्वाग्गुणयुक्तं वचनं सज्जनोदाहृतितुल्यं इति भावः,उदाहरति वदति। पुनः इति त्वर्थे भेदे तु,सः शठः,परमार्थतः तत्त्वतः हृदयं दहति मनः संतापयति। निदर्शनालंकारः। तस्य दाहकत्वं उत्प्रेक्षते कालेति। कालकूटः महाविषं शृंगवेरकोंकणमलयदेशसंभवं अश्वत्थसंनिभो निर्यासः, यद्वा कालकूटं समुद्रमथनसंभवं विषं, कालकूटकापरनामकं विषतिंदुकं एताभ्यां भिन्नं उपविषत्वात्, तेन कालकूटेन. घटितः रचितः निर्मितः, इव उत्प्रेक्षायां; सर्वेषां विषानां शरीरदाहजनकत्वं प्रसिद्धम्। उक्तं च–"मधुरिमरुचिरं वचः खलानाममृतमहो प्रथमं पृथु व्यनक्ति । अथ कथयति मोहहेतुमन्तर्गतमिव हालहलं विषं तदेव ॥" इति । अत्र हेतूत्प्रेक्षालंकारः। अनेन त्वत्प्रियः "विषकुंभः पयोमुखः ।" प्रच्छन्नदुर्जनः इति सूचितम् ॥ इयं गीतिः काव्यप्रकाशे सप्तमोल्लासे पदैकदेशगतस्य अश्लीलदोषस्य उदाहरणाय उद्धृता । तत्रत्यपाठभेदास्तु–'अतिपेलवमति० हृदयं वहति० घटितमिव ॥' इति । "पेलवं कोमलं, लघुतरं अतिमंदं सत्यत्वप्रत्यापनाय•• । तथा च कृत्रिमतया तद्वाक्यमश्रद्धेयमिति भावः । " इति काव्यप्रकाशबालबोधिनीटीकायाम् । अत्र 'पेलव' शब्दस्य लाटभाषायां वृषणरूपगुह्यांगबोधनतया तदर्थस्मरणेन तत्पदं व्रीडादायि इति अश्लीलपदत्वं दोषः इति विचारितम् । उपलब्धसर्वप्राचीनपुस्तकेषु 'अतिकोमलं' इति पाठस्यैवोपलब्धेः नात्र उक्तदोषावकाशः; 'पेलवं' इति पाठेऽपि देशविशेषभाषायां प्रसिद्धस्यार्थस्य संस्कृतभाषायां तादृशार्थबोधानुत्पत्तेः न तत्प्रयोगस्य दोषवत्त्वं इति बोध्यम्॥ अपि च पूर्वोक्तटीकायां "मित्रं प्रत्याप्तस्यापदेशोक्तिरियम्" इति अस्या अवतरणं दत्तं, तदपि एतन्मूलस्थानानवबोधमूलम् । ॥ ६९७ ॥ न केवलं वाचि शठः, क्रियायामपि, इति द्योतयन्, तस्य परासक्तत्वे त्वत्सपत्न्याः न कोऽपि दोषः प्रत्युत तस्यैव इति सूचयितुं वक्ति अविदितेति । अविदितगुणांतराणां अज्ञातगुणाधिकपदार्थान्तरगुणानां इत्यर्थः, प्राप्तः अपरस्मिन्

६९८ को दोषः (प) नोद्देशः (काषा)। 'षप्रातदेश' (प)।

क्व महीतलरम्भा त्वं न्यक्कृतचन्द्रप्रभा स्वदेहरुचा ।
चित्रलता क्व वराकी नीचैरुपसेवितारोहा ॥ ६९९ ॥

देशे वासो यैः तेषां, यद्वा प्राप्ते देशे वासो येषां तेषां, यस्मिन् देशे प्राप्ताः तत्र केवलं वसंति, न तु तद्देशादिगुणान् जानंति, तद्देशादिगुणदोषज्ञानरहितानां इत्यर्थः; दोषः अपराधः, नो न, यदि तत्रत्यगुणाधिकान् अवज्ञाय नवागतेषु लोकानां आदरो भवेत् इत्यभिप्रायः । 'को दोषः' इति पाठे काक्वा न कोऽपि दोषः इति लभ्यते । यत् यतः, स्वाधीनं सुलभतमं कुंकुमं "केशर" इति लोके प्रसिद्धं द्रव्यं, येषां ते स्वाधीनकुंकुमाः काश्मीरिकाः, "कुंकुमं घुसृणं वर्णं प्रोक्तं लोहितचंदनम् । काश्मीरजं च विद्वद्भिः" इति हलायुधः, उक्तं च विक्रमांकदेवचरितमहाकाव्ये—"सहोदराः कुंकुमकेसराणां भवंति नूनं कविताविलासाः । न शारदादेशमपास्य दृष्टस्तेषां यदन्यत्र मया प्ररोहः ॥" (१।२१) इति ॥ ते अपि, नीले नीलं नीली 'गली' इति प्रसिद्धं नीलवर्णं रंजकद्रव्यं काश्मीरेषु देशांतरात् प्राप्तं तस्मिन्, बहुमतिं समादरं, विदधति कुर्वन्ति । तदुक्तं—"काश्मीरेषु निवासिनामपि नृणां नास्त्यादरः कुंकुमे, दूरस्थस्य महार्घ्यता, परिभवः संवासतो जायते ॥" (चाणक्यराजनीतिशास्त्रे (३।६९) इति, "स्वदेशजातस्य नरस्य नूनं गुणाधिकस्यापि भवेदवज्ञा । निजांगना यद्यपि रूपराशिस्तथापि लोकः परदारसक्तः ॥" इति च । यदितिपदभावात् पूर्वार्धार्थस्य उत्तरार्धेण समर्थनात् काव्यलिंगमलंकारः ॥ अनेन तव सपत्नी अज्ञातत्वद्गुणा तव प्रियस्तु तस्यां सक्तो जातः इति तस्याः न दोषः, परंतु स तव लावण्यादिगुणान् ज्ञात्वाऽपि त्वत्तो न्यूनगुणायां तस्यां आसक्तः इति स एव दोषास्पदं इति सूच्यते॥६९८॥एवं उपोद्घातं कृत्वा नायिकामनसि ईर्ष्यां जनयितुं प्रस्तुतं कामुकस्य अन्यासक्तत्वं स्पृशति क्वेति । रुचा कान्त्या । न्यक्कृतचंद्रप्रभा तिरस्कृतकौमुदी । रंभा कदली अप्सरोविशेषश्च; "रंभा कदल्यप्सरसोः" इति विश्वलोचनः । वराकी दीना । नीचैः वामनैः पामरैश्च । उपसेवितः जुष्टः आरोहः उच्छ्रायः नितंबश्च; "आरोहस्तु नितंबे स्याद्दीर्घत्वे च समुच्छ्रये । अवरोहे हस्तिपके मानारोहणयोरपि ॥" इति विश्वलोचनः, "आरोहः श्रोणिकाययोः ।" इति च धरणिः । चित्रलता मञ्जिष्ठा 'मजीठ' इति भाषायां ख्याता, "मंजीष्ठा''''चित्रपर्णी चित्रलता रागांगी वस्त्रभूषणा" इति धन्वंतरिनिघंटौ, सा च क्षुपविशेषः । द्वौ क्वौ महदन्तरं सूचयतः, तेन तव त्वत्सपत्नीभूतायाश्च अल्पमपि साम्यं न, यथा कदलीचित्रलतयोः

६९९ °सेविता वृद्धा (प) । मित्रलता (का) [दुष्टः पाठः]

यस्यार्थे न विगणिताः प्रह्वात्मानो महाधनाः कुलजाः।
सोऽद्य हृदयेन तस्यां त्वयि तिष्ठति बाह्यवृत्तेन ॥ ७०० ॥
तामेव समाचरणां सद्भावेन प्रवर्तितां निपुणाः।
विन्दन्तितत्र कुशलाः स्नेहविरूपे प्रभेदेन ॥ ७०१ ॥
भवतु, विरूढप्रेम्णः सत्कर्मविवेचने मनोवृत्तिः।
नारोहतीति सैवं निवेदितं पारिचित्येन ॥ ७०२ ॥

---

इति सूच्यते। अत्र श्लेषानुप्राणितः रूपकालंकारः। न च विषमालंकारोऽपि इति शंक्यं, "संसर्गोऽननुरूपस्य विषमं प्रोच्यते बुधैः।" (साहित्यसारे ८।२३५) इति तल्लक्षणात्, प्रकृते च संसर्गस्य असंभवात् ॥ ६९९ ॥ स्वोपज्ञं कामुकहृदयं निवेदयति यस्येति। येस्य कामुकस्य, अर्थे कृते, यन्निमित्तं त्वया, ] प्रह्वात्मानः आसक्त्या नम्राः, [ धनवन्तः कुलीनाः च अन्ये कामुकाः, न, विगणिताः चिंतिताः आदृताः इति यावत्, सः तव सर्वस्वभूतः कामुकः, अद्य इदानीं, तस्यां त्वत्सपत्नीभूतायां पूर्वस्यां आर्यायां सूचितायां, हृदयेन अन्तःकरणेन सत्यानुरागेण इति यावत्, तिष्ठति वर्तते; त्वयि तादृश्यां, तु, बाह्यवृत्तेन बाह्योपचारमात्रेण, न तु आन्तरस्नेहेन इत्यर्थः, तिष्ठति। "स एवान्यो जातः, सखि, परिचिताः कस्य पुरुषाः।" (अमरुकशतके ९४) इति भावः। 'तस्यास्त्वयि' इति पाठे तस्याः नव्यायाः, हृदयेन मत्यनुसारेण, इत्यर्थः ॥ ७०० ॥ ननु तस्य हृदयं त्वया कथं ज्ञातं इति शंकां बुद्धिनैपुण्येन इति अपनुदति तामेवेति। यत्तदोर्नित्यसंबंधात् यां इति आक्षिप्यते। यां सद्भावेन प्रेम्णा प्रवर्तितां, समाचरणां आचारं विलासादीनामप्युपलक्षणं, निपुणाः विंदंति जानंति, तामेव तादृशीमेव इत्यर्थः, स्नेहविरूपे प्रेमविपर्यये जाते सति, प्रभेदेन पूर्वाचरणेभ्यो भिन्नतया प्रवर्तितां समाचरणां, तत्र कुशलाः इंगितज्ञाः इत्यर्थः, विन्दन्ति। सौहार्दात् अन्यथा वा प्रवर्तितानां समानाकाराणां अपि आचाराणां भेदः कुशलैः शीघ्रं गृह्यते। एवं त्वां प्रति पूर्ववत् बाह्यसमाचारेऽपि तदीयं हृदयं मया ज्ञातं इति भावः॥ ७०१ ॥एतत्कथने स्वप्रवृत्तौ

---

७०० यस्या न खलु विगणिताः (गो. का)। तस्यास्त्वयि (प) ७०१ तासां वा समाचरणं सदसद्भावप्रवर्तितं निपुणैः। विन्दन्ति नात्र कुशलाः स्नेहेन विरक्षमेदेन ॥ (प) ७०२ °प्रेम्णा तत्कर्मविवेचनं (प)। नार्हतीति मयैवं (प) मारो° (का)। °दितं परिजनेन (···का) परिचयेन (कापा)

**इति दुर्जनाहिनिःसृतवाग्विषदूषितसमस्तवपुषो मे ।**
**ईर्ष्यारुषः प्रवृद्धाश्चिररूढप्रणयखण्डनप्रभवाः ॥ ७०३ ॥**
**लघुहृदयतया तस्माद्दुर्भाषितवज्रपातविहतानाम् ।**
**वक्तृविशेषवितर्को न स्पृशति प्रायशो मनः स्त्रीणाम् ॥ ७०४ ॥**

---

हेतुं स्पष्टयति भवतु इति । भवतु मया यथैवाभ्यूहितं तथैव भवतु, यद्वा यत्किमप्यस्तु इत्यर्थः । विरूढं प्रवृद्धं प्रेम स्नेहः यस्य तस्य जनस्य, ] सा [ तादृशी ] मनोवृत्तिः [ मनोव्यापारः, सत्कर्मविवेचने हिताहितकर्मनिर्णयविषये, ] न आरोहति न प्रसरति, [ इतिः हेतौ, मया तव हितैषिणा, तस्मिन् विरूढस्नेहाये तुभ्यं, पारिचित्येन ] पारिचित्यं परिचयः [ तेन, एवं पूर्वोक्तं अप्रियमपि तथ्यं इति भावः, निवेदितं ज्ञापितम् ॥ ७०२ ॥ एतस्याः तद्वयस्योक्त्याः श्रवणेन जातं फलं सा आह इतीति । इति पूर्वोक्तप्रकारेण, दुर्जन एव अहिः सर्पः, तस्मात् निःसृतं निर्गतं वाक् एव विषं गरलं, रूपकालंकारः, तेन दूषितं दोषवत्त्वेन व्याप्तं, सकलं शरीरं यस्याः तस्याः मे, चिररूढस्य बहुकालयोगेन प्रवृद्धस्य, प्रणयस्य स्नेहस्य, खण्डनं नाशः, तस्य प्रभवाः मूलानि जन्महेतवः, तादृश्यः, ईर्ष्यारुषः ईर्ष्यया परोत्कर्षासहिष्णुतया सपत्नीविषयकसौभाग्यासहनशीलतया, रुषः कोपाः अवज्ञया चित्तज्वलनानि; बहुवचनं कोपस्य पौनःपुन्येन शान्तिदीप्त्योः सूचनार्थं; प्रवृद्धाः क्रमेण अतिभूमिं गताः ॥ ७०३ ॥ स्वदोषं परिहरंती तत्र कारणमाह लघु इति । तस्मात् दुर्भाषितं सकपटंवचनं तदेव वज्रः तस्य ाातेन विहतानां घातितानां, अत एव मूढतां नीतानां इति भावः, स्त्रीणां मनः कर्म; यतः इर्ष्यारुषः प्रवृद्धाः तस्मात्, इर्ष्यारोषे प्रवृद्धे सति इत्यर्थः, वक्तृविशेषवितर्कः वक्तुः विशेषस्य भेदस्य, " विशेषो भेदमात्रेऽपि विशेषस्तिलकेऽपि च । " इति विश्वलोचनः, वितर्कः विचारः " वितर्कः संशयेऽप्यूहे विचारे च क्वचिन्मतः । " इति तत्रैव, कर्तृपदं, प्रायशः न स्पृशति, दुर्जनोपजापभिन्नं स्त्रीणां कोमलं मनः वक्ता यथार्थं वक्ति न वा इति विवेचयितुं असमर्थं इति भावः । तत्र हेतुः लघुहृदयतया इति, लघु निःसारं क्षुद्रं अतीवकोमलं इति यावत्, हृदयं अन्तःकरणं, तस्य भावः लघुहृदयता, तया । "स्त्रीत्वं धैर्यविरोधि" इति स्थितेः इति भावः । दुर्जनवचनं सत्यं मत्वा तेन तव विरक्तिं संबुध्य त्वां त्यक्तवती इति अभिप्रायः ॥ ' वर्त्मविशेष ' इति पाठे कर्तव्याकर्तव्यरूपमार्गविशेषस्य इत्यर्थः । अत्र आगामिश्लोकेषु दुर्जनस्यैव वर्णनेन ' वक्तृविशेष '

---

७०३ दुर्जनाभिनिःसृतवाग्भिदं ( गो. का ) ७०४ वर्त्मविशेष ( गो. का ) वितर्कः स्पृशति प्रायशः मनः स्त्रीणाम् ( प )

प्रियमपि वदन् दुरात्मा क्षिपति विपत्सागरे दुरुत्तारे ।
आसाद्य प्राणभृतो मृतये परिलेढि जिह्वया खड्गः ॥ ७०५ ॥
हितमधुराक्षरवाणीं व्यवहारमनुप्रविश्य तल्लीनाम् ।
सरला दुराशयानामुपघातफलेन विन्दन्ति ॥ ७०६ ॥

---

इति पाठः सुसंबद्धो भाति ॥ ७०४ ॥ स्वाचरणं समर्थयितुं इतः पङ्क्तिः दुर्जनानां दुश्चरितं वर्णयति प्रियमित्यादिभिः । दुरात्मा दुष्टः आत्मा अन्तःकरणं यस्य सः, "कलेवरे प्रयत्ने च स्वभावे परमात्मनि । स्वान्ते धृतौ मनीषायामात्मानं कवयो विदुः॥" इति शाश्वतः । ( स्वान्तं अन्तःकरणम् । ) दुरुत्तारे दुस्तरे । ] आसाद्येति । ' प्राणिनः आसाद्य विश्वासार्थं जिह्वया मृतिफलकखड्गलेहनेऽपि प्रवृत्तिं दर्शयति ।' [ इति टिप्पणी । वस्तुतस्तु खड्गः कृपाणः, प्राणभृतः प्राणिनः, आसाद्य प्राप्य, यत्, जिह्वया धारया, परिलेढि, तत् तेषां मृतये मरणाय, भवतीति शेषः, मरणमेव तत्क्रियायाः फलं इति भावः । उक्तं च—"स्पृशन्नपि गजो हन्ति, जिघ्रन्नपि भुजंगमः । हसन्नपि च वेतालो, मानयन्नपि दुर्जनः ॥ " इति, " को वा दुर्जनवागुरानिपतितः क्षेमेण यातः पुमान् ।" इति च ॥ दृष्टान्तालंकारः, " दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिबिम्बनम् । " इति ( काव्यप्रकाशे १०।१०२ ) लक्षणात् । ( एतेषां साधारणधर्मादीनाम् । ) ॥७०५॥ दुर्जनानां नीतिविद्यामिव फलानुमेयव्यापारत्वं प्रकटयति हितेति । दुराशयानां दुष्टः आशयः अभिप्रायः येषां तेषां दुरात्मनां, हिता श्रेयोवहा, मधुराक्षरा कर्णप्रिया, च वाणी वाक् कथनं इति यावत् तां, पुनः कीदृशीं, व्यवहारं लौकिकीं स्थितिं, अनुप्रविश्य विषयीकृत्य, तल्लीनां तस्मिन् व्यवहारे लीनां तद्भावापन्नां व्यवहारकौशल्यज्ञापिनीं इत्यर्थः, तादृशीं दुर्जनवाणीं, सरलाः अकुटिलहृदयाः अज्ञातवञ्चनाः, उपघातफलेन उपघातः विनाशः एव फलं परिणामः तेन विन्दन्ति जानन्ति, हितादिगुणविशिष्टानां दुर्जनवाचां परमार्थतः असाधुत्वं विनाशफलप्राप्त्या कालान्तरे बुध्यते इति तात्पर्यम् । 'वाणीव्यवहार' तन्मानम् । 'मुपघातं फलत एव' इति पाठे ] ' मानं प्रमाणभूतं, अनुप्रविश्य बुद्ध्या, तत्र प्रवृत्ताः, सरलाः ऋज्वाशयाः,' [ फलतः फलतया उपघातमेव विन्दन्ति लभन्ते ] इत्यर्थः ॥ तथा च उक्तं—" को वेत्ति गुणविभागं, हस्तेन कथं परीक्ष्यते जातिः । दुर्ज्ञेयं कुटिलानां चेष्टितमन्यद्वचश्चान्यत् ॥ " ( समयमातृकायां ८।३८ ) इति । भारविः अपि—" प्रविश्य हि घ्नन्ति शठास्तथाविधानसंवृताङ्गान्निशिता इवेषवः ।"

---

७०५ वदति दुरात्मा ( गो. का ) । खड्गं (गो २) [अस्य श्लोकस्य कापाठः दुष्टः]
७०६ वाणीव्यवहार'''तन्मानं ( गो. का ) । 'मुपघात फलत एव विन्दन्ति ( गो. का )

परसन्तापविनोदो यत्राहनि न प्रयाति निष्पत्तिम् ।
अन्तर्मना असाधुर्न गणयति तदायुषो मध्ये ॥ ७०७ ॥
दिवसांस्तानभिनन्दति बहु मनुते तेषु जन्मनो लाभम् ।
ये यान्ति दुष्टबुद्धेः परोपतापाभियोगेन ॥ ७०८ ॥
विकसितवदनः पिशुनः प्रोत्फुल्लविलोचनो यथा भ्रमति ।
मन्ये तथा न जातः सदहितकरणश्रमो वन्ध्यः ॥ ७०९ ॥
शठमृगयुः कुसृतिशरैरज्ञातप्रतिविधानसाधुमृगान् ।
अभ्यस्तलक्ष्यवेधो निघ्नन् न परिश्रमं व्रजति ॥ ७१० ॥

---

( किरात॰ १।३० ) इति ॥ ७०६ ॥ दुष्टस्य शोकदिनं कथयति परेति । अन्येषां पीडनं एव विनोदः हर्षजनकं कर्म सः, यस्मिन् दिने, निष्पत्तिं निर्वर्त्यां सिद्धिं, न प्रयाति, तत् दिनं, अन्तर्मनाः दुःखितमनाः खिन्नः, "दुर्मना विमना अन्तर्मनाः स्यात् ।" इति अमरः, असाधुः दुर्जनः, आयुषो मध्ये जीवनकालदिनेषु, न गणयति, तादृशं दिवसं विधिनिर्मितस्वजीवनदिनसंख्यायां मृतस्य इव निष्फलत्वात् गणनीयं न मनुते इति भावः । अहनि इति एकवचनेन तादृशस्य अधन्यदिनस्य विरलत्वं ध्वनितम् ॥ ७०७ ॥ तस्य उत्सवदिनानि आह दिवसान् इति । अभिनन्दति समृद्धिमंतो गणयति । ये दिवसाः । उपतापः सन्तापः तस्मिन् अभियोगेन अत्यन्ताभिनिवेशेन । दिवसान् इति बहुवचनेन तादृशां बाहुल्यं ध्वनितम् ॥ ७०८ ॥ दौर्जन्यसाफल्ये तस्य हर्षानुभावमाह विकसितेति । पिशुनः खलः, यथा, विकसितवदनः हर्षेण प्रफुल्लमुखः, प्रोत्फुल्लविलोचनः विकसितनेत्रः, भ्रमति लोके विचरति, तथा मन्ये तस्मात् अनुमिनोमि, यत् तस्य, सदहितकरणे सज्जनानां अहितसंपादने, श्रमः प्रयासः, वंध्यः निष्फलः न जातः इति । अनुमानालंकारः । ७०९ ॥ पिशुनानां सज्जनोपघातकत्वं रूपकालंकारद्वारा वर्णयति शठेति । शठः 'निगूढहिंसानिपुणः' खलः एव मृगयुः व्याधः, कुसृतयः उपजापादिकपटानि एव शराः तैः, "सृतिः स्त्री गमने मार्गे, कुपूर्वा निकृतौ सृतिः ।" इति विश्वलोचनः, अज्ञातं ] प्रतिविधानं निवारणं [ प्रतिक्रिया यैः तान् साधून् सत्पुरुषान् एव मृगान् हरिणान्, अभ्यस्तलक्ष्यवेधः शरव्यघाते अभ्यासेन सिद्धहस्तः इति भावः, निघ्नन् घातेन प्राणान् हरन्, परिश्रमं न व्रजति खेदं न लभते,

---

७०९ ॰लोचनस्तथा॰ ( गो. का )। मन्ये यथा नराणां परहितकरणे श्रमो वन्ध्य. ( गो. का ) [ अयथार्थः पाठः ] ७१० कुसृतिशतै॰ ( गो. का )

अनुकूलवरपुरन्ध्रिषु पुरुषाणां बद्धमूलरागाणाम् ।
नयति मनो दुःशीलः कुसुमास्त्रो हीनपात्रेषु ॥ ७११ ॥
सावरणं व्रजतोऽन्यां कौतुकदृष्ट्या प्रसङ्गतो दयितान् ।
बुद्ध्वाऽपि विदग्धधियो वर्तन्ते नाट्यधर्मेण ॥ ७१२ ॥
सत्यं प्रेमणि वृद्धे व्यथयति हृदयं मनागपि स्खलितम् ।
अवधूतनिजमाहात्म्यास्तदपि न धीरा विमुह्यन्ति ॥ ७१३ ॥

---

अनायासेनैव तान्नाशयति ॥ ७१० ॥ या पूर्वं ( आ. ६९८–६९९–७०० ) कामुकस्य नीचासक्तिः तन्मित्रेण उक्ता, तत्र विश्वसने हेतुं लोकवृत्तसंवादं प्रकटयति अनुकूलेति । अनुकूलाः चित्तानुवर्तिन्यः, वराः सुंदराश्च पुरन्ध्र्यः ( पुरंध्रिः पुरंध्री इति शब्दरूपे, ) स्वजनसहितं पुरं धारयते सा पतिपुत्रादिमती स्त्री कुटुंबिनी इति मुख्यार्थकोऽपि शब्दः रूढ्या स्त्रीमात्रे वर्तते, तादृशीषु, बद्धमूलः दृढीभूतः रागः अनुरागः येषां तादृशानां, अपि, पुरुषाणां, मनः कर्म, दुःशीलः पापः, कुसुमास्त्रः कामदेवः, हीनपात्रेषु जातिगुणादिभिः नीचासु अपि व्यक्तिषु, नयति, तत्र तान् आसक्तान् कुरुते इति भावः । यथोक्तं–"कामान्धो नैव पश्यति ।" इति ॥ ७११ ॥ तादृशे प्रसंगे कासांचित् चरितमाह सावरणमिति । प्रसंगत-कदाचित्, कौतुकदृष्ट्या कुतूहलेन, अन्यां स्त्रियं, सावरणं प्रच्छन्नं, व्रजतो संग, च्छतः, दयितान् स्वप्रियान्, बुद्ध्वाऽपि अन्येभ्यः ज्ञात्वा अपि, विदग्धधियः कुशलाः स्त्रियः, नाट्यधर्मेण वर्तन्ते अहृदयपूर्वकं बाह्यवृत्तेन तिष्ठंति, केवलं प्रेम ह्रसयित्वा उपचारादिषु पूर्ववदेव वर्तन्ते । अहं तु न तथाविधा आसम् इति अभिप्रायः ॥ ७१२ ॥ अतः नायकस्य तदपराधशंकायां हेतुनिदर्शनपुरःसरं क्षमां प्रार्थयते सत्यमिति । मनाक् अल्पम् । अतः मम वैमनस्यं जातं इति पूर्वार्धस्य भावः, यथोक्तं रत्नावल्यां–"प्रकृष्टस्य प्रेम्णः स्खलितमविषह्यं हि भवति ।" ( ३।१५ ) इति । तदपि तथापि । अवधृतं अवलंबितं निजं सहजं स्वभावभूतं माहात्म्यं उदाराशयत्वं यैः ते, धीराः अविक्षिप्तचित्ताः, न विमुह्यंति न विचित्ता भवंति । ह्यपराधः अव्यथमानचित्तेन सता प्रियेण क्षन्तव्यः एव इति अभिप्रायः ॥ ७१३ ॥

---

७१२ ऽन्यां कौतुकदृष्टां प्र···दयिताम् ( प )। नाद्य धर्मेण ( गो. प. का ) [ लिपि-भ्रममूलकः एव पाठः ] ७१३ स्तथापि धीरा न मुह्यन्ति ( का )

स्वच्छन्दः पिबतु रसं भ्रान्त्वा नानावनानि कुसुमेषु ।
अनुभूतगुणविशेषः पुनरेष्यति मालतीं मधुपः ॥ ७१४ ॥
मालत्या गुणवार्तां नो सम्यग्वेत्ति मधुकरस्तावत् ।
अनुभवमेति न यावत् सुमनोन्तरसङ्गमास्वादः ॥ ७१५ ॥
कोमलमानकटुत्वं भजमानो भजति दीप्ततामधिकाम् ।
संचाल्यमानदारुः पावक इव सुप्रभः स्नेहः ॥ ७१६ ॥

जातेऽपि मित्रभेदे स्वस्याः पुनरनुसंधानप्रतीतिं अन्यापदेशेन प्रकटयति स्वच्छंदेत्यादिना। स्वच्छंदः स्वतंत्रः स्वरुचिः यथाकामी नवनवास्वादे सक्तः, मधुपः भृंगः, तस्मिन् विटत्वारोपाय मधुपशब्दः, नाना अनेकानि बहुविधानि वा वनानि भ्रांत्वा, कुसुमेषु रसं मरंदं पिबतु नाम, यतः—"नवनवगुणरागी प्रायशो जीवलोकः।" इति, "परिचितजनद्वेषी लोको नवं नवमीहते।" इति च। अयं अष्टाशीतिविधरागेषु भ्रामरः रागः, स च "भ्रामरः कौतुकास्वादमात्रो नवनवोन्मुखः।" (समयमातृकायां ५।५५) इति॥ तथापि अनुभूतगुणविशेषः तेषां साक्षात्कृतगुणोत्कर्षापकर्षभेदवान्, पुनः 'प्रकृतिसुभगां गन्धोद्दामां' मालतीं एष्यति गमिष्यति रसास्वादाय तत्रैव रसाधिक्यात्॥ मनोरथो नाम नाट्यालंकारः, "मनोरथस्तु व्याजेन विवक्षितनिवेदनम्।" इति तल्लक्षणात्। उक्तं चेदम्—"अयि किं गुणवति मालति, जीवति भवतीं विना मधुपः। यदि जीवति, जीवतु, जीवितमपि तस्य जीविताभासः॥" इति, "कुसुमस्तबकैर्नम्राः संत्येव परितो लताः। तथापि भ्रमरभ्रान्तिं हरत्येकैव मालती॥" इति च॥ प्रकृते अनुस्वानशक्त्या मधुपः अधररसलोलुपः विटः इति, मालती प्रकृता नायिका इति च गम्यते, तेन मुद्रालंकारो व्यंग्यः, अप्रस्तुतप्रशंसालंकारश्च मुख्यः॥ ७१४॥ कामुकस्य अन्यत्र भ्रमणं गुणतारतम्यज्ञानोत्पादकत्वेन लाभायैव इति तत्र इष्टापत्तिं अन्योक्त्या प्राह मालत्या इति। मालती गंधलता वासंती स्वनाम्ना प्रसिद्धा, तस्याः गुणवार्तां गंधसौंदर्यादिसंपत्तिम्। सम्यक् यथार्थतया। अन्यानि सुमनांसि पुष्पाणि सुमनोन्तराणि, तेषां संगमस्य समागमस्य, आस्वादः रसः। तथाहि प्रकारान्तरेण कस्यचिदुक्तिः—"दूरादुज्झति चंपकं, न च भजत्यंभोजराजीरजो, नो जिघ्रत्यपि पाटलापरिमलं, चूते न धत्ते रतिम्। मन्दारेऽपि न सादरो, विचकिलामोदेऽपि सन्तप्यते, तन्मन्ये क्वचिदङ्ग भृङ्गतरुणेनास्वादिता मालती॥" इति॥ ७१५॥ स्वानुभूताल्पकालीनवियोगस्य सार्थक्यं स्नेहवृद्धिफलत्वेन प्रशंसति। कोमलेति।

७१४ स्वच्छन्दं (गो)। भ्रान्त्वा भ्रान्त्वा वनानि (प. कापा) ७१५ °स्वादे (गो. का) ७१६ मानकदम्बां (गो. का) कदर्थां (गो २) कदर्थी (गोपा)

यः पुनरतिकोपानलसन्तापवशेन दूरमाकृष्टः।
काचमणिः खलु स यथा परिणामं खण्डखण्डमुपयाति ॥७१७॥
वेतनलाभाद्बहवः सेव्यन्ते सौष्ठवेन पञ्चजनाः।
विश्राम्यति यत्र मनः स तु दुष्प्रापः सहस्रेषु ॥ ७१८ ॥

कोमलमानः लघुमानः पूर्वं ( आ. ५२० ) व्याख्यातः, स एव कटुत्वं रसविशेषभावः 'तीखुं' इति लोके प्रसिद्धः, तं भजमानः, सुप्रभः शोभमानः, स्नेहः, अधिकां दीप्ततां दीप्तिं भजति प्रवृद्धो भवतीति भावः, "फाणितेषु मरिचावचूर्णना सा स्फुटं कटुरपि स्पृहावहा।" ( नैषधीय १८।११८ ) इति न्यायेन, ( फाणितं खण्डविकाररूपं पानकम्। ) उक्तं च शृंगारतिलके–"मन्मथो नेर्ष्यया विना।" ( २।५३ ) इति। एतद् उपमया पुष्टं करोति, यथा सुप्रभः ज्वलमानः, पावकः अग्निः, संचाल्यमानदारुः संचालितेन्धनः, अधिकां दीप्ततां भजति इति ॥ 'कोमलमानकदर्या' इति पाठे टिप्पणी–] 'कोमलः कादाचित्कः लघूपनेयः इत्यर्थः, मानो यस्याः, तथापि कदर्या स्वयं कृपणा, तां भजमानोऽधिकां दीप्ततां प्राप्नोति, या स्वयं कृपणाऽपि केवलं उद्दीपनाय लघुमानं बिभर्ति सर्वदा च प्रियमानसानुवर्तिनी भवति तां सेवमानः प्रियः प्रीयत एव नाम। स्नेहो हि संचाल्यमानं दारु यस्य एवंभूतः पावक इव सुप्रभो भवति, पावको हि यथा मध्येमध्ये चालितकाष्ठः सुप्रभो भवति तथा स्नेहोऽपि लघुमानादिना पुष्टः प्रवर्धत इति भावः॥' इति ॥ ७१६ ॥ एतद्विपर्ययेण दीर्घकालीनं कोपं स्नेहनाशफलवत्त्वात् निंदति यः पुनरिति। यः स्नेहः, पुनः तु, अतिकोपः गुरुमानः पूर्वं ( आ. ५२० )व्याख्यातः, स एव अनलः अग्निः, तस्य संतापवशेन तापप्रभावात्, दूरं आकृष्टः दीर्घकालं सेवितः, सः, काच एव चाकचक्यात् मणिः तद्वत्, खण्डखण्डं सूक्ष्मशकलरूपं परिणामं फलं उपयाति प्राप्नोति; खंडितो भवति इत्यर्थः। काचस्य अतितापेन त्रुटिः जायते इति प्रसिद्धम् ॥ अत्रार्थे पूर्वमपि उक्तं–" अत्याकृष्टं त्रुट्यति सुदृढमपि प्रेमबंधनं मूढे।" ( आ. ६७३ ) इति। रूपकसंकीर्णः उपमालंकारः ॥ ७१७ ॥ सहजप्रीतिविश्रंभभाजनस्य जनस्य दुर्लभत्वमाह वेतनेति। वेतनं भृतिः। सौष्ठवेन सम्यक्तया। पञ्चजनाः पंचभिः भूतैः जन्यंते ते पुरुषाः। ] विश्राम्यति प्रसीदति। [द्रव्यप्राप्तये वेश्यया बहवः पुरुषाः सेव्यन्ते, यत्र तु मनः तत्सौजन्यदाक्ष्यादिना शांतिमुपलभते तादृशः

७१८ वेतनलोभा° ( १ )। स च ( १ )

मन्वादिमुनिवरैरपि कालत्रयवेदिभिः सुदुर्ज्ञेयम् ।
तत्सुकृतं यस्य फलं रभसागतवल्लभाश्लेषः ॥ ७१९ ॥
यातेऽपि नयनमार्गं प्रेयसि यस्याः स्मृतिर्व्यलीकेषु ।
मन्ये तां प्रति नियतं कुण्ठितशरपञ्चको मदनः ॥ ७२० ॥
जीव्यत एव कथञ्चिद्धिग्वृत्तिमिमां महद्भिरवगीताम् ।
विजहाति यन्न गणिका तद्वाञ्छितरमणलाभलोभेन ॥ ७२१ ॥

---

दुर्लभ एव इत्यर्थः । अनेन त्वं तादृशः मनोविश्रान्तिस्थानं इति सूचितम् ॥ ७१८ ॥ प्रियकृतस्वयंग्रहाश्लेषं प्रशंसति मन्वादि इति । त्रिकालज्ञैः मन्वादिमुनिश्रेष्ठैः स्मृतिकारैः, तत् सुकृतं पुण्यं कर्म, सुदुर्ज्ञेयं अज्ञातप्रायमेव, तैः स्मृतिषु अनुक्तत्वात्, यस्य कर्मणः फलं, प्रियेण सवेगं आगत्य प्रिया स्वयमेव आश्लिष्यत इति, "हर्षे वेगे च रभसः" इति विश्वलोचनः । अयमपि मानापनोदनोपायः । वल्लभस्य आश्लेषः इति विग्रहः, न तु वल्लभाया आश्लेषः इति विग्रहः प्रकृतविरोधित्वात्; प्रकृते वल्लभाप्रतियोगिकः वल्लभानुयोगिकः आश्लेषः इत्यर्थः; अस्याः आर्यायाः मुक्तकत्वे तथात्वेऽपि न विरोधः ॥ अत्र असंबंधे संबंधोक्तिरूपः अतिशयोक्तिः अलंकारः ॥ ७१९ ॥ प्रियदर्शनेऽपि यत् माननिर्वहणं तत् तासां कठोरहृदयत्वं प्रकटयति इति निवेदयति याते इति । प्रेयसि कामुके । नयनमार्गं याते दृष्टे । यस्याः मानिन्याः । ] व्यलीकेषु अपराधेषु [ प्रियकृतेषु, स्मृतिः स्मरणं, तद्दर्शनेन तत्कृतापराधानां स्मृतिः, तेन च या मानं न मुञ्चति, प्रत्युत रुष्टैव तिष्ठति इति भावः, तां प्रति, नियतं निश्चयेन, मदनः कामदेवः, कुण्ठीत्यादि मोघीभूतस्वशरसर्वस्वः, इति मन्ये तर्कयामि, तस्याः हृदयकाठिन्यस्य अवेधनात् इति भावः । स्वयं च न तादृशी इति सूचितम् ॥ मानात्यागेन कुंठितशरत्वानुमानात् अनुमानालंकारः ॥ तथा च अनुरागातिशयवर्तीं मुग्धां मध्यामपि उत्तमां मानिनीं नायिकां उद्दिश्य अमरुकस्य सूक्तिः—"भ्रूभंगे रचितेऽपि, दृष्टिरधिकं सोत्कंठमुद्वीक्षते; रुद्धायामपि वाचि, सस्मितमिदं दग्धाननं जायते । कार्कश्यं गमितेऽपि चेतसि, तनू रोमांचमालंबते; दृष्टे निर्वहणं भविष्यति कथं मानस्य तस्मिन् जने ॥" ( २८ ) इति । ७२० ॥ बहुपुरुषसेव्यत्वं वेश्यावृत्तिः सा विशिष्टगुणत्वात् अत्याज्या इति युक्त्या प्रशंसति जीव्यत इति । यया कयाऽपि वृत्त्या जीवितुं शक्यमेव, अतः सज्जनैः असकृत् निंदितां, यथोक्तं चाणक्यराजनीतिसारे—" पराधीना निद्रा, परपुरुषचित्तानुसरणं, मुदा शून्यं हास्यं, रुदितमपि शोकेन रहितम् । पणे न्यस्तः

---

७२० मार्गे ( गो. का )

कण्टकिनः कटुकरसान् करीरबदरादिविटपतरुगुल्मान् ।
उपभुञ्जाना करभी दैवादाप्नोति मधुरमधुजालम् ॥ ७२२ ॥
का स्त्री नम्रणयिवशा, का विलसितयो मनोभवविहीनाः ।
को धर्मो निरुपशमः, किं सौख्यं वल्लभेन रहितानाम् ॥७२३॥

---

कायः, करजदशनैर्भिन्नवपुषामहो कष्टा वृत्तिर्जगति गणिकानां बहुभया ॥" (७।१६) इति । इमां अविवेकेन बहुपुरुषभोगरूपां रूपाजीवावृत्तिं धिक् । तदा सा किं न त्यज्यते इति शंकायां समाधानमाह तदिति । तत्तु भुज्यमानानां बहूनां मध्ये कोऽपि एकः अभीष्टः रमणो भाग्यवशात् प्राप्तो भविष्यति इति बुद्ध्या इत्यर्थः । पूर्वमपि इदमेव उक्तं "आर्यजननिंदितानां" इत्यत्र ( आ. ५४६ ) "बहुकुसुमरसास्वादं" इत्यत्र (आ. ५५२) च ॥ हेत्वलंकारापरनामा काव्यलिंगमलंकारः, दूषितेऽपि वेश्याजीवने गुणविशेषकल्पनामुखत्वात् लेशालंकारो व्यंग्यश्च ॥७२१॥ एतमेवार्थं अप्रस्तुतप्रशंसालंकृत्या संवदति कंटकिनः इति । कटुकः कषायः रसः आस्वादः येषां तादृशान्, करीरः 'केर' इति भाषायां प्रसिद्धः पत्ररहितः वृक्षः, बदरः 'बोर' इति प्रसिद्धः वृक्षः, तौ आदिः येषां तादृशाः, आदिना शाल्मलिबब्बुलपीलुखदिरादयः गृह्यन्ते, विटपाः शाखादिविस्तारवन्तः वृक्षाः, तरवः वृक्षसामान्ये, गुल्माः काण्डशून्यवृक्षजातिमन्तः, तान् उपभुञ्जाना तेषां पत्रकंटकादीनां भक्षणं कुर्वन्ती इत्यर्थः, करभाणां कंटकभोजित्वं प्रसिद्धं, यथोक्तं—"अवेक्षते केलिवनं प्रविष्टः क्रमेलकः कण्टकजालमेव ।" ( विक्रमांकचरितकाव्ये १।२९ ) इति । करभी उष्ट्री, दैवात् दिष्ट्या भाग्यवशात्, मधुरं मिष्टं स्वादु, मधुजालं क्षौद्रस्य जालं समूहं मधुच्छत्रं 'मधपुडो' इति प्रसिद्धं, तं प्राप्नोति ॥ तथा चोक्तं—" करभदयिते, यत्तत्पीतं सुदुर्लभमेकदा मधु वनगतं तस्यालाभे विरौषि किमुत्सुका । कुरु परिचितैः पीलोः पत्रैर्धृतिं मरुगोचरैः, जगति सकले कस्यावाप्तिः सुखस्य निरन्तरम् ॥ " इति ॥ ७२२ ॥ प्रश्नमुखेन प्रासंगिकं उपसंहरति का इति । नम्रणयिवशा भर्त्रधीनत्वरहिता स्वतंत्रा स्त्री का, तादृशी न नारीनामयोग्या इत्यर्थः । काः च विलसतयः विलासाः, पूर्वं व्याख्याताः ( आ. ४७७), मनोभवेन कामेन विहीनाः रहिताः, काका न केऽपि, कामविहीनाः विलासाः विलासाभासा एव इत्यर्थः । कश्च धर्मः आचारादिः, निरुपशमः निर्गतः उपशमः तृष्णाक्षयः शांतिः वा यस्मात् सः, यस्मात् धर्मात् शांतिः न भवति न स धर्म इति नाम अर्हति इति भावः । वल्लभेन प्रियेण, रहितानां तद्विनाभूतानां, किं, सौख्यं

---

७२३ का श्रीरप्र° (५)

स्वाच्छन्द्यफलं बाल्यं, तारुण्यं रुचिरसुरतभोगफलम् ।
स्थविरत्वमुपशमफलं, परहितसंपादनं च जन्मफलम् ॥ ७२४ ॥

---

सुखभावः, काक्वा न किमपि । अत्र प्रतिदलं विनोक्तिः अलंकारः, " विनोक्ति-श्चेद्विना किंचित्प्रस्तुतं हीनमुच्यते । " इति ( कुवलयानंदे ) तल्लक्षणात्, प्रकृते च प्रश्नानां आक्षेपत्वेन हीनत्वे पर्यवसानात् ॥ ७२३ ॥ द्वाभ्यां स्वस्याः तत्पुनरनुसंधान-प्रवृत्तौ हेतुमाह, तत्र स्वाच्छंद्येत्याद्यया स्वसख्याः प्रासंगिकोक्तिमनुवदति । इयं चार्या संसारोपनिषद्रूपा एतत्प्रबन्धललामभूता, यत्र जीवनपरिमितिभूतस्य त्रिविधस्य वयसः जीवनस्य च सारसर्वस्वं प्रकटीकृतम् ॥ तत्र—"वयस्तु त्रिविधं बाल्यं मध्यमं वार्धकं तथा । ऊनषोडशवर्षस्तु नरो बालो निगद्यते ॥ मध्ये षोडशसप्तत्योर्मध्यमः कथितो बुधैः॥ चतुर्धा मध्यमं प्राहुर्युवा द्वात्रिंशतो मतः । चत्वारिंशत्समा यावत्तिष्ठेद्वीर्यादिपूरितः । ततः क्रमेण क्षीणः स्याद्यावद्भवति सप्ततिः ॥ ततस्तु सप्ततेरूर्ध्वं क्षीणधातुरसादिकुः । ···कासश्वासादिभिः क्लिष्टो वृद्धो भवति मानवः ॥" इति भावप्रकाशे ।( युवा तरुणः।) ( "बाल्यं स्यात्पंचमाब्दान्तं पौगण्डं दशमावधि । कैशोरमापंचदशाद्यौवनं स्यात्ततः परम् ॥ " इति ।) केचित्तु यावत्यो वृद्धिमत्योऽवस्थाः ताः सर्वाः राशीकृत्य ' प्रथमं वयः,' यास्त्वपचयवत्यः ताः सर्वाः राशीकृत्य ' द्वितीयं वयः,' इति वयोद्वयं व्यवस्था-पयंति । अन्ये तु कौमारयौवनमध्यत्ववृद्धत्वानीति चत्वारि । केचित् बाल्यमध्यत्ववृद्ध-त्वानीति त्रीणि, तत्र यौवनं मध्यवयसः पूर्वार्धान्तःपाति इति बोध्यम् ॥ बालः बलते प्राणिति इति बालः, तस्य भावः बाल्यं शैशवं, तच्च स्वाच्छन्द्यं स्वः छन्दः अभिलाषः यस्य स स्वच्छंदः स्वमनोवृत्त्यनुवर्ती स्वतंत्रः, तस्य भावः स्वाच्छन्द्यं, तदेव फलं समृद्धिः कार्यं वा यस्य तत्, तादृशं इत्यर्थः॥ तारुण्यं तरुणः तरति प्लवते प्रमोदसलिले इति तरुणः, तस्य भावः तारुण्यं यौवनं, तदपि मुग्धत्वमध्यमत्वप्रौढत्वभेदैः त्रिविधम् । तत्तु रुचिरः मनोरमः, यः सुरतस्य तरुणेन तरुण्या वा संप्रयोगस्य, भोगः सुखं, तदेव फलं यस्य तत् तादृशम् ॥ स्थविरत्वं वार्धक्यं; उपशमः ज्ञानबलेन बाह्याभ्यन्तरेन्द्रियव्यापारोपरमः स एव फलं यस्य तादृशं, तथा च कामसूत्रे—" कामं च यौवने ( २।१।२।३ ) स्थविरे धर्मं मोक्षं च " ( ४ ) इति ॥ जन्मनः देहधारणस्य समग्रस्य जीवनस्य वा, फलं तु, परेषां अन्येषां यत् हितं पथ्यं लाभदं वा, तस्य निष्पादनं करणम्; तथा चोक्तं—"येन केनाप्युपायेन यस्य कस्यापि देहिनः । सन्तोषं जनयेद्राम तदेवेश्वरपूजनम् ॥" इति श्रीयोगवासिष्ठे ॥ तथा—" क्षणक्षयिणि कायेऽस्मिन्नलक्ष्यपरिणामिनि । परोपकारसारैव

---

७२४ सुचिरसुरत ( गो )

अभिदधतीमिदमालीमवकर्ण्य गृहीतयेव भूतेन ।
यौवनसुखेन सार्धं मयैव यूयं परिच्छिन्नाः ॥ ७२५ ॥
अधुनाऽनुतापपावकमध्यगता पच्यमानसर्वाङ्गी ।
निष्फलजन्मप्राप्तिर्जीवाम्युच्छ्वासमात्रेण ॥ ७२६ ॥
स्थानेषु येषु युष्मत्संगतया क्रीडितं चिरं धृत्या ।
तानि खलु वीक्षमाणा भवामि कण्ठस्थितप्राणा ॥ ७२७ ॥

---

जन्मयात्रा शरीरिणाम् ” ( बोधि० कल्प० १०८।१७४ ) इति ॥ एतादृशानि इमानि शोभन्ते इति फलितार्थत्वात् समुच्चयालंकारो व्यंग्यः ॥ ७२४ ॥ इदं गतार्यास्थं, अभिदधतीं वदन्तीं, आली ‘आलिः’ अप्यत्र तां सखीं, श्रुत्वा, भूतेन अधोमुखादिः पिशाचभेदः रुद्रानुचरः भूतः तेन, गृहीतया आक्रान्तया संचरितया इव, उत्प्रेक्षा, सावेशं इति भावः, मयैव, यूयं बहुमाने बहुवचनं, यौवनसुखेन सह, ] परिच्छिन्नाः अवधित्वेन गृहीताः [ प्राप्तसंगमसुखाः इति यावत् । युष्मद्ग्रहणेन यौवनसुखं अपि गृहीतं अभूत् इति भावः । सहोक्तिः अलंकारः, “ सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम् । ” इति ( काव्यप्रकाशे १०।११२ ) तल्लक्षणात् ॥ ७२५ ॥ इतः षट्केन नायकहृदयं आर्द्रीकर्तुं स्वविरहावस्थानादिकं वर्णयति । तत्र पश्चात्तापो नाम नाट्यालंकारः, तदुक्तं–“ अकार्यं सहसा कृत्वाऽकृत्वा कार्यमथापि वा । संतापो मनसो यस्तु पश्चात्तापः स कीर्तितः॥” इति। तत्र तद्विरहेण जातां व्याध्याख्यां अष्टमीं विप्रलंभावस्थामादौ एव कथयति अधुनेति। अधुना वर्तमाने विरहकाले, अनुतापः पश्चात्तापः– “ चिरसंमोहशयनादुत्थितस्य य आत्मनः । हाहाकारोऽनुतापः स्यात्स्वकर्मस्मृतिसंभवः ॥” इति लक्षितः । स एव अंतःकरणादिदाहकत्वात् अग्निः, तस्य मध्यगता सर्वतः दह्यमाना इति अर्थात्, अत एव पच्यमानेत्यादि, अत एव निष्फलेत्यादि व्यर्थजीविता, उच्छ्वसितमात्रेण प्राणनक्रिययैव जीवामि, केवलं प्राणिम्येव न तु किंचिदपि अन्यत् कृत्यं निर्वर्तयामि इत्यर्थः ॥ “ संतापवेदनाप्रायो दीर्घश्वाससमाकुलः । तनूकृततनुव्याधिरष्टमोऽयं स्मृतो, यथा ॥” ( २।१४ ) इति शृंगारतिलके ॥ ७२६ ॥ स्मरणाख्यां तृतीयां स्मरावस्थामाह स्थानेष्विति । तल्लक्षणं तु–“ अर्थानामनुभूतानां देशकालानुवर्तिनाम् । सान्तत्येन परामर्शो मनसः स्यादनुस्मृतिः ॥ ” इति रसार्णवसुधाकरे ॥ यत्र धृत्या मनस्तुष्ट्या सौख्येन वा, “तृप्तिधृतितुष्टयः” इति “धृतिः सौख्येऽपि धारणे” इति

---

७२५ ‘मालीमवगम्य गृहीतयौवनभृतेन ( गो. का ) [ पाठः अशुद्धः ] ७२६ जीवस्यु° ( का ) । ‘म्युच्छ्वसित ( गो. का )

अन्यवशेन विसंज्ञा कृतभूषा यन्त्रसूत्रसञ्चारा ।
दारुमयीव प्रतिमा विदधामि विडम्बना बह्वीः ॥ ७२८ ॥
यदि नामोदरभरणप्राप्त्यै कुरुतेऽन्यपुष्पसंश्लेषम् ।
तदपि न पुष्टिर्भृङ्ग्या अपिबन्त्या अ(?आ)रविन्दमकरन्दम् ७२९॥
आस्तामपरो लोकः क्रीडापेक्षी परापदि प्रीतः ।
व्यसनार्णवे पतन्ती न वारिता परिजनेनापि ॥ ७३० ॥

---

च यादवः, दीर्घकालं क्रीडितं रतं, तानि स्थानानि । कण्ठस्थितप्राणा मृतप्राया, भवामि इति भूतस्य प्रत्यग्रवत् दर्शने वर्तमानप्रयोगः, अभूवं इत्यर्थः ॥ तथाहि— "तेष्वेव देशेषु मनोहरेषु, तेष्वेव पुष्पाकरवासरेषु । एकेन केनापि विना, जनस्य सर्वं विषादास्पदतामुपैति ॥" ( बोधिसत्त्वाव० ६८।९८) इति ॥ भाविकालंकारः, "भाविकं भूतभाव्यर्थसाक्षात्कारस्य वर्णनम् ।" इति ( कुवलयानंदे १६० ) लक्षणात् ॥७२७॥ जडताख्यां नवमीं दशामाह अन्येति ।] विसंज्ञा निश्चेतनप्राया ।[कृतभूषा अन्यैः आरोपितवस्त्रभूषणा, यंत्रसूत्रसंचारा यंत्रेण सूत्रैः संचारः चलनवलनादिः यस्याः सा, दारुमयी काष्ठनिर्मिता प्रतिमा स्त्र्याद्याकारा, यंत्रपुत्तलिका इत्यर्थः, इव,अन्येषां परिजनादीनां वशेन तत्तंत्रतया, यतः स्वयं विसंज्ञा, यथोक्तं भागवते " यथा दारुमयी योषिन्नृत्यति (न्ती) कुहकेच्छया । " इति, अहं, बह्वीः अनेकाः विडंबनाः हासकारणानि भावरहितत्वात् तादृश्यः चेष्टाः इत्यर्थः, कार्ये कारणारोपात्; विदधामि करोमि । पूर्ववत् भाविकालंकारः ॥ अस्याः दशायाः उपान्त्यदशात्वात् तव अप्राप्तौ दशमी मरणावस्था सन्निहितैवासीत् इति ध्वन्यते ॥ ७२८ ॥ स्वस्याः वेश्यात्वेन अन्यसंभोगसंभवेऽपि न अन्यत्र तादृशी तुष्टिः यादृशी प्रकृतकामुकसंयोगेन इति दौर्भाग्यं गम्यौपम्येन प्रकाशयंती प्राह यदीति । नामेति संभावनायाम् । संश्लेषं संयोगम् । पुष्टिः पोषणं वृद्धिः वा । अरविंदस्य कमलस्य मकरंदं परागं, " मकरंदो मरंदश्च मधु पुष्परसाह्वयम् । पौष्पं रजः परागः स्यान्मधूली धूलीका च सा ॥" इति राजनिघण्टौ॥ अप्रस्तुतप्रशंसालंकारः स्पष्टः, तेन च स्वस्याः प्रकृतं कामुकं विहाय अन्येभ्यः न पुष्टिः तुष्टिः वा इति सूचितम् ॥ इयं संगीतिः नाम आर्याभेदः ॥ ७२९ ॥ स्वांगीकाराय तत्करुणायाः उद्बोधनाय आह आस्तामिति । त्वां परित्यज्य, व्यसनार्णवे दुःखसागरे पतंती अहं, परिजनेन स्वबंधुभृत्यादिभिः, अपि, न वारिता न निषिद्धा, तर्हि, आस्तामपरो लोकः अविशेषेण

---

७२८ कृतभूषणवस्त्रपत्रसंचारा ( का ) ७२९ मधुरवृन्दमकरन्दम् ( गो. का ) ७३० क्रीडापेक्षापरो यदि प्रीतः–व्यसनान्तरे ( का ) । जनेनास्मि ( प )

किं वा बहुभिः कथितैः, सम्प्रति हि मयाऽपि नियमिता बुद्धिः।
स्थास्यामि सन्नियुक्ता भवद्गृहे प्रेष्यभावेन' ॥ ७३१ ॥
इति नेत्रादिविकारैर्वशमुपनीतं प्रलीनधैर्यास्त्रम्।
मारग्रहाभिभूतं परिमृष्टप्राङ्निराकृतिस्मरणम् ॥ ७३२ ॥

---

सर्वजनः, किमु वाच्यं परेपि बहिर्मुखा इत्यर्थः, यः लोकः जनः, प्रायः, क्रीडापेक्षी खेलाजनितसुखकुतूहली स्वसौख्याभिलाषी इति भावः, न केवलं एतावत् अपि तु, परेषां विपत्तौ, प्रीतः हर्षमापन्नो भवति; सामान्यलोकस्वभावोऽयम् । एवंस्थितौ त्वत्त्यागः स्वपरजनैः अनिषिद्धः ममैव परं दुःखाय जातः, अतः पुनर्ग्रहणाय अनुकं पनीया इति भावः ॥ काव्यार्थापत्तिः अलंकारः, "कैमुत्येनार्थसिद्धिश्चेत्काव्यार्थापत्ति-रुच्यते।" (८।२६१) इति साहित्यसारे तल्लक्षणात् ॥ ७३० ॥ पुनःसंग्रहणाय नानाप्रकारेण उदितवक्तव्या स्वाभीष्टं प्रकटयन्ती उपसंहरति किमिति। संप्रति इदानीं हिः निश्चये। बुद्धिः मतिः, नियमिता नियंत्रिता, पूर्ववत् दुर्जनवागपनेया अन्यासक्ता च न भविष्यामि इति भावः । भवद्दर्शनं विना जीवितुमशक्ताऽहं भवद्गृहे सन्नियुक्ता विनियोजिता, ] प्रेष्यभावेन दास्येन, [ अपि इति शेषः, स्थास्यामि वर्तिष्ये, यदि प्रियात्वेन न स्वीकृता तथापि इति भावः; "पतिकुले तव दास्यमपि क्षमम्।" ( शाकुंतले ५।२७ ) इति न्यायेन। अनेन अनुनयवचनस्य अवश्यकर्तव्यता प्रकाश्यते। यतः "सापराधेऽपि महतां न मन्युमलिनं मनः।" इति। अत्रापि पूर्वं उक्तं—" विज्ञापयाम्यतस्त्वां " ( आ. ५१८ ) इत्यादि ॥ ७३१ ॥ इतीत्यादियुग्मेन अनुसंहितस्य पुनर्विमोक्षणोपदेशं प्राह। इति एवंप्रकारकवचनपूर्वं, नेत्रादिविकारैः आदिना भ्रूमुखहस्तादयः संगृह्यन्ते, तेषां विकारैः अनुरागसूचकैः मोहोत्पादकैः विलासैः, प्रलीनं नष्टं धैर्यरूपं अस्त्रं स्वरक्षकं आयुधं यस्य तं विह्वलीकृतं, अत एव वशं उपनीतं स्वायत्तीकृतं, यथोक्तं—"यासां नाम्नाऽपि कामः स्यात्संगमं दर्शनं विना। तासां दृक्संगमं प्राप्य यन्न द्रवति कौतुकम् ॥" इति, "हृदयं हरंति नार्यो मुनेरपि कटाक्षविक्षेपैः। दोर्मूलनाभिदेशं निदर्शयंत्यो महाचपलाः ॥" ( हलायुधकृतपिंगलसूत्रवृत्तौ ) इति, "हरंति धैर्यं वितरंति मोहमेष स्वभावः स्मरविभ्रमाणाम्।" ( बोधिसत्त्वावदान० ६४।७ ) इति च। मारः कामदेवः एव ग्रहः बालग्रहः तेन अभिभूतं गृहीतं, "ग्रहः सूर्यादिनिर्बन्धोपरागेषु रणोद्यमे। ग्रहणे पूतनादौ च सैंहिकेयेऽप्यनुग्रहे ॥"

---

७३१ संप्रति नियमेन नि' ( प )। प्रेष्यकार्येषु ( प ) ७३२ प्रलीनधैर्यस्य ( गो. का ) [ अनन्वितः पाठः ]

प्रादुर्भूतरिरंसं क्षणेक्षणे जघनदेशगतदृष्टिम् ।
पक्वाम्रमिव विमोक्ष्यसि पूर्ववदाचूष्य सुभ्रु निःशेषम् ॥ ७३३ ॥
( युग्मम् )

स्वशरीरामिषदिग्धं वक्रस्मितदृष्टिपातवाग्बडिशम् ।
प्रक्षिप्याकृष्य जडं स्फुरणेन विवर्जितं सुपरिपुष्टम् ॥ ७३४ ॥

---

इति विश्वलोचनः । अत एव परिमृष्टं प्रमार्जितं प्राङ्निराकृत्याः पूर्वकृततिरस्कारस्य स्मरणं यस्य, तादृशं कामुकम् । ग्रहाभिभूतस्य च विस्मृतिः जायते इति. प्रसिद्धमेव ॥ ७३२ ॥ पुनश्च प्रादुर्भूतरिरंसं संजातरमणेच्छं, अत एव तत्प्रदर्शनाय, क्षणेक्षणे वारंवारं, अनेन लोलाख्यः दृष्टिविकारः सूचितः, तथा च "धारावाहिकसंचारो यस्य तल्लोलमुच्यते ।" इति, जघनदेशे गता दृष्टिः नेत्रं यस्य तं, जघनस्थल्याः कामक्रीडाभूमित्वात्, जघनं पूर्वं व्याख्यातं ( आ.५८० ), तच-"भगस्य भालं जघनं विस्तीर्णं तुंगमांसलम् । मृदुलं मृदुरोमाढ्यं दक्षिणावर्तमीडितम् ॥" इति वर्णितम् ; ) तादृशं कामुकं अनुसंहितं रतिभोगप्रणयिनं, पक्वाम्रं परिणताम्रफलं इव, निःशेषं आचूष्य तस्य धनरूपरसं निष्कृष्य स्वात्मीकृत्य, हे सुभ्रु शोभनभ्रूमति, अनेन तस्य अवश्यं वशीकरणादि भावि इति सूचितं, पूर्ववत् यथा भूतकाले एकवारं कृतं तथा, विमोक्ष्यसि स्वयं परित्यक्ष्यसि, अपरेण दास्यादिना वा निष्कासयिष्यसि ॥ तदुक्तं-"गम्यं निरूप्य सा स्फुटमनुरक्तेवाभियुज्य रञ्जयति । आकृष्टसकलसारं क्रमेण निष्कासयत्येनम् ॥" इति शृंगारतिलके ( १२।४० ) । तथाच नीतौ-"वृक्षं क्षीणफलं त्यजंति विहगाः, शुष्कं सरः सारसाः, निर्द्रव्यं पुरुषं त्यजंति गणिका, भ्रष्टं नृपं सेवकाः ( 'मंत्रिणः' ) । निर्गन्धं कुसुमं ( 'पुष्पं पर्युषितं' ) त्यजंति मधुपा, दग्धं वनान्तं मृगाः, सर्वः स्वार्थवशाज्जनोऽभिरमते, तत्कस्य को वल्लभः ॥" इति ॥ ७३३ ॥ उपदिष्टं वैशिकशास्त्रसिद्धान्तं दृढं आधातुं उपसंहारे पुनरपि तदेव रूपकालंकारद्वारा युग्मेन अनुवदति स्वशरीरेत्यादिना । ] 'अशरीरः' [ इति पाठे ] कामः, [ स्वशरीरं एव ] आमिषं भोग्यवस्तु, [ "आमिषं भोग्यवस्तुनि" इति केशवः, वस्तुतः अत्र मांसं, "क्लीबमामिषमुत्कोचे मांसे संभोगलोभयोः । आमिषं सुंदराकाररूपादौ विषयेऽपि च ॥" इति विश्वलोचने, ] तेन दिग्धं योजितं, [यत् ब('व')डिशं मत्स्यबंधनं 'गल' इति भाषायां, तत्र आरोपविषयस्तु वक्रेत्यादिकमारभ्य वागन्तः, तत्र वक्रेतिविशेषणं

---

७३३ दाचूष्य निः ( का ) ७३४ स्वशरीरा ( प. गो २ ) । चक्रमितदृ... तमस्खलितम्-प्रक्षिप्य क्षिप्रतरं ( का ) [ हीनार्थकः पाठः ] । सुपरिदिष्टम् ( प )

हस्तद्वयान्तरागतमुपचारपरिव्ययेन संस्कृत्य।
भुक्त्वा यावन्मांसं त्यक्ष्यसि चर्मास्थिशेषितं मत्स्यम् ॥ ७३५ ॥
शृणु सुश्रोणि यथाऽस्मिन् कमलेश्वरपादमूलमञ्जर्या।
प्रवराचार्यदुहित्रा राजसुतश्चर्वितश्च मुक्तश्च ॥ ७३६ ॥

---

स्मितादित्रयेण संबध्यते, तथा च वक्रस्मितं उपहासव्यञ्जकं स्मितं, वक्रः दृष्टिपातः कटाक्षः, वक्रा वाक् च वक्रोक्तिः, तान्येव बडिशं; तत् प्रक्षिप्य प्रयोज्य, जडं बुद्धिरहितं विवेकहीनं स्फुरणेन विवर्जितं, यथा बडिशलग्नो मीनः निश्चेष्टो भवति तथा वेश्यालग्नः कामुकोऽपि अन्यव्यापाररहितो जायते इति तात्पर्यं, सुपरिपुष्टं पीनं कामुकपक्षे प्रभूतद्रव्यं, तादृशं आकृष्य स्वलग्नं कृत्वा, ॥ ७३४ ॥ हस्तद्वयान्तरागतं हस्तद्वयस्य अन्तरा मध्ये आगतं प्राप्तं, कामुकपक्षे हस्तद्वयस्य अन्तरे मध्यवर्तिभागे उरसि इति यावत्, आगतं स्नेहेन पतितं, यद्वा अशक्यमोक्षं गृहीतं, तादृशं मत्स्यं कामुकं च,] उपचारः अनुकूलाचरणं स एव परिव्ययः संविधानं, [वेसवारः 'मसाला' इति भाषायां, तेन संस्कृत्य तस्य संस्कारं दत्त्वा तेन स्वादुतरं कृत्वा इत्यर्थः, तं यावन्मांसं यावत् मांसं स्यात् तावत्, भुक्त्वा संभुज्य, कामुकपक्षे यावत् द्रव्यलवः स्यात् तावत् भुक्त्वा, चर्मास्थिशेषितं अभक्ष्यभागशेषं मत्स्यं कामुकपक्षे च लोकोक्त्यनुसारेण निर्द्रव्यं इत्यर्थः, त्यक्ष्यसि ॥ एकदेशविवर्तिरूपकं अलंकारः, अत्र वक्रस्मितादौ बडिशत्वाद्यारोपः शाब्दः, मत्स्यस्य च कामुकारोपः आर्थः इति ॥ मत्स्यरूपकमूलः प्रकारान्तरेण श्लोकः भर्तृहरेः शृंगार-शतके (५२)—"विस्तारितं मकरकेतनधीवरेण स्त्रीसंज्ञितं बडिशमत्र भवाम्बु-राशौ। येनाचिरात्तदधरामिषलोलमर्त्यमत्स्यान् विकृष्य विपचत्यनुरागवह्नौ ॥" इति ॥ तथा च समयमातृकायां अपि—"प्राप्ते कान्ते कथमपि धनादानपात्रे च वित्ते, त्वं मे सर्वं त्वमसि हृदयं जीवितं च त्वमेव। इत्युक्त्वा, तं क्षपितविभवं कम्बुकाभं भुजंगी त्यक्त्वा, गच्छेत्सधनमपरं, वैशिकोऽयं समासः ॥" (५।८९) इति ॥ ७३५ ॥ एवं महता प्रबन्धेन विशीर्णप्रतिसंधानं, चूषिताम्रफलन्यायेन तत्क्षेपणं च उपदिश्य, दृष्टान्तविशेषेण उपदेशदार्ढ्याय मंजर्याख्यानं आप्रबन्धान्तं मालतीं श्रावयितुं विक-राला उपक्रमते शृण्वित्यादिना। शृणु इतः परं आकर्णय, सुश्रोणि शोभना श्रोणिः श्रोणी वा कटिभागः नाभ्यधोगः उदरजघननितंबात्मकः मध्यभागः यस्याः सा सुश्रोणिः तत्संबुद्धौ, सावधानं आश्रोतुं संबोधनम्। यथा येन प्रकारेण, अस्मिन् वाराणसीनगरे,

---

७३५ मुपचारव्ययेन सत्कृत्य (का)। त्यक्ष्यति (का) ७३६ कमलेश्वर (प)। श्चवितश्च (प)। इदानीं मञ्जर्याख्यानमाह (प)

"आसीच्छ्रीसिंहभटो नाम्ना नृपतिर्महीयसां श्रेष्ठः।
तस्यात्मजोऽधितस्थौ(?ष्ठौ) निवेशनं देवराजसंबद्धम् ॥ ७३७ ॥
स कदाचिद्वृषभध्वजदिदृक्षया परिमितासपरिवारः।
अनुवर्तमान आगात्तारुण्योदीर्णवेषचरितानि ॥ ७३८ ॥

---

प्रवराचार्येतिनाम्ना ख्यातस्य कस्यचित् दुहित्र्या पुत्र्या, मंजर्या तदाख्यया, सा विशिष्यते कमलेश्वरपादमूलेति समासान्तःपातिना पदेन, कमलेश्वरपादाः केचन मठाधिपाः स एव मूलं कारणं जनयिता यस्याः सा, अनेन मंजर्याः व्यभिचारोत्पन्नता द्योतिता, तेन साऽपि व्यभिचारिणी इति सूचितम्। राजसुतः सिंहभटनाम्नः कस्यचित् राज्ञः पुत्रः समरभटनामा ( आ. ९६० ), चर्वितः संभुक्तः, मुक्तः अनंतरं त्यक्तश्च ॥ ७३६ ॥ इतः मंजर्याख्यानं १०५६ तमीं आर्यां यावत् ॥ महीयसां महत्तमानाम्। ] श्रेष्ठः अग्रगामी [ प्रधानतम इत्यर्थः । देवराजसंबद्धं देवराजः कश्चित् राजा तेन संबद्धं तदीयं इत्यर्थः, ] निवेशनं शिबिरं, [ अधितष्ठौ अधिकारित्वेन तत्र स्थितः इति भावः। 'देवराष्ट्रसंबद्धं' इति पाठः सरलः, देवराष्ट्रः 'देवगिरि'नाम्ना प्रसिद्धं दाक्षिणात्यराज्यं, तेन संबद्धं तद्विषये वर्तमानं इत्यर्थः, निवेशनं नगरं, अधितष्ठौ मुख्याधिकारित्वेन पालयामास इत्यर्थः ॥ ७३७ ॥ सः राजसुतः, तारुण्योदीर्णवेषचरितानि तारुण्येन तरुणावस्थया उदीर्णानि दीप्तानि वेषः मनोहरवस्त्रालंकारादिधारणं चरितानि तरुण्यवलोकनप्रलोभनादीनि कर्माणि च, तानि अनुवर्तमानः सेवमानः, कदाचित् कस्मिंश्चित् काले, वृषभध्वजस्य शिवस्य प्रकृते श्रीकाशीविश्वनाथस्य दिदृक्षया दर्शनेच्छया, परिमिताप्तपरिवारः परिमितः अल्पसंख्याकः आप्तः च बंधुः बंधुवर्गश्च परिकरः यस्य एवंभूतः, ७४२ आर्यापर्यन्तं वर्ण्यमानः राजसुतः 'गंभीरेश्वरदास्यां' (आ. ७४३ ) इत्यारभ्य 'पानिकां व्रजति' ( आ. ७५४ ) इत्यन्तं यत् 'प्रकामवाच्यं' तत्र 'प्रसक्ते'त्यादिविशिष्टं 'देवकुलं' ( आ. ७५५ ) आगात् आगतोऽभूत् इत्यन्वयः ॥ वृषभध्वजः—वृषभः ध्वजे यस्य सः शिवः, तथाहि महाभारते तत्कथा—आदिसर्गे श्वेतवर्णाः गावः दर्पयुक्ताः चरंत्यः शिवे तपसि आस्थिते समन्ततः स्थानभ्रंशं चक्रुः, तदपकारेण क्रुद्धेन ताः दग्धाः, तदनंतरं वृषभेण शिवः संप्रसादितः; ततः गावः शान्ताः वर्णभेदत्वं आगताः, परमेश्वरेण च

---

७३७ आसीत् सिंहटनामा प्रसिद्धनृपतिर्महीयसा श्रेष्ठः (प) सिंहपटो ( गो. का ) महीयसां प्रष्ठः ( गो )। देवराष्ट्रसंबद्धं ( प )। इतः पपुस्तके श्लोकानां एकत्वमारभ्य भिन्नाङ्कपातः। ७३८ परिचारः ( प )। दीर्घ ( प ) वेश ( गो २ का )

मूर्धत्रिभागसंस्थितबृहदम्बरचीरकेशसंयमनः ।
अल्पाच्छगात्ररागो घनकुङ्कुमलिप्तकर्णकेशाग्रः ॥ ७३९ ॥
सिद्धार्थबीजदन्तुरललाटतिलकोपयुक्तताम्बूलः ।
श्रवणनिवेशितकुण्डलटिट्टिभकप्रायकन्धराभरणः ॥ ७४० ॥
केयूरस्थानगतस्वर्णावृतमन्त्रगर्भजतुगुडकः ।
मणिबन्धनविन्यस्तप्रचलाङ्कुरजातरूपमणिमालः ॥ ७४१ ॥

"श्वेतोऽयं वृषभो देवि सर्वसंस्कारसंयुतः । वाहनत्वे ध्वजत्वे च तदा प्रभृति योजितः ॥" इति । अपिच "शुद्धस्फटिकसंकाशो धर्मरूपो वृषः स्मृतः ।" इति शैवागमात् शुक्लधर्मरूपः वृषः तद्रूपणार्थं ध्वजे अंकितः । स्पंदाख्यशैवमतभेदे तु वृषः ज्ञानक्रियासामरस्यात्मा धर्मः, ध्वजः लक्षणं यस्य स शिवः ॥ ७३८ ॥ तत्रादौ तस्य आपादमस्तकं तारुण्योचितं कामुकत्वप्रकाशकं वेषं चतुर्भिः वर्णयति मूर्धेत्यादिभिः । मूर्धत्रिभागसंस्थितं, बृहदंबरचीरकेशसंयमनं नाम वस्त्रखण्डनिर्मितोष्णीषं 'फेंटा' इति भाषायां, यस्य सः; मूर्ध्नः वामं दक्षिणं वा भागं विहाय तेन आवृतापरशेषत्रिभागः इत्यर्थः; त्रयो भागाः-त्रिभागाः, मूर्ध्नः त्रिभागाः मूर्धत्रिभागाः, तेषु सम्यक् स्थितं वर्तमानं, यत् बृहदम्बरचीरं तत्खण्डं, तेन कृतं केशसंयमनं यस्य सः; आवृतापरैकदेशशेषशिरस्कः, एवं ह्येष तरुणानां आचारः । अल्पः न तु घनः, अच्छः स्वच्छः 'अच्छा' इति भाषायां, च, गात्ररागः मुखशरीरादिवर्णशोभावर्धनार्थं उपयुक्तं सुगंधि रक्तचूर्णद्रव्यं रक्तोद्वर्तनद्रव्यं, यस्य सः; घनेन निबिडेन कुंकुमेन केशरेण शोभावर्धनाय लुलितत्ववारणाय स्थैर्याय च लिप्तानि दिग्धानि कर्णयोः केशाग्राणि कर्णसमीपवर्तिनां केशानां अग्रभागाः काकपक्षाः यस्य सः तादृशः ॥ ७३९ ॥ तथा सिद्धार्थानां श्वेतसर्षपाणां 'सफेत सरसव' इति भाषाप्रसिद्धानां यानि बीजानि निस्तुषीकृताः श्वेतसर्षपाः इत्यर्थः, तैः दंतुरं उन्नतावनतं ललाटतिलकं यस्य सः चासौ, उपयुक्तताम्बूलः भुक्तवीटिकः च, तादृशः । तथा श्रवणयोः निवेशितौ कुण्डलाख्यौ आभरणौ येन स चासौ, टिट्टिभप्रायकन्धराभरणश्च । कुण्डलं कुण्डं लक्षणया तद्वत् गोलाकारादिकं लाति गृह्णाति इति कुण्डलं, तन्नाम्नैव प्रसिद्धः कर्णाभरणविशेषः । अल्पः टिट्टिभः टिट्टिभकः टिटिभकः वा 'टीटोडी' इति भाषानाम्ना प्रसिद्धः क्षुद्रपक्षिविशेषः, तदाकारः सुवर्णखण्डोऽपि टिट्टिभकः, ते प्रायः बाहुल्येन यत्र निबद्धाः तादृशं कंधराभरणं ग्रैवेयकं ग्रीवालंकारः यस्य तादृशः । कं शिरः धारयति इति कंधरा ग्रीवा ॥७४०॥ अपिच-केयूरं के बाहुशिरसि भूषणतां याति इति केयूरं

७३९ पूर्वत्रिभाग (गो.का) । अल्पतररागसान्द्रो घन० (गो.का) ७४१ केयूरपदनियं-

धृतवेत्रदण्डकूर्चकपरिवेष्टितसासिधेनुखड्गश्च ।
मृदुतरपटिकावरणः शब्दोल्बणचुर्चुराङ्कचरणत्रः ॥ ७४२ ॥
गम्भीरेश्वरदास्यां लग्नः किल तव वयस्यको वीरः ।
प्राप्स्यति साऽपि दुराशा वर्षत्रितयेन यन्मया प्राप्तम् ॥ ७४३ ॥

---

अंगदं बाहुभूषणविशेषः 'बाजुबंध' इति भाषायां प्रसिद्धं, तस्य स्थानं बाहोः ऊर्ध्वभागः, तत्र गतं निवेशितं, स्वर्णेन सुवर्णेन आवृतः परिवेष्टितः, रक्षार्थं भूर्जपत्रलिखितः मंत्रः गर्भे यस्य तादृशः यः जतुगुडकः लाक्षानिर्मितगुटिका, ('मादलीउं' इति भाषायां') यस्य तादृशः । तथा मणिबंधने पाणिमूले प्रकोष्ठपाण्योः संधिस्थाने 'कलाइ' इति भाषायां प्रसिद्धं, विन्यस्ताः, प्रचलाः झलज्झलायमानाः अंकुराः किरणाः येषां तादृशानां जातरूपे हेम्नि स्थितानां मणीनां हीरकादिरत्नानां मालाः पंक्तयः यस्य सः तादृशः, (एतदाभरणं 'मणिबन्धनं' इति ख्यातं 'पहोंची' इति भाषायां प्रसिद्धम्) ॥ ७० . ॥ तथा धृतः हस्ते गृहीतः यः वेत्रनिर्मितः दंडः 'सोटी' इति भाषायां, तस्य कूर्चकः शीर्षं येन सः चासौ, परिवेष्टितः कटिवस्त्रेण आवृतः बद्धः इति यावत्, असिधेनुना छुरिकया 'कटारी' इति भाषायां, सहितः खड्गः कृपाणः तरवारिः कटिस्थः यस्य च तादृशः । मृदुतरा श्लक्ष्णा, पटिका लघुवस्त्रं 'खेस' इति भाषायां, आवरणं अंगगोपनं यस्य सः । तथा शब्देन उल्बणः प्रचुरः, चुर्चुरः गमनकाले नवीनोपानजातशब्दानुकरणकः शब्दः, यद्वा शब्देषु ध्वन्यात्मकशब्देषु उल्बणः स्पष्टः यः चुर्चुर इत्ययमनुकरणशब्दः, सः अंकः चिह्नं ययोः तादृशौ चरणत्रौ पादत्राणे 'जोडा' इति भाषायां, यस्य सः ॥ ७४२ ॥ गंभीरेश्वरेत्यादिना [वृषभध्वजदर्शनार्थमागतानां] विटादीनामन्योन्यसंभाषावाक्यानि ।[काचित् स्वपरिचितं विटं वदति गंभीरेति । गंभीरेश्वरदासी इति कस्याश्चित् वेश्यायाः नाम, यद्वा गंभीरेश्वर इति कस्मिंश्चित् शिवालये लिंगे प्रतिष्ठापितस्य महादेवस्य विशिष्टं नाम, तत्पुरः नृत्यार्थं या दासी वेश्या 'देवदासी' 'भगवद्गणिका' वेत्याख्यया प्रसिद्धा, तस्यां; लग्नः आसक्तः । वयस्यकः मित्रं, वीरः इति तन्नाम । सा गंभीरेश्वरदासी,

---

त्रित ( प. स्तं ) । गतसुवर्णभृतमंत्र ( का ) । गुटिकः ( प. स्तं ) । प्रचुराङ्कुर ( गो ) प्रबलांकुर ( गो २ कापा ) प्रवालवरजात ( प. स्तं ) ७४२ °दण्ड ऊर्णकपरिवेष्टितसासिधेनुकनितंबः ( प. स्तं ) । चुंचुवाक्चर° ( प ) लुरचुकार्धच° ( स्तं ) बुर्बुराङ्क ( कापा ) । चरणान्तः ( का ) ७४३ गंभारे ( का ) । दास्या ( प. स्तं ) । [ कापूर्वार्धस्य पाठः दुष्टः ]

दर्शयति दिशः फलिता अमृतगभस्तिं करेऽवतारयति ।
सुरदेवि चन्द्रवर्मा निर्वस्तुकवाक्प्रपञ्चेन ॥ ७४४ ॥
त्वामनुयान्तं सम्प्रति पश्यामि कुरङ्गि वसुषेणम् ।
सुनिरूपिता भविष्यति विषमा गुडजिह्विका तस्य ॥ ७४५ ॥
वञ्चयति जनं योऽसौ हरिणि हरो धूर्तताभिमानेन ।
लिखति शतं दशबुद्ध्या स निमग्नस्तरलिकावर्ते ॥ ७४६ ॥

---

अपिना मद्दत् इति सूच्यते, दुराशा दुष्टा मर्यादातिक्रमात् आशा इष्टवस्तुविषयिणी इच्छा यस्याः सा, वर्षत्रितयेन वर्षत्रयसंबंधेन तदन्ते इत्यर्थः, तत् प्राप्स्यति, यत् मया प्राप्तं, वर्षत्रितयेऽपि तदिष्टानि न दास्यत्ययं, यथा तत्संबन्धेन वर्षत्रये गतेऽपि मया किंचिदपि न प्राप्तं, अर्थात् मद्दत् अग्राहितार्थैव संभुक्तसंत्यक्ता भविष्यति, इति स्वानुभवमूलकं अनुमानम् । वञ्चकः कृपणश्च सः इति इदानीं सा अर्थलुब्धा न जानाति इति भावः ॥ ७४३ ॥ काचित् सखीबोधाय स्वदुःखज्ञापनाय वा कस्यचित् विटस्य वावदूकतां वदति दर्शयतीति । भोः सुरदेवि, चंद्रवर्मा तन्नामा विटः, वर्मान्तनाम्ना सः क्षत्रियः इति सूचितं भवति, निर्वस्तुकः वस्तुशून्यः निःसारः यः वाक्प्रपंचः वाग्विस्तारः तेन, दिशः काष्ठाः, फलिताः फलवत्यः, दर्शयति; अमृतगभस्तिं अमृतवत् सुखदाः गभस्तयः किरणाः यस्य तं चन्द्रं, करे अवतारयति हस्तस्थितमिव दर्शयति । ' करेण वारयति ' इति पाठे करेण हस्तेन, वारयति आच्छादयति । दर्शयतीत्यादिपूर्वार्धे लोकोक्तिद्वयं, बहु वदति न च किंचिदपि ददाति इति भावः ॥ ७४४ ॥ काचित् स्वसखीं तत्कामुकस्य शाठ्यं स्वानुभूतं निवेदयति त्वामिति । अनुयान्तं प्रीतिप्रकाशनाय त्वां सर्वदा अनुसरन्तं, वसुषेणं अहं पश्यामि । अतः अल्पेनैव कालेन तस्य विषमा विसंवादिनी मिथ्येति यावत्, गुडजिह्विका गुडः इक्षुरसघनः इव जिह्वा अस्यां भाषायां भाषणे अस्य अस्तीति, मत्वर्थे "अतइनिठनौ" (पा. ५।२।११५) इति ठक्प्रत्ययः, "ठस्येकः" (पा. ७।३।५०) इति ठस्येकादेशः, मधुरभाषित्वं इत्यर्थः, सुनिरूपिता भविष्यति त्वयाऽपि ज्ञाता भविष्यति, यथा मया पूर्वं तत्परिचयेन ज्ञाता ॥ ७४५ ॥ काचित् कस्यचित्

---

७४४ करेण वारयति (गो. प. का) । सुरतकृति चंद्रवर्मा (का) । निर्वर्णकवा०( का ) ७४५ संप्रति यामि कुरंगाक्षि ( गो.का ) । वसुशेषम् ( का ) । भविष्यसि ( प. स्त ) । सुनिरू''' विषमं ( गो २ ) अनुरूपिका भविष्यसि विषमं ( का ) ७४६ चर्चयति जनं

गृह्णासि यत्पटान्ते मम पश्यत एव मन्द मदिराक्षीम् ।
अत आवयोरवश्यं सा वक्ष्यति नोक्तमन्तरं भवता ॥ ७४७ ॥
योऽयं गृहीतबृसिकः कुशकर्णो विधृतदण्डकाषायः ।
लोकस्पर्शाशङ्की कृतापसारो विलोकयन् पार्श्वौ ॥ ७४८ ॥

---

धनधूर्तस्य अपि वेश्यावंचनीयत्वं प्रकाशयति वञ्चयतीति । हे हरिणि । असौ प्रसिद्धः इत्यर्थः । हरः तन्नामा । धूर्तताभिमानेन कापट्यप्रावीण्याहंकारेण । कथं वंचयतीत्याह लिखतीति, शतं दत्वा अधमर्णाय स्वसंपुटे दशाधिकं शतं दत्तं इति लिखति इत्यर्थः । तरलिका काचित् मायाविनी वेश्या, सैव आवर्तः " स्यादावर्तोऽम्भसां भ्रमः " इत्यमरः, चक्रं, 'भमरा' इति भाषायां प्रसिद्धः, यत्र पतितः जनः नष्टसत्त्वो भवति इति प्रसिद्धं, तत्र निमग्नः आसक्तः सन् नष्टः नष्टसत्त्वः सः अस्ति इत्यर्थः ॥ ७४६ ॥ कश्चित् स्वसमयेन तस्यामेव वेश्यायां आसक्त सुहृदं उद्बोधयति गृह्णासीति । मम पश्यत एव यत् त्वं अन्वर्थनाम्नीं मदिराक्षीं, पटान्ते गृह्णासि विनोदाय रहसि आह्वानाय वा तद्वस्त्राञ्चलं आकर्षसि, तेन हे मंद मूर्ख आवयोः रहस्यसंबंधप्रकाशनात्, भवता न उक्तं यन्न प्रकाशितं, आवयोः अन्तरं छिद्रं एकस्यामेव आवयोः परस्परसंमत्या रतिसेवनरूपं, तत् अवश्यं अन्यत्र सा वक्ष्यति, तेन अवश्यं तव तादृशकर्मणा रहस्यभेदः भविष्यति इति भावः ॥ मदिराक्षी— मदयति इति मदिरं हर्षदायि, मदिरे अक्षिणी यस्याः सा; यद्वा मदिरावत् सुरावत् रक्ते रक्तवर्णे तद्वत्संमोहके वा अक्षिणी लक्षणया नेत्रप्रान्तभागौ यस्याः सा; यद्वा मदिराख्यं अक्षि दृष्टिः, यस्याः सा, अक्षिशब्दोऽत्र लक्षणया दृष्टिवचनः, यथा " एकस्मिन्-शयने " इत्यमरुकश्लोके " दंपत्योः शनकैरपांगवलनान्मिश्रीभवच्चक्षुषोः । " इत्यत्र । मदिरादृष्टेः लक्षणं तु—" सौष्ठवेनापरित्यक्ता स्मेरापांगमनोहरा । वेपमानान्तरा दृष्टिर्मदिरा परिकीर्तिता ॥ " इति संगीतकलिकायां; यद्वा मदिरे सुंदरे अक्षिणी यस्याः सा; यद्वा माद्यन्ति कामुकाः आभ्यां इति मदिरे अक्षिणी यस्याः सा; यद्वा मदिरे सुरापानादिव संजातमदे अक्षिणी यस्याः सा, तल्लक्षणं यथा—" आघूर्णमानमध्या या क्षामा चाञ्चिततारका । दृष्टिर्विकसितापांगा मदिरा तरुणे मदे ॥ " इति ॥ ७४७ ॥ 'योऽयं' इत्यादिभिः त्रिभिर्विशेषकेण काचित् कस्यचित् दण्डिनः वेष-

---

(प) चर्वयति जलं (स्तं) । निमज्जति त० (गो. का) । हरिनिहतो धूर्तताभि० लिखति शुभं (का) [ अर्थरहितः पाठः ] ७४७ एव नर्मदागारात् (प. स्तं) । मा वक्ष्यसि नोक्तमन्तरं भविता (प.स्तं) ७४८ गृहीतभूमिः (का) । कुमुदाकर्णो (गो.का) । विधतकाषायः (गो) [ विरुद्धार्थः पाठः ] [ अत्र का. उत्तरार्धं दुष्टम् ]

कुर्वाणो मौनव्रतमुत्पादितसकलवैष्णवप्रीतिः।
हरिशासनं प्रपन्नस्त्रिपुरान्तकदर्शनापदेशेन ॥ ७४९ ॥
स्त्रैणं पश्यति युक्त्या साकाङ्क्षं वर्जितान्यजनदृष्टिः।
कुमुदिनि मम हृदयगतं भवितव्यं व्याजलिङ्गिनाऽनेन ॥७५०॥
( अन्तर्विशेषकम् )

---

विरुद्धानाचारान् दृष्ट्वा, तं कूटं अभिज्ञाय, तस्मात् स्वमनोरथसिद्धिं निर्धारयति। अयं पुरो दृश्यमानः। ] वृसीकः यतीनां आसनम्। [ गृहीतवृसिकः गृहीता स्वीकृता वृसी ( बृषी इति वृषी इति च रूपान्तरे ) आसनं येन सः, "शेषाद्विभाषा" (पा. ५।४।१५४) इति कप्प्रत्यये "केऽणः" (पा. ७।४।१३) इति ईकारस्य इकारः। कुशकर्णः इति तस्य नाम। दंडः ( पूर्वं व्याख्यातः आ० ४९२ )। काषायः—कषायः कषायं वा रक्तवर्णः "अस्त्री कषायो निर्यासे रसे रक्ते विलेपने। अंगरागे सुगंधे च, त्रिषु स्याल्लोहितेऽपि च॥" इति विश्वलोचनः, तेन रंजितं वस्त्रं काषायम्। विधृतौ दंडकाषायौ स्वीयसंन्यासिलिंगे येन सः। लोकानां जनानां स्पर्शस्य तेषां अपवित्रत्वात्, आशंकी आशंका भयं संशयो वा तद्वान् आशंकमानः; अत एव तद्वर्जनाय, पार्श्वौ स्ववामदक्षिणदेशौ, विलोकयन् पश्यन्, कृतापसारः दूरं गच्छेत्यादिवाक्यैः दूरीकृतजनः, अनेन तस्य शुचित्वरक्षणाभिमानः सूचितः ॥७४८॥ मौनव्रतं मुनेः इदं मौनं तस्य व्रतं नियमधारणं मौनव्रतं तपः इत्यर्थः, तत् कुर्वाणः; अतः उत्पादितेत्यादि। वैष्णवाः विष्णुभक्ताः विष्णूपासकाः। तत्र हेतुः हरीत्यादि। हरिशासनं नारदपंचरात्रवैखानसादिवैष्णवागमादिकं, प्रपन्नः मोक्षप्राप्त्यै शरणं गतः, अयं दंडी वैष्णवमतावलंबी त्रिदंडी इति ज्ञेयं, स तादृशः, ] 'त्रिपुरान्तकदर्शनं वैष्णवशास्त्रं' [ इति टिप्पणी दुष्टा, शब्दार्थानन्वयात्, वस्तुतः त्रिपुरान्तकस्य त्रिपुराख्यस्य असुरस्य नाशकस्य अर्थात् महादेवस्य, दर्शनापदेशेन दर्शनव्याजेन, अस्य उत्तरश्लोकेन संबंधः ॥ ७४९ ॥ स्त्रैणं दर्शनार्थं तत्र आगतं स्त्रीसमूहं, साकांक्षं साभिलाषं यथा स्यात्तथा, युक्त्या पश्यति, स्त्रीप्रेक्षणमपि "स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम्। संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च। एतन्मैथुनमष्टांगं प्रवदंति मनीषिणः॥" इति उक्तलक्षणस्य अष्टांगमैथुनस्य अंगं इति यतेः दोषत्वेन उक्तम्। कथं पश्यतीत्याह वर्जितेत्यादि। ] वर्जिता वंचिता, [ अयं स्त्रियः पश्यति इति अपरो जनो यथा न

---

७४९ सकलविप्लवश्रद्धः ( प ) °वैष्णवश्रद्धः ( स्तं )। शासनं। प्रथयन् ( कापा ) [ न्यूनमात्रः पाठः ] ७५० अंतःकुलकम् ( स्तं )।

पश्यत्यदृश्यमानो, निरीक्षितो वीक्षते परां ककुभम् ।
ब्रूते किञ्चित्सस्पृहमभियुक्तो भवति कीलितध्वानः ॥ ७५१ ॥
न जहाति समासन्नं, नोत्सहते पार्श्वगोचरे स्थातुम् ।
एष मनुष्यो मन्ये निष्प्रतिभः साभिलाषश्च ॥ ७५२ ॥
(अन्तर्युगलकम्)

तेऽतीताः खलु दिवसाः क्रियते नर्म त्वया समं येषु ।
अधुनाऽऽचार्यानी त्वं पाशुपताचार्यसंबन्धात् ॥ ७५३ ॥

---

जानीयात् तथा ताः पश्यति इति भावः। एतेन तस्य कामुकत्वं सूचितम्। ततः सखीं स्वहृदयं प्रकाशयति कुमुदिनीत्यादि। अनेन व्याजलिंगिना संन्यासिनां कूटवेषधारिणा धर्मध्वजिना, मम हृदयगतं भवितव्यं मम मनोरथसिद्धिः कामशांत्यादिरूपा भविष्यति इत्यर्थः। अनुमानालंकारः॥ ७५० ॥ काचित् तत्रागतं जडं कामुकं वर्णयति पश्यतीत्यादिना युग्मेन। कोऽपि तं रमणीः पश्यन्तं यथा न पश्येत् तथा ताः पश्यति; अपि च केनापि रमणीः पश्यन् दृष्टः सन् तद्वंचनाय, परां अन्यां तदनभिमुखीं, ककुभं दिशं, पश्यति; अपि च रमणीः इत्यध्याहार्यं, ब्रूते इत्यस्य द्विकर्मकत्वात्, किंचित् अव्यक्तं स्वाभिलाषसूचकं वा, सस्पृहं सवांछं वदति; अभियुक्तः किं पश्यसि इत्यादिप्रकारेण ताभिः पृष्टश्च, कीलितध्वानः ह्रिया भिया वा गद्गदस्वरो भवति, ॥ ७५१॥ समासन्नं मीलितं, न जहाति तत्परिहाराय त्यक्तुं न शक्नोति इत्यर्थः, न च तस्य पार्श्वगोचरे समीपे स्थातुं उत्सहते प्रयत्नं कुरुते शक्नोति वा, तेन एतैः लिंगैः, एषः पुरोवर्ती, मनुष्यः, साभिलाषः रमणीसमागमलिप्सुः, चः अप्यर्थे, निष्प्रतिभः " प्रज्ञां नवनवोन्मेषशालिनीं प्रतिभां विदुः। " इति लक्षिता प्रतिभा तया रहितः, स्वेप्सितं स्त्रीसमागमं साधयितुं या युक्तयः आवश्यिकाः तासां युक्तीनां अज्ञः इति, मन्ये तर्कयामि। अत्र पूर्वंपूर्वं अभिलाषेंगितं, उत्तरं उत्तरं प्रतिभाभावसूचकम्। अत्रापि अनुमानालंकारः॥७५२॥ उच्चतरपदप्राप्त्याशया उज्झितः प्रथमः कामी तत्र तामेव संगम्य सासूयं सोत्प्रासं च वदति ते इति। खलु निश्चये। येषु दिवसेषु। नर्म " शृंगारार्थं त्रपाकारि वाक्यं गोष्ठीषु नर्म तत्। " इति लक्षितम्, यद्वा परिहासः। यतः, अधुना इदानीं, त्वं आचार्यानी आचार्यपत्नी असि इति शेषः, " इन्द्रवरुणभव० " (पा. ४।१।४९) इति ङीषानुकौ, " आचार्यादणत्वं चेति वक्तव्यं " इति वार्तिकात् ' आचार्यानी '

---

७५२ स्पर्शगोचरे (प. स्तं) ७५३ ते नीता दिवसाः खलु (गो. का)। नर्मक्रिया समं (कापा)। आचार्याणी (गो. प. स्तं. का)। भवच्छुद्धाचार्यं (प) भाशुद्धा० (स्तं)

भ्रमसि यथेष्टं तावत् कुर्वाणो युवतिपल्लवग्रहणम् ।
लोलिकदास न यावन्नरदेवी पानिकां व्रजति ॥' ७५४ ॥
एवंप्रकारवाच्यप्रसक्तविटचेटिकासमाकीर्णम् ।
सेवाचतुरपुरःसरविजनीकृतवर्त्म देवकुलम् ॥ ७५५ ॥

( आदिमहाकुलकम् )

संपादितहरपूजो निष्ठुरयाष्टीकनियमिते लोके ।
त्वरितनियोगिस्थापितमासनमध्यास्त समरभटः ॥ ७५६ ॥

---

इति रूपं, तेन उपलब्धकोशेषु आचार्याणी इति पाठः लेखकदोषजः ज्ञेयः । सा कथं आचार्यानी इत्याह पाशुपतेत्यादि । पाशुपतः चासौ आचार्यश्च पाशुपताचार्यः, पाशुपतं च तंत्रमूलकः शैवमतभेदः, यत्सिद्धान्ते पशुपतिः शिवः परमदैवतम्, उक्तं हि हरिवंशे—"पालयामि पशून् यस्मात्सृजामि च यदृच्छया । तेषां च पतिरेवाहं तस्मात्पशुपतिः स्मृतः ॥" इति । ( पशुः—अस्वतंत्रः जीवः कर्मात्मा आणवादिपाशबद्धः, पतिः ईश्वरः । ) तस्य, यद्वा तन्मतावलंबी पाशुपतः । पाशुपतानां तन्मतावलंबिनां, आचार्यः क्रियावान् सिद्धान्तोपदेष्टा गुरुः, इत्यर्थः । केनचित् विषयलंपटेन तेन तव संबंधात् कामसेवनरूपात् ॥ ७५३ ॥ काचित् कंचित् शठं सेवकं प्रति आह लोलिकेति । लोलिकदास इति अन्वर्थं नाम । यावत् नरदेवी तस्य स्वामिनी पत्नी वा, पानिकां प्रपां, न गच्छति न समागच्छति, तावत् युवतीनां यौवनवतीनां रमणीनां, पल्लवानां वस्त्रांचलानां 'पालव' इति भाषायां, ग्रहणं इदं आकर्षणादीनामुपलक्षणं, तच्च स्वस्य कामुकताप्रदर्शनार्थं, कुर्वाणः, यथेष्टं इतस्ततः स्वच्छन्दानुसारं भ्रमसि भ्रमिष्यसि इत्यर्थः ॥ ७५४ ॥ एवंप्रकारे ७४३—७५४ आर्यासु वर्णितप्रकारे, वाच्ये उक्तौ, प्रसक्ताभिः तादृशोक्तिपरायणाभिः इत्यर्थः, विटैः खिङ्गैः, चेटिकाभिः संधाननिपुणाभिः दासीभिः, च समाकीर्णं व्याप्तं; 'प्रकामवाम्य' इत्यादिपाठे प्रकामं अत्यन्तं यत् वाम्यं वक्रोक्तिभावः, यद्वा वाम्ये वामानां सुंदरीणां हिते हितकृत्ये तासां कामिपुरुषेण समागमरूपकृत्ये प्रसक्ताः उपस्थिताः इत्यर्थः । तथा सेवाचतुरैः उपचारकुशलैः, पुरःसरैः अग्रेगन्तृभिः अर्थात् सेवकैः, विजनीकृतं उत्सारितलोकं वर्त्म मार्गः यस्य तत्, देवकुलं देवमंदिरं 'देवल' इति भाषायां, आगात् इति पूर्वेण ७३८ आर्यास्थपदेन अन्वयः ॥ ७५५ ॥ मंदिरप्रवेशानन्तरं तत्र तस्य नायकस्य आसनपरिग्रहमाह संपा-

---

७५४ पाशिकां विशति (का) पशिकां विशनी (प) पानिकां विशसि ( स्तं ) [ का. उत्तरार्धपाठः दुष्टः ] ७५५ एवंप्रकारवाक्यै प्रसक्त ( प ) एवं प्रकामवाम्यप्र० ( गो. का ) ७५६ उत्पादित ( का ) [ अत्र का. उत्तरार्धं दुष्टं ]

अग्रोपविष्टनर्तकवांशिकगातृप्रकाशयुवतिगणः ।
श्रेष्ठिप्रमुखवणिग्जनढौकितताम्बूलकुसुमपटवासः ॥ ७५७ ॥
विविधविलेपनखरटितचक्रकधरखड्गधारिणाऽशून्यः ।
पृष्ठत आत्तकृपाणैः शरीररक्षैश्च विश्वस्तैः ॥ ७५८ ॥
ताम्बूलकरङ्कभृता सन्दंशगृहीतवीटिकाग्रहणे ।
ईषत्स्पृष्टं कुर्वन् मन्दं खटकामुखेन वामेन ॥ ७५९ ॥

---

दितेति । संपादिता निर्वर्तिता, हरस्य पापं भवभयं प्रलये कृत्स्नं वा हरति इति हरः तस्य, पूजा चंदनबिल्वपत्रमंत्रोच्चारादिभिः उपचारः, येन सः; निष्ठुराः क्रूराः दर्शनार्थं समागतानां लोकानां उत्सारणे तत्प्रहारप्रवणत्वात् , ये याष्टीकाः यष्टिः प्रहरणं येषां ते, प्रहरणमित्यर्थे "शक्तियष्ट्योरीकक् " (पा. ४।४।५९) इति ईकक्प्रत्ययः , तैः, लोके सामाजिकसमूहे नियमिते नियंत्रिते सति, समरभटः वर्णितः सिंहभटपुत्रः राजसुतः; त्वरितः सत्वरः, ] नियोगी कर्मकरः सेवकः [ नियुक्तः, तेन स्थापितं आनीय भूमौ निहितं आसनं उपवेशनपीठं, अध्यास्त ॥ ७५६ ॥ चतुर्भिः कलापकेन तं वर्णयन् तस्य व्यापारमाह अग्रेत्यादिभिः । अग्रे संमुखे, उपविष्टः आसीनः, नर्तकाः नृत्ये कुशलाः 'कथक' इति भाषायां, चारणाः वा, "नर्तकः पोटगलके चारणे केलके नटे ।" इति विश्वलोचनः, ( पोटगलकः नडतृणभेदः, केलकः कदलीवृक्षः । ) तेषां, तथा वांशिका वेणुवाद्यवादकाः तेषां, गातृणां, तथा ] प्रकाशयुवतयः वेश्याः, [ तासां गणः समूहः यस्य तादृशः । तथा श्रेष्ठिनः महाजनाः 'शेठीया' इति भाषायां, प्रमुखाः आदयः येषां, तादृशैः वणिग्जनैः बहुक्रयविक्रयकारिभिः व्यावहारिकैः; बह्वर्थवाची जनशब्दः, ] ढौकिताः उपायनीकृताः [ ताम्बूलानि वीटिकाः, कुसुमानि पुष्पाणि, पटवासाः सुगंधीनि हरिद्रातंडुलादिचूर्णानि, च, यस्मै तथाविधः —७५७॥ ] खरटितं चित्रितम् , [ इति टिप्पणी । विविधरंजकद्रव्यैः खरटितः अनियमेन चित्रितमुखाद्यंगः चासौ, चक्रकं चक्राकारः तर्जन्या भ्रामयित्वा निक्षेप्यः अस्त्रविशेषः, तं धरतीति चक्रकधरः, स चासौ खड्गधारी च तेन, तथा गृहीततरवारिभिः विश्वासपात्रैः अंगरक्षकैः च, पृष्ठतः स्वपृष्ठभागे, अशून्यः अरिक्तः ॥ ७५८ ॥ तांबूलभक्षण-

---

७५७ नर्तकवंशिप्राड्विप्र (गो) । कुसुमपटवासः (गो.का) ७५८ वरखड्ग (गो) । शिरोभिरक्षै (प.स्तं.का ) ७५९ वीटिकाग्रेण (प.स्तं.) । ईषत्स्पृ( स्पृ ? )ष्टः ( प. स्तं.) ईषत्पृष्ठं ( का )। कुर्वन्मदं विटकां मुखेन वांसेन ( कुर्वन्मन्दं विटिकां मुखे नतांसेन ? ) (प.स्तं )

पार्श्वावस्थितनर्मप्रियसचिवन्यस्तपूर्वतनुभागः ।
पप्रच्छ कुशलवार्तां स वणिग्जननर्तकप्रभृतीन् ॥७६०॥(चक्कलकम्)
अथ वैतालिक उच्चैरुपसंहृतलोककलकले धीरम् ।
अभितुष्टाव तमित्थं प्रसन्नगम्भीरया वाचा ॥ ७६१ ॥

संभारगर्भः करंकः वेत्रादिनिर्मितपेटिका 'करंडीओ' इति भाषायां प्रसिद्धः, तांबूलकरंकः, तं बिभर्ति इति तांबूलकरंकभृत् तेन, राजपुत्राय भक्षणार्थं अर्पणाय, संदंशेन संदंशाख्यहस्तेन गृहीतायाः धृतायाः वीटिकायाः तांबूलस्य ग्रहणे ग्रहणकाले इत्यर्थः, संदंशलक्षणं तु—"तर्जन्यंगुष्ठसंयोगस्त्वरालस्य यदा भवेत् । अभुग्नतलमध्यश्च स संदंश इति स्मृतः ॥" इति । मंदं यथा स्यात्तथा, वामेन सुंदरेण यद्वा वामहस्तकृतेन, खटकामुखेन ] खटकामुखः [ खटिकामुखः कटकामुखः वा ] हस्तविन्यासविशेषः, [ तल्लक्षणं तु—"तर्जनीमध्यमामध्ये पुंखोऽङ्गुष्ठेन पीड्यते । यस्मिन्ननामिकायोगः स हस्तः कटकामुखः ॥" इति अमरुकशतकटीकाशृंगारदीपिकायामुद्धृतम् । ( पुंखः शरस्य पत्रपाली ।) ईषत्स्पृष्टं कुर्वन् तांबूलं किंचित्स्पृष्टं यथा स्यात्तथा गृह्णन् इत्यर्थः । अत्र पत्तनीयपुस्तकगतपाठस्य परिणामः—'ईषत्स्पृष्टः कुर्वन्मन्दं विटिकां मुखे नतांसेन । ' इति सरलार्थकः ॥७५९॥ पार्श्वे वामे दक्षिणे वा । नर्म परिहासः, " अग्राम्यः इष्टजनावर्जनरूपः परिहासो नर्म ।" इति दशरूपकावलोके, तत् प्रियं यस्य तादृशे, सचिवे सहाये मित्रे, न्यस्तः लीलया निक्षिप्तः, स्वस्य पूर्वतनोः नाभेरूर्ध्वशरीरस्य, भागः येन तादृशः । कुशलवार्तां आरोग्यादिवृत्तान्तम् ॥ ७६० ॥ चक्कलकं इति कलापकस्यैव नामान्तरं कश्मीरेष्वेव प्रसिद्धम् ॥ एवं निर्वृत्ते शिष्टाचारे, तस्य राजपुत्रत्वात् एकेन चारणेन प्रवृत्तं तद्यशोगानं प्रकाशयन् अवतारयति अथेति । अथ अनन्तरं कुशलप्रश्नादिसमाप्तौ । वैतालिकः—विविधः तालः वितालः, तेन व्यवहरतीति ठक् ; यद्वा विशिष्टः तालः वितालः स शिल्पं अस्य सः, " शिल्पं "( पा. ४।४।५५ ) इति ठक्, सूतः स्तुतिपाठकः; तल्लक्षणं भावप्रकाशे—" तत्तत्प्रहरकयोग्यै रागैस्तत्कालवाचिभिः श्लोकैः । सरभसमेव वितालं गायन् वैतालिको भवति ॥ " इति । उपसंहृतलोककलकले जनसमूहविरावे शांते सति; धीरं स्वस्थमनसं, राजपुत्रं, इत्थं वक्ष्यमाणप्रकारेण; प्रसन्नगंभीरया-प्रसन्ना मृदुला विमला वा, गंभीरा अर्थगुर्वी च, तादृश्याऽर्थगुणवत्या, यद्वा प्रसन्ना मधुरा, गंभीरा मेघमन्द्रघोषवत् सुस्वरा च, तादृश्या स्वरगुणवत्या, वाचा भारत्या गिरा वा,

---

७६० नम्रप्रिय ( प. स्तं ) । पृच्छंश्च ( गो. का ) [ चक्कलकाङ्कनेन विरुद्धः पाठः ] । सवणि० ( गो. का ) । नर्तन ( प. स्त ) । कुलकम् । ( स्तं ) ७६१ धीरः ( प. स्तं )

'जय देव परबलान्तक गुरुचरणाराधनैककृतचित्त ।
वरवनिताजनमोहन दारिद्र्यतमःप्रचण्डकरजाल ॥ ७६२ ॥
रणवीरवंशभूषण गुरुवसुधादेवपूजनप्रह्व ।
शरणागताभयप्रद हितबान्धवबन्धुजीवमध्याह्न ॥ ७६३ ॥

---

उच्चैः तारस्वरेण, अभितुष्टाव स्तुतिं अकरोत् । तदुक्तं–"माधुर्यमक्षरव्यक्तिः पदच्छेदस्तु सुस्वरः । धैर्यं लयसमर्थं च षडेते पाठका गुणाः ॥" (३३) इति पाणिनीयशिक्षायाम् ॥ ७६१ ॥ तामेव स्तुतिं जयेत्यादिभिः नक्षत्र-संख्याकाभिः (२७) आर्याभिः प्राह । एतादृशः जयख्यापकः चाटुप्रबंधविशेषः जयोदाहरणं उदाहरणं वा इति आख्यायते, तथा च प्रतापरुद्रीये–"येन केनापि तालेन गद्यपद्यसमन्वितम् । जयेत्युपक्रमं मालिन्यादिप्रासविचित्रितम् । तदुदाहरणं नाम विभक्त्यष्टांगसंयुतम् । " इति ॥ जय सर्वोत्कर्षेण वर्तस्व इति आशीः । देव सुरसमान, यद्वा तस्य नृपतिसुतत्वेन नृपतिसंबुद्धिवत् तथोक्तिः, तथा च भरतः–"देवेति नृपतिर्वाच्यो भृत्यैः प्रकृतिभिस्तथा । " (१७।७९) इति । पराणां शत्रूणां, बलस्य सैन्यस्य, अंतकः नाशकत्वात् यमः एव ॥ गुरूणां पूज्यानां, ते च–"यो भावयति, या सूते, येन विद्योपदिश्यते । ज्येष्ठभ्राता च भर्ता च पञ्चैते गुरवः स्मृताः ॥" इत्युक्ताः । ( पिता, माता, आचार्यः, ज्येष्ठभ्राता, स्वामी चेति पञ्च । ) वराः श्रेष्ठाः, वनिताः वन्यंते प्रार्थ्यंते इति वनिताः रमण्यः ताः, तादृश्यश्च ता जनाश्च तेषां मोहन मोहोत्पादक । दारिद्र्यमेव तमः तस्य विनाशने प्रचंड-करजाल तीक्ष्णकिरणसमूह सूर्य इत्यर्थः । ] 'दाम' [ इति पाठे ] मंडल । [ एतैः संबोधनैः तस्य वीरत्वविनयसौन्दर्यौदार्यगुणाः सूचिताः ॥ ७६२ ॥ रणवीरः तन्नामा समरभटस्य वंशकरः । गुरवः पूज्याः ये वसुधादेवाः भूसुराः ब्राह्मणाः, देवाः द्युस्थाः इमे भूमिस्थाः इत्येतावानेव भेदः अन्यत् निग्रहानुग्रहसामर्थ्यादिगुणवत्त्वं तेषां समानं इति ब्राह्मणाः वसुधादेवाः । ] प्रह्व नम्र । [ शरणागतानां प्रपन्नानां, अभयं अकुतोभयं, प्रददातीति तत्संबुद्धिः । हिताः मित्राणि, बान्धवाः सगोत्राः स्वजनाः ते एव बन्धुजीवाः बन्धुजीवः जपावृक्षसदृशः क्षुपः, तस्य पुष्पाणि, "पुष्पमूलेषु बहुलम्" इति वार्तिकात्, "तस्य विकारः" (पा. ४।३।१२४) इति विहितस्याणो

---

७६२ शुभचित्त (गो २ का) । चित्तः (स्तं) । वरवनिताजघनासन (१.स्तं) । करदाम (गो. का) जालः (स्तं) ७६३ रणधीर (प. स्तं) । जीवकामार्गस्त्वं (का) [ क्लिष्टार्थः पाठः ] प्रह्वः"मध्याह्नः( स्तं )

ताद्दक् प्रतापदहनः स तावको व्याप्तगगनदिक्चक्रः।
दृष्टो जलायमानो रिपुवनितातिलकशोभासु ॥ ७६४ ॥
एष विशेषः स्पष्टो वह्नेश्च त्वत्प्रतापवह्नेश्च।
अङ्कुरति तेन दग्धं दग्धस्यानेन नोद्भवो भूयः ॥ ७६५ ॥
श्रीफलभुक् पत्रवृतो विग्रहरसिको विमुक्तशस्त्ररतिः।
राज्यस्थितिं न मुञ्चति हृतलक्ष्मीकोऽपि तव विपक्षगणः ॥७६६॥

लुक्, "लुपि युक्तवद्व्यक्तिवचने" (पा. १।२।५१) इति सूत्रेण बंधुजीवा इति पुंस्त्वं बहुवचनं च भवति। बन्धुजीवाः 'बपोरीया' 'दुपेरीया' वा इति भाषायां प्रसिद्धानि पुष्पाणि, यानि मध्याह्न एव विकसितानि भवंति, तेषां मध्याह्न दिवसस्य मध्यभाग, रूपकं, हितादीनां पुष्टिकर्ता त्वं इति भावः। 'बान्धवबन्धु' इत्यत्र पुनरुक्तवदाभासः ॥ ७६३ ॥ इतश्च ७८६ आर्यापर्यंतं वर्णनभंग्याः विरोधव्यतिरेकाद्यलंकारद्वारा अद्भुतरसे परिणामः बोध्यः। तत्र द्वाभ्यां तस्य प्रतापं वर्णयति ताद्दगित्यादिभ्याम्। ताद्दक् तथाविधः, तावकः त्वदीयः, सः प्रसिद्धः, प्रताप एव अग्निः, प्रतापः तु "शत्रूणां भयजननवार्ता" इति ( रघु० टीका ४।३० ) वल्लभः। व्याप्तेत्यादि क्रोडीकृतसाकाशसकलदिक्समूहः, सः, अरिनारीललाटिकाविशेषकेषु, जलायमानः भर्तृवधात् विधवानां तासां सौभाग्यदर्शकचिह्नस्य तिलकस्य प्रमार्जनात् जलवदाचरतीति जलायमानः दृष्टः। दहनः अग्निः कथं जलायमानः भवति इति विरोधालंकारः, रूपकानुगृहीतः, जलायमानः इति लुप्तोपमा च। तेन प्रतापस्य आश्चर्यजनकत्वं द्योतितम् ॥ ७६४ ॥ एषः उत्तरार्धे कथयिष्यमाणः, विशेषः भेदः, स्पष्टः अविवदनीयः विवादागोचरः, प्रसिद्धाग्नेः तव प्रतापाग्नेश्च। तेन अग्निना। अंकुरति पुनः प्ररोहति। अनेन प्रतापाग्निना। उद्भवः प्ररोहः, भूयः पुनः। अत्र उभयविधवह्नेः भेदकगुणकथनात् तद्विशिष्टो व्यतिरेकालंकारभेदः ॥ ७६५ ॥ श्लेषानुगृहीतविरोधाभासालंकारेण तस्य शत्रुवर्गं वर्णयति श्रीफलेति।] [श्रीफलं साम्राज्यसुखोपभोगः, बिल्वफलं च। श्रीफलः श्रीयुक्तं फलं यस्य सः बिल्ववृक्षः। फलार्थे तु "पुष्पमूलेषु बहुलम्" इत्याद्यूह्यम्।] पत्राणि वाहनानि पर्णानि च। विग्रहो युद्धं शरीरं च। अधुना सुखोपभोगत्यागेन केवलं शरीरदार्ढ्यायैव प्रवृत्तिः इत्यर्थः। विमुक्ता शस्त्ररतिर्यैः,

७६४ द्दक् प्र ( प. स्तं ) दहनो भावको ( प. स्तं )। जलावसानो गो २ का )
७६५ विशेषो दृष्टो ( प. स्तं )। नोद्गमो ( प. स्तं ) ७६६ विमुक्तसस्व ( प. स्तं )
आयस्थितिं ( स्तं )।

दददतो वाञ्छितमर्थं सदाऽनुरक्तस्य तव गृहं त्यक्त्वा ।
स्त्रीचापलेन कीर्तिर्नग्नासक्ता गता ककुभः ॥ ७६७ ॥
भवतो भवतो धैर्यं, तेन हि भिन्नोऽन्धको रिपुः प्रणतः ।
मुक्तास्त्वया तु बहवो रिपवोऽपि प्रेक्षकाः समरे ॥ ७६८ ॥

---

एकत्र सकलशत्रुनिरासेन साम्राज्यभाजनतया शान्त्याऽनुपयोगात् शस्त्रत्यागः, अपरत्र प्रसह्य भवताऽपहृतत्वात् इत्यर्थः । विपक्षः शत्रुः । [ गणः समूहः । यत्तु त्वया हृतलक्ष्मीकोऽपि शत्रुगणः राज्यस्थितिं न मुंचति इति चित्रं, तेन च तस्य असामान्यत्वं सूचितं, ततश्च व्यतिरेकध्वनिः, स्वभावोक्तिरपि । 'आद्यस्थितिं' इति पाठेऽपि स एवार्थः ॥ ७६६ ॥ तस्य कीर्तिं वर्णयति ददत इति । वांछितं अभिलषितं, अर्थं द्रव्यं, ददतः अर्थिभ्यः इति शेषः, अत एव सदा अनुरक्तस्य स्निग्धस्य, कीर्तिवनितायां इति भावः, तथाहि–"दानादिप्रभवा कीर्तिः, शौर्यादिप्रभवं यशः ।" इति हैमः । सा कीर्तिः, स्त्रीचापलेन स्त्रीजातिस्वभावभूतचांचल्यगुणेन, यथोक्तं "शास्त्रे नृपे च युवतौ च कुतः स्थिरत्वम् ।" इति; ] नग्नाः बंदिनः, अथ च अवाससः [ दिगंबराः, "नग्नस्त्रिषु विवस्त्रे स्यात्, पुंसि क्षपणवंदिनोः ।" इति विश्वलोचनः, तेषु आसक्ता जातप्रेमा, बंदिपक्षे तदधीना इति भावः, बंदिभिरेव कीर्तेः गानद्वारा प्रसारित्वात्; तव गृहं त्यक्त्वा, ककुभः पूर्वादिदशदिशः शोभाश्च गता, ते कीर्तिर्दिगन्तं गता इति भावः । "ककुब् दिक्शोभयोः शास्त्रे कंबले चंपकस्रजि ।" इति विश्वलोचनः । नग्नासक्ता ककुभश्च इत्यत्र श्लेषालंकारः, स्त्रीचापलेन इति हेतुकथनात् हेतुरलंकारः, अनुरक्तस्य अर्थप्रदस्यापि त्यागकथनात् विरोधो व्यंग्यः, अपि च अनुरक्तस्यापि अतिदानपरायणस्य स्त्री तस्य विभवहानेः दारिद्र्यशंकया अन्यासक्ता नग्ना लक्षणया निर्लज्जा भूत्वा प्रथमं त्यजति इति अप्रस्तुतवृत्तान्तस्यापि परिस्फूर्तेः समासोक्तिरलंकारश्च ॥ ७६७ ॥ तस्य धैर्यातिशयं प्रशंसति भवत इति । सत्तामात्रस्वरूपत्वात् भवः शिवः, ] भवतः शिवतोऽपि, भवतो [ भवच्छब्दः प्रशस्यतमे युष्मदर्थे प्रसिद्धः इति युष्माकं इत्यर्थः, ] धैर्यं [ तव निर्विकारचित्तत्वं चेतःसौन्दर्यं, ] अधिकं इत्यर्थः । [ तद्व्याचष्टे तेनेति । हि यतः । तेन शिवेन, अन्धकः तन्नामासुरः, रिपुः स्वशत्रुः, प्रणतः प्रह्वीभूतः परमभक्तत्वात् ।

---

७६७ °मर्थं दाने रक्तस्य (का) सदनुरक्तस्य ( सुभाषितावलिमुद्रितपाठः छंदोभंगदुष्टः)
७६८ न्नोऽन्तको (गो. का) स्त्वयेति बहवो (का) स्त्वयापि ( प. स्तं ) । रिपवोप्रेक्षकाः ( स्तं ) रिपवस्तु ( का ) [ अत्र पाठभेदेऽलंकारभेदः । ]

अटता जगतीमखिलामिदमाश्चर्यं मया परं दृष्टम् ।
धनदोऽपि नयननन्दन परिहरसि यदुग्रसंपर्कम् ॥ ७६९ ॥
इदमपरमद्भुततमं युवतिसहस्रैर्विलुप्यमानस्य ।
वृद्धिर्भवति न हानिर्यत्तव सौभाग्यकोषस्य ॥ ७७० ॥

---

अपि, भिन्नः विदारितः । अंधकासुरकथा स्कान्दे शंकरसंहितायां हरचरितचिंतामणौ पंचमप्रकाशे च विस्तरेणोक्ता । तत्र च "गणानुपद्रुतान्पश्यन्नन्धकं च महाबलम् । हसन्महेश्वरः शूलशिखायां तं न्यवेशयत् ॥ (८०)" "अथ तत्र त्रिशूलाग्रे स शुष्यन्नंधकासुरः । (९०) संवत्सरसहस्रान्ते प्रोवाच प्रणमन् हरम् ।" इत्युक्तम् ॥ तथा च वर्णितं हरविजयमहाकाव्ये—"स्मितविकसितगण्डभित्तिभागस्तमभिमुखं गुरुवेगमापतन्तम् । समभिनदशेषदैत्यकान्ताजनहृदयैस्त्रिशिखेन शूलपाणिः ॥" (५०।८३) इति । त्वया, तु: पूर्वोक्तविरोधे, समरे संग्रामे, बहवः असंख्याताः रिपवः न तु अंधकवदेकः, प्रेक्षकाः अपि—न योद्धारः, न तु तद्वत् प्रणताः अपि इति भावः, मुक्ताः न तु भिन्नाः घातिता वा । विरोधानुगृहीतः सहेतुव्यतिरेकालंकारोऽत्र, 'भवतोभवतो' इत्यत्र च भिन्नार्थे पदावृत्तेः यमकाख्यः शब्दालंकारः ॥ ७६८ ॥ तस्य आश्चर्यनिधेः एकं अद्भुतमाह—अटतेति । जगतीं पृथ्वीं, अटता भ्रमता । आश्चर्यं अद्भुतं अदृष्टपूर्वं परं महत् । हे नयननंदन नेत्राह्लादक अपूर्वरूपसंपत्त्या, ] धनदः धनदाता कुबेरश्च । उग्रः क्रूरः शिवश्च, [ यदुक्तं महिम्नःस्तवे "भवः शर्वो रुद्रः पशुपतिरथोग्रः सहमहांस्तथा भीमेशानाविति यदभिधानाष्टकमिदम् ।" (२८) इति । उच समवाये इति धातोः उच्यति सर्वलोकांतःसमवेतो भवतीति उग्रः शिवः । शिवकुबेरयोश्च सख्यं प्रसिद्धं, तथाहि मेघदूते—"मत्वा देवं धनपतिसखं यत्र साक्षाद्वसन्तं" (७९) इति, "कुबेरस्त्र्यंबकसखो यक्षराड्गुह्यकेश्वरः । मनुष्यधर्मा धनदो राजराजो धनाधिपः ॥" इत्यादि च अमरः ॥ अत्र श्लेषविरोधालंकाराभ्यामनुप्राणितरूपकातिशयोक्त्यलंकारेण व्यतिरेकालंकारध्वनिः ॥ ७६९ ॥ अपरमद्भुतमाह इदमिति । सौभाग्यं स्पृहणीयता रमणीयवल्लभत्वं सौंदर्यं वा, तदेव कोषः अर्थौघः, तस्य, विलुप्यमानस्य उपभोगादिना क्षयमुपनीयमानस्य, अपरद्रव्यसंग्रहवत् क्षयो न भवति प्रत्युत वृद्धिः इतीदं अद्भुततमं परमाश्चर्यजनकम् । कोषवृद्धिप्रतिबंधके युवतिगणविलुप्यमानत्वरूपे सत्यपि तत्कार्योत्पत्तिकथनात् तृतीया विभावना "कार्योत्प-

---

७६९ धात्रीमखिला (गो २ का)। र्यं नवं मया (प. स्तं)। अटता पृथिवीम० मया दृष्टम् (शुभा०) ७७० तरं (प. स्तं)। स्रैण लुप्य (प. स्तं)। कोशस्य (प. स्तं)

अपरं विस्मयजननं धवलत्वं नापयाति यद्भवतः ।
ललनालोचनकुवलयदलत्विषा शबलितस्यापि ॥ ७७१ ॥
हृदयेषु कामिनीनामेकोऽनेकेषु वससि येन त्वम् ।
जनकः कुसुमास्त्रभृतः पुरुषोत्तम तेन विश्वरूपोऽसि ॥ ७७२ ॥
किं वहसि वृथा गर्वं प्रियोऽहमिति योषितां नराधीश ।
काङ्क्षन्ति स्म मुरारिं षोडशगोपीसहस्राणि ॥ ७७३ ॥

---

त्तिस्तृतीया स्यात्सत्यपि प्रतिबंधके । " इति ( कुवलयानंदे ) लक्षणात् । अनेन तस्य बहुरमणीरमणत्वं सूचितम् ॥७७०॥ आश्चर्यान्तरमाह अपरमिति । धवलत्वं श्वेतवर्णत्वं सुंदरत्वं च, "धवलः सुंदरे श्वेते त्रिषु, पुंसि महावृषे ।" इति विश्वलोचनः । अपयाति दूरीभवति विलुप्तं भवति । ललनेत्यादि रमणीनेत्रनीलोत्पलपत्रकान्त्या शबलितस्य कर्बुरितस्य चित्रितस्य अर्थात् त्वयि तत्कटाक्षपातानां नैल्येन लिप्तस्यापि, कटाक्षाणां असितत्वे च उक्तं अमरुकशतकटीकारसिकसंजीवन्यां—" वर्णयंति सितमसितं सितासितं च कटाक्षम् । " (१) इति, अन्यत्र च " यत्रयत्र वलते शनैःशनैः सुभ्रुवो नयनकोणविभ्रमः । तत्र तत्र शतपत्रघोरणी तोरणीभवति पुष्पधन्वनः ॥" इति ॥ अत्र मूले अतद्गुणालंकारः, तल्लक्षणं च—" तद्रूपाननुहारस्तु हेतौ सत्यप्यतद्गुणः । " इति ॥७७१॥ तस्य सौंदर्यमाह हृदयेषु इति । ⌉ जनकः उद्दीपकः पिता च । पुरुषोत्तमः नरश्रेष्ठः नारायणश्च । [ येन यतः, त्वं एकोऽपि अनेककामिनीहृदयेषु स्वसौंदर्येण निहितपदः वससि, कामिनी च रूपादिदर्शनेन संजातकामा स्त्री, तत्र च कुसुमास्त्रभृतः कामस्य जनकः, तेन ततः, हे पुरुषोत्तम, त्वं विश्वरूपः कृष्णः असि, सोऽपि कृतानेकगोपीहृदयवसतिः, पुरुषोत्तमनामभाक्, प्रद्युम्नावतारस्य कामस्य पिता च । तथा च विष्णुनामसु त्रिकांडशेषः—" ···कोकः पुराणपुरुषो नलिनेशयश्च वासुर्नरायणपुनर्वसुविश्वरूपाः । ( १।२९ ) । ···कालनेमियवनारिपाण्डवाभीलसिंधुवृषकृष्णकेशिनः । " ( १।३१ ) इति, अनंगनामसु च— " मधुप्रियोऽथ प्रद्युम्नः, ···( १।३७ ), ··· संसारगुरुर्मनोजन्मा ( १।३८ ) । कार्ष्णिश्च " ( कृष्णस्य अपत्यं पुमान् कार्ष्णिः ) इति ॥ श्लेषमूलकः काव्यलिंगालंकारः । अनया तस्य सौंदर्यवीरत्वं प्रकाशितम् ॥ ७७२ ॥ पुनरपि वक्रभणित्या तदाह किमिति । वृथा मुधा, गर्वं सर्वाधिकत्वधियं, योषितां रमणीनां प्रियः इत्य-

---

७७१ जनकं ( स्तं ) । नोपयाति ( का ) । तद्भवतः ( प. स्तं ) ७७२ जनकः कुसुमास्त्रपाणेः ( प ) जनककु० ( स्तं ) । ºस्त्रभृतस्तेन त्वं वि° (का)

कार्पण्येन ययाचे मखसमये यो बलिं हृषीकेशः ।
न स भवति समो भवता दानैकनिषण्णहृदयेन ॥ ७७४ ॥
भूमिभृतामुपरिस्थित उन्नतये सकलजीवलोकस्य ।
दृष्टः सन्तापहरो मेघवदासारदानदक्षस्त्वम् ॥ ७७५ ॥
बहुमार्गो भद्रयुतः कुस्तुतिपरो गोत्रभेदकरणपटुः ।
गङ्गाजलप्रवाहः पुण्यवशात्केवलं तव समानः ॥ ७७६ ॥

---

न्वयः । कांक्षंति स्म अभिलिलेषुः, मुरारिं कृष्णम् । गोपी गाः पातीति गोपः 'तस्येदं' इत्यण् इति गोपी । उक्तं च दशकुमारचरिते–" पद्मनाभस्य षोडशसहस्रान्तःपुरविहारः । " (उ० २) इति ॥ प्रतीपालंकारः, तद्भेदादि कुवलयानंदे–"प्रतीपमुपमानस्योपमेयत्वप्रकल्पनम् (१) । अन्योपमेयलाभेन वर्ण्यस्यानादरश्च तत् ( २ )॥ वर्ण्योपमेयलाभेन तथाऽन्यस्याप्यनादरः ( ३ ) । वर्ण्येनान्यस्योपमाया अनिष्पत्तिवचश्च तत् ( ४ ) ॥ प्रतीपमुपमानस्य वैयर्थ्यमपि मन्वते ( ५ ) " इति । प्रकृते द्वितीयप्रतीपत्वं स्पष्टम् । त्वं बहुरमणीवल्लभ इति तात्पर्यावसानात् च व्याजस्तुतिर्व्यंग्या ॥ ७७३ ॥ तस्य दातृत्वं वर्णयति कार्पण्येनेति । ] कार्पण्येन दैन्येन । [ ययाचे पादत्रयमितां भूमिं, मखसमये यज्ञकाले, बलिं तन्नामकं दानवं विरोचनपुत्रं प्रह्लादपौत्रं, हृषीकेशः हृषीकाणां इन्द्रियाणां तत्प्रवर्तकत्वेन ईशः पतिः अतः सर्वान्तःकरणवृत्तिज्ञः विष्णुः, प्रकृते वामनरूपः; स दानैकनिषण्णहृदयेन सर्वदा दानशीलेन भवता, न समः न तुल्यः, यतः सर्वदो विष्णुरपि कदाचित् याचकोऽभूत्, त्वं तु सर्वदा दातैव । व्यतिरेकालंकारः, " व्यतिरेको गुणैः श्लाघोपमेय उपमानतः । " इति ( साहित्यसारे ८।१७६ ) लक्षणात् ॥ अनया तस्य दानवीरत्वं सूचितम् । ] ॥ ७७४ ॥ भूमिभृतः राजानः पर्वताश्च । [ संतापः कष्टं घर्म च । आसारः सुहृद्बलं धारावृष्टिश्च, " आसारः स्यात्प्रसरणे वेगाद्वर्षे सुहृद्बले । " इति शाश्वतः । सकलजीवलोकोन्नत्युक्त्या तस्य तस्मिन् अनुरागः सूचितः, तेन च दानशीलस्य तस्य सर्वसंपत्प्राप्तिः ध्वन्यते, यथोक्तं–"जनानुरागप्रभवा हि संपदः ।" इति, तेन च सः भूमिभृतां उपरि स्थितः इति समुचितम् । श्लेषानुगृहीतोपमालंकारः। अनयापि तस्य दानवीरत्वमुक्तम् ] ॥ ७७५॥ मार्गः व्यवहाररीतिः वर्त्म च । भद्रं [सुवर्णं] कल्याणं [ च, " भद्रं तु

---

७७४ ब्राह्मण्येन यं ( प. स्तं ) । भवतो (प. स्तं) । हृदयस्य (प. स्तं) ७७५ उन्नत्या ( प. स्तं ) । तृष्णासंतापहरो मेघ इव कदा न दक्षस्त्वम् (प. स्तं ) [ न्यूनश्लेषोऽयं पाठः ] ७७६ भंग ( यु ? )तः ( प. स्तं ) । वाहः पुण्यदिशा ( गो ) पूज्यदिशा ( गो २ का )

दुर्व्यवहारोत्पत्तिर्मौग्ध्यप्रसरो विवेकिताप्रसहः ।
एकस्त्वं दोषज्ञः कृतीकृतो येन कलिकालः ॥ ७७७ ॥
सुगतोऽपि नाजिविमुखो, वृषध्वजोऽपि न विषादितायुक्तः ।
उद्यतशस्त्रोऽपि रिपौ कथमसि सन्नासिको जातः ॥ ७७८ ॥

करणप्रीतिमुस्तकक्षेमहेमसु ।" इति विश्वलोचनः ।] कुसृतिः कुटिलेषु शाठ्यं, पृथिव्यां प्रसरणं च । [ गोत्रं कुलं, तस्य भेदः विशिष्टगुणवत्त्वात् अन्येभ्यः व्यावर्तनं, पक्षे गोत्रः पर्वतः गोत्रं वनं वा तस्य भेदः वेधनम् । पुण्यवशात् स्वस्य सुकृतबलेन केवलं विष्णुपदोद्भूतः महादेवशिरःस्थः त्रिलोकीपावनः गंगाजलप्रवाहः एव तव तुलनां आरोहति, न कोऽपि अन्यः तादृशपुण्याभावात् इति भावः॥ अत्र दण्डिमतानुसारेण श्लेषोपमा, तत्रापि केवलमिति पदेन अन्यसाम्यव्यावृत्तेः नियमोपमापि ।'पुण्यवशात्' इत्यत्र 'पूज्यदिशा' इति पाठे पूज्यत्वविषये इत्यर्थः, तच्च उपमायां साधर्म्यम् । अनया तस्य पुण्यवीरत्वं सूचितम् । ] ॥ ७७६ ॥ दोषज्ञः पंडितः दोषज्ञानेन तन्निवारणकर्ता च । यतः तादृशोऽपि कलिः [ कलियुगं ] भवता धर्मस्थापनेन [ कृतीकृतः, "अभूततद्भावे च्विः", अकृतः अपि ] कृतयुगतां आपादितः।[कीदृशः कलिः इत्याह, दुर्व्यवहाराणां दुष्टक्रियाणां उत्पत्तिःजन्मदः, मौग्ध्यप्रसरः मूढतामयः, अविवेकिताप्रसहः इति च्छेदः, विवेकाक्षमः अविवेकी इत्यर्थः । कृतयुगं तु तस्य सत्त्वगुणवत्त्वात् दुःखेन राजसानां व्यवहाराणां उत्पत्तिः जन्म यत्र तादृशः, मौग्ध्यं निष्कापट्यं तस्य प्रसरः यत्र तादृशः, तथा विवेकितां प्रसहते इति नित्यानित्यादिविवेकवान् इत्यर्थः । प्रकारान्तरेण क्षेमेन्द्रेण उक्तं च--"तदा कृतयुगं लोके यदा राजा प्रजाहितः । तदा किल कलिर्लोके यदा राजा प्रजाहितः ॥" ( बोधिसत्त्वा०४२।१२ ) ( प्रजाहितः प्रजाभ्यः हितः, अहितश्च ) । कलिकालः कृतीकृतः इति विरोधाभासः श्लेषोत्थापितः , कलिकृतयोः भेदेऽप्यभेदोपनिबंधनात् अतिशयोक्तिश्च, दोषज्ञः इति विशेषणपदस्य साभिप्रायत्वाच्च परिकरालंकारः । अनया तस्य धर्मवीरत्वं ध्वनितम् ।] ॥ ७७७ ॥ सुगतः शोभनमतिः बुद्धश्च । [ सुगतः बुद्धः संसारविनिर्गमात् शोभनं गतं यस्य सः, यद्वा प्रशस्तं क्लेशाद्यावरणप्रहाणं गतं यस्य सः, यद्वा प्रशस्तं सर्वधर्मनिःस्वभावतातत्त्वं गतः अधिगतः इति, पुनर्जन्ममूलरागादिबीजस्य अविद्यायाः प्रहाणात् शोभनां अपुनरावृत्तिं मोक्षं गतः इति वा । ] तस्य हि दयाशीलतया युद्धपरिहरणात् आजिविमुखत्वं, भवांस्तु अतिशूरत्वात् न युद्धपराङ्मुखः ।

७७७ मौख्यं प्रसवो विवेकितावसतेः ( मुख्यः प्र ? ) ( प ) मौख्यं...वसतिः (स्तं)
७७८ नापिविमुखो (प) शास्त्रेऽपि (प.स्तं) । कथमपि ( प.स्तं. काग ) । संधासिको(का)

सन्मणिरनेकभोगो गुरुभारसहः स्थिरात्मतास्थानम् ।
नरदेव चित्रमेतद्यदशेषगुणैस्त्वमाश्लिष्टः ॥ ७७९ ॥
प्रकृतिलघोर्येन कृता जघन्यवर्णस्य गौरवापत्तिः ।
जघनचपला यदार्या स पिङ्गलस्ते कथं तुल्यः ॥ ७८० ॥

---

वृषध्वजः धर्मप्रधानः शिवश्च । विषादिता खेदयुक्तता, [ "विषादः सत्त्वसंक्षयः" अनुतापो वा, तद्वान् विषादी, तस्य भावः विषादिता; पक्षे विषं अत्ति भक्षयति इति विषादी, तस्य भावः, ] गरलभक्षकत्वं च । [ महादेवेन समुद्रमथनोत्थगरलभक्षणं कृतं तस्य कथा श्रीमद्भागवते अष्टमस्कंधे सप्तमाध्याये हरचरितचिंतामणौ तृतीये प्रकाशे शिवपुराणे सनत्कुमारसंहितायां ५१ अध्याये च द्रष्टव्या ।] । यः शत्रौ उद्यतशस्त्रः स कथं सन्नः प्रतिरुद्धः असिः [ कृपाणः ] यस्य तादृशः, [ सन्नासिकः सती शोभना नासिका यस्य असौ सन्नासिकः । अत्र श्लेषालंकारः, तन्मूलकश्च विरोधालंकारः, ततश्च उपमानादुपमेयस्य आधिक्यफलकत्वेन व्यतिरेकालंकारश्च व्यंग्यः ।]॥ ७७८॥ सन्मणिः सतां श्रेष्ठः, फणासु सन्मणिधारी च । [अनेकभोगः बहुविधसुखभोक्ता, सहस्रफणश्च ।] गुरुभारसहः पृथिव्याः पालनं धारणं च [ करोतीत्यर्थः ]। स्थिरात्मता धैर्यं स्थैर्यं च [ तस्याः स्थानं पात्रम् । समानत्वेऽपि भेदजं वैचित्र्यमाह अशेषेति । ] अशेषाः सर्वे, अशेषः शेषनागभिन्नश्च । [ शेषस्तु श्लेषद्वारा गोवर्धनपर्वतस्य व्यंग्योपमानतया इत्थं वर्णितः यादवाभ्युदयकाव्ये ( ६।४० )–" रत्नोपसंघटितशृंगफणासहस्रः स्फारोदितस्फटिकरश्मिविशुद्धकायः । नित्यं वहन्निजबलेन महीमहीनः पुष्यत्यसौ मधुरिपोरपि भोगयोगम् ॥" ( शृंगं अग्रं, अहीनः सर्पराजः शेषः, भोगयोगं शय्यात्वेन सुखस्य संबंधम् । ) अत्र श्लेषविरोधव्यतिरेकाः अलंकाराः ] ॥ ७७९ ॥ प्रकृतिलघुः स्वरूपेण ह्रस्वः, हीनजातिश्च । जघन्यः अंतिमः [ निंद्यश्च,] वर्णः अक्षरं [ ब्राह्मणादिश्च, तत्र जघन्यवर्णः] शूद्रः । तस्य गौरवं गुरुता, "पादान्तस्थं विकल्पेन" (श्रुतबोधे २ ) इति सिद्धान्तात्, पक्षे उत्कर्षः । [ तथाहि कस्यचित् श्लोकः–" ऊष्मव्यपेता रहिताश्च वृद्धया संयोगहीना लघवोऽपि चान्तः । श्लोकस्य वर्णा इव विद्विषस्ते पादान्तमागम्य गुरूभवन्ति ॥ " इति । ] जघनचपला नाम आर्याछंदोविशेषः, [ पूर्वं ३१३ आर्याटीकायां उक्तलक्षणः, जघनेन चपला असाध्वी ] व्यभिचारिणी

---

७७९ सहस्थिरात्मनां ( प ) । स्थिरात्मना (स्तं)। देव चित्रमे तत् यद' ( प. स्तं ), [ लिपिभ्रमात् पाठः ] ( का. पूर्वार्धपाठः अशुद्धः ) ७८० गौरवोत्पत्तिः ( स्तं ) । चपलाकथायां (प) 'तथा यां ( स्तं ) यदार्याः (शुभ्रा०) चपलापि चार्या (कापा)

**कस्य न जातिर्नात्मा नार्थज्ञानं न मानसे प्रशमः ।**
**भवसि भवसाररत्नं तेनाद्वयवादिनाऽसदृशः ॥ ७८१ ॥**

---

च । मात्राविशेषश्छंदोजातिः आर्या, [ तल्लक्षणं तु–" लक्ष्मैतत्सप्तगणा गोपेता भवति नेह विषमे जः । षष्ठो जश्च नलघु वा प्रथमार्धे नियतमार्यायाः ॥ " इति (५।१ ) छंदोमंजर्याम्, ] भार्या च । पिंगलः छन्दःशास्त्रनिर्माता ऋषिः, [ सोऽयं पिंगलनागः पिंगलाचार्यः पतंजलिरित्येवं अनेकधा ख्यायते, अयं नागत्वेन लुप्तनागजातीयः स्यात् इत्यनुमीयते, पाणिन्यनुजोऽयं इति सर्वानुक्रमणिकाटीकायां षड्गुरुशिष्यः । त्वया धर्मविदा शूद्राणामुत्कर्षापादनेन वर्णमर्यादाभंगो न कृतः इति भावः । कथं इत्याक्षेपेण तयोः वैषम्येण उपमानोपमेयभावः असंभवी इति सूचितं, तेन प्रतीपविशेषोऽलंकारः व्यतिरेकालंकारश्च व्यंग्यः । आचार्यदण्डिमतानुसारेण ( २।३४ ) अत्र प्रतिषेधोपमा । ] ॥ ७८० ॥ [ तस्य भगवतो बुद्धात् व्यतिरेकस्य प्रदर्शनेन तं स्तौति कस्येति । त्वं कस्य न जातिः जातिमान् सजातिः बंधुः, कस्य च त्वं आत्मा आत्मभूतः सुहृत् न, अपि च त्वं कस्य अर्थज्ञानं अर्थाय धमलाभाय ज्ञानं लक्षणया ज्ञानविषयीभूत इत्यर्थः, न; तथा त्वं प्रशमः " अर्शआदिभ्योऽच् " ( पा. ५।२।१२७ ) इत्यच्प्रत्ययाश्रणे शांतिमान् त्वं कस्य मानसे हृदये न, अर्थात् अविशेषेण सर्वेषां अपि त्वं बन्ध्वादिः असि । यतः एवं, तेन ततः, त्वं भवसाररत्नं भवस्य जगतः सारं उत्कृष्टतमं रत्नं मणिः, सन् । अद्वयवादी अद्वयं विज्ञानाभेदं सर्वेषां पदार्थानां वदति इति अद्वयवादी बुद्धः, तथाहि बुद्धस्य सुगतादिनामसु अमरः आह–" षडभिज्ञो दशबलोऽद्वयवादी विनायकः । " इति, तेन बुद्धेन असदृशः असमः तेन अनुपमेयः इति यावत्, भवसि । तथा च विज्ञानवादिबौद्धमते विज्ञानव्यतिरिक्तस्य सर्वस्य मिथ्यात्वात् तस्य न जात्यादि किमपि वर्तते, तव तु तत् सर्वं वर्तते इति । तथा बुद्धपक्षे जातिः सामान्यं, आत्मा जीवात्मपरमात्मेतिभिदद्वयवत् आत्मद्रव्यं, अर्थज्ञानं पदार्थानां ज्ञात्राश्रयं ज्ञानं, मानसे प्रशमः इत्यत्र च मानसे अप्रशमः इति पदच्छेदः, तेन अप्रशमः न अर्थात् प्रशमः शांतिः अस्ति ॥ अत्र 'भवसाररत्नं' इति पदं स्वारस्येन बौद्धमते बुद्धः धर्मः संघश्चेति रत्नत्रयांगीकारेण बुद्धस्य रत्नत्वात्, " जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते । " इति न्यायेन स्तूयमानस्य रत्नत्वात् उभयोः तुल्यत्वं ध्वनयति । तेन प्रकारेण तुल्यत्वेऽपि राज-

---

७८१ कस्य न ( गो. का )यस्य न ( प. हस्तं )। नात्मज्ञानं (का)। प्रेम ( कापा )। साररत्नं ( गो )। केन द्वय० ( का ) भवसार न त्वं तेना० ( प. हस्तं )

तत्रापि वृद्धियोगस्तस्मिन्नपि पुरुषगुणगणख्यातिः ।
परिभाषा तत्रापि व्याकरणान्नातिरिच्यसे तेन ॥ ७८२ ॥

पुत्रस्य जात्यादिसत्त्वेन बुद्धात् व्यतिरेकः व्यञ्जितः ॥ अत्र ] 'कस्य न जातिः बंधुः, अपि तु सर्वस्यैव सजातीयवत् हितकारी, पक्षे सामान्यम् । अद्वयवादिना ज्ञान-व्यतिरिक्तसर्वनिरासात् कस्यचिदपि न जातिः । आत्मा प्रियः । अर्थज्ञानं अर्थरूपेण ज्ञानम् । पक्षे नात्मा आत्माव्यतिरिक्तः तस्मिन् न पदार्थरूपतया ज्ञानम् । प्रशमः शांतिकरः, पक्षे शांतिः । अद्वयवादी बुद्धः । ' [ इति टिप्पणी ॥ प. स्तं. संज्ञितपुस्त-कयोः पाठस्तु "यस्य न जातिः···भवसार न त्वं तेना···सदृशः ॥ " इति । एत-त्पाठे अर्थस्तु—यस्य तव न जातिः लक्षणया ब्राह्मणादिभेदपक्षपातः न, यस्य न आत्मा कोऽपि आत्मीयो न, न च अर्थज्ञानं अपरिमितद्रव्यस्य आगमात् अतिदानात् वा, न च मानसे मनसि प्रशमः शांतिः सर्वदैव परहितकरणचिंतासक्तत्वात्, सः त्वं, हे भवसार जगतः सारभूत, तेन प्रसिद्धेन अद्वयवादिना बुद्धेन असदृशः न भवसि अपि तु सदृशः तुल्यो भवसि, यतः तव जात्यादिः नास्ति, तथा बुद्धस्यापि इति ॥ उभय-पाठयोः रत्नपदस्वारस्यात् वर्ण्यमानस्य च उत्कर्षध्वननात् मुद्रितः गो.पुस्तकस्थः पाठः एव श्रेयान् ॥ अपि च रत्नं इति अभेदप्राधान्यं रूपकं तेन रत्नपक्षेऽपि उत्त-मानां तेषां सर्वेषां एकरूपत्वात् तत्र न जातिः, जडत्वात् च न आत्मा, तत एव तस्य न अर्थज्ञानमपि, मानसे हृदये अन्तरिति यावत्, रत्नस्य प्रशमः न, किन्तु उज्ज्वलता अस्ति इत्यपि बोध्यते ॥ यद्वा यतः सर्वं आत्मवदेव पश्यसि ततः अद्वय-वादिना केवलाद्वैतवादिना सदृशः तुल्यः भवसि इत्यर्थः; अस्मिन्नर्थे ' न मानसे अप्रा शमः ' ' अद्वयवादिना सदृशः ' इति च पदच्छेदः कर्तव्यः ॥ यद्वा भवं सारयंति नाशयंति ते भवसाराः उदाराः दातारः तेषु रत्नं श्रेष्ठः भवसि; यतः उदाराणां अपि न जातिः दानाय नियमिता जातिः न, न च आत्मा आत्मीयः, न च अर्थज्ञानं इय-देव देयं नाधिकं न्यूनं वा इत्यर्थज्ञानं न, न च मानसे प्रशमः दानविषये शांतिः नास्ति अपि च अविच्छेदेन ददाति इत्यपि स्फुरति ॥ ७८१ ॥ वृद्धेः उत्कर्षस्य वृद्धि-संज्ञकादैचां च योगः । [ तस्मिन् व्याकरणशास्त्रे । ] पुरुषस्य गुणानां शौर्यादीनां गणस्य [ समूहस्य, च ख्यातिः ] प्रसिद्धिः; प्रथमादिपुरुषस्य, गुणस्य गुणसंज्ञकादेङां, गणस्य भ्वादिप्रभृतिगणस्य च ख्यातिः प्रसिद्धिः । परिभाषा नियमो नियमवाक्यं च, [ परिभाषा सूत्रत्वात् अल्पाक्षरा भूयिष्ठार्था सर्वत्र प्रवृत्ता प्रामाण्यं गता च,

७८२ तस्यापि वृद्धि०(स्तं)। गणस्योक्तिः (का)। रिच्यते (का) [प्रक्रमभंगदुष्टः पाठः]

निर्व्याजस्तवनोऽपि त्यक्ताक्षेपोऽपि निरुपमानोऽपि ।
सद्रूपकजातिगुणैर्नाथ त्वं गामलङ्कुरुषे ॥ ७८३ ॥

"अनियमनिवारको न्यायविशेषः,···'परिभाषा च तद्देकदेशे स्थिता सर्वशास्त्रमभिज्वलयति' इति भाष्यकारः । 'इको गुणवृद्धी' इत्यादिका परिभाषा । 'सिचि वृद्धिः, इत्यादिः विषयः ।" इति शिशुपालवधटीकायां ( १६।८० ) मल्लिनाथः । तत्रापि यथा त्वयि तथा व्याकरणेऽपि विद्यते, तेन हेतुना, त्वं, तस्मात् व्याकरणशास्त्रात्, नातिरिच्यसे अधिको न भवसि ॥ दंडिमतानुसारेण अत्र चटूपमा(२।३५), चटुः प्रियोक्तिः तत्प्रतिपादकत्वात् , सा च अत्र उत्कर्षकारणे सत्यपि नोत्कर्ष इति विशेषोक्तिगर्भा च ] ॥ ७८२ ॥ व्याजस्तवनं कपटेन प्रशंसा, व्याजस्तुतिरलंकारश्च, [ तद्रहितोऽपि; तथा त्यक्तः ] आक्षेपो मिथ्यागर्हणा अलंकारान्तरं च [ येन तादृशः, निरुपमानः असदृशः, उपमानं अत्रास्ते इति उपमालंकारः, निर्गतः स यस्मात् तथाविधः, अपिः विरोधे । सत् शोभनं रूपं सद्रूपं, तदेव सद्रूपकं, स्वार्थे कन् , जातिगुणाः जन्मसिद्धगुणाः च स्वभावगुणाः शौर्यप्रजापालनरक्षणादिलक्षणाः क्षत्रियजातिगुणाः तैः; पक्षे शोभनं रूपं स्वरूपं जातिः जन्म च येषां तादृशैः गुणैः माधुर्यादिकाव्यगुणैः, हे नाथ प्रभो, त्वं गां ] गौः पृथ्वी वाणी च [ तां "गौः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान् । स्त्री सौरभेयीदृग्बाणदिग्वाग्भूष्वप्सु भूम्नि च ॥" इति मेदिनी । अलंकुरुषे भूषयसि ॥ अलंकारेषु व्याजस्तुतिः तु—"स्तुत्या वा गम्यते निन्दा निन्दया गम्यते स्तुतिः । व्याजस्तुतिरसौ यत्र स्तुत्या वा गम्यते स्तुतिः ॥ " इति । मंदारमरंदचंप्वाम् ( १० ) । आक्षेपालंकारः तु—"आक्षेपोऽपह्नवाद्भिन्नो निषेधो, जनरंजनः ।" इति; स च स्वोक्तस्यैव विचारणात् निषेधे शुद्धाक्षेपः इति; विशेषप्रतिपत्तये सामान्यांशविभेदतः द्विविधस्य वक्ष्यमाणस्य उक्तस्य वा, निषेधाभासकीर्तने आभासिताक्षेपः इति; अनिष्टविधौ व्यक्ते सत्यपि निषेधे तिरोहिते संगुप्ताक्षेपः इति त्रिधा भिन्नः; प्रकारान्तरेण च वस्तुनः निषेधे वस्त्वाक्षेपः इति; कथनस्य आक्षेपे कथनाक्षेपः इति; निगदितः नानाभेदप्रसिद्धः अलंकारः । "साधर्म्यमुपमा भेदे" (काव्यप्रकाशे १० । १ ) इति; लक्षितः उपमालंकारः ॥ "ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः । उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः॥" इति ( काव्यप्रकाशे ८।१ ), "उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित् । हारादिवदलंकारास्तेऽनुप्रासोपमादयः ॥" ( ८।२ ) इत्युक्तलक्षणाः गुणाः अलंकाराश्च । तत्र गुणाः

७८३ संज्ञापकजाति ( गो २ का )

अन्यैव वर्णनैषा दूराल्लोकोत्तरा स्थिता काऽपि ।
वामो यथैव शत्रुषु मित्रेषु तथैव वामोऽसि ॥ ७८४ ॥
पूजयसि येन गुरुजनमभिनन्दसि येन साधुचरितानि ।
प्रीणयसि येन विप्रान्नृपनन्दन तेन वृषभस्त्वम् ॥ ७८५ ॥

---

तु—"श्लेषः प्रसादः समता माधुर्यं सुकुमारता । अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः ॥" (काव्यादर्शे १।४१) इति दशधा भिन्नाः ॥ विरोधपरिहारे अपिः चार्थकः, तेन त्वं सर्वेषां परमार्थेन स्तोता, अनिन्दकश्च, अत एव अनन्यसमः सन् स्वीयैः शोभनसहजगुणैः शौर्यादिभिः पृथ्वीं अलंकुरुषे; पक्षे उपमाद्यलंकारहीना वाणी न शोभते तथापि तादृशीमपि तव वाणीं त्वं माधुर्यादिकाव्यगुणैः अलंकुरुषे इति भावः । तथाहि अलंकारानुसंधानात् प्रागेव गुणवैचित्र्यं सहृदयहृदयान् विनद्धि, उक्तं च—"तया कवितया किं वा तया वनितया च किम् । पदविन्यासमात्रेण यया नापहृतं मनः ॥" इति । यत्र च कवितायां गुणवैचित्र्यं नास्ति तत्र सत् अपि अर्थालंकारवैचित्र्यं न काव्यशोभां पुष्णाति, यथाह भोजराजः—"अलंकृतमपि श्रव्यं न काव्यं गुणवर्जितम् ।" इति । एवं गुणकृतवैचित्र्यमपि गिरां अलंकरणं अस्त्येव ॥ अत्र श्लेषालंकारः, तन्मूलो विभावनालंकारश्च । तल्लक्षणं तु—"विभावना विना हेतुं कार्योत्पत्तिर्यदुच्यते । उक्तानुक्तनिमित्तत्वाद्द्विधा सा परिकीर्तिता ॥" इति ( साहित्यदर्पणे १०।६६–६७ )। अत्र 'सद्रूपकजातिगुणैः' इतिपदेन उक्तकारणा सा । द्वयोः संकरः । विरोधालंकारश्च व्यंग्यः ॥ 'संज्ञापकजातिगुणैः' इति पाठे संज्ञापकाः सूचकाः ये जात्याः स्वजात्याः क्षत्रियजात्याः गुणाः शौर्यादयः तैः इत्यर्थः ॥७८३॥ एषा उत्तरार्धे कथ्यमाना, काऽपि अवर्णनीया, अन्यैव विलक्षणा, वर्णना गुणवर्णनं स्तुतिः, दूरात् अत्यंतं, लोकोत्तरा अनन्यसामान्या स्थिता वर्तते । सा का इत्याह वाम इति । यथैव शत्रुषु ] वामः प्रतिकूलः [ त्वं, तथैव मित्रेषु वामः ] सुंदरश्च [ असि । ] " वामो वल्गुप्रतीपौ " इति अमरः ॥ [ श्लेषोत्थापितः विरोधालंकारः, "विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः ।" इति ( काव्यप्रकाशे ) लक्षणात्, विषयस्य वर्णनायाः अन्यत्वेन उक्तेः भेदकातिशयोक्तिः-काव्यलिंगं च पूर्वार्धस्य उत्तरार्धेण समर्थनात् ॥ एकस्यैव ते शत्रुषु मित्रेषु च अत्यंतविरुद्धेषु एक एव धर्मः वामत्वं वर्तते इति अद्भुतम् ॥ ७८४ ॥ येन यतः, गुरुजनं, गुरवः तु—"उपाध्यायः पिता ज्येष्ठभ्राता चैव महीपतिः । मातुलः श्वशुरस्त्राता

---

७८४ वर्णिकैषा भवस्तु लोकोत्तरा (प.स्तं) वर्णनैषा दूराल्लोकान्तरा(का) ७८५ विप्रान् वृषनन्दन ( गो )

दैन्यमिदं यच्छ्लाघा क्रियते ते रक्षसाऽपि न समस्य ।
न स बलमकरोद्योषिति भवांस्तु भुङ्क्ते प्रसह्य रिपुलक्ष्मीम् ॥७८६॥
रमणीय चाटुवचनस्तवनं यल्लाभहेतुरस्माकम् ।
तत्पतति ते स्वरूपे, यामि, नमः, सन्तु सौख्यानि ॥' ७८७ ॥

मातामहपितामही । बन्धुर्ज्येष्ठः पितृव्यश्च पुंस्येते गुरवः स्मृताः ॥ १ ॥ माता मातामही चैव पितृमातृष्वसा (सा ?) दयः । श्वश्रूः पितामही ज्येष्ठा धात्री च गुरवः स्त्रियः ॥२॥ इत्युक्तो गुरुवर्गोऽयं मातृतः पितृतो नृपाः । अनुवर्तनमेतेषां मनोवाक्कायकर्मभिः ॥ ३ ॥" इति बल्लालचरिते (अ. १६) । तान् पूजयसि । अभिनंदसि प्रशंससे । नृपनंदन राजपुत्र । ] वृषभः वृषः धर्मः, वृषभः श्रेष्ठश्च । [ त्वं वृषभः इति श्लिष्टरूपकं, तादृशत्वे च गुरुपूजनादिहेतूनां कथनात् हेत्वलंकारः ] ॥७८५॥ वक्रोक्त्या तं प्रशंसति दैन्यमिति । अपि च इदं दैन्यं कार्पण्यं मनसः निरोजस्त्वं मलिनतादिकृत् इति भावः, यत्, रक्षसा रक्ष्यते अस्मात् इति रक्षः राक्षसः हीनयोनिः तेनापि, न समस्य न तुल्यस्य, अर्थात् तादृशादपि न्यूनस्य, ते तव, श्लाघा स्तुतिः, क्रियते प्रवर्त्यते । असमत्वं निर्दिशति नेति । सः राक्षसः प्रकृते रावणः, योषिति स्त्रियां प्रकृते सीताख्यायां, तां स्ववशीकर्तुं, बलं पराक्रमं न अकरोत्; भवान् तु रिपुलक्ष्मीं शत्रूणां श्रियं, प्रसह्य हठात् बलात्, भुंक्ते उपभोगं कुरुते ॥ ] 'रक्षः रावणः, स हि नलकूबरानुरक्तरंभायां प्रसह्य प्रवृत्तः, तेन परस्त्रीबलात्कारे प्रवृत्तः शतधा छिन्नमूर्धा भविष्यसि इति शप्तः, इति पौराणिकी कथाऽत्रानुसन्धेया ।' [ इति टिप्पणी । व्याजस्तुतिः अलंकारः, निंदा च मुखे ॥७८६॥ बन्दी राजपुत्रस्तवनं उपसंहरति रमणीयेति । रमणीयेति संबोधनम् । यद्वा रमणीयैः मनोहरैः, चाटुवचनैः श्लाघापरवाक्यैः, युक्तं स्तवनं स्तुतिः, यत्, अस्माकं स्तावकानां स्तोतॄणां, लाभहेतुः स्तुतिपाठश्रवणप्रसन्नेन राजादिना धनहस्त्यादि दीयते इति, तत् प्रकृते न मिथ्या, अपितु ते तव स्वरूपे पतति अस्मदुक्तं न चाटुः परंतु परमार्थः इत्येव बोध्यम् । अस्तु तदनुरूपं प्रभुतं दीयतां इति अभिसन्धिः ॥ समाप्तकार्यतया स्वनिर्गमनं प्रार्थयते यामि इति । गमनसमये नमस्क्रियायाः उचितत्वात् नमः इति करशिरःसंयोगादिरूपक्रियया सह उक्तिः, नम्रीभवामि इत्यर्थः; आशीर्वादश्च सन्तु सौख्यानि इति, सौख्यानि सर्वप्रकाराणि शरीरधनकुटुम्बादि-

७८६ क्रियते तव (स्तं) स हठमकरो (प. स्तं) ७८७ रामणिकचाटुपदस्त (प. स्तं) । उत्पतति (गो) [ का पुस्तक पाठः अतीवदूषितः ]

श्रुत्वोत्तरमवदत्तं बन्दिनमभिनन्द्य साधुवादेन ।
'आस्स्व किमाकुलता ते, यास्यसि तुष्टो मया प्रहितः ॥ ७८८ ॥
पुनरपि पठ तद्युगलं गीतिकयोर्यत्त्वया पुरा पठितम् ।
कक्षान्तरितेन मम स्थितस्य कुलपुत्रिकारामे' ॥ ७८९ ॥
'त्वयि वदति साधुवादं वागियमुन्मुद्रिता बुधसमाजे' ।
अभिधायेति पपाठ त्रिस्थानविशुद्धनादेन ॥ ७९० ॥

---

संवर्द्धानि सुखानि, सन्तु वर्तन्ताम् । इति । आशीरलंकारः ॥७८७॥ श्रुत्वा आकर्ण्य, उत्तरं पश्चात् श्रवणानन्तरं, तं बंदिनं चाटुकारिणं, साधुवादेन अभिनंद्य साधुसाधु समीचीनं इत्युक्त्या प्रशंस्य, अवदत् । किमित्याह आस्स्वेत्यादि । आस्स्व स्वासने उपविश, इदानीं गमनं मा कुरु इत्यर्थः । ते तव, किं किमर्थं, आकुलता चित्तव्यग्रता यत् गमनाय उद्युक्तोऽसि इति भावः । तुष्टः मत्तः पारितोषिकादिलाभेन प्रसन्नः, मया प्रहितः गमनाय अनुज्ञातः सन्, यास्यसि गमिष्यसि, विलंबस्व तावत् इति भावः ॥ ७८८ ॥ गमननिवारणकारणभूतं स्वेप्सितं तं बंदिनमाह पुनरिति । कुलपुत्रिकारामे कुलकन्यका कन्यकाभिजनः तदर्थं यः आरामः उद्यानं स कुलपुत्रिकारामः, तत्कारणात् तन्नाम्नैव प्रसिद्धः राज्ञः आरामः, तत्र, स्थितस्य मम मयि स्थिते इत्यर्थः, कक्षान्तरितेन कक्षा गेहप्रकोष्ठः 'ड्योढी' 'दोढी' वा इति भाषायां प्रसिद्धा, ' कक्ष्या ('क्षा') साम्यवरत्रयोः । कच्छाख्यगुल्मवस्त्रे च काञ्च्यां गेहप्रकोष्ठके ॥ पार्श्वाद्यंगसमुद्भूतरोगभेदेऽङ्गुलावपि ।'' इति केशवः, अन्तरितेन अन्तर्गतेन आच्छादितेन वा,] 'कक्षान्तरितं गर्भगृहान्तरं '[इति टिप्पणी अशुद्धा, त्वया, पुरा कस्मिंश्चित् समये, यत्; गीतिः छंदोविशेषः, तल्लक्षणं उक्तं प्राक् ( आ. ३२५ टी० ), सा एव गीतिका, गीतिका च गीतिका च गीतिके तयोः, युगलं युग्मं, पठितं प्रोक्तं, तत् पुनरपि पठ, तस्य रमणीयशब्दार्थवत्तया तव पाठकौशलेन च अधुना पुनः श्रोतुं इच्छा वर्तते इति भावः ॥७८९॥ बन्दी प्रत्युवाच त्वयीति । अस्यां विद्वद्गोष्ठ्यां त्वया ' साधुसाधु ' इत्यादि वदता मे अभिनंदनं कृतं तेन इयं मे वाणी ] उन्मुद्रिता विकसिता [ समुन्मीलिता जाता, प्रोत्साहितोऽहं इति भावः; इतिः प्रकारे, राजपुत्रस्य चाटुं कृत्वा, तत् स्मृतिपथमानीतं गीतियुगलं त्रिस्थानविशुद्धनादेन कंठादिस्थानत्रये विशुद्धेन अदुष्टेन स्वच्छेन नादेन

---

७८८ श्रुत्वानन्तरम' ( प. स्तं ) । अस्ति किमा० (का) ७८९ गीतिकया यत्पुरा ( का ) । पुत्रिकावासे ( प. स्तं ) ७९० त्वयि ददति (गो २)

'एका खण्डनकुपिता, विरसाऽन्या प्रणयभङ्गवैलक्ष्यात् ।
काचिन्निकटतरासनमप्राप्य बिभर्ति निर्वेदम् ॥ ७९१ ॥

स्वरेण, तथाहि—"यदूर्ध्वं हृदयग्रन्थेः कपालफलकादधः । प्राणसंचरणस्थानं स्थानमित्यभिधीयते ॥ उरः कण्ठः शिरश्चेति तत्पुनस्त्रिविधं मतम् ॥" इति, "मन्द्रो वक्षसि, मध्यमोऽप्यथ गले, तारः पुनर्मस्तके, दारव्यां तु विपर्ययादिह भवेत्तारो ह्यधोधः क्रमात् ।" इति च स्थानसंबद्धानां स्वराणां संज्ञाः । (दारव्यां वीणायाम् ।) नादश्च—"नादोऽनुरणनाकारः स्वरश्चित्तानुरंजकः ।" इति लक्षितः । यद्वा "उरसः शिरसः कण्ठादुत्थितः पंचमः स्वरः ।" (१।५।६) इति नारदीयशिक्षायां उक्तेः पंचमस्वरेण इत्यर्थः; पपाठ उच्चैः गीतवान् । अनेन गानस्य रक्तादिदशगुणेषु अलंकृतं नाम गुणः द्योतितः, तदुक्तं तत्रैव (१।३)—"अलंकृतं नाम उरसि शिरसि कंठयुक्तमित्यलंकृतम्" इति । अनेन स श्रावकः (गाता) त्रिस्थानशोभीत्यपि सूचितम् । तथाच भरतः—"शिरःकण्ठेष्वभिहितं त्रिस्थानमधुरस्वरैः । त्रिस्थानशोभीत्येवं तु स हि तज्ज्ञैः प्रकीर्तितः ॥" (३३।१४–१५) इति ॥७९०॥ तद्गीतियुगलं शब्दशः अनुवदति एकेत्यादि । अत्र दक्षिणः नायकः "एषु त्वनेकमहिलासमरागो दक्षिणः कथितः ।" इति साहित्यदर्पणे (३।३५) लक्षितः ॥ एका अंतःपुरसुंदरी खण्डनकुपिता खंडनेन निराकरणेन कुपिता संजातक्रोधा वर्तते, खडिता नायिका इति भावः, तल्लक्षणं तु—"अन्यसंभोगचिह्निते प्रेयसीर्ष्याकुला खण्डिता ।" इति शृंगारामृतलहर्यां, "निद्राकषायमुकुलीकृतताम्रनेत्रो नारीनखव्रणविशेषविचित्रिताङ्गः । यस्याः कुतोऽपि गृहमेति पतिः प्रभाते सा खण्डितेति कथिता कविभिः पुराणैः ॥" इति च; अस्याः चेष्टाः—"अस्फुटालापचिन्तासंतापनिःश्वासतूष्णींभावाश्रुपातादयः ।" इति रसमञ्जर्याम् । अत एव सा न रतिदानपरा, अतः प्रसादनीया इति सूच्यते । एवमन्यत्र । अन्या सुंदरी तु, प्रणयस्य याच्ञायाः, "प्रणयास्त्वमी । विश्रंभयाच्ञाप्रेमाणः ।" इति अमरः, तस्य भंगेन अपूर्त्या, यत् वैलक्ष्यं चित्तभेदः, तेन विरसा हर्षौत्सुक्यादिरहिता; इयं प्रणयकुपिता रुष्टा मानवती, तेन च परिचयविशेषः व्यज्यते । अपरा काचित् तु निकटतरं प्रियसमीपस्थं यत् आसनं तत् अप्राप्य, प्रियात् दूरं प्राप्तासना इत्यर्थः, इदं अवमानसूचकं, अतः निर्वेदं चित्तखेदं बिभर्ति धारयति; इयं अवज्ञाता, अस्याः चेष्टाश्च "दैन्यचिन्ताश्रुनिःश्वास-

७९१ प्रेमभङ्ग (प. स्तं) गेयभङ्ग (का) । बिभर्ति हृदयनिर्वेदम् (प. स्तं)

अन्या कलहान्तरिता, नवपरिणयलज्जयाऽपरा सहिता ।
रमणीगणमध्यगतः स्मरातुरः किं करोतु बहुजानिः ॥' ७९२ ॥
( संदानितकम् )

वैवर्ण्योच्छ्वसितादयः । " इति ॥ ७९१ ॥ अन्या कलहान्तरिता कलहेन अन्तरिता प्रियात् व्यवधानं प्राप्ता, तल्लक्षणं च–" प्राणेश्वरं प्रणयकोमलमंजुवाग्भिर्या चाटुकारमचिरादवधीर्य याति । संतप्यते मदनवह्निशिखासहस्रैर्बाष्पाकुला कुकलहान्तरिता हि सा स्यात् ॥"(७)इति भरतकृताष्टनायिकालक्षणे; 'पतिमवमत्य पश्चात् परितप्ता' इत्यर्थः, तस्याः चेष्टाश्च–"भ्रांतिसंतापसंमोहनिःश्वासज्वरप्रलापादयः ।" इति रसमंजर्याम् । अपरा अन्या तु नवपरिणयेन नूतनपाणिग्रहणेन, या लज्जा धाष्टर्याभावः, तया सहिता, प्रचुरव्रीडा, सा तु प्रथमं अवतीर्णनवयौवना, अत एव रत्युदयेऽपि प्रियसमागमे भयं लज्जां च वहति तेन ' मुग्धा ' इत्युच्यते, यौवनोदयात् प्रागेव सा विवाह्यते इति सैव ' नवोढा ' इत्यपि उच्यते; " मुग्धाया आद्यावस्था नवोढा, दरविश्रब्धा मुग्धैव विश्रब्धनवोढा इत्यन्ये । अस्याश्च रतिवामत्वकोपमृदुत्वादयश्चेष्टाः । " इति च शृंगारामृतलहर्याम् । एवं नवोढा लज्जाभयपराधीनरतिः, "अस्याश्चेष्टा क्रियाह्रिया मनोहरा, कोपे मार्दवं, नवविभूषणे स्पृहा च ।" इति रसमंजर्याम् । एवं रमणीगणस्य स्वीयसुंदरीसमूहस्य, प्रकृते पत्नीपंचकस्य, मध्यगतोऽपि तेन सन्निहितः परिवृतोऽपि, स बहुजानिः बह्व्यः जायाः पत्न्यः यस्य सः, " जायाया निङ् " ( पा. ५।४।१३४ ) इति जायान्तस्य बहुव्रीहिसमासे निङादेशात् बहुजानिः, स्मरातुरः कामावेगवान् सन्, किं करोतु, सर्वासामपि स्वस्वकारणभेदेन रतिवैमुख्यात् कामवशः नायकः किंकर्तव्यतामूढः वर्तते इति भावः ॥ प्रकृते प्रथमा तावत् प्रसादनीया, द्वितीया संतोषितव्या, तृतीया अनुनेया, चतुर्थी संधेया, पंचमी च आवर्जनीया, इति नायकस्य दक्षिणत्वात् बहुकार्यसंपातेऽपि खण्डिताया एव गुरुकोपवत्त्वात् तस्याः प्रसादनं एव सर्वोपरि इति रहस्यम् । अत एव तस्याः अत्र प्रथमं ग्रहणम् ॥ एतच्छायः कोऽपि श्लोकः–"स्नाता तिष्ठति कुंतलेश्वरसुता, वारोऽङ्गराजस्वसुः, द्यूते रात्रिरियं जिता कमलया, देवी प्रसाद्याऽद्य च । इत्यन्तःपुरसुंदरीः प्रति मया विज्ञाय विज्ञापिते, देवेनाप्रतिपत्तिमूढमनसा द्वित्राः स्थितं नाडिकाः ॥ " इति । ( स्नाता ऋतुस्नाता । वारः सुरतार्थं निर्योमितः दिवसः । द्यूते पणत्वेन सैव रात्रिः कमलया जिता जयेन आत्मसुरतार्थं प्राप्ता । देवी कृताभिषेका राजपत्नी । नाडिका क्षणः । ) अत्र उक्तनिमित्ते विशेषो-

७९२ परा निहता ( प ) । लज्जया निहता (स्तं) । स्मराकुलः (गो) । करोति ( प.स्तं)

अभ्युपपत्त्यवबोधकमस्तकचलनं विधाय विकृतभ्रूः ।
नृत्याचार्यभवादीदेतस्मिन्किन्नु संगीतम् ॥ ७९३ ॥
स उवाच ततो 'वणिजो नेतारो यत्र, यत्र पात्राणि ।
शाट्यायतनं दास्यस्तत्र कुतः सौष्ठवं नाट्ये ॥ ७९४ ॥

---

स्त्यलंकारः व्यंग्यः, कारणसत्त्वेऽपि निमित्तवशात् कंचित्कालं कार्यानिष्पत्तेः सूचनात् ॥ सन्दानितकं इति युग्मं, तथाचोक्तं—"एकस्मिन् छंदसि वाक्यसमाप्तौ मुक्तकं, द्वयोः संदानितकं, त्रिषु विशेषकं, चतुर्षु का(क)लापकम् ।" इति काव्यालंकारटीकायां (१६।३६) नमिसाधुः; साहित्यदर्पणे (६।३१४) तु—"द्वाभ्यां तु युग्मकं, संदानितकं त्रिभिरिष्यते । कलापकं चतुर्भिश्च, पंचभिः कुलकं मतम् ॥" इति किंचिद्भेदेन प्रोक्तम् । (तन्मतेन संदानितकस्यैव विशेषकं तिलकं चेति संज्ञा ॥) "एकः श्लोको मुक्तकः स्यात्, द्वाभ्यां युगलकं स्मृतम् । त्रिभिर्गुणवती प्रोक्ता, चतुर्भिस्तु प्रभद्रकम् ॥ बाणावली पंचभिः स्यात्, षड्भिस्तु करहाटकः ॥" इत्यपि अन्यत्र संज्ञा उक्ताः ॥ ७९२ ॥ प्रकरणान्तरं प्रस्तौति अभ्युपपत्तीति । अभ्युपपत्तिः सान्त्वनपूर्वकोऽनुग्रहः, तस्याः अवबोधकं सूचकं ज्ञापकं, मस्तकचलनं शिरश्चालनं, विधाय कृत्वा, इदं आकंपितं शिरः, यथोक्तं नाट्यशास्त्रे—"शनैराकंपनादूर्ध्वमधश्चाकंपितं भवेत् । (८।१९) संज्ञोपदेशपृच्छासु स्वभावाभाषणे तथा । निर्देशावाहने चैव भवेदाकंपितं शिरः॥" (८।२०) इति । एतस्मिन् आस्थाने तत्र वर्तमानं इति यावत्, नृत्याचार्यः नृत्योपाध्यायः यथा मालविकाग्निमित्रे गणदासहरदत्तौ, तं, विकृतभ्रूः उत्क्षिप्तैकभ्रुकुटिः, अयं भ्रुकुटिव्यापारः उत्क्षेपाख्यः, तथाच भरतः—"भ्रुवोरुन्नतिरुत्क्षेपः सममेकैकशोऽपि वा ।" (८।११४) इति, स च प्रश्नेऽपि; अवादीत् उक्तवान् । किमित्याह किन्विति । किन्नु इति प्रश्ने, "किन्नु प्रश्ने वितर्के च ।" इति विश्वलोचनः, संगीतं प्रेक्षणार्थनृत्यगीतवाद्यत्रयं, "गीतवाद्यनृत्यत्रयं नाट्यं तौयत्रिकं च तत् । संगीतं प्रेक्षणार्थेऽस्मिन्, शास्त्रोक्ते नाट्यधर्मिका ॥" (२।१९३) इति हेमचंद्रः, "गीतं वाद्यं तथा नृत्यं त्रयं संगीतमुच्यते ।" इति च संगीतरत्नाकरे (१।२१); एवं च मालविकाग्निमित्रस्थं 'संगीतशालातः' इति पदं तट्टीकाकारैः नाटकशालाया इति व्याख्यातम्, संगीतस्य गानमात्रार्थत्वं तु उपचारात् ॥ ७९३ ॥ ततः एवं प्रश्ने कृते, सः नृत्याचार्यः, उवाच उत्तरं अदात्, किमित्याह वणिज इत्यादि । यत्र यस्मिन्

---

७९३ अभ्युपगमावबोधक (प.स्तं) । वलनं (कापा) । नृत्ताचार्य (प.स्तं) । किं सुमंगीतम् (प. स्तं. गो २) ७९४ साध्यायतनं (गो) [अस्य का. पाठः अक्षरमात्रः]

काचिद्बलिनाऽऽक्रान्ता, काचिन्न जहाति कामिनं रुचिरम् ।
अन्या पानकगोष्ठ्यां नयति दिनं प्रीतकैः सार्धम् ॥ ७९५ ॥
नोत्सृजति सततमेका पुरुषागमनाशया गृहद्वारम् ।
शूलापालः कथयति लब्धोत्कोचो रजस्वलामपराम् ॥ ७९६ ॥

---

नाट्ये, वणिजः क्रयविक्रयकारिणः सार्थवाहाः वा वैश्याः किराटाः अर्थैकपुरुषार्थाः वित्तशाठ्याः, नेतारः नायकाः सभाप्रधानाः, यत्र च, पात्राणि नटाः "पत्रं पर्णे च पक्ष्मणि नृत्योद्यतनटेऽपि च ।" इति विश्वलोचनः, पत्रमेव पात्रं, "प्रज्ञादिभ्यश्च" (पा. ५।४।३८) इति स्वार्थेऽण्, दास्यः वेश्याः, कीदृश्यः, शाठ्यायतनं कापट्यनिवासस्थानं, तत्र तस्मिन् तादृशे इत्यर्थः, नाट्ये वाचिकादिचतुर्विधाभिनयरूपे नटकर्मणि नटप्रयोगे, तथाहि भावप्रकाशे—" आङ्गिकाद्यैरभिनयैर्वाक्यार्थाभिनयात्मकम् । रसभावसमायुक्तं तन्नाट्यं परिचक्षते ॥ " इति, सौष्ठवं चारुता मनोहरत्वं, कुतः प्रश्ने अव्ययं, कस्मात् हेतोः इत्यर्थः । तादृशे नाट्ये सौष्ठवं नास्त्येव इति भावः ॥ आक्षेपद्वारा यत्र त्वादृशाः राजपुत्राः सभानायकाः, अस्मद्विनेयसदृश्यः नर्त्यश्च तत्रैव यथार्थं नाट्यं भवेदिति सूचितम् ॥ ७९४ ॥ त्रिभिः वेश्यानर्तकीनां पूर्वोक्तशाठ्यस्य प्रकारान् प्रपञ्चयति काचिदित्यादिभिः । काचित् वेश्या, बलिना अधिकप्रभुत्ववता पुरुषेण, आक्रान्ता अधिष्ठिता, अतः नाट्याय आहूता सेच्छाऽपि तद्भयतः आगन्तुं अशक्ता इत्यभिप्रायः । काचित् वेश्यानटी रुचिरं सुंदरं कामकलादिना वा मनोहरं, कामिनं कामुकं, न जहाति तस्मिन् आसक्ता स्वयमेव भोगवंचनभीत्या नागच्छति । अन्या, पानं एव पानकं मद्यपानं तदर्थं या गोष्ठी सभा समाजो वा तत्र, पानार्थायां सभायां मद्यपानां समाजे, ] प्रीतकाः प्रियाः [ तैः सार्धं सह, दिनं नयति दिवसं क्षपयति, अतः मत्ता सा नाट्ये अशक्ता ॥ ७९५ ॥ एका अन्या काऽपि, कामुकप्राप्त्याशया, निरन्तरं, गृहद्वारं न त्यजति, गृहे स्वस्थित्यभावे कामुकप्रणाशभिया, पिंगलावत्, लोभग्रस्तत्वात् । अपरां तु केनाऽपि कारणेन जिगमिषाविरहितां, लब्धः कामुकात् वेश्यायाः वा ] उत्कोचः उपदा [ लञ्चा 'लांच' इति भाषायां, येन सः, शूलापालः–शूला पण्ययोषित्, तथा च " अट्टमन्नमिति प्रोक्तं शूलो विक्रय उच्यते । शिवो वेद इति प्रोक्तः केशो भग इतीर्यते ॥" तथा "अट्टशूला जनपदाः, शिवशूला द्विजातयः । प्रमदाः केशशूलिन्यो, भवंत्यत्र कलौ युगे ॥"

---

७९५ बलनाक्रान्ता ( प. स्तं ) । रुचितं ( प.स्तं ) । अन्या च पानगोष्ठया ( प.स्तं ) । प्रीतिकैः ( प )

रङ्गगताऽपि क्षुद्रा शृणोति यदि परिचितं गृहायातम् ।
उद्दिश्य चापि कार्यं व्रजति ततः प्रकृतमुत्सृज्य ॥ ७९७ ॥
आ तारुण्योद्भेदात्कान्ते दृष्टिर्यया न्यस्ता ।
सामाजिकमध्यस्था कथमन्या समुपयाति परभागम् ॥ ७९८ ॥
चेतोऽन्तरा न सत्त्वं, सत्त्वे सति चारुता प्रयोगस्य ।
न भवति सा वेश्यानां मद्यामिषपुरुषनिहितहृदयानाम् ॥७९९॥

(हरिवंशे) इत्युक्तेः शूलति विक्रीणाति आत्मशरीरं इति शूला पण्ययोषित्; तां ता वा पालयति इति शूलापालः वेश्याधिपतिः । तां अतथाविधां अपि रजस्वलां ऋतुमतीं कथयति निवेदयति, तादृश्या नृत्यकरणं निषिद्धं इति ॥ ७९६ ॥ द्वाभ्यां तासां अनागमने निमित्तादीन्युक्त्वा रंगं आगताया अपि शाठ्यस्य प्रकारं प्रकाशयति रंगेति । क्षुद्रा वेश्या, संगीतकार्थे, रंगं नाट्यस्थानं तत्र गताऽपि, यदि परिचितं कामुकं गृहायातं स्वस्याः गृहं आगतं शृणोति, ततः तदा, तद्गतचित्ता अधिकलोभाद्वा, गृहे अवश्यकर्तव्यव्याजेन प्रकृतं नाट्यं, उत्सृज्य त्यक्त्वा, व्रजति अपगच्छति ॥ ७९७ ॥ नृत्यन्त्याः अपि तस्याः विसंष्ठुलताजन्यं अरमणीयत्वं प्रतिपादयति आ तारुण्येति द्वाभ्याम् । यया वेश्यया, तारुण्योद्भेदात् आ यौवनप्राप्तिकालं आरभ्य, कान्ते कमनीये सुरूपे पुरुषे इत्यर्थः, दृष्टिः न्यस्ता अनुरागवती जाता इत्यर्थः, यं कमपि सुरूपं दृष्ट्वा तत्र आसक्ता भवति इति भावः, तादृशी अन्या अपरा, सामाजिकानां सभ्यानां प्रेक्षकाणां मध्ये स्थिता नाट्यार्थं, कथं, ] परभागं शोभातिशयं, [ समुपयाति प्राप्नोति। अभ्यासात्समाजस्थितसुंदरपुरुषदर्शनहृतदृष्टिचित्तादिना वेश्या यथावत् नृत्यं कर्तुं न पारयति इति तात्पर्यम् ॥ ७९८ ॥ प्रयोगचारुताबीजनिर्देशपूर्वकं वेश्यासु तदसंभवात् तासां नाट्ये अनौचित्यं उपसंहरति चेतः इति । चेतः चित्तं लक्षणया तदैकाग्र्यं इत्यर्थः, अंतरा विना, "अंतरा तु विनार्थे स्यान्मध्यार्थनिकटार्थयोः ।" इति विश्वलोचने, ] 'चेतोऽन्तरा असावधानता' [ इति टिप्पणी चिंत्या, न, सत्त्वं बलं सौष्ठवसंपादकं; तस्मिन् सति वर्तमाने च, प्रयोगस्य तत्तद्भावानां अभिनयस्य, चारुता रमणीयता भवति, इति तत्त्वम् । सा चारुता वेश्यानां नाट्ये न भवति। तत्र हेतुद्योतकं तासां विशेषणं मद्येत्यादि । मद्ये मधुपाने, आमिषे मांसे तद्भक्षणे

७९७ यत्परिचितं (का) [ अनर्थकः पाठः ]। वारिकार्यं (प.स्तं) ७९८ भेदाच्छान्ता दृष्टिर्यया निजाऽभ्यस्ता (प. स्तं) कान्ते याऽभ्यस्ता (गो २)। °स्था सा कथमन्यासुयाति (प. स्तं)। परिभावम् (स्तं) ७९९ चेतोवशिता सत्त्वं (प.गो२)। चेतोवश्विता सत्त्वं (स्तं)

**वयमपि देवनिकेतनमनङ्गहर्षे गते त्रिदिवलोकम् ।**
**आश्रितवन्तो गत्वा तीर्थस्थानानुरोधेन ॥ ८०० ॥**

इति यावत्, रतिप्रियतया च पुरुषेषु निहितहृदयानां स्थापितचेतोवृत्तीनाम्, अत: चारुतासंपादकसत्त्वरहितानां इति भाव: । मद्यामिषपुरुषा: तासां चित्तविक्षेपहेतव: । प्रसिद्धं च पुरूरवसि गतचित्ताया: उर्वश्या: नाट्यस्खलनं विक्रमोर्वशीयत्रोटके तृतीयाङ्कविष्कंभके॥ 'वेश्यानामल्पाऽपि पुरुषहृतहृदयानाम्' इति का. पाठोऽपि सुगम: ॥ ७९९ ॥ एवं स्वीयनाट्योत्कर्षसूचनाय वेश्यानाट्यनिंदां कृत्वा स्ववृत्तान्तं निवेदयति वयमिति ॥ अनङ्गहर्ष:--इदानीं 'थानेश्वर' इति प्रसिद्धस्य श्रीकंठजनपदस्य अधिप: हर्षवर्धननामा निपुण: कवि: रत्नावलीप्रियदर्शिकाख्ययो: नाटिकयो: नागानन्द-तापसवत्सराजाख्ययो: नाटकयो: च कर्ता, महाकविबाणमयूरदिवाकरादिभि: सेवित:, विक्रमार्कसंवत्सर ६६८–७०४ पर्यन्तं प्रतिपालितराज्य: चक्रवर्ती राजा । स एव तदीयरत्नावलीनाटिकास्थेन (१।२२)–"अनङ्गोऽयमनङ्गत्वमद्य निन्दिष्यति ध्रुवम् । यदनेन न संप्राप्त: पाणिस्पर्शोत्सवस्तव ॥" इति श्लोकेन विद्वद्गोष्ठीषु अनङ्गहर्ष:' इति लब्धवर्ण: । यथा तत्तदपूर्वकल्पनायुक्तश्लोकनिर्माणात् कालिदास: दीपशिखाकालिदास इति ( रघुवंशे ६।६७ ) धूमकालिदास: ( रघु० ७।४३ ) इति वा, भारवि: ( किरातार्जुनीये ५।३९ ) आतपत्रभारवि: छत्रभारवि: वा इति, माघ: ( शिशुपालवधे ४।२० ) घण्टामाघ इति, वेणीसंहारनाटककर्ता नारायण: निशानारायण इति, रत्नाकर: ( हरविजयमहाकाव्ये १९।५ ) तालरत्नाकर इति, बाणभट्ट: ( हर्षचरिते उ० ३।५–६ ) तुरंगबाण इति, त्रिविक्रमभट्ट: ( नलचम्प्वां ६।१ ) यमुनात्रिविक्रम इति, मुरारि: ( अनर्घराघवनाटके २।८१ ) इन्दुमुरारि: इति, मंख: ( श्रीकण्ठचरितमहाकाव्ये ६।१३ ) कर्णिकारमंख इति, अमरचन्द्रसूरि: ( बालभारतमहाकाव्ये ११।१६ ) वेणीकृपाणामर: इति, अप्पयदीक्षितपितामहर्षे आचार्यदीक्षित: ( वरदराजवसंतोत्सवे ) वक्ष:स्थलाचार्य इति, मालतीमाधवादीनां कर्ता भट्टश्रीकण्ठ: भवभूतिश्रीकण्ठ इति च प्रसिद्धिमुपगता: तथा ॥ तस्मिन् अनंगहर्षे नाट्यशास्त्रपारंगते राज्ञि, त्रिदिवलोकं त्रय: ब्रह्मविष्णुरुद्रा: दीव्यन्ति यत्र इति त्रिदिवं स्वर्ग: स एव लोक: भुवनं तं, गते प्राप्ते, तस्मिन्मृते इत्यर्थ:, ( तत्समयश्च विक्रमार्कसंवत्सरस्य ७०४ तमो वत्सर इति ऐतिहासिकैर्निर्णीत:, ) वयं अहं मच्छिष्या: नट्यश्च इति भाव:, अपि: स्वर्थक:, अस्मद्विधाया: अनुरूपपरीक्षकाभावात् निर्विण्णा: इति सूच्यते, गत्वा व्रजित्वा, तीर्थस्थानानुरोधेन इयं वाराणसी पुण्यजनकं

८०० त्रिदशलोकम् ( प. स्तं. ) । मत्वा ( प. स्तं. ) । स्थानोपरोधेन ( प. स्तं. )

इह तु कदाचित् किञ्चिद्वृत्तिनिरोधाभिशङ्कया निरुत्साहाः ।
रत्नावल्यामेता विदधति करपादविक्षेपम् ॥ ८०१ ॥
वत्सेशभूमिकाऽस्या इयमनुकुरुते नरेश्वरवयस्यम् ।
वासवदत्ताचरितप्रयोगमेषा विडम्बयति ॥ ८०२ ॥

---

तीर्थस्थानं इति तस्य अनुरोधेन आनुकूल्येन, 'तीर्थस्थानाद्धि प्राप्तव्यं लभ्यते' इति प्रसिद्धेः, "तपसा स्वर्गगमनं, भोगो दानेन जायते। ज्ञानेन मोक्षो विज्ञेयस्तीर्थस्नानादघक्षयः ॥" इत्युक्तेश्च इति भावः; इदं देवनिकेतनं देवालयं देवमन्दिरं आश्रितवन्तः । चित्तखेदापनयनाय अत्र कृतकतिपयदिवसनिवासाः संवृत्ता इति बाह्यः अभिप्रायः ॥ अत्र तीर्थस्थानं स्थाण्वीश्वरं इति केनचिदुक्तं तत्पूर्वापरानालोचनयेति ज्ञेयम् ॥ ८०० ॥ वर्तमानं स्वव्यापारमाह इहेति । ] 'वृत्तिः अभास ( मासादिनियत ? ) कालिकधनादिप्राप्तिः' [ इति टिप्पणी, वस्तुतस्तु वृत्तिः आजीविका, तस्याः निरोधः रोधः नाशः वा, तस्य अभिशंकया त्रासेन भीत्या वा, नाट्येन धनार्जनं विना कथं शरीरपोषणं निर्वहिष्यति इति; इह मन्दिरे, तु, एताः पुरोवर्तिन्यः शिष्याः नर्त्यः, रत्नावल्यां तदाख्यायां श्रीहर्षप्रणीतनाटिकायां, "सप्तम्यधिकरणे च" (पा. २।३।३६) इति सप्तमी । रत्नावल्यादिरूपकाणि पूर्वोक्तहर्षवर्धनेन न विरचितानि, अपितु शककर्तुः मालवाधिपतेः श्रीहर्षविक्रमादित्यस्य आस्थानकविना घटकर्परापरनाम्ना धावकेन विरच्य तत्कर्तृत्वेन स्वजीविकादातुः श्रीहर्षस्य नाम संस्थाप्य प्रसिद्धिं नीतानि इति केषांचिन्मतम् ॥ ] 'करपादविक्षेपः नूतनोऽभ्यासः' [ इति टिप्पणी, वस्तुतस्तु तालत्लयापेक्षः अभिनयशून्यः करपादाद्यङ्गविक्षेपः नृत्तं, तस्यात्र ग्रहण नाट्योपलक्षणार्थं विनयप्रदर्शनार्थं वा; किंचित् अल्पं न तु पूर्णतया, निरुत्साहाः फलवत्कर्मणि अपि मन्दमनोवृत्तयः सत्यः, कदाचित् विरलतया, विदधति कुर्वन्ति ॥ इदानीं अपि गुर्जरात्तादिदेशेषु 'भवैया' इति प्रसिद्धाः भरतपुत्राः ग्रामेषु देवालयं आश्रित्य तत्र नाट्यं प्रयुञ्जते इति प्रसिद्धम्, तथैव वस्तुतः अस्य नृत्याचार्यस्य तत्र स्थितिः ॥ ८०१ ॥ तत्र काका कां भूमिकां अभिनयति इति ताः विविच्य निर्दिशति वत्सेश्वरेत्यादिभ्याम् । अस्याः इति नटीविशेषं निर्दिश्य उक्तिः, एवमग्रेऽपि । वत्सानां प्रयागात् पश्चिमदेशस्य 'कोशां( सं )बमंडलं' इति प्रसिद्धस्य ईशः राजा उदयननामा, यस्य कथा विस्तरतः कथासरित्सागरे ( ११-३४ तरंगेषु ) कथिता, यं नायकं कृत्वा भासेन स्वप्नवासवदत्ता-प्रतिज्ञायौगन्धरायणं इति नाटके, हर्षेण रत्नावली-प्रियद-

---

८०२ [ अत्र का. पाठो दूषितः । ] भूमिकाया ( स्तं. )

उद्यमसाहित्यवशाच्छोभातिशयेन मदनुबन्धेन ।
अनया प्रसिद्धिराप्ता सिंहलराजात्मजानुकृतौ ॥ ८०३ ॥

शिका इति नाटिके तापसवत्सराजं इति च नाटकं, शक्तिभद्रेण उन्मादवासवदत्ताकाव्यं च प्रणीतम्; तस्य " भूमिका तत्तदभिनयकार्यं प्रति जनोचितवर्णवेषभाषाभिनयादिपरिग्रहः " इति मालतीमाधवटीकायां त्रिपुरारिः । इयं अपरा च नरेश्वरस्य राज्ञः ] वयस्यं [ नर्मसचिवं वसन्तकनामानं ] विदूषकं इत्यर्थः, [ अनुकुरुते तस्य वेषावस्थाद्यनुकृतिं करोति ॥—इदानीमिव पुराऽपि क्वचित् स्त्रीभिः पुरुषभूमिकाः स्वीकृताः, यथोक्तं भरतेन—" छन्दतः पौरुषीं कुर्याद्भूमिकां स्त्री प्रयोगतः । " ( २६।५ ) " स्त्रीषु योज्यः प्रयत्नेन प्रयोगः पुरुषाश्रयः । यस्मात्स्वभावोपगतो विलासः स्त्रीषु दृश्यते ॥ " ( २६।११-१२ ) इति; " धैर्यौदार्येण सत्त्वेन बुद्ध्या तद्वच्च कर्मणा । स्त्री पुमांसं त्वभिनयेद्वेषवाक्यविचेष्टितैः ॥ " ( १२।१६७ ) इति च । दृश्यते च तथैव प्रियदर्शिकायां नाटिकायामपि तृतीये अंके ' उदयनचरित ' नामगर्भनाटकस्य प्रयोगे " ततः प्रविशति गृहीतवत्सराजनेपथ्या मनोरमा । " इति वर्णिता च तत्रैव तस्याः वत्सेशानुकृतिः यथा—"रूपं तन्नयनोत्सवास्पदमिदं, वेषः स एवोज्ज्वलः, सा मत्तद्विरदोचिता गतिरियं, तत्सत्त्वमत्यूर्जितम् । लीला सैव, स एव सान्द्रजलदह्लादानुकारी स्वरः, साक्षाद्दर्शित एष नः कुशलया वत्सेश एवानया ॥ " ( ३।७ ) इति ॥ उक्तं च भरतेन—"व्याजेन क्रीडया वाऽपि तथा भूयश्च वञ्चनात् । स्त्री पुंसः प्रकृतिं कुर्यात्स्त्रीभावं पुरुषोऽपि वा ॥ " (१२।१६६) इति ॥ वासवदत्ता—उज्जयिनीपत्युः प्रद्योतापरनाम्नः चण्डमहासेनस्य पुत्री उदयनस्य च महिषी, तस्याः चरितस्य प्रयोगस्य अभिनयं, एषा, विडम्बयति अनुकुरुते ॥ ८०२ ॥ इत षड्भिः मंजर्याख्यायाः नस्याः नाटिकानायिकानुकरणकौशलं प्रशंसति उद्यमेत्यादिभिः । सिंहलानां इदानीं, 'सीलोन' इति प्रसिद्धस्य भारतवर्षात् दक्षिणस्यां दिशि स्थितस्य द्वीपस्य राजा सिंहलराजः, तस्य आत्मजा पुत्री रत्नावलीनाम्नी, तस्या अनुकृतौ चरितादीनां अनुकरणे, अनया मंजख्यया, प्रसिद्धिः लोके ख्यातिः, प्राप्ता अर्जिता । तत्र कारणानि निर्दिशति उद्यमेत्यादि । उद्यमः प्रयोगे परिश्रमः, तस्य साहित्यं सहभावः, वशात् प्रभुत्वात्, हेतौ पंचमी; तथा शोभा—"सा शोभा रूपभोगाद्यैर्यत्स्यादङ्गविभूषणम् । " इति उज्ज्वलनीलमणौ, तस्याः अतिशयेन उत्कर्षेण; ] ' मदनुबन्धेन मदाग्रहेण ' [ इति टिप्पणी, मच्छिक्षानुवर्तनेन च इत्यर्थः । तस्याः प्रसिद्धौ स्वाभाविकी रूपसंपत्तिः, सुशिक्षकात्

८०३ तदनुबन्धनेन ( प. स्त. )

**विविधस्थानकरचनापरिक्रमं गात्रवलनलालित्यम् ।**
**काकुविभक्तार्थगिरो रसपुष्टिं वासनास्थैर्यम् ॥ ८०४ ॥**

प्रयोगग्रहणं, तत्र दृढाभ्यासश्च इत्येतेषां एकत्र संमेलनं कारणं इति भावः । यथोक्तं— "कैशोरात्प्रभति प्रसादितमहातीर्थस्य शिक्षाबलादभ्यासाच्च जितश्रमेण विदुषा येन प्रयोगश्रिया । विद्यायां निजया स्वतो गुणवता माधुर्यमाधीयते गांभीर्यं च परं स एव विदुषां सम्यक् प्रसूते रसान् ॥" इति ॥ ८०३ ॥ नाट्ये प्रशंसाविषयान् तस्याः विविधसामान्यगुणान् पृथक्तया युग्मेन कथयति विविधेत्यादिना । द्वितीयान्तपदानां उत्तरार्यास्थेन 'वर्णयन्ति' इति पदेन अन्वयः । स्थानमेव स्थानकं, विविधानां स्थानकानां रचनायै निर्वृत्तये यः प्रक्रिमः पादचारः भ्रमणं सः विविधस्थानकरचनापरिक्रमः, तं; नृत्ये पादचारः चारी इति कथ्यते, तासां अंते यत् अङ्गानां आकारविशेषेण स्थापनं तत् स्थानकं इति उच्यते । गात्राणां अंगोपांगानां वलने लालित्यं सौंदर्यं, गात्राणां चारुवलनं इत्यर्थः ॥—काकुः—'कै शब्दे' इति धातोः काँयति अर्थान्तरं इति काकुः; यद्वा काकुः जिह्वा, तद्व्यापारसंपाद्यः शोकभीत्यादिभिः ध्वनेर्विकारः; यथोक्तं "भिन्नकण्ठध्वनिर्धीरैः काकुरित्यभिधीयते ।" इति, अमरोऽपि— "काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः ।" इति, तया विभक्ताः भेदान् आपन्नाः, अर्थाः अभिधेयाः, यत्र तादृश्यः गिरः वाणीः; यथा नायकानयनाय प्रेषितां तं संभुज्य प्रत्यागतां दूतीं प्रति कस्याश्चित् विदग्धनायिकाया उक्तिः—
"दूति, त्वया कृतमहो निखिलं मदुक्तं, न त्वादृशी परहितप्रवणाऽस्ति लोके ।
श्रान्ताऽसि हन्त मृदुलाङ्गि गता मदर्थं, सिध्यन्ति कुत्र सुकृतानि विना श्रमेण ॥"
(पुष्पबाणविलासे १७) इति । अत्र प्रायः प्रतिपदं काक्वा व्यंग्योऽर्थः लभ्यते, यथा दूति इति संबोधने काक्वा त्वया स्वोचितं दूतीकर्म न कृतं, प्रत्युत नायकसंभोगेन नायिकापदं संपादितं इति; परेति पदेन स्वयं लक्षिता काक्वा च परः नायकः लक्षितः । परं हितं इति च परमं सुखदायि संभोगरूपं; "हन्त हर्षविषादयोः" इत्युक्तेः द्वयोरप्यर्थयोः काक्वा लाभः, इत्यादिकं ऊह्यम् ॥—रसपुष्टिं अभिनयादिना प्रत्यापनीयस्य शृंगारादेः तत्तद्रसस्य, पुष्टिं पोषणं वृद्धिं वा; तथा च श्राव्येषु काव्येषु तत्तद्रसपरिपोषः भावविभावादिवर्णनात्मकैः बहुभिः वाक्यैः क्रियते, दृश्येषु तु अल्पवाक्यैरपि निबद्धस्य अर्थस्य रसपरिपोषः अभिनयैरेव सिद्धिं नीयते इति विशेषः ॥ वासना नाम भावना, सा द्विविधा नटनिष्ठा सामाजिकनिष्ठा च; तत्र

८०४ रचनां ( प. स्तं. ) । परिक्रम( ण )गात्र ( स्तं. )

सात्त्विकभावोन्मीलनमभिनयमनुरूपवर्तनाभरणम् ।
मिश्रामिश्रे नाट्ये लयच्युतिं वर्णयन्ति मञ्जर्यः ॥ ८०५ ॥

---

आद्या–' विभावादीनां अनपेक्षितग्राह्यसत्त्वानां शब्दैकश्रवणादेव आस्वादितसद्भा-वानां '' अभिधाव्यापारेण ' साधारणीकरणात्मा भावकत्वव्यापारः सः द्वितीयः तु–लोके अभ्याससपाटवात् सहृदयानां विभावादिव्यपदेश्यैः '' प्रतीतैः अभिव्यक्तीभूतः वासना-त्मकतया स्थितः रत्यादिभावसंस्कारः, यः पानकरसन्यायेन चर्व्यमाणः स्थायितां प्राप्नुवन् रसरूपतां आसादयति सः । तत्र आद्यायाः द्वितीयां प्रति कारणत्वम् । उभयोः अस्तित्वे स्थैर्ये च सर्वाङ्गतया रसनिष्पत्तिः फलम् । प्रकृते मंजर्याः उद्दिष्ट-त्वात् नटनिष्ठा वासना । तादृशीनां वासनानां अभिनयेन निष्पादितानां तत्तद्रस-भावनानां, स्थैर्यं निश्चलत्वं, वासनास्थैर्यम् ॥ ८०४ ॥ सात्त्विकभावाः रत्यादिचित्तवृत्ति-विशेषसंवेदनवृत्तयः स्तंभादयः अष्टौ, पूर्वं ( आ. ४७७ ) व्याख्याताः, ते च– "स्तंभः स्वेदोऽथ रोमाञ्चः स्वरभंगोऽथ वेपथुः । वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विकाः स्मृताः ॥" इति, तेषां उन्मीलनं विकासम् ॥ अभिनयः वस्तु अभिनीयते व्यज्यते यत्र सः, अर्थव्यंजिका तत्तदवस्थानुकृतिः, तम् ॥ अनुरूपवर्तनाभरणं–अनुरूपं भूमिकोचितं, वर्तनं वर्णैः उपवर्णैश्च अंगवर्तनं, यथोक्तं–" सितो नीलश्च पीतश्च चतुर्थो रक्त एव च । एते स्वभावजा वर्णा यैः कार्यं त्वंगवर्तनम् ॥" इतिः अनुरूपं च आभरणं उपचारेण ( लक्षणया ) तद्धारणं इत्यर्थः; अनुरूपं वर्तनं च आभरणं च अनुरूपवर्तनाभरणं, " चार्थे द्वंद्वः । " ( पा. २।२।२९ ) इति द्वंद्वः, ततः " विशेषणं विशेष्येण बहुलम् " ( पा. २।१। ५७ ) इति कर्मधारयः, तत् ॥ अत्रेदमवधेयं–यत्–युग्मे प्रथमाया आर्यायाः उत्तरार्धेन मंजर्याः वाचिकरसे, अस्यां सात्त्विकादिपदेन तस्याः स्वाभाविकरसे, अनुरूपादिपदेन च तस्याः नेपथ्यरसे कौशलं इति प्रशंसास्थानानि उक्तानि ; तथाहि–अभिज्ञानशाकुंतलटीकायां राघवभट्टेन समुद्धृतं श्रीमातृगुप्ताचार्य-वचनं–" रसास्तु त्रिविधा वाचिकनेपथ्यस्वभावजाः ॥ रसानुरूपैरालापैः श्लोकैर्वाक्यैः पदैस्तथा । नानालंकारसंयुक्तैर्वाचिको रस उच्यते ॥ कर्मरूपवयोजातिदेशकालानुवर्ति-भिः । माल्यभूषणवस्त्राद्यैर्नेपथ्यरस उच्यते ॥ रूपयौवनलावण्यस्थैर्यधैर्यादिभिर्गुणैः । रसः स्वाभाविको ज्ञेयः स च नाट्ये प्रशस्यते ॥" इति ॥ लयच्युतिं–लयः तालमानं, यथो-क्तं–" तालान्तरालवर्ती यः कालोऽसौ लय ईरितः । " इति, तस्य च्युतिं द्रुतत्वं, च,

---

८०५ मिश्रामिश्रैर्धर्मैर्लयाच्युतं व० ( प. ) मिश्रा०र्ति ( रां ) । वर्णयेच ( का ) [ प्रस्तुतविरोधी पाठः ]

**एषाऽभिधानकीर्तनगुणितस्वशरीरकुसुमशररोषा ।**
**सहसोद्भिन्नमनोभवभावदशा सिन्दुवारविवरेण ॥ ८०६ ॥**

वर्णयंति प्रशंसंति, प्रेक्षका: सामाजिका: वा इति शेष:, प्रसिद्धत्वादौचित्याच्च ॥ कुत्र इमानि परिक्रमादीनि इत्याह--मिश्रामिश्रे नाट्ये इति । नाट्यं नटकर्म रूपकप्रयोग:, तदुक्तं "आहार्याङ्गिकवाचिकभेदाच्चतुर्विधाभिनयै: । वाक्यपदार्थव्यंजकमिह नाट्यं नाटकीयमनुकरणम् ॥" ( १ । १५ ) इति रघुनाथविलासनाटके; तत् द्विविधं, मिश्रं गेयं इति संज्ञितं, अमिश्रं पाठ्यं इति संज्ञितं च; तत्र अमिश्रं शुद्धं गेयरहितं पाठ्यमात्रं, यथा मालतीमाधवादि; मिश्रं च गेयनृत्यादिसहितं, यथा विक्रमोर्वशीयं, रामानन्दरायेण प्रणीतं जगन्नाथवल्लभं च । तत्र अमिश्रे पाठ्ये अंगं गीतं चेत्युभयमप्रतिष्ठितम् । मिश्रे गेये ( रूपके ) तु गीतमंगं च द्वयमपि स्वप्रतिष्ठितम् । तच्च तोटकादिभेदै: विंशतिप्रकारकम् । तत्र क्वचित् गानप्राधान्यं क्वचित् वाद्यप्राधान्यं, क्वचित् नृत्यप्राधान्यं, क्वचिद्गीयमानरूपकाभिनयप्राधान्यं, क्वचिद्वर्णांगप्राधान्यं च । तत्रापि अमिश्रमपि नाटकं सामाजिकरंजनार्थं सूत्रधारै: स्वच्छंदत: गेयमिश्रणादिपरिणामेन मिश्रे परिसमाप्यते, यथा प्रकृते एव वर्णयिष्यमाण: रत्नावलीनाटिकाप्रथमाङ्कस्य प्रयोग: (आ. ८८१-९२८) । एवमेव शाकुंतले क्वचित्क्वचित् नटै: परिवर्धनं कृतं, विक्रमोर्वशीये च चतुर्थांके पौरूरवसीय: प्राकृतभाग: तैरेव प्रक्षिप्त: इति केषांचित् मतम् । इदं मतं न सम्यक् भाति विक्रमोर्वशीयस्य प्राचीनकालात् तोटकत्वेन प्रसिद्धे:, तोटकस्य च गेयरूपकभेदत्वेन नृत्यात्मकत्वेन च उक्ते: ॥ ८०५ ॥ एषेत्यादिना युगलकेन मञ्जर्या: रत्नावलीभूमिकायां विशिष्टतया प्रशंसनीयं दर्शनीयं च एकं नाट्यस्थानं निवेदयति । एषा सिंदुवारविवरेण इत्यनयो: पदयो: अग्रिमार्यायां 'वत्सेश्वरं पश्यंती' इत्यत्र संबंध: । एषा मंजरी गृहीतरत्नावलीभूमिका, नायकस्य अभिधानं नाम तस्य उदयन इत्यस्य कीर्तनेन कथनेन गुणित: वृद्धिं नीत: स्वशरीरे कुसुमशरस्य कामदेवस्य रोष: कोप: यस्या: तादृशी, तथा च रत्नावल्यां प्रथमांके "प्रीत्युत्कर्षकृतो दृशामुदयनस्येन्दोरिवोद्वीक्षते ।" ( १।२३ ) इत्यनेन वैतालिकपाठ्येन अभिज्ञाते नायके रत्नावलीत्यपरनाम्न्या: सागरिकाया: उक्ते: छाया--"कथमयं स राजा उदयनो यस्याहं ( यस्यै अहं ) तातेन दत्ता ।" इति, "कथं मंदभागिन्या मया प्रेक्षितुमपि चिरं न पारितोऽयं जन: ।" इत्यादिका च ।

---

८०६ कीर्तननाशितशरीरकुसुमशरवेधा ( प. स्तं ) । भावदशा ( स्तं ) । सिन्धुवार ( प. स्तं )

पश्यन्ती वत्सेश्वरमनुकार्यानुकरणभेदपरिमोषम्।
साधुध्वनिमुखराननसामाजिकजनमनःसु विदधाति ॥ ८०७॥
(युगलकम्)

---

(एवमग्रेऽपि बोधसौकर्याय रत्नावलीस्थप्राकृतवाक्यानां छायैव संगृहीता इति ज्ञेयम्।) सहजोद्भिन्नमनोभवभावदशा सहजं तत्कालं नामश्रवणसमये एव उद्भिन्ना प्रकटिता, मनोभवः कामः तस्य भावदशा चित्तवृत्तिविशेषः यस्याः सा, संजातकामविकारा इत्यर्थः; अयोगे कामदशाः दश, तदुक्तं-"दशावस्थः स तत्रादावभिलाषोऽथ चिंतनम् (४।५१)। स्मृतिर्गुणकथोद्वेगप्रलापोन्मादसंज्वराः। जडता मरणं चेति दुरवस्थं यथोत्तरम्॥" (४।५२) इति दशरूपके। प्रकृते च प्रथमा अभिलाषावस्था पूर्वानुरागेत्यपरनाम्नी उद्दिष्टा; "अभिलाषः स्पृहा तत्र कान्ते सर्वाङ्गसुन्दरे। दृष्टे श्रुते वा, तत्रापि विस्मयानन्दसाध्वसाः॥" इति तत्रैव (४।५२) उक्तेः, अन्यत्र च-"यत्प्रेम संगमात्पूर्वं दर्शनश्रवणादिभिः। भवेत्पूर्वानुरागोऽयं संकल्पात्मा प्रवर्तते॥ सोऽयं पूर्वानुरागाख्यो विप्रलंभ इतीरितः॥" इति॥ सिंदुवारविवरेण सिंदुवारवृक्षस्य छिद्रेण शाखावकाशेन इत्यर्थः। सिंदुवारः च 'निर्गुण्डी' 'नगोड' 'संभालू' 'स्यौंडी' इत्यादिनामभिः प्रसिद्धः वृक्षविशेषः; तत्रायं विशेषः-निर्गुण्डी नीलपुष्पा, त्रिपत्रात्मकः पंचपत्रात्मको वा तस्याः गुच्छः; सिंदुवारः तु श्वेतपुष्पः, (तथाहि विद्धशालभंजिकायां विदूषकोक्तिः-'कलमांकुरकुष्माण्डपाण्डुरेषु सितसिंदुवारपुष्पेषु' इति,) गुच्छस्तु त्रिपत्रात्मक एव, पुष्पाणि च श्वेतनीलानि, न तु केवलनीलानि इति॥८०६॥ पश्यन्ती प्रेक्षमाणा, वत्सेश्वरं उदयननामानं यस्मै तस्या वाग्दानं तत्पित्रा कृतम्। एतत्प्रसंगमधिकृत्य रत्नावल्यां प्रथमांके वासवदत्ताकृतराजपूजनसमये "सागरिका-(गृहीतकुसुमा।) हा धिक् हा धिक्, कथं कुसुमलोभोत्क्षिप्तहृदयया अतिचिरमेव मया कृतम्। तदनेन सिंदुवारविटपेन अपवारितशरीरा भूत्वा प्रेक्षे। (विलोक्य।) कथं प्रेक्षित एव अपूर्वः कुसुमायुधः। अस्माकं तातस्य अन्तःपुरे चित्रगतोऽर्च्यते, इह प्रत्यक्षीकृतः।" इत्यादि।] अनुकार्या रत्नावली इत्यर्थः, [तस्याः अनुकरणस्य च मञ्जरीधृतभूमिकायाः च, भेदस्य भिन्नत्वबुद्धेः, परिमोषं चौर्यं, विदधाति कुरुते, परिगलितोभयभेदज्ञानान् सामाजिकान् कुरुते इत्यर्थः; मंजर्याः अनुकार्यतादात्म्यदिग्धत्वेन इयं साक्षात् रत्नावली एव, न तु काचित् गृहीततद्भूमिका इति तेषां बुद्धिं जनयति इति भावः। ताद-

---

८०७ °मनुकार्यनुकर° (हतं) °कार्याकृतिरमन्दपरितोषम् (गो २. का) परिपोषं (गो २. कापा)

वत्सपतिमालिखन्ती कामावस्थां क्रमेण भजमाना ।
वेपथुपुलकस्वेदैरावहति विसंष्ठुलं हस्तम् ॥ ८०८ ॥
सदृशेऽप्यनुभावगणे करुणरसं विप्रलम्भतो भिन्नम् ।
दर्शयति निरभिकाङ्क्षितसौख्यं ननु गोचरापन्ना ॥' ८०९ ॥

---

शोत्कृष्टाभिनयभावितचेतोभिः उदीरितानां, साधुसाधु सुष्टुसुष्टु 'सात्राश' इति भाषायां, इति शब्दानां ध्वनिभिः घोषैः मुखराणि शब्दायमानानि आननानि मुखानि येषां तेषां सामाजिकजनानां प्रेक्षकाणां, मनःसु चित्तेषु ॥ ८०७ ॥ रत्नावलीभूमिकायां तस्याः अपरमपि सौष्ठवस्थानमाह वत्सेति । क्रमेण पूर्वोक्तचिंतनादिक्रमेण ( ८०६ आ. टी. ), कामावस्थां कामस्य अन्यान्यां प्रत्येकां दशां, भजमाना अनुभवन्ती सती, वत्सपतिं वत्सराजं उदयनं, आलिखन्ती तस्य साक्षाददर्शने तच्चित्रालोकनेन मनोविनोदाय तत्प्रतिकृतिं चित्रफलके लिखंती, यथोक्तं मेघदूते "मत्सादृश्यं विरहतनु वा भावगम्यं लिखन्ती ।" ( २।२४ ) इति, अयमपि विरहे विनोदनप्रकारः, यथोक्तं–"वियोगे चायोगे प्रियजनसदृक्षानुगमनं, ततश्चित्रालोकं, स्वपनसमये दर्शनमपि । तदङ्गस्पृष्टानामुपगतवतां स्पर्शनमिति, प्रतीकारः कामव्यथितमनसां कोऽपि गदितः ॥ " इति; वेपथुपुलकस्वेदैः आलेखनकाले संजातकंपरोमाञ्चस्वेदैः कंपादिसात्त्विकभावानुभावैः, आलेखनविघ्नकारिभिः, ] ' विसंष्ठुलं उन्मीलितसात्त्विकभावमन्थरं ' [ इति टिप्पणी, विह्वलं अस्थिरं इत्यर्थः, हस्तं आवहति; तथाहि मालतीमाधवे माधवोक्तिः–" वारंवारं तिरयति दृशाबुद्गतो बाष्पपूरस्तत्संकल्पोपहितजडिम स्तंभमभ्येति गात्रम् । सद्यःस्विद्यन्नयमविरलोत्कंपलोलांगुलीकः पाणिर्लेखाविधिषु नितरां वर्तते, किं करोमि ॥ " ( १।३८ ) इति । प्रकृते रत्नावल्यां द्वितीयाङ्के "सागरिका–···(·· नाट्येन फलकं गृहीत्वा, निःश्वस्य । ) यद्यपि मे अतिसाध्वसेन वेपते अयं अतिमात्रं अग्रहस्तः तथापि तस्य जनस्य अन्यो दर्शनोपायो नास्तीति यथातथा आलिख्य एनं प्रेक्षिष्ये । ( इति नाट्येन लिखति ।)" इति ॥ ८०८ ॥ तस्य कौतुकवर्धनार्थं तस्याः अपरमपि लोकोत्तरं चातुर्यं कथयित्वा उपसंहरति सदृशे इति । ] गोचरापन्ना अवलोकिता, [ सा, करुणरसविप्रलंभकरुणयोः निःश्वासाद्यनुभावानां समूहस्य समानत्वेऽपि, अतः तत्फलस्य रसभावनस्य साम्यसंभवेऽपि इति भावः, तत्तदनुभावैः भाव्यं करुणरसं शोकस्थायिभावं, तं

---

८०८ पुलकं ( स्तं )। ८०९ भावगुणे ( प )। °कांक्षितमुद्वर्तनगो° ( प. स्तं ) °तसत्त्वं ( कापा )

विशिनष्टि निरभिकांक्षितसौख्यमिति, संयोगसुखाशारहितं इत्यर्थः, अनेन उभयोः भेदबीजं कविनैव प्रकाशितं इति ज्ञेयं, विप्रलंभतः विप्रलंभशृंगारस्य करुणाख्यभेदतः इति विवक्षा, भिन्नं दर्शयति अनुभावाभिनयसौक्ष्म्यप्रदर्शनकौशलेन विशिष्टाभिनयैः वा उभयोः आस्वादनीययोः रसयोः पृथक्त्वं अनुभावयति, यथा विप्रलंभकरुणाभिनये सामाजिकानां करुणरसभ्रान्तिर्मा जायतां इति, इत्यर्थः। तथाहि विप्रलंभशृंगारस्य दशावस्थानां मध्ये अंतिमा दशा मरणं, तत्पूर्वं नवमीं यावत् शोकसंचारिभावस्य करुणविप्रलंभस्यापि अन्याः दशाः विषयः, तावच्च अनुभावानामपि साम्यम्। अनेन दुष्करकर्मणि तस्याः अपूर्वं कौशलं द्योतितं, तेन च अन्येभ्यः पात्रेभ्यः तस्याः व्यतिरेको ध्वनितः ॥ तत्र रसः तु—" रसः रस्यते स्वाद्यते इति रसः, काव्यानुशीलिनाऽभ्यासवशविशदीभूतवर्णनीयतन्मयीभवनयोग्यसामाजिकमनोमुकुरभाव्यमानतया निर्भरानंदसंविद्रूपः ॥ " इति उत्तररामचरितटीकायां ( ३ । ४७ ) वीरराघवः ॥—करुणरसः—शोकस्थायिभावप्रभवः मृताद्यालंबनकः, तद्गुणाद्युद्दीपितः, रोदनाद्यनुभावितः, दैन्यादिसंचारितः, चित्तवैधुर्यलक्षणः रसः ।—विप्रलंभस्तु शृंगारभेदः शोकसंचारिभावः संभोगोन्नतिकारकः; तथाहि—" शृंगारस्य द्वौ भेदौ संभोगो विप्रलंभश्च । तत्राद्यः परस्परावलोकनालिंगनाधरपानपरिचुंबनाद्यनंतत्वात् परिच्छेद्य एक एव गण्यते । ···अपरस्तु अभिलाषविरहेर्ष्याप्रवासशापहेतुक इति पंचविधः । " इति काव्यप्रकाशे ( उ० ४ ); ( अत्र कैश्चित् शापस्थाने कलहः परिगण्यते । ) केषांचिन्मते तु " विप्रलंभाभिधानोऽयं शृंगारः स्याच्चतुर्विधः । पूर्वानुरागो, मानाख्यः, प्रवासः, करुणात्मकः ॥ " ( शृंगारतिलके २।१ ) इति चतुर्विधः । वाग्भटप्रणीतकाव्यानुशासने—" स चाभिलाषमानप्रवासभेदात् त्रिधा । " ( ५ ) इति; केचित्तु—" अप्राप्तिर्विप्रलंभः स्याद्यूनोर्जाताभिलाषयोः॥ विप्रलंभस्य भेदाः स्युरयोगो विरहस्ततः । प्रवासः शापकरुणमानसाश्चेति षण्मताः ॥ संप्राप्तेः प्रागभावो यस्तमयोगं प्रचक्षते ।" इत्यादि । एषु भेदेषु केषांचित् स्वस्वमतानुसारेण तत्रतत्रान्तर्भावः स्पष्टः एव ॥ एषु पूर्वानुराग एव अभिलाषहेतुकः अन्योन्यप्राप्तीच्छारूपः न प्रवासहेतुकः । विरहस्तु एकतरस्य अननुरागात् दैवप्रतिबंधात् गुरुलज्जादिवशात् वा असंयोगः; द्वितीयतृतीयमतयोः अस्य अभिलाषेऽन्तर्भावः । ईर्ष्याजन्य एव मानाख्यः । शापहेतुक एव ‘करुणविप्रलंभः’ इत्यपि उच्यते, ( अत्र शापः बंधनादीनां उपलक्षणम्। ) स च मृताद्यालंबकात् करुणरसात् भिन्नः, यथोक्तं—" यूनोरेकतरस्मिन् गतवति लोकान्तरं पुनर्लभ्ये । विमनायते यदेकस्तदा भवेत्करुणविप्रलंभ इति ॥ " विप्रलंभभेदविशेषस्य करुणस्य लक्षणं नामकरणकारणं च रसार्णवसुधाकरे ( २।२१८–२१९ )—" द्वयोरेकस्य मरणे पुन-

रुज्जीवनावधौ ॥ विरहः करुणोऽन्यस्य संगमाशानिवर्तनः । करुणभ्रमकारित्वात् सोऽयं करुण उच्यते ॥ " इति । स च यथा—कादंबर्यां महाश्वेतायाः, आदौ तत्र पुंडरीकस्य नाशात् शुद्धकरुणरसविषयत्वेऽपि अशरीरिण्या वाण्या संगमप्रत्याशया रत्युद्भवेन शोकस्थायिभावस्य संचारिभावे परिणमनात् । कर्णभूषणकारस्तु ( ५।५५ ) महाश्वेतापुंडरीकवृत्तान्तं शुद्धकरुणरसं मनुते, तद्रतेः विप्रलंभस्थायित्वेन अनुद्भासनात्, तत्, तथा रसरत्नहारे शोकजः करुणो रसः "अनिष्टावाप्ते रत्नावल्यां सागरिकाबंधने" उदाहृतः सोऽपि पूर्वोक्तमतानुसारेण करुणविप्रलंभ एव भवति; भरतमतानुसारेण तु न विरोधः, तथाहि भरतः—"इष्टजनस्य विनाशात् शापाक्रोशाच्च बन्धनाद्व्यसनात् । एतैरर्थविशेषैः करुणाख्यरसः समुद्भवति ॥ " इति ॥ तन्मतानुसारिणः तु विप्रलंभभेदं करुणं नैव स्वीकुर्वंति, उभयालंबनस्य तस्य (करुणविप्रलंभस्य) एकत्रैव असंभवात् । तन्न । तथाहि काव्यालंकारटीकायां नमिसाधुः—"केचिद्धि करुणरसे एव विप्रलंभभेदं करुणमन्तर्भावयंति, तदसत्, वैलक्षण्यात् । शुद्धे हि करुणे शृंगारस्पर्श एव न विद्यते, करुणविप्रलंभस्तु शृंगार एव । " इति । उक्तं च शृंगारतिलककारेणापि—"यत्रैकस्मिन् विपन्नेऽन्यो मृतकल्पोऽपि तद्गतम् । नायकः प्रलपेत्प्रेम्णा करुणोऽसौ स्मृतो यथा ॥ ६० ॥ ( करुणः करुणविप्रलंभः । ) केषांचित्करुणभ्रांतिः कारुण्यादत्र जायते । एतस्य मिथुनावस्थां विस्मृत्य रतिमूलजाम् ॥ ६२ ॥ स्त्रीपुंसयोर्भवेदेष सापेक्षः संगमे पुनः । शृंगारवचनप्रायः, करुणः स्यात्स चान्यथा ॥ ६३ ॥ ( अत्र तस्य द्वैविध्य मुक्तम् । अन्यथा निरपेक्षः इति भावः । ) तस्माच्छृंगार एवायं करुणेनानुमोदितः । सौंदर्यं नितरां धत्ते निबद्धो विरलं बुधैः " ॥ ६४ ॥ इति ( २ परि० ) ( अयं निरपेक्षः करुणविप्रलंभः ।) एतन्मते यत्र स्त्रीपुंसयोः एकस्य मरणात् निरवधिः विरहः तत्रापि करुणविप्रलंभ एव रसः, तत्र शृंगारबीजभूतायाः रत्याः प्राधान्येन अस्तित्वात् । यत्र च शृंगाररतिभावरहितानां प्रियाणां धनसंबंध्यादिपदार्थानां नाशात् शोकः तत्र शुद्धः करुणरसः । एतदपि स्पष्टीकृतं शृंगारतिलके, तथाहि तत्र ( ३।५ ) करुणरसलक्षणं—"शोकात्मा करुणो ज्ञेयः प्रियभृत्यधनक्षयात् । तत्रेत्थं नायको दैवहतः स्याद्दुःखभाजनम् ॥ " इति । ( प्रियाः ये भृत्यादयः । ) उभयोः समानेऽपि शापादिविभावे चिंताद्यनुभावे च रतिसत्त्वविच्छेदाभ्यां भेदः इति अवगंतव्यम् ॥ एवं उत्तररामचरितस्य (३) छायांके शृंगारतिलक—काव्यालंकारादिमतेन करुणविप्रलंभ एव रसः, नतु करुणः रसः । भवभूतिस्तु भरतादिमतं अनुमोदयन् करुणविप्रलंभं करुणरसे एव अंतर्भावयति । तदेतदनेन समर्थितं तत्र "एको रसः करुण एव निमित्तभेदात् । " ( ३।४१ ) इत्याद्यया तमसोक्त्या । आवर्तबुद्बुदानीनां बाह्याकारभेदेऽपि यथा तेषां

अस्मिन्दर्शयतीत्थं मञ्जरिकां साभिलाषमवलोक्य।
पस्पर्श राजपुत्रः किमसाविति वेत्रदण्डेन॥ ८१०॥

---

सर्वेषां एकमेव जलं रूपं, तथा शापादिना पृथक्तया भासमानत्वेऽपि विप्रलंभशृंगारस्य सर्वे भेदाः करुणरस एव इति तस्य महाकवेः आशयः प्रतीयते। तत्र हेतुस्तु विप्रलंभे रतिबीजं गौणतया, व्यापी शोकांकुरस्तु प्रधानतया अनुभाव्यते इति। उदाहृतश्लोके 'एकः' इतिपदेन न शृंगारादीनां रसान्तराणां व्युदासः कवेः अभिप्रेतः, अपि तु विप्रलंभभेदानां एव इति भाति॥—अनुभावास्तु "ये रसान् अनुभावयंति अनुभवगोचरतां नयंति ते अनुभावाः कटाक्षादयः करणत्वेन" इति रसतरंगिण्याम्, "वागङ्गसत्त्वाभिनयैर्य ('र') स्मादर्थो विभाव्यते। वागङ्गोपाङ्गसंयुक्तस्त्वनुभाव इति स्मृतः॥" (७।५) इति च भारतीये उद्धरणम्। अपि चान्यत्र उक्तं—"रसीभवतः स्थायिभावस्य कार्यं अनुभावः।" "रसतां गच्छति स्थायी, यत्कार्यमुपलक्ष्यते। अनुभावः स विज्ञेयो भावसंस्थानसूचकः॥" इति।—तत्र करुणरसानुभावाः—अश्रुपातविलपितपरिदेवितवैवर्ण्यस्वरभेदस्रस्तगात्रताभूमिपाताक्रंदितनिःश्वासादयः, तथाहि कर्णभूषणे—"करुणस्यानुभावाः स्युर्वैवर्ण्यं परिदेवनम्। भूमिपातो दैवनिंदा निःश्वासो मुखशोषणम्॥ (२।३३)। प्रलापः क्रन्दनं मोहागमोरस्ताडनादयः।" इति। करुणाभिनयप्रकारस्तु—"स पुनः क्रन्दनैर्मोहैः प्रलापैः परिदेवनैः। देहायासाभिघातैश्च करुणाभिनयो भवेत्॥" इति भरतः॥—विप्रलंभानुभावाः च—"संताप—जागर—कार्श्य—प्रलाप—क्षामनेत्र—वचोवक्रता—दीनसंचरणानुकारलेखलेखन—वाचन—स्वभावनिह्नव—वार्ताप्रश्न—स्नेहनिवेदन—सात्त्विकानुभवन—शीतप्रयोगसेवन—मरणोद्यम—संदेशदानाद्यनुभावः वियुक्तयोः विप्रलंभः।" इति वाग्भटकाव्यानुशासने (५)॥—एवं करुणरसविप्रलंभानुभावानां समानत्वं स्पष्टं, उक्तं च काव्यप्रकाशे "अश्रुपातादयोऽनुभावाः शृंगारस्येव करुणभयानकयोः" (उ. ४) इति, (शृंगारः विप्रलंभः।) उभयोः रसयोः भेदं तु भरतमनुसृत्य संक्षेपेणाह जगद्धरः मालतीमाधवटीकायां—"आलस्यादिसमुत्थो निरपेक्षभावः करुणः, औत्सुक्यचिंतादिसमुत्थः सापेक्षभावो विप्रलंभ इत्यनयोर्भेदः।" इति॥ ततः मदालसा—वासवदत्ता—सीतादीनां मृत्युशंकायां करुणविप्रलंभः, मृत्युनिश्चये करुणः, पुनः प्राप्त्याशोदये करुणविप्रलंभः, प्राप्तौ च संभोगशृंगारः, इति विवेकः॥ ८०९॥ तस्याः सौन्दर्यदर्शनेन गुणकथन-

---

८१० तस्मिन्निर्दिशतीत्थं (प. स्तं. गो २)। किमु मामिति (का) [संगतिरहितः पाठः]।

बुद्ध्वाऽथ तस्य भावं प्रसारयन्युवतिसंकथाकेलिम् ।
न्यक्कुर्वन् वारवधूः सचिवः प्रशशंस बन्धकीगमनम् ॥ ८११ ॥
दाररतिः सन्ततये, व्याधिप्रशमाय चेटिकाश्लेषः ।
तत् खलु सुरतं सुरतं कृच्छ्रप्राप्यं यदन्यनारीषु ॥ ८१२ ॥

---

श्रवणेन च संजातं राजपुत्रस्य भावनिर्बंधनं प्रकटयति अस्मिन् इति । अस्मिन् नृत्याचार्ये, इत्थं पूर्वोक्तप्रकारकवचनैः, दर्शयति तस्याः गुणान् प्रकाशयति सति, मंजरिकां तन्नाम्नीं नटीं प्रस्तुताख्यानस्य नायिकां, साभिलाषं अभिलाषः स्पृहा अभीष्टप्राप्तीच्छा तेन सहितं यथा स्यात् तथा, निर्वर्ण्य अवलोक्य, स राजपुत्रः, एवं गुणैर्निरूप्यमाणा मंजरी, किमिति प्रश्ने, असौ इति उक्त्वा, स्वीयेन वेत्रदंडेन क्रीडायष्ट्या 'छडी' इति भाषायां, पस्पर्श, वेत्रदंडस्पर्शेन तां निर्दिश्य किमसौ एव सा इति पप्रच्छ इत्यर्थः । अस्यां चेष्टायां स्वाभिज्ञानाविसंवादनं बाह्योऽभिप्रायः, अनुरागप्रदर्शनं चान्तरोऽभिप्रायः ॥ ८१० ॥ प्रासंगिकसंगत्या पारदारिकं विवक्षुः कविः तदवतारयति बुद्ध्वेति । अथ नटीस्पर्शानन्तरं, तेन इति भावः, तस्य राजपुत्रस्य, भावं चित्तविकारं रतिं, बुद्ध्वा तच्चेष्टया विज्ञाय, सचिवः राजपुत्रस्य मंत्री, यथा राज्ञः सचिवः भवति तथा राजपुत्रस्यापि सर्वव्यवहारनिरीक्षकः सचिवः भवति; युवतीनां नायिकानां अन्यासां इत्यर्थः, संबंधसामान्ये षष्ठी, या संकथा आलापः, तद्रूपा या केलिः क्रीडा, तां, प्रसारयन् विस्तारयन्, वारवधूः वेश्याः, न्यक्कुर्वन् निंदन्, बन्धकीगमनं कुलटाभिः परदाराभिः संप्रयोगं; बन्धकी बध्नाति मनोऽत्र इति, "पुंश्चली धर्षणी बन्धक्यसती कुलटेत्वरी । स्वैरिणी पांशुला च स्यात् ।" इति अमरः, "बंधकी कुलटा मुक्ता पुनर्भूः पुंश्चली खला । स्पर्शाऽभिसारिका दूती स्वैरिणी संफली तथा ॥" इति धनंजयनाममाला च । सा च षड्विधा—"विदग्धा मुदिता चैषाऽनुशयानाऽथ लक्षिता । गुप्ता च, कुलटा चेति षट्प्रकारोदिता बुधैः ॥" (२३) इति रसरत्नहारे । ] गमनं समागमः । [ प्रशशंस । तथाहि मुकुंदानंदभाणे—"क्व पणावधिकं प्रेमनटनं पण्ययोषिताम् । पल्लवेषु परस्त्रीणां क्व च नैसर्गिको रसः ॥" (१३९) इति ।(पल्लवेषु शृंगारेषु । नैसर्गिकः अकृत्रिमः ।) ॥ ८११ ॥ इतः ८६१ आर्या यावत् पारदारिकम् । तदादौ अन्येभ्यो विविच्य प्रशंसति दारेति । दाराः भार्याः स्वीयाः तैः सह, रतिः सुरतं, "रतिः कंदर्पभार्यायां सुरतोत्कंठयोरपि । रागेऽपि परमप्रीतौ ।" इति केशवः, संततये पुत्रपौ-

---

८११ भावं संशमयन् ( गो. क. ) शंस बन्धकागमनम् ( कापा ) ८१२ कण्डूप्रशमाय [ इति लौकिकः पाठः ] । कृच्छ्रप्रायं ( स्तं )

त्रादिसंतानसंपादनाय, न तु मन्मथाप्यायनाय, तदुक्तं–"भार्या धर्मफलावाप्त्यै भार्या संतानवृद्धये" इति काशीखंडे, "अपत्यान्यंगशुश्रूषा धर्मः स्वजनगौरवम् । गृहकर्मनियोगश्च स्त्रीवहल्याः फलपंचकम् ॥" इति च ॥ मनुरपि–"अपत्यं धर्मकार्याणि शुश्रूषा रतिरुत्तमा । दाराधीनस्तथा स्वर्गः पितृणामात्मनश्च ह ॥" (९।२८) इति, "प्रजनार्थं महाभागाः पूजार्हा गृहदीप्तयः । स्त्रियः श्रियश्च गेहेषु न विशेषोऽस्ति कश्चन ॥" (९।२६) इति च ॥ चेटिका दासी वेश्या सामान्या, "गणिका लञ्जिका वेश्या रूपाजीवा विलासिनी । पण्यस्त्री दारिका दासी कामुकी सर्ववल्लभा ॥" इति धनंजयनाममालायां; तस्याः आश्लेषः आलिंगनं, इदं सुरतोपलक्षणार्थं, व्याधेः स्तब्धलिंगतारूपस्य रोगस्य, प्रशमाय शांत्यै, न तु आह्लादाय । द्वयोरपि सुरतं न सुरतशब्दार्थवाहि इति भावः ॥ परिशेषात्, अन्यनारीषु परदारासु परकीयासु, अत एव कृच्छ्रेण कष्टेन, प्राप्यं लभ्यं, यत्, सुरतं निधुवनं, तत्, खलु निश्चये, सुरतं शोभनं परमानंदप्रापकत्वात् रतं मोहनं संप्रयोगः, सुरतशब्दवाच्यः कामधर्मः भवति इत्यर्थः, तस्य कृच्छ्रलभ्यत्वेन उभयोः भोगोत्सुकत्वात् । तथा च कामसूत्रं–"सुलभामवमन्यते दुर्लभामाकांक्षत इति प्रायोवादः" (५।१।४०) इति, "विष्णुगुप्तसंहितायां च–'यत्र निषेधविशेषः सुदुर्लभत्वं च यन्मृगाक्षीणाम् । तत्रैव नागराणां निर्भरमासज्यते हृदयम्' ॥" इति उज्ज्वलनीलमणौ च । तथाहि पुरुषपरीक्षायां–"समानैव हि सामग्री स्त्रीणां रतिमहोत्सवे । काचिद्विदधति सौभाग्यं दुर्लभत्वेन कामिनाम् ॥ (३९।६) । (स्त्रीणां स्वीयादित्रिविधानाम् । काचित् स्त्री, परकीया एव ) । दूतीगिरो यत्र न संति वक्राः, पदेपदे दुर्लभता न यत्र । सिद्धिर्न यस्या निधितुल्यलाभा, सा किं रतिर्नागरयोः सुखाय ॥ (३९ । ७)" इति, (नागरयोः चतुरयोः स्त्रीपुरुषयोः । तादृशी रतिश्च परकीयासु एव । ) ॥–मूलाभिप्रायः विधान्तरेणापि प्रतिपादितो दृश्यते, यथा–"अर्थादौपधवत् कामः, प्रभुत्वात् केवलं श्रमः । करवत् स्वेषु दारेषु, त्रयादन्यत्र मन्मथः ॥" इति, (अर्थात् द्रव्यात् लभ्यः, वेश्यासु; प्रभुत्वात् आज्ञया बलात्कारेण वा, विरक्तासु; करः राजग्राह्यो बलिः, स्वीयासु; अन्यत्र परकीयासु । 'क्रयादौष० केवलं० कारुवन्निजदारेषु योऽन्यः कामः स मन्मथः ॥" इति सुभाषितावलिस्थपाठे 'कारुवत्' इत्यशुद्धम् । ) "कन्या कौतुकमात्रकेण, विधवा संमर्दमात्रार्थिनी, वेश्या वित्तलवेच्छया, स्वगृहिणी गत्यन्तरासंभवात् । वाञ्छन्तीत्थमनेककारणवशात् पुंभिः स्त्रियः संगमं; शुद्धस्नेहनिबंधना परवधूः पुण्यैः परैः प्राप्यते ॥" इति च । (कन्या मुग्धा । ) ॥ मूले परिसंख्या अलंकारः ॥ ८१२ ॥

'स्वव्यापारैकमतेः परचिन्ता नास्ति मे कदाचिदपि ।
पश्यन्त्यास्त्वामीदृशमद्य तु मे मानसं व्यथितम् ॥ ८१३ ॥
यदि वेद्मि तस्य वसतिं सामर्थ्यं यदि भवेत्ततोऽप्यधिकम् ।
तद्गत्वा दग्धविधिं लगुडैः संचूर्णयाम्यधुना ॥ ८१४ ॥
वपुरिदमनुपममीदृग् यदि विहितं तेन ते धात्रा ।
अनुरूपरमणविरहात् किमिति कृतं वन्ध्यजन्मफलम् ॥ ८१५ ॥

इतो विंशतिभिः दूतीवचनमहाकुलकं, तत्र ८२९ आर्या यावत् परनारीं नायिकां प्रति प्रलोभनादिवाच्यप्रकारानुवादः, ततः त्रिभिः नायकं प्रति सः । तत्रादौ दूती तच्छ्रद्धोत्पादाय स्वस्याः निःस्वार्थतापूर्वां समदुःखभागितां प्रकटयति स्वेति । स्वकृत्यपरायणायाः मे कदाचिदपि परेषां कृत्याकृत्यनिरीक्षणादिकौतुकं नास्ति, तथापि त्वां—शुष्यमाणशरीरत्वादिना पतिसौख्यवञ्चितां इति भावः, बहुशो दृष्ट्वा, मम, ईदृशं तु मानसं—परव्यापारेषु अकुतूहलि अपि मनः, अद्य खिन्नं, अतः मया निःस्वार्थतया वक्ष्यमाणं पथ्यं अवधारय इत्यभिप्रायः । तथा च समानार्थांशा आर्या—"यद्यपि भवति न हानिः परकीयां चरति रासभे द्राक्षाम् । असमञ्जसमिति कृत्वा तथापि खलु खिद्यते चेतः ॥" इति ॥८१३॥ तद्दुःखापनयनाय स्वसाहाय्यं श्रावयति यदीति । यदि तस्य असदृशपतिसंयोगकारित्वेन त्वद्दुःखाधानहेतोः ब्रह्मणः निवासस्थानं जानीयां, यदि च मम तस्मात् ब्रह्मणः विशेषतो बलं भवेत्, तत् तर्हि, तत्र गत्वा, तव विप्रियकारिणं दुष्टं विधिं विधत्ते कुरुते इति विधिः तं ब्रह्माणं, अस्मिन् एव क्षणे, लगुडैः दृढकाष्ठदंडैः तत्प्रहारैः इति यावत्, संचूर्णयामि खंडखंडं करोमि । संबन्धातिशयोक्तिः अलंकारः, "यद्यादिशब्दतः संभाविता मम्मटसंमता ।" इति साहित्यसारे ॥ ८१४ ॥ तां स्वधर्मात् प्रच्याव्य विपथं नेतुं पत्यौ वैराग्योद्भावनाय विधातारं आक्षिपति वपुरिति । यदि ते तव, इदं प्रत्यक्षवर्ति, वपुः शरीरं, ईदृक् वर्णनातीतं, अनुपमं सदृशस्य अन्यस्य अभावात् उपमारहितं, विहितं निर्मितं, केनेत्याकांक्षायामाह—तेन सर्गविधौ अधिकृतेन प्रसिद्धेन, धात्रा ब्रह्मणा जगत्स्रष्ट्रा; तर्हि, अनुरूपरमणविरहात् त्वद्रूपविलासलालसादियोग्यपतिसंयोगानापादनेन, किमिति—

८१३ परिचिन्ता ( गो ) । स्वव्यापारैकमतिः परवित्तार्था न काचिदप्यस्ति ( का ) । मानसव्यथितम् ( स्तं ) । ८१४ ततोऽप्यधिकम् ( स्तं ) । लकुटैः संचूर्णयिष्यामि ( प. स्तं ) ८१५ विहितं तव कृशांगि हतधात्रा ( प. स्तं ) ते हिते ( कापा ) । अधुनापि रमणविरहात् ( गो. का )

शैशवमस्तु जरा वा व्याधिर्वा क्षेत्रियप्रणाशो वा।
स्वाकारं तारुण्यं न तु कुपतिकदर्थनाग्रस्तम् ॥ ८१६ ॥
केलिः प्रदहति मज्जां शृङ्गारोऽस्थीनि चाटवः प्राणान्।
न करोति मनस्तुष्टिं दानमभव्यस्य गृहभर्तुः ॥ ८१७ ॥

---

किंशब्दः प्रश्ने, इतिशब्दः हेतौ, कस्मात् हेतोः कुतः इत्यर्थः; तत् वपुः, वंध्यं निष्फलं जन्मनः शरीररचनायाः फलं प्रयोजनं यस्य तत् तथाविधं, विहितं कृतम्। तथाहि विधातृदोषं पुरुषप्रयत्नतः अनुरूपकामुकप्राप्त्या दूरीकुरु इति अभिप्रायः। इयं आर्या– "लावण्यद्रविणव्ययो न गणितः, क्लेशो महान् स्वीकृतः, स्वच्छन्दस्य सुखं जनस्य वसतश्चिन्ताज्वरो निर्मितः। एषाऽपि स्वयमेव तुल्यरमणाभावाद्वराकी हता, कोऽर्थश्चेतसि वेधसा विनिहितस्तन्व्यास्तनुं तन्वता ॥" इति बौद्धाचार्यधर्मकीर्तिश्लोकस्य च्छायारूपः। प्रकृतार्यायाश्छाया तु रतिरहस्ये–"रूपकलाविज्ञानं शीलं क्व तव, क्व चायमीदृशो भर्ता। धिग्दैवमुचितविमुखं तारुण्यं ते विडम्बयति ॥" (१३।१९) इति ॥ ८१५ ॥ तत्पतिमुद्दिश्य वैमनस्यबीजं रोपयति शैशवेति। शैशवं बाल्यम्। व्याधिः विशेषेण आधिः विनाशहेतुः व्याधिः रोगः। क्षेत्रियप्रणाशः–क्षेत्रियेण केनापि राजयक्ष्मादिरूपेण असाध्यरोगेण प्रणाशः मरणं; "क्षेत्रियच् परक्षेत्रे चिकित्स्यः।" (पा. ५। २।९२) इति, "परक्षेत्रं जन्मान्तरशरीरं, तत्र चिकित्स्यः इत्यर्थे क्षेत्रियो निपात्यते। क्षेत्रियः कुष्ठव्याधिः, असाध्य इत्यर्थः।" इति भाषावृत्तिः; "अन्यदेहचिकित्सार्हे क्षेत्रियः क्षेत्रजे तृणे। असाध्यरोगे विज्ञेयः, क्षेत्रियः पारदारिके ॥" इति शाश्वतः। यद्वा पूर्वगतव्याधिशब्दार्थेन पौनरुक्त्यात् क्षेत्रियात् परदाररतात् पारदारिकात् प्रणाशः चारित्रस्य भ्रंशः अस्तु भवतु इत्यर्थः, यद्वा इतिसूचितम्। अनेन दूत्या स्वगूढाभिप्रायः सूचितः।] 'स्वाकारं अनुरूपं योग्यपतिसमागमं इत्यर्थः' [इति टिप्पणी, तदशुद्धम्। वस्तुतस्तु स्वाकारं शोभनः आकारः अंगोपांगानां निवेशो यत्र तादृशं सौन्दर्ययुक्तं इत्यर्थः, तारुण्यं तरुणीभावः, कुपतिरूपा कदर्थना पीडा तया ग्रस्तं आक्रान्तं व्याप्तं, न माऽस्तु। तुशब्दः पूर्वोक्तभेदे ॥ यौवने कुपतिसमागमात् शैशवादिः मरणं वा वरं इति भावः ॥ केचन कुपतिप्रकारास्तु रतिरहस्ये—"ईर्ष्यालुरकृतवेदी मृदुवेगः शाठ्यवसतिरविदग्धः।" (१३।८०) इति ॥८१६॥ तदेव अंकुरयति केलिः इति।] अभव्यो हीनः [नीचः

---

८१६ क्षेत्रियः (गो. स्तं) व्याधिर्वाक्षेन्द्रियप्र० (गो २. का)। कदर्थनाग्रह्यासः (गो)। अत्र का उत्तरार्धं दुष्टम्। ८१७ ॰ति सज्जां (शय्यां ?) (प)। चाटवः कटवः (कापा) कटुकाः (प. स्तं)। दानमरुच्यस्य (स्तं)। प्रदहति लज्जां (इति पंचतंत्रे पा०)। बंधक्या परितोषो न किंचिदिष्टं भवेत्पत्योः (इति उत्तरार्धं पंचतंत्रे)

**कुत आगताऽसि, कस्मिन् वेलामियतीं स्थिता, किमर्थमिति ।**
**पृच्छन्नस्वस्थमना जनयति गेही शिरःशूलम् ॥ ८१८ ॥**
**यदि भवति दैवयोगाच्चक्षुर्विषयः समुज्ज्वलस्तरुणः ।**
**तत्रात्मानं क्षपयति जायां च रटन् गृहस्वामी ॥ ८१९ ॥**

---

खलो वा, अभव्यस्य सतः अर्थात् यत्र मनो न सज्जते तादृशस्य, गृहभर्तुः स्वामिनः केलिः क्रीडा विलासो वा, "विहारे सह कान्तेन क्रीडनं केलिरुच्यते ।" ( ८० ) इति रसरत्नहारे, सा च वाक्क्रियाभेदेन द्विविधा, तत्र आद्या वाक्केलिः वक्रोक्त्यादिरूपा, अपरा क्रियात्मिका चुंबनादिरूपा, द्विविधाऽपि सा तादृशस्य; मज्जां मांससारं, "मज्जा मांससारास्थिसारयोः ।" इति भागुरिः, प्रदहति । तस्य शृंगारः बाह्याभ्यन्तररूपेण द्विविधोऽपि, अस्थीनि मज्जान्तर्भूतानि अपि प्रदहति, तस्या विरक्तत्वात् । चाटवः तत्कर्तृकाणि प्रियवचनानि रतिवर्धनार्थं मानमोचनार्थं वा प्रवर्तितानि द्विविधान्यपि, प्राणान् असून् जीवं इति यावत्, प्रदहति इति लोकोत्तयनुसारेण । किं बहुना, तादृशस्य दानं प्रेमसूचनाय तेन दीयमानं वस्त्राभरणादिकं, मनस्तुष्टिं चित्तप्रसादं हर्षं इति यावत्, न करोति न जनयति, यथा पूर्वं उक्तं–"अक्षिगतादर्थाप्तिर्न भवति मनसः प्रसादाय ।" ( आ.५४१ ) इति । अन्यत्र च–"कार्यार्थिनो दीर्घमिवाध्वखेदं, विक्रीतदासा इव कार्यभारम् । कष्टं कटुद्रव्यमिवामयार्ताः, स्वभर्तृगेहं वनिताः सहन्ते ॥" इति ॥ पदार्थहेतुकं काव्यलिंगं अलंकारः, केल्यादीनां दाहकत्वं अप्रसिद्धं इति तत्समर्थने अभव्यस्य इति पदस्य हेतुत्वात् ॥ ८१७ ॥ कुपतित्यागेच्छां प्रादुर्भावयितुं कुत इति द्वाभ्यां तस्य ईर्ष्यालुतां व्यनक्ति । तत्रादौ वाक्पारुष्यभेदमाह । कुतः कुत्र गत्वा ततः, आगताऽसि; कस्मिन् स्थले, इयतीं वेलां दीर्घकालं इत्यभिप्रायः, "कालाध्वनोरत्यन्तसंयोगे द्वितीया ।" ( पा. २।३।५ ) इति द्वितीया, स्थिता; तच्च अवस्थानं, किमर्थं कस्मै प्रयोजनाय; इतिः प्रकारे, एवं विविधप्रकारैः भार्यां पृच्छन्, गेही गेहं अस्यास्तीति गृहपतिः भर्ता, कीदृशः सः, अस्वस्थमनाः "अंकं गताऽपि युवतिः परिरक्षणीया ।" "विश्वासो नैव कर्तव्यः स्त्रीषु राजकुलेषु च ।" इत्यादि नीतिवेत्तृत्वात् व्यभिचारकर्मशंकया विक्षिप्तचित्तः, शिरःशूलं मस्तकस्य नोदनात्मिकां पीडां जनयति । अतः तादृशः पतिरपि परित्याज्य इति आकूतम् । तथाहि दशकुमारचरिते ( उ० ३ )– "असह्यं हि योषितामनंगशरनिषंगीभूतचेतसामनिष्टजनसंवासयंत्रणादुःखम् ।" इति ॥ ८१८ ॥ शंकितदोषस्य चेष्टापारुष्यभेदमाह यदीति । दैवयोगात् भाग्यवशात् ।

---

८१८ स्थिता वद किमर्थे ( प. स्तं )। प्रछन्नस्वच्छमना ( स्तं )। जनयति रोगी ( का )। ८१९ विषये ( प. स्तं )। ँनं कशयति ( का )

सविवादे परलोके जनापवादे च जगति बहुवादे ।
दैवाधीने प्रणये न विदग्धा हारयन्ति तारुण्यम् ॥ ८२० ॥

चक्षुर्विषय: दृष्ट:, स्वगृहे इति शेष:; समुज्ज्वल: स्वभावशोभाप्रकाशात् दीप्त: भ्राजमानदेह: सुंदर: इति यावत्, तरुण: युवा। तदा संकेतेन तदागमनं वितर्क्य, यत: "उज्ज्वलवपुषं पुरुषं कामयते स्त्री नरोऽपि तां दृष्ट्वा ।" ( १३।१५ ) इति रतिरहस्योक्ते:, तत्र तस्मिन् विषये तरुणागमनरूपे, जायां स्वभार्यां, रटन् आक्रोशन् आक्षारणां कुर्वन्, गृहस्वामी इत्यनेन जडस्य गृहादे: एव स्वामी, न तु तस्या: इति सूचितं, गेही इत्यर्थ:, आत्मानं, ] क्षपयति पीडयति [क्षीणं करोति । ईर्ष्यया प्रतिदिनं भार्यया कलहं कुर्वन् कृशो भवति इति भाव: ॥ ८१९ ॥ तादृशीनां अन्यासां सहेतुकाचारप्रदर्शनेन पत्युर्व्यभिचारे प्रोत्साहयति सविवादे इति । परलोक: स्वर्गनरकौ पुण्यपापफले तस्मिन्, सविवादे अप्रत्यक्षत्वात् अस्तिनास्तिविचारगोचरे संदिग्धे; अस्मिन् जगति लोके च, जनापवादे लोकनिंदायां, बहुवादे कर्णोकर्णिकया भिन्नप्रकारै: वस्तुस्वरूपे वर्ण्यमाने, अर्थात् सत्येऽपि व्यभिचारनिंदाविषये सा निंदा असूयादिप्रवृत्ता मिथ्या इत्यादिप्रकारेण अन्यै: तस्या: अपलप्यमानतासंभवे सति इत्यपि, लोकप्रवादे असंबद्धे सति इति भाव:, दैवाधीने भाग्यायत्ते च, प्रणये पत्या अन्येन वा सौहृदे; च सति, विदग्धा: चतुरा: स्त्रिय:, परलोकभयादे: पत्युरव्यभिचारेण तारुण्यं यौवनं ( पूर्वं व्याख्यातं आ. ६१८ ); न,] हारयन्ति अतिक्रामयन्ति,[ हृधातो: णिजन्तप्रकृतिकं रूपं, स्वाभीष्टान्यसंभोगविरहेण निष्फलं न कुर्वन्ति ॥ अत्रायमभिप्राय:—तारुण्यसाफल्यं स्त्रीपुंसयो: परस्परस्नेहाधीनम् । कुपतित्वात् अन्यस्मिन् जनान्तरसौहृदात् वा स्त्रिय: पतिविषयक: स्नेह: न उद्भवति । तेन तया तारुण्यसाफल्याय व्यभिचरितव्यम्। तत्र द्वौ प्रतिबन्धौ धर्मशास्त्रं लोकनिंदा च। तत्र धर्मशास्त्रं—"व्यभिचारात्तु भर्तु: स्त्री लोके प्राप्नोति निंद्यताम् । सृगालयोनिं चाप्नोति पापरोगैश्च पीड्यते ॥ " ( मनुस्मृतौ ९।३० ) इत्यादिकम् । लोकनिंदा च 'इयं कुलटा' इत्यादिवचनप्रकारिका प्रसिद्धा एव । एतयो: अयं समाधि:—परलोकास्तिता विवादग्रस्ता, लोकनिंदा च परस्परविरुद्धोक्तिमया प्रकारान्तरसमाधेया वा, अत: भयानावहत्वात् ते अगणनीये । एवं स्थिते, पतिमुद्दिश्य अनुरागविरहे, पति-

८२० जनापवादेऽपि ( प. स्तं. ) बहुचित्ते ।( प. ) बहिचित्रे ( हि विचित्रे ? ) (स्तं) । प्रलये (स्तं. गो २)। संदिग्धे पर···बहुचित्रे । स्वाधीने पररमणे धन्यास्तारुण्यफलभाज: ॥ ( इति पंचतंत्रे १।१३९ पाठ:। )

दुर्भर्तृकरास्फालनमलिनीक्रियमाणशोभमनुदिवसम् ।
तुङ्गमपि पतितकल्पं स्तनशालिनि तत्पयोधरद्वन्द्वम् ॥ ८२१ ॥
पर्यङ्कः स्वास्तरणः पतिरनुकूलो मनोहरं सदनम् ।
तुलयति न हि लक्षांशं त्वरितक्षणचौर्यसुरतस्य ॥ ८२२ ॥

व्यतिरिक्तमन्यं उद्दिश्य प्रेमोदये वा, स्वाभीष्टसंयोगं संपाद्य तारुण्यं सफलतां नेयमिति ॥ ८२० ॥ कुपतिक्रीडां निंदति दुर्भर्त्रिति । अनुदिवसं प्रतिदिनं, दुर्भर्ता कुपतिः, तथात्वं च भर्तुः तस्य ईर्ष्यालुत्वादिना तस्मिन् पत्नीमनसः अलग्नत्वात् वा, तेन हस्ताभ्यां स्तनयोः यत् आस्फालनं आहतिः, अनेन अपहस्तकं नाम ताडनं ( ३७७ आ. टी. ) उद्दिष्टं, तेन मलिनीक्रियमाणा विच्छायतां धूसरतां वा नीयमाना शोभा रमणीयता यस्य तत् , पयोधरद्वंद्वं स्तनयुग्मं, तुंगं उन्नतं वर्धमानतारुण्यात् , अपि, पतितकल्पं प्रसवहृतयौवनायाः वृद्धायाः इव वा यथा पतितं वर्तते तत्तुल्यमेव । अनेन पत्यौ तव रागाभावात् तत्कर्तृकस्तनमर्दनताडनादि पतितवत् अर्थात् धर्मभ्रष्टवत् महापातकिवत् शोच्यम् इति सूचितम् । अतः तारुण्यसाफल्याय अपरः मनःप्रियः सेव्यः इति आकूतम् । स्तनाभ्यां शालते शोभते सा स्तनशालिनी, तत्संबुद्धौ हे स्तनशालिनि प्रशस्तस्तनवति । उन्नतत्वं स्तनयोः गुणः, पतितत्वं च दोषः, तदुक्तं—"गुणो दूषणतां याति दूषणं गुणतां क्वचित् । तथाहि नम्रता दोषः स्तनयोः स्तब्धता गुणः ॥" इति, ( स्तब्धता कठोरत्वं उन्नतत्वं वा । ) ॥ तथा—"कठिनोन्नता रतरणे स्त्रीणामप्यन्यमर्दिताः । विकंचुका यथा शूरा न पतन्ति पयोधराः ॥" इति ॥ ८२१ ॥ एतद्दुःखभैषज्यं चौर्यसुरतं प्रशंसति पर्यंकेति । पर्यंकः शय्या, 'पल्लंक' इति प्राकृते, 'पलंग' इति भाषायां, स्वास्तरणः शोभनप्रच्छदपटः । पतिः भर्ता, अपि, अनुकूलः चित्तानुवर्ती वशवर्ती स्वेष्टसंपादकः । सदनं गृहं पतिगृहं अत्र, मनोहरं बहुविधपदार्थसमृद्धिमत्तया रम्यम् । इदं सर्वं मिलितमपि, त्वरितक्षणं त्वरितः त्वरया संपाद्यमानः क्षणः व्यापारः आलिंगनचुंबनादीनां यत्र तत् , यद्वा त्वरितः

८२१ क्रियमाणमनु ( गो ) । स्तनशोभिनि तव पयो० ( प ) स्तनशालिनि तव पयोधर० ( स्तं ) ८२२ हरं शयनं ( प. स्तं ) [ पुनरुक्तार्थः पाठः ] । तुलयन्ति न लक्षांशं ( प. स्तं ) । सुखशय्या तांबूलं विस्रब्धाश्लेषचुंबनादीनि । तुलयन्ति न लक्षांशं त्वरितक्षणचौर्यसुरतस्य ॥ ( १३२।२२ ) ( इति शार्ङ्गधरपद्धतौ पाठः । ) पर्यंकः स्वास्तरणं पतिमनुकूलं मनोहरं शयनम् । तृणमिव लघु मन्यन्ते कामिन्यश्चौर्यरतलुब्धाः ॥ इति पंचतंत्रे ( १।१३४ ) ॥

सहसा संकटवर्त्मन्यवितर्कितसंमुखागतेनापि।
अभिलषितेनोद्घृष्टकमनल्पशुभकर्मणा लभ्यम् ॥ ८२३ ॥
प्रीतिः किल निरतिशया स्वर्गः परलोकचिन्तकैर्गदितः।
तस्यास्तु जन्मलाभो हृदयेप्सितपुरुषसंयोगात् ॥ ८२४ ॥

---

विलंबासहः क्षणः उत्सवः यस्य तत्, यद्वा त्वरितः अल्पः क्षणः अवसरः संभोगादेः यत्र तत्, "कालविशेषेऽवसरे व्यापारे पारतंत्र्ये च। मध्ये तथोत्सवे च क्षणशब्दः कथ्यते षट्सु ॥" इत्युक्तेः; तादृशं यत् चौर्येण प्रच्छन्नतया प्राप्यं सुरतं निधुवनं चौर्यरतं 'प्रच्छन्नकं;' तस्य लक्षांशं लक्षसंमितं अपि भागं, न तुलयति न तत्कक्षामारोहति। चौर्यसंभोगरससुखस्य स्वपतिगृहादिसुखात् लक्षगुणाधिकं आनंदजनकत्वं इति भावः ॥ तथाहि उक्तं—" अपथ्यभोगेषु यथाऽऽतुराणां स्पृहा, यथाऽर्थेष्वतिदुर्गतानाम्। परोपतापेषु यथा खलानां, स्त्रीणां तथा चौर्यरतोत्सवेषु ॥" इति। (तत्रतत्र तेषां आनंदाधिक्यबुद्धेः।) व्यतिरेकालंकारः ॥ ८२२ ॥ तल्लेशस्यापि सुखोत्कर्षतया तस्य पुण्यप्राप्यतामाह सहसेति।] संकटवर्त्मनि संबाधमार्गे। [अवितर्कितं अकस्मात्, संमुखं अभिमुखं आ[illegible]न, अपिः चार्थः, अभिलषितेन स्वेष्टेन कामितेन, यत्, सहसा तत्कालं,] उद्घृष्टकं संमर्दः [शरीरसंघर्षः, तत् महापुण्यकर्मणा प्राप्यं 'नाल्पस्य तपसः फलं' इति भावः, तस्य महानंदजनकत्वात्। कर्मणेति हेतौ तृतीया ॥ उद्घृष्टकमितिशब्देन अन्वर्थनामकः आलिंगनभेदोऽपि प्रतीयते तेन मुद्रालंकारः, "सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैः।" इति (कुवलयानंदे) तल्लक्षणात् ॥ उद्घृष्टकाख्यं आलिंगनं च—"उत्सवे देवयात्रायां महातिमिरसंकुले। विजने स्थानके वाऽपि गच्छतोश्च परस्परम् ॥ अङ्गाङ्गघर्षणं नातिचिरकालं (तु यद्भवेत्?)। (तदु)—द्घृष्टकमित्याह वात्स्यायनमहामुनिः ॥" इति उक्तं रतिरत्नप्रदीपिकायाम् (१४। ७४–७५); तच्च असंजातरत्याः रिरंसासूचकं बोध्यम् ॥ ८२३ ॥ प्रकृतविषयकं परमार्थं द्वाभ्यां प्राह] प्रीतिरिति। निरतिशया प्रीतिः किल स्वर्गः इत्यन्वयः। [किलेति अव्ययं वार्तायाम्। निरतिशया नास्ति अतिशयः आधिक्यं यस्याः सा निरतिशया परां काष्ठामारूढा परिच्छेदातीता, प्रीतिः प्रेम,—तच्च विवृतं संवादद्वारा राजशेखरेण कर्पूरमंजरीसट्टके (छाया—) "विदूषकः—भोः, किं पुनरेतत्प्रेमप्रेमेति भणंति। राजा—अन्योन्यमिलितस्य मिथुनस्य मकरध्वजशासने प्ररूढं प्रणयग्रंथिं प्रेमेति विदग्धा भणंति।

---

८२३ °तेन विशा (?) (प. स्तं)। मनन्य (गो २. का)। कर्मणां (गो)
८२४ गदिता (का) [अर्थानुरूपः पाठः]। संभोगात् (प. स्तं) [ग्राम्यः पाठः]

**अतटस्थस्वादुफलग्रहणव्यवसायनिश्चयो येषाम् ।**
**ते शोकक्लेशरुजां केवलमुपयान्ति पात्रतां मन्दाः ॥ ८२५ ॥**

---

विदूषकः—कीदृशः सः । राजा—यस्मिन्विकल्पघटनादिकलंकमुक्तः आत्मनः सरलत्वमेति भावः । एकैकस्य प्रसरद्रसप्रवाहः शृंगारवर्धितमनोभवदत्तसारः ॥ (३।१०)। विदूषकः—कथमिव स लक्ष्यते । राजा—ययोः स्वभावप्रसरत्सलोलदृष्टिपर्यंतलुंठितमनसोः परस्परेण । वर्धमानमन्मथवितीर्णरसप्रसारस्तयोः प्रकाशते लघुरिव चित्तभावः ॥ (३।११) । अपि च—अंतर्निविष्टमनोविभ्रमडंबरो यः स भण्यते मदनमंडनमत्र प्रेम । दुर्लक्ष्यमपि प्रकटयति जनो जगति तज्जानीमः सुबहुलं मदनेन्द्रजालम् ॥" (३।१२) इति । (यस्मिन् प्रेम्णि, भावः चित्तवृत्तिः, सारः बलम् । सलोलाः सतृष्णाः चंचला वा, दृष्टिपर्यंताः नेत्रप्रान्तभागाः कटाक्षा इति यावत् , लुंठितं चोरितं, तेन मनसोः एकरसता व्यज्यते, लघुः मनोज्ञः । विभ्रमः विलासः, डंबरः अवस्थाविशेषः गर्वः । ) स्वर्गः— "ऋज्यते स्थीयते अस्मिन् इति अर्गः स्थानम् ।•••शोभनः अर्गः स्वर्गः प्रादिसमासः।" इति अमरटीकासर्वस्वे; अतिशयपुण्यफलं सुखैकमयं देवानां निवासस्थानं, लक्षणया तादृशं सर्वं, " मनःप्रीतिकरः स्वर्गो, नरकस्तद्विपर्ययः । " इत्युक्तेः; कालिदासश्च विक्रमोर्वशीये—" राजा—वयस्य, अनिर्देश्यसुखं स्वर्गः ।" (३।१८) इति, तादृशं च सुखं निरतिशया स्त्रीपुंसयोः प्रीतिरेव, या 'परानुरक्तिः' 'अन्योन्यं हृदयभावबन्धनं' 'ऐक्यं हृदययोः' इति च भण्यते । कथितः निगदितः, परलोकचिन्तकैः कः परः श्रेष्ठः लोकः भुवनं इति विचार्य तद्विषयकं निर्णयं कुर्वद्भिः शास्त्रविद्भिः स्वर्गतत्त्वनिर्णायकैः इत्यर्थः, चिंतायाः निर्णयफलकत्वात् । तस्याः निरतिशयप्रीत्याः अर्थात् स्वर्गस्य, जन्मलाभः उद्भवः, हृदयेन अंतःकरणेन आप्तुं इष्टः हृदयंगमः यः पुरुषः पुमान् तेन संयोगात् समागमात् , भवतीति शेषः ॥८२४॥ एवं अननुरक्ताभ्यः स्त्रीभ्यः ये सुखाभिलाषिणः, तेषां स्वमौर्ख्येण प्राप्तव्यानि विपरीतफलानि अप्रस्तुतवृत्तेन उपन्यतस्यति अतटेति ]' अतटस्थं अस्थिरं उदासीनं च' [ इति टिप्पणी । न तटे नदीतीररूपभूभागे तिष्ठति वर्तते इति अतटस्थं जलप्रवाहस्य उपरि वर्तमानं अत एव दुर्ग्राह्यं इत्यर्थः, यत् स्वादु मिष्टं, अत एव प्रेप्सितं यत् फलं, तस्य ग्रहणाय प्राप्त्यै, व्यवसाये प्रयत्ने, निश्चयः इतिकर्तव्यताबुद्धिः येषां पुरुषाणां, ते, मंदाः जडबुद्धयः मूर्खाः, शोकस्य धनबंधुनाशादिजः चित्तखेदभरः शोकः तस्य, स्वेष्टफलाप्राप्तेः; तथा क्लेशस्य कर्मानुष्ठानजनितायाः पीडायाः, मिथ्याप्रयासात् ; रुजः व्याधेः पतनादिना, उपतापस्य वा, पात्रतां यांति भाजनं भवंति ॥ अप्रस्तुतप्रशंसालंकारः । अप्रस्तुतेन अतटस्थ-

किं प्रतिकूला ग्रहगतिरुत परिणतमात्मदुश्चरितम् ।
स्वानुष्ठानव्यसनं किं वा तस्यात्मयोनिहतकस्य ॥ ८२६ ॥

स्वादुफलेन प्रकृते अनभिमुखचित्तवृत्तिः स्त्री लक्ष्यते, सा भोगाय मिष्टा इष्टा चापि उक्तफलवत् विपरीतदिशि वर्तमाना विमुखी प्रेमरहिता; तादृश्याः ग्रहणाय विरक्ताचित्त-ग्रहणाय तद्भोगेन च आनंदलाभाय ये यत्नं कुर्वंति ते मूर्खाः केवलं शोकादिकं प्राप्नु-वंति इति प्रस्तुतार्थः ॥ आर्याद्वयस्य अयं अभिप्रायः—कुपतित्वात् भर्तरि ते प्रीतिः नास्ति, तेन तव सुखलेशोऽपि नास्ति; तादृश्याः त्वत्तः तस्य शोकादिप्राप्तिरेव, दूरे उभयोः सुखवार्ता इति । त्वया तु तस्मात् सुखप्राप्त्यै तेन संयोक्तव्यं यः त्वयि स्निह्यति इति ॥ ८२५ ॥ एवं उपोद्घातं कृत्वा त्रिभिः विशेषकेण तस्यां अनुरक्ते कस्मिंश्चित् कामुके तन्मनस आवर्जनेन संयोगोत्कंठां जनयितुं तदीयविरहावस्थां दूती संवर्णयति । तत्र आदौ इयन्तं कालं तयोः उभयोः असमागमे दृष्टकारणानुपलंभात् अदृष्टकारणानि वितर्कयति किमिति । किमिति प्रश्ने, त्वद्दर्शनापहृतचेतसः तरुणस्य, ग्रहगतिः—जन्मकालिकस्वस्थानबलात् शुभाशुभफलदातृत्वेन प्रसिद्धाः सूर्यादयो नव ग्रहाः, तेषां गतिः चारः, सा, प्रतिकूला अनिष्टजननी, त्वत्संयोगरूपाभीष्टस्य असं-पादकत्वात्; उतेति वितर्के, यद्वा इत्यर्थः; आत्मनः स्वस्य तस्य, दुश्चरितं अनिष्टफ-लदातृ पापकर्म, इदानीं परिणतं पक्वं भोग्यं जातमित्यर्थः; किमिति प्रश्ने, वेति विकल्पे, तस्य परोक्षस्य ललाटलिपिकृत्त्वेन प्रसिद्धस्य वा, आत्मयोनिहतकस्य दग्धविधेः—आत्मा स्वयं योनिः कारणं यस्य सः आत्मयोनिः आत्मभूः ब्रह्मा, स चासौ हतकः विप्रियका-रित्वात् दुष्टः, यद्वा हतक इति निर्वेदानुसंधानार्थकः, स आत्मयोनिहतकः, तस्य यत् स्वानुष्ठानं स्वकार्यं अनुचितघटनात्मकक्रीडाकरणं, यथोक्तं—"शशिनि खलु कलंकः, कण्टकं पद्मजाले, युवतिकुचनिपातः, पक्वता केशजाले । जलधिजलमपेयं, पंडिते निर्धनत्वं, वयसि धनविवेको, निर्विवेको विधाता ॥" इति, (निर्विवेकः अनु-चितकारी इत्यर्थः ।), विपर्ययेण च—"समानयंस्तुल्यगुणं वधूवरं चिरस्य वाच्यं न गतः प्रजापतिः ।" (रघु० ६।) इति, नागानंदे च प्रथमांके तापसोक्तिः—"चिरा-त्खलु युक्तकारी विधिः स्यात्, यदि युगलमिदमन्योन्यरूपं घटयेत् ।" इति; तत्र कर्मणि, व्यसनं आसक्तिः । अत्र आत्मयोनीतिशब्दशक्त्या कामदेवोऽपि लक्ष्यते, "आत्मयो-निर्विरिंचे स्यादात्मयोनिर्मनोभवे ।" इति विश्वलोचनात्, आत्मा मनः योनिः कारणं यस्य इति योगार्थत्वात्, तस्य संकल्पजत्वात्; तस्य स्वकार्यं तु विरहिजनतापकत्वं, यथोक्तं केनचित्—"सततमनंगोऽनंगो न वेत्ति परदेहदाहदुःखमहो । यदयमदयं दहति

८२६ गतमन्यजन्मदु० (प. स्तं)। स्वानुष्ठानाभ्यसनं (प. स्तं)

**येन तपस्वी स युवा स्पृशति समीरं त्वदङ्गसंस्पृष्टम् ।**
**त्वत्पादाक्रान्तभुवे स्पृहयति, ककुभं त्वदाश्रितां नमति ॥८२७॥**
**ध्यायति च त्वद्रूपं, त्वन्नामकवर्णमालिकां जपति ।**
**एकात्मीकृतचेतास्त्वदङ्गतः सौख्यसिद्धिमभिकाङ्क्षन् ॥ ८२८ ॥**
**(अन्तर्युगलकम्)**

---

मामनलशरो ध्रुवमसौ न कुसुमशरः ॥" इति । मूले न संदेहालंकारशंका, विपर्ययभावात् हेतूनां च तद्विशेषादर्शनात् संभावनामात्रत्वात् ॥ ८२६ ॥ विशेषकाङ्क्षभूतेन अन्तर्युगलकेन तस्य विरहिणः गृहाभ्यंतरे चेष्टावर्णनद्वारा पूर्वोक्तसंभावनाहेतून् प्रकटयति येनेत्यादिना । येन यतः यस्मात्कारणात्, ] तपस्वी दीनः [ अनुकंपनीयः त्वया इति आकूतं, शब्दशक्त्या च वक्ष्यमाणप्रकारैः तपसः अनुष्ठाता इत्यपि लक्ष्यते; "तापसे चानुकंप्ये च तपस्वी" इति विश्वः, युवा तरुणः, अनेन तस्य मदनमदोद्दीपनतायोगित्वं काम्यत्वं च सूच्यते, त्वदर्थमेव च "वयोधिरोधि अपि तपः अवलंबितं इति व्यज्यते; सः अमुकः, त्वदंगैः जातसंस्पर्श पवनं स्पृशति, परंपरासंबंधेन त्वदंगस्पर्शसुखभावनया, यद्वा अमृतमयत्वदंगसंगशीतः सः स्वस्य तापशान्त्यै भविष्यतीति, यथोक्तं मेघदूते—"आलिंग्यंते गुणवति मया ते तुषाराद्रिवाताः पूर्वं स्पृष्टं यदि किल भवेदंगमेभिस्तवेति ।" (१०३) इति, तथा मालतीमाधवे माधवप्रार्थना—" उन्मीलन्मुकुलमरालकुंदकोषप्रच्योतद्घनमकरंदगन्धबन्धो । तामीषत्प्रचलविलोचनां नतांगीमालिंगन् पवन मम स्पृशांगमंगम् ॥" (१।४१) इति । एतन्मूलं तु—"वाहि वात यतः कान्ता तां स्पृष्ट्वा मामपि स्पृश ('शेः') । त्वयि मे गात्रसंस्पर्शश्चन्द्रे दृष्टिसमागमः ॥" इति (६।५।६) श्रीरामायणवचनम् । अपि च, त्वत्संचारैः पूतानां भूमिप्रदेशानां उपरि सोऽपि संचरितुं तान् द्रष्टुं वा समीहते, परंपरासंबंधेन सुखानुभवाय । ] भुवे—"स्पृहेरीप्सितः ।" (पा. १।४।३६) इति चतुर्थी । [ त्वदाश्रितां ककुभं यस्यांयस्यां दिशि त्वं कार्यवशात् वर्तसे तांतां नमति प्रणामं कुरुते; अद्यापि त्वदसमागमात् ते प्रसादाय क्रियमाणाः प्रणामाः त्वदधिष्ठितदिशां संबंधेन त्वामेव प्राप्नुयुः इति । अभिलषिता नायिका, विरहेण व्याकुलः नायकः, विप्रलंभः शृंगारः । तत्स्पृष्टसमीरस्पर्शनादिचेष्टाभिः तस्य उन्मादो व्यञ्जितः ॥ तस्याः अयोगेऽपि समीरणादिद्वारा संबंधोक्तेः संबंधातिशयोक्तिरलंकारः ॥ ८२७ ॥ तत्प्रसादाय तेन क्रियमाणां पूजाविधिं प्राह ध्यायतीति ।

---

८२७ येन वरस्त्रीषु युवा (का) । स्तौति शरीरं (गो. का.) त्वदीप्सितां (गो.

युक्तत्वात् पूर्वोक्तं नमः कृत्वा इत्यनुसंधेयमत्र, तव रूपं सुंदरं आकारं बाह्यं, "अंगान्यभूषितान्येव प्रक्षेप्याद्यैर्विभूषणैः । येन भूषितवद्भान्ति तद्रूपमिह कथ्यते ॥" इति (रसार्णवसुधाकरे १।१८०) लक्षितं, ध्यायति मनः त्वदेकाग्रं कृत्वा त्वदाकारं वृत्तिप्रवाहं कुरुते । तव, नाम एव नामकं (स्वार्थे कन्,) अभिधानविशेषं, तस्य वर्णाः अक्षराः तेषां मालिका श्रेणिः, अपि च वर्णमालेति मंत्रशास्त्रप्रसिद्धे अन्तर्यागकर्मणि उपयुक्ता वर्णात्मकमालाऽपि लक्ष्यते, तां जपति, तव नामोच्चारं सन्ततं कुरुते इत्यर्थः। ध्यानादिप्रकारमाह एकात्मीकृतेति, तव शरीरादिना सह एकीकृतं भिन्नं सत् अभेदतां नीतं चेतः स्वचित्तं येन तादृशः सन्, त्वत्तादात्म्येन त्वन्मयत्वेन इत्यर्थः । कस्मै प्रयोजनाय इदं सर्वमित्याह त्वदंगत: इत्यादि । त्वदंगत: तव गात्रेभ्यः, सुरतादिना इति भावः; सुखमेव सौख्यं, तच्च 'प्रतिप्राणि स्ववासनानुगुणेष्टविषयप्राप्तेः तृप्तिः येन प्रयुक्तः सन् इष्टविषयादानाय प्रवर्तते,' तस्य सिद्धिं निष्पत्तिं अप्राप्तस्य प्राप्तिं परमानंदरूपां इति भावः, अभिकांक्षन् प्राप्तुमिच्छन् सन् । त्वत्सुरतानन्दरूपां सिद्धिं वाञ्छन् स त्वामेव तदभीष्टदायिनीं परदेवतां परिकल्प्य त्वज्जपध्यानात्मकं उपासनाकर्म कुरुते इति भावः, तेन त्वं शीघ्रं प्रसन्ना भूत्वा तदभीष्टं साधय इत्याकूतम् ॥ अत्र इदं अनुसंधेयं—निखिलजनाभिलषणीयं सुखं पुरुषार्थः । तत् द्विविधं कृत्रिमं अकृत्रिमं च । तत्र आद्यं कामपदाभिलप्यम्, अपरं च मोक्षपदाभिलप्यम् । तत्र आद्यस्य साधनं अर्थः, द्वितीयस्य धर्मः । (केचित् काममोक्षयोरुभयोरपि साधनत्वेन धर्मं, तत्साधनत्वेन च अर्थं मन्यन्ते ।) धर्मार्थयोरपि साधनत्वेन अभिलप्यमाणत्वात् धर्मादयश्चत्वारोऽपि पुरुषार्थशब्देन व्यवह्रियंते। ते च तत्तज्ज्ञानसाध्याः, तानि ज्ञानानि तत्फलानि च निर्विक्षेपचित्तैकसाध्यानि । तदर्थं एकात्मीकृतचेतस्त्वं उपयुक्तम् ॥ ध्यायतीत्यादिना च तस्य भक्तिर्व्यंजिता । तथाहि भक्तिः द्विविधा, गौणी परा च । तत्र गौणी ध्यानार्चनजपनामकीर्तनादिरूपा संभवत्समुच्चयिका च । ध्यानं भावनासिद्धिः, तथा च—' भावना हि भावयितुर्भाव्यमानत्वप्राप्तिहेतुः ।' अर्चनं पूजा। परा तु तज्जन्या, अनुरागविशेषरूपा। गौणीभक्त्यां सम्यङ्निरूढस्य तदेकतानतारूपपरभक्त्युदयो भवति ॥--मूले अन्योऽपि सुखविशेषसिद्धिं वाञ्छन् विशिष्टां देवतां तादात्म्यभावेन तन्मंत्रजपध्यानादिभिः उपास्ते इति अप्रस्तुतसाम्यात् समासोक्तिरलंकारः। युग्मेन श्रवणावस्था उक्ता ॥ ८२८॥

का) [अपुष्टार्थः पाठः] ८२८ युष्मद्रूपं (प. स्तं. का) [प्रक्रमभं . तः पाठः]। नामकमन्त्रमालिकां (गो. का)। एकाग्रीकृत (प) । स्त्वत्संगतसौख्य० (प. स्तं)

उत्सृज्य सकलकार्यं तिर्यग्ग्रीवं विलोकयन् भवतीम् ।
कुरुते गृहाग्ररथ्यां यातायातैः शतावर्ताम् ॥ ८२९ ॥
'दृष्टोऽसि तया सुचिरं गेहाभ्याशे परिभ्रमन् स्पृहया ।
सन्देश एष दत्तः प्राभृतमेतत्तया दत्तम् ॥ ८३० ॥

तत्प्रीत्युत्कर्षं व्यंजयितुं तस्य अपरमपि चरितं संवर्णयति--उत्सृज्येति । सकलकार्यं इति जातावेकवचनं, सर्वाणि लघूनि गुरूणि अपि कार्याणि त्यक्त्वा, भवतीं स्वगृहस्य देहल्यां गवाक्षे वा स्थितां; तिर्यग्ग्रीवं वलिता कंधरा यस्मिन् कर्मणि तत्तथा, विलोकयन् विशेषेण स्तिमितनेत्राभ्यां पश्यन्; अनेन वलिताख्या दृष्टिः सूचिता, "वलितं तन्निवृत्तस्य भूयश्चयस्यावलोकनम् ।" इति लक्षिता, ( निवृत्तस्य पश्चाद्दर्शनाय वलितकंधरस्य आलोकने दृष्टिः तिर्यगञ्चिता भवति, " त्र्यस्रं तिर्यगुदञ्चितम् ।" इति च कोशः) । तव गृहस्य अग्रे पुरोभागे या रथ्या रथेभ्यो हिता रथ्या नगरमध्यगतप्रकीर्णमार्गः, सा रथ्या यस्यां ते गृहं वर्तते इति भावः, तां, (रथ्यायां बहुलोकगमनागमनसंभवात् अन्यैरज्ञाता तस्य नयनप्रीतिरुक्ता,) स्वस्य यातायातैः गमनागमनैः पर्यटनैः, नानाविधमिषजैः इति भावः, शतावर्ता--शतशब्दो बह्वर्थवाची, बहवः आवर्ताः गमनागमनानां आवर्तनानि यत्र तादृशी, "आवर्तश्चितने चावर्तने वाऽप्यंभसां भ्रमे।" इति विश्वलोचनः, कुरुते । गमने पौनःपुन्येन तस्याः दर्शनं प्रति तस्य उत्कंठोत्कर्षं उक्तं, तावता अपि तस्य महाहर्षजनिः सूचिता, यथोक्तं--"चक्षुःप्रीतिप्रसक्ते मनसि, परिचये चिन्त्यमानाभ्युपाये, रागे यातेऽतिभूमिं विकसति सुतरां गोचरे दूतिकायाः । आस्तां दूरे स तावत्सरभसदयितालिंगनानन्दलाभस्तद्गेहोपान्तरथ्याभ्रमणमपि परां निर्वृतिं संतनोति ॥" (अमरुकशतके १००) इति ॥ अत्र मूले पृथ्वीमयी रथ्या कथं बहुलजलभ्रमवती शतावर्ता इति विरोधाभासः, तेन च स त्वत्प्रीत्या अशक्यं अद्भुतं कर्म करोतीत्यपि व्यज्यते । श्लेषोत्थापितो विरोधाभासालंकारः, संबंधातिशयोक्तिश्च ॥ अनया चक्षुःप्रीतिः उक्ता ॥ ८२९ ॥ इतः त्रिभिः दूत्याः कामुकं प्रति वचनम् । पूर्वां आर्यामनुसंधाय उक्तिः दृष्टोऽसीति । गृहस्य अभ्यागे समीपे, परिभ्रमन् तस्याः अवलोकनाय गमनागमनानि कुर्वन्, त्वं, तया, सुचिरं दीर्घकालं, स्पृहया सतृष्णं साभिलाषं, दृष्टः अवलोकितः असि । अनेन तस्याः चक्षूरागः तद्दर्शने उत्कंठातिशयश्च प्रकाशितः । अत एव तया लज्जां परिहृत्य एषः सन्देशः स्वहृदयो-

८२९ उत्सृष्टसकलकार्यः ( प. स्तं. कापा ) । भवति (का) ८३० °भ्रमस्पृहया ( स्तं ) । °मेतत्तव प्रहितम् ( प. स्तं ) °मेतत्त्वया दत्तम् ( कापा ) ।

शुष्यति साऽलभमाना भवत्कृते वेश्मनिर्गमावसरम् ।
इति चतुर शठस्त्रीभिर्विलुप्यते त्वदपदेशेन ॥ ८३१ ॥

(अन्तर्युगलकम्)

किं वा कथितैरधिकैरस्थानाविष्टचेतसस्तस्याः ।
अनुतिष्ठ यथायुक्तं त्वत्तो नाशश्च जीवरक्षा च ॥' ८३२ ॥

(दूतीवचनं महाकुलकम्)

कुलपतनं जनगर्हां नरकगतिं प्राणितव्यसन्देहम् ।
अङ्गीकरोति तत्क्षणमबला परपुरुषमभियान्ती ॥ ८३३ ॥

---

दूवाटको लेखः, दत्तः प्रहितः । एतत् ] प्राभृतं उपायनं [ तांबूलकुसुममालादिरूपं स्वप्रणयप्रकाशकं, च दत्तं, येन तस्याः प्रेम निःसंदिग्धं ज्ञास्यसि इति भावः । अनया मनःसंगः उक्तः ॥८३०॥ तस्याः सप्रतिबन्धां तत्प्रेमातिशयजामवस्थामाह शुष्यतीति । सा त्वद्ध्यानपरा, भवत्कृते भवदर्थं भवता सह मेलनार्थं संगमार्थं इत्यर्थः, गृहकार्यव्यापृतत्वात् ननान्द्राद्यवेक्षणात् वा स्वगृहात् बहिर्गमनाय अल्पकालं अपि प्राप्तुं अशक्नुवाना, यौवनोष्मणा संतप्ता, शुष्यति संतापेन कृशा भवति । अनेन तस्याः अतिवैक्लव्यं ध्वन्यते, संकल्पावस्था च सूचिता ॥ इति इति उक्तप्रकारोपसंहारे, भोः चतुर रतितंत्ररहस्यविज्ञ रक्तानुरागेङ्गितज्ञ, त्वदपदेशेन त्वन्निमित्तं, "अपदेशः स्मृतो लक्ष्ये निमित्तव्याजयोरपि।" इति विश्वलोचनः, शठस्त्रीभिः पत्यादिवञ्चकत्वात् धूर्ताभिः स्त्रीभिः परदाराभिः, विलुप्यते परपुरुषसमागमेच्छया चारित्रनाशात् स्वनाशः क्रियते परशिवत्वमपि विलुप्यते विनाश्यते ॥ ८३१ ॥ सप्रार्थनमुपसंहरति किमिति । कथितैः, कथनैः, अधिकैः बहुभिः किं, इति आक्षेपगर्भो निषेधः । अस्थाने कठिनहृदयत्वात् अपात्रे त्वादृशे, कारुण्योत्तेजनाय अयं उपालंभः,] 'आविष्टः अनुरंजितः' [ इति टिप्पणी, आविष्टं दृढं गतं चेतः चित्तं यस्याः तस्याः, संबंधसामान्ये षष्ठी, यथायुक्तं यथोचितं, अनुतिष्ठ कुरु, अपि च तामनुसर इति शब्दशक्त्या प्रतीयते । तत्र हेतुमाह त्वत्त इति । तस्याः नाशः देहवियोगः, जीवस्य रक्षा जीवनं इत्यर्थः, चः वार्थकः, "चः पादपूरणे पक्षान्तरे चापि समुच्चये ।" इति विश्वलोचनः, त्वत्तः त्वत्सकाशात्, तस्याः जीवनं मरणं वा त्वदधीनं इति भावः । अनेन अनुनयवचनेन समागमेन तस्याः जीवरक्षणस्य अवश्यकर्तव्यता सूच्यते ॥८३२॥ इतः एका-

---

८३१ रस्थाननिविष्ट० (प. स्तं) ८३२ युक्तं शोभा शठ जीव (गो. का) ८३३ कुलमलिनं (प. स्तं)। 'गर्हां बन्धनमपि जीवितव्य० करोति कुलटा सततं परपुरुषसंसक्ता। (इति पंचतंत्रे १।१३५)

स तु लिखति दासपत्रं त्यजति कुटुम्बं ददाति सर्वस्वम् ।
यावन्न भवति पुरतः परयुवतिः प्रोज्झितावरणा ॥ ८३४ ॥

दशभिः चौर्यकामुककेलिलालसमानसायाः परकीयायाः पुंश्चल्याः संभोगशृंगारारंभादिकं संवर्णयति कुलपतनेत्यादिभिः । तत्रादौ तादृश्याः साहसकर्म आह कुलेति । अबला स्त्री, अनुस्वानशक्त्या मनोनिग्रहं कर्तुं असमर्था इति सूच्यते, परपुरुषं स्वपतिभिन्नं पुरुषं अन्यं, अभियान्ती तत्समीपं मदनाशैकवशंवदा सती सुरताय मैथुनाय गच्छन्ती; तत्क्षणं तदानीमेव कालाव्यवधानेन, गमनाय प्राथमिके पदन्यासे एव इति भावः; कुलस्य परपुरुषानुरागकलंकराहित्येन विशुद्धस्य पितुः पत्युश्च गोत्रस्य पतनं पतितत्वं; जनगर्हां लोकनिन्दां; नरकगतिं पतिव्यभिचाररूपपापकर्मणा मरणोर्ध्वं निरयप्राप्तिं, यथोक्तं—"पतिमुल्लंघ्य मोहात्स्त्री कंकं न नरकं व्रजेत् । कृच्छ्रान्मानुषतां प्राप्य किंकिं दुःखं न पश्यति ॥" ( २।१६६ ) इति गोभिलस्मृतौ; प्राणितव्यसंदेहं जीवितशंकां प्रकाशमागते व्यभिचारे पत्युः अन्यसंबंधिनो वा देहान्तदण्डप्राप्तिसंभवात्; कुलपतनाद्येकैकस्यापि व्यभिचारप्रतिबंधकशक्तिमत्त्वेऽपि इदं सर्वं, अङ्गीकरोति स्वीकुरुते । यथोक्तं—"कुलकूलद्वयाबद्धां बंधुबंधनयंत्रणाम् । न सहंते तरंगिण्यो रतिशीला हि योषितः ॥" ( बोधिसत्त्वा० ८९।१३० ) इति; अपि च—"शीलं नाद्रियते, कुलं न मनुते, नैवानुरुन्धे गुरून्, नारीणां कुलदेवता किल पतिस्तं चाप्यहो मुञ्चति । किं ब्रूमः परयोषितः पुनरसावन्योऽनुरागक्रमः स्वप्राणानपि जातुचिन्न गणयत्येषा विटार्थे यतः ॥" ( १४० ) इति मुकुन्दानंदभाणे । "न शक्या हि स्त्रियो रोद्धुं प्रस्थिता दयितं प्रति ॥" (५।३१) इति च मृच्छकटिके ॥ अत्र 'तत्क्षणं' इति कथनेन कुलपतनादिकार्याणां परपुरुषाभिगमनरूपकारणस्य च साहित्योक्तेः अक्रमातिशयोक्तिरलंकारः ॥ ८३३ ॥ तथैव परकीयासक्तस्य साहसमाह स इति । तादृश्याः कामुकः परकीयानुरक्तः, तुः अप्यर्थकः, ] 'दासपत्रं सेवकवत् पत्रं' [ इति टिप्पणी, वस्तुतस्तु दासपत्रं सप्तविधे लौकिके लेख्ये एकं, तदुक्तं बृहस्पतिना—"वस्त्रान्नहीनः कान्तारे लिखितं कुरुते तु यः । कर्माणि ते करिष्यामि दासपत्रं तदुच्यते ॥" इति, पुरुषेण दासत्वांगीकारसमये स्वामिने वेतनसेवाप्रकारादिनिर्देशकः यः सेवास्वीकारलेखः लिखित्वा दीयते सः तं, लिखति तस्याः यथेष्टविनियोगार्हः सेवकः भवति इत्यर्थः, सर्वप्रकारैः तस्याः

८३४ सर्वं च ( का ) । °ताचरणा ( प. कापा )

दृष्टं यद्द्रष्टव्यं व्यपयातं कौतुकं विदितमन्तः ।
इति याति मनसि कृत्वा विहितविधेयस्ततस्तूर्णम् ॥ ८३५ ॥
साऽपि च्छिन्ना च्छोटनगृहीतमुक्ता विलोकयन्त्याशाः ।
विशति गृहं संत्रस्ता सर्वत आशङ्किता सवैलक्ष्यम् ॥ ८३६ ॥

---

सेवां कुरुते इति भावः । कुटुम्बं पुत्रापत्यादिपोष्यवर्गं, त्यजति, स्वकुटुंबजनं विहाय च तस्यै, सर्वस्वं सर्वं निःशेषं स्वं धनं, इदं वस्तुसामान्योपलक्षणं, ददाति अर्पयति तत्सात्कुरुते । यावत् अवधारणे कालस्य, परयुवतिः परस्य अन्यस्य युवतिः यौवनोद्धता स्त्री, प्रोज्झितावरणा अंगदानाय त्यक्तपरिधाना, विवृतजघना इति भावः, पुरतः अग्रे सम्मुखं, न भवति । यतः "यूनां तु परदाराणामभिप्रेतः समागमः ।" (शिवपुराणे धर्मसंहितायां १०।१२० ) इति । एतदनुकारो क्षेमेन्द्रस्यायं श्लोकः—"तावत्प्राणरणेनापि चपलाः सकुतूहलाः । परस्त्रियं प्रार्थयन्ति न यावद्वस्त्रमुज्झति ॥" ( बोधिसत्त्वा० ८९।१३५ ) इति ॥ ८३४ ॥ निर्वृत्ते प्राथमिके समागमे कामुकस्य वृत्तमाह दृष्टमिति । विहितविधेयः कृतकृत्यः संप्राप्तपरकीयारतिसुखः इति भावः, सन्, ततः संकेतस्थानात्, तूर्णं शीघ्रं, याति अपगच्छति, कथं, इति मनसि कृत्वा एवं विचार्य । तत्प्रकारं निरूपयति दृष्टमित्यादि । यत्, द्रष्टव्यं दर्शनीयं "दर्शनीयं तदानन्दसान्द्रो यत्र मनोलयः ।" इति यादवः, तत् दृष्टं; द्रष्टव्यावधिदर्शनेन जनुः सफलतां नीतं इति भावः; अतः पूर्वजातं कौतुकं कुतूहलं "रम्यदृष्टौ चापलं तु कुतूहलमुदीरितम् ।" इति लक्षितं, व्यपयातं निर्वृतिं प्राप्तं शान्तं इत्यर्थः । कुतः, अन्तः हृदये, विदितं ज्ञातं अनुभूतं इत्यर्थः, तत् कुतूहलम् ॥ अत्रापि क्षेमेन्द्रस्य छायाश्लोकः—"दृष्ट्वा विवसनां वृत्तकर्तव्यः सर्वथा जनः । भुजपंजरनिर्मुक्तः शुकवृत्त्या पलायते ॥" ( बोधिसत्त्वा० ८९।१३७ ) इति ॥ ८३५ ॥ तथैव नवस्वैरिण्याः चर्यामाह साऽपीति । साऽपि प्रकृता इत्यर्थः, छिन्ना पुंश्चली, "छिन्नाऽमृतायां पुंश्चल्यां, छिन्नं भिन्नेऽभिधेयवत् ।" इति विश्वलोचने, परानुरागेण पत्युः भिन्नतां गता इति छिन्ना, एतच्छब्दादेव प्राकृते 'छिण्णालिआ' इति भाषायां च 'छिनाल' इति तदर्थकाः शब्दा उद्भूताः । छोटनं छोटिका चुटकी, ( १ ) अङ्गुष्ठमध्यमाभ्यां ध्वनिविशेषोत्पादनं, 'चपटी वगाडवी' इति गुर्जरभाषायां प्रसिद्धा, सा च प्रायः शीघ्रकर्तव्यतासूचनाय संज्ञादानाय अनुमोदनाय वा प्रयुज्यते । लक्षणया च ( २ ) तदुत्थध्वनिः, ( ३ ) तदुपलक्ष्यः अत्यल्पः कालश्च इति अर्थ-

---

८३५ विदितमन्तम् ( स्तं ) ८३६ सापि च्छन्ना० ( प. स्तं )

**नवचारित्रभ्रंशा सुरचितकुलटोदितेषु नो निपुणा ।**
**पृष्टा 'क्व गताऽसि त्वं' 'न क्वचिदिति' संभ्रमाहूते ॥ ८३७ ॥**

---

द्वयान्तरम् । तेन प्रकृते छोटनक्रियोपलक्षितात्यल्पकाले, आदौ गृहीता पश्चात् मुक्ता च अर्थात् संगम्य भुक्तोज्झिता इत्यर्थः, एवंविधा सा छोटनगृहीतमुक्ता । ( साहित्ये प्रायः छोटिकाशब्दः प्रयुज्यते यथा--प्रियदर्शिकायां चतुर्थे अंके--"राजा--( वासवदत्तामपवार्य, चो ('छो') टिकां ददत् । ) साधु वयस्य साधु ।" इति, तथा रत्नावल्यां द्वितीये अंके--"विदूषकः--( छोटिकां दत्वा । ) भो वयस्य युज्यते खलु एतत् ।" इति, तथा तत्रैव तृतीये अंके " काञ्चनमाला--भर्त्रि, इयं सा चित्रशालिका । तद्यावद्वसंतकस्य संज्ञां करोमि ( इति छोटिकां ददाति । )" इति । तथा कर्णसुंदरीनाटिकायां-- " राजा--'नि:संबंधं कथयतु भवान् कस्तदीयोऽपराधः ॥ ( १।३३ ) । विदूषकः-- ( छोटिकां दत्वा ) ' यद्येवमस्ति विवेकस्तत् कुतो न विरज्यते ' ।" इति । तथा आनंदवृंदावनचंपूकाव्ये--" वामा वामकरांगुलीदलयुगेनातन्वती छोटिकां निर्याहीति ह्वियोऽपसारणविधेः संकेतमुद्रामिव ।" ( १९।५८ ) इति, ('वामा वाम्यभावविशेषवती नायिका । वामकरांगुलीदलद्वयेन वामांगुष्ठमध्यमाभ्यां इत्यर्थः । छोटिकां तदुत्थध्वनिम् ।' इति तट्टीका । ) एवं तांत्रिकादिविधिषु न्यासेषु अपि "छोटिकात्रयं दत्वा" इत्यत्रापि छोटिकाशब्दस्य पूर्वोक्त एवार्थः ॥ सा, आशाः दिशः, विलोकयन्ती पश्यन्ती, कोऽपि परिचितः परगृहादागच्छंतीं तां शंकते न वा इति; अपि च सर्वतः सर्वैः सार्वविभक्तिकः तसिः, आशंकिता अनया व्यभिचरितं इति वितर्किता, संत्रस्ता भीतभीता च, सवैलक्ष्यं अन्यज्ञातस्वानुचितकर्मोद्भूतलज्जापरवशं, स्वस्याः गृहं विशति । अत्र स्वैरिणीनां जातिः ॥ ८३६ ॥

गृहं प्रति निवर्तमानायाः तस्याः मार्गे प्रसंगविशेषं वर्णयति नवेति । नवः नूतनः प्राथमिकत्वात्, चारित्रस्य शीलस्य, भ्रंशः नाशः, परपुरुषसंप्रयोगात्, यस्याः सा तादृशी चौरकामिनी; तथा नवत्वादेव, सुरचितानि सुश्लिष्टं यथा भवेत् तथा ग्रथितानि, यानि, अपरासां अभ्यस्तव्यभिचारकर्मणां कुलटानां पुंश्चलीनां, उदितानि उत्तरादिवचनप्रकाराः कपटमयाः, तत्र, नो निपुणा अकुशला सती, तथाहि--" मृषोक्तिः साहसं चैव गोपनं च प्रतारणम् । संकेतचेष्टा चातुर्यं परकीयागुणा मताः ॥ " इति ( मंदारमरंदचंप्वाम्, ) ( साहसं आत्मनिरपेक्षकार्यम् । ) अप्राप्तैतद्गुणा इति भावः; त्वं कुत्र गता आसीः इति मार्गे परिचितेन गृहे पत्यादिना वा पृष्टा ' न क्वचित् '

---

८३७ °त्रभ्रंशात् ( प. स्तं ) [ अरमणीयः पाठः ] । कुलटोत्तरेषु ( प. स्तं. ) ।

मितदोषे बहुरोषाः पुरुषा अपि चपलकौतुकप्रायाः ।
त्वं च ग्रहेण लग्ना कार्यविमूढाऽत्र तिष्ठामि ॥ ८३८ ॥
इति दोलायितहृदया स्थिरीकृताऽभ्यस्तकर्मणा दूत्या ।
दृष्टेति शङ्कमाना पदेपदे चलति पर्णेऽपि ॥ ८३९ ॥

---

कुत्रापि न इति, संभ्रमात् साध्वसेन भयेन, ब्रूते उत्तरं ददाति । अत्रापि जातिः ॥ कुलटालक्षणं तु–" अनेकपुरुषैः सार्धमत्यन्तसुरतस्य च । यस्याश्चित्ते सदा वाञ्छा कुलटा नायिका तु सा ॥ " इति ॥ ८३७ ॥ षड्केन परकीयासंभोगशृंगारारंभवर्णनपूर्वं पारदारिकं प्रशंसति । तत्रादौ युग्मेन नवस्वैरिण्याः संकेतस्थलं प्रति स्वगृहाद्गमनं वर्णयति । तत्र मितेत्यादि दूत्याः तां प्रति उक्तिः । पुरुषाः पुंस्त्वलक्षिताः जनाः, चपलाः चञ्चलाः, कौतुकस्य कुतूहलस्य प्रायः बाहुल्यं येषां ते कुतूहलिनः, अपि, एतेन तादृशविषयेषु तेषां महोद्यमः सूचितः; मितदोषे अल्पापराधे बहुरोषाः प्रचुरक्रोधाः भवंति इति तेषां स्वभावः, तेन तव इदानीं अनागमने स कामुकः मह्यं कुपिष्यति इति सूचितं; त्वं च, ग्रहेण हठेन आग्रहेण लग्ना, अगमनाय हठं करोषि इत्यर्थः, पदात्पदमपि न चलसि इति भावः, तेन, अहं स्वीकृतदौत्या मध्यस्था, अत्र, कार्यविमूढा संदिग्धकिंकर्तव्यता, तिष्ठामि वर्ते । तव प्रतिश्रुत्यापि अगमनात्, तेन च तस्य मय्येव कोपवर्षणसंभवात्, इदानीं मयि एव दयया त्वया तत्र एकवारमपि गन्तव्यं इत्यभिप्रायः ॥ ८३८ ॥ इति एवंप्रकारेण, अभ्यस्तकर्मणा पुनरुक्तवाक्क्रियया, करणे तृतीया, स्थिरीकृता गमननिश्चयं प्रापिता इति भावः, केन, दूत्या दूतीजनेन, दूतीलक्षणं च–" दौत्यं कृत्वा नयेत्कान्तं वल्लभां वा प्रियं प्रति । सा दूती कथिता सद्भिर्मिथोऽनुनयकोविदा ॥ " इति डुंगरराजालंकाररत्नाकरे; " प्रोत्साहनेषु कुशला मधुरकथा दक्षिणा च कालज्ञा । अटहा संवृतमंत्रा दूतीत्येतैर्गुणैर्युक्ता ॥ " इति चान्यत्र । ( अटहा चतुरा । ) तया का स्थिरीकृता इत्याह दोलायितहृदयेति, दोलावत् आचरतीति दोलायितं तद्वत् अस्थिरं इति यावत्, हृदयं यस्याः सा दोलायितहृदया, ( यथोक्तं विद्धशालभंजिकायां तृतीयेऽङ्के विदूषकेन–' तत् हिन्दोलदोलितमिव ते चित्तं गमागमाभ्यां न विरमते ' इति,) 'न ययौ न तस्थौ'–इतिगतिमती, नवस्वै-

---

८३८ एते दोषा बहवः पुरुषा अपि चपलकौतुकाः प्रायः ( प. स्तं ) । ( कुलकम् ) ( प. स्तं ) । ८३९ दोलागतहृदया ( स्तं ) । 'कर्मणो ( स्तं ) 'न्यस्तकर्मणा ( गो. का ) । दृष्टेनिःशंकमाना ( प ) दृष्टाभिशंकमाना ( गो. का ) । 'माना मुहुर्मुहुश्च॰ (गो) । चलितपर्णेऽपि ( प. स्तं )

**अनु दिक्षु विक्षिपन्ती मुहुर्मुहुश्चकिततरलिते नेत्रे ।**
**प्राप्ता सङ्केतभुवं शतगुणितमनोरथाकृष्टा ॥ ८४० ॥**
**भयशृङ्गारव्रीडामिश्रीभूतानुभावसन्दोहम् ।**
**जनयन्ती लोलांशुकदृष्टादृष्टांसकुचनाभिः ॥ ८४१ ॥**

---

रिणी या पूर्वं 'कामुकोऽभिगन्तव्यो न वा' इति विरुद्धपक्षयोः कामभयाभ्यां दोलेव विरुद्धदिशोः आकृष्यमाणा कस्यचिदेकस्यापि पक्षस्य स्वीकरणे अनधिगतनिश्चय आसीत् सा, पदेपदे इति वीप्सायां द्विरुक्तिः, अभिसरणसमये प्रतिपदविन्यासं इत्यर्थः, पर्णे मार्गस्थवृक्षाणां एकस्मिन् पत्रे दले, अपि, चलति कंपमाने कंपेन शब्दं कुर्वति इति भावः; एकवचनेन ध्वनेः अत्यल्पत्वं सूचितं, अपिना किमु वाच्यं मनुष्यदर्शने इति आक्षिप्यते । दृष्टेति इति–गुप्ततया संकेतस्थलं गच्छती अहं केनापि दृष्टा यः तत्कुकर्म लोके प्रकाशयिष्यति इति, शंकमाना भयं भजमाना, तदुक्तं–"स्वैदोषैर्भवति हि शंकितो मनुष्यः ।" (४।६) इति चारुदत्ते । शंका च–किमनिष्टं मम भविष्यतीत्याकारः चित्तवृत्तिविशेषः भयाद्युत्पादनेन कंपादिकारकः ॥ इतः शंकमानेत्यादि प्रथमान्तस्त्रीलिंगकपदानां अग्रे (आ. ८४३) 'अन्ययोषा' इतिपदेन संबंधः ॥ ८३९ ॥ यतः शंकमाना अत एव, अनु दिक्षु यावतीषु दिक्षु, यावद्दिशो व्याप्य इत्यर्थः, वीप्सायां अनुः मुहुर्मुहुः वारंवारं, चकिते भययुक्ते विस्फारिते भयकंपिततारके च इति भावः, नेत्रे विक्षिपंती नयने संचारयन्ती, लोकभयात् सर्वा दिशः पश्यंती इत्यर्थः, यथोक्तं–"शंका चौर्यापराधादेः स्वानिष्टोत्प्रेक्षणं मतम् । तत्र चेष्टा मुहुः पार्श्वदर्शनं मुखशोषणम् ॥" (२।२६) इति रसार्णवसुधाकरे; अनेन शंकिता दृष्टिः च अभिप्रेता "किंचिच्चलस्थिरा किंचिन्नामिता तिर्यगायता । गूढा चकिततारा च शंकिता दृष्टिरिष्यते ॥" इत्युक्ता । तथा शतं बहुवारं, गुणितैः मनसि आवर्तितैः, मनोरथैः एवं तेन प्रियकामुकेन क्रीडिष्ये एनमेनं मानं ग्रहिष्यामि इत्यादिप्रकारकैः चिन्ताभिलाषैः, आकृष्टा बलात् नीता, संकेतभुवं प्रियमेलनस्थानं, तानि च पूर्वं (आ. ६८० टी.) निर्दिष्टानि, प्राप्ता आगता ॥ ८४० ॥ तत्रागता च, सरभसागमनेन लोलं चंचलं यत् अंशुकं वस्त्रं, तेन अंशुकलौल्येन इत्यर्थः, दृष्टादृष्टाः प्रियेण किंचित् अंशतया दृष्टाः अदृष्टाश्च, अंसौ बाहुशिखरौ, कुचौ स्तनौ, नाभिः उदरकूपिका च यस्याः सा तादृशी, अनेन तस्याः उद्दीपनविशेषः उक्तः, रमणस्य अग्रे, भयशृंगार-

---

८४० सर्वत्र विक्षिपन्ती (प. स्तं) । पदे पदे (गो. का) ८४१ °सकुक्षिकुच° (प. स्तं) °शुकधृतकृतिकृष्टा सकुच° (का) [ अर्थविहीनः पाठः ]

**नीवीश्लथनारम्भं निरुन्धती कितव यामियामीति ।**
**निभृतास्फुटाभिधानैः पल्लवयन्ती स्मरस्य कर्तव्यम् ॥ ८४२ ॥**

व्रीडाभिः मिश्रीभूतानां तिलतंडुलवत् संकीर्णानां, अनुभावानां भ्रूभंगादिरूपभावव्यञ्जक-चेष्टानां, ] संदोहं समूहं, [ जनयंती प्रादुष्कुर्वती । भयं अनुचितकर्मप्रकाशसंदेहजं चित्तवैकल्यं, शृंगारः संभोगसुखप्राप्तीच्छामनोविलसितं, तदुक्तं—" पुंसः स्त्रियां स्त्रियाः पुंसि संयोगं प्रति या स्पृहा । स शृंगार इति ख्यातो रतिक्रीडादिकारणम् ॥" इति । व्रीडा लज्जा 'अन्तरुद्भिन्नमान्मथविकारजुगोपायिषारूपा'। व्रीडादिभिः तस्याः अनु-रागातिशयः प्रकाश्यते, तेषां तत्कार्यत्वात् । तथा च कामुकदर्शनेन संजाताः ये तस्याः अनुभावाः शृंगारजाः शरीरविक्रियाः पुलकादयः ते स्वनिष्ठभयादिभिः ( तत्र भयं लोकादिभ्यः त्रासः, शृंगारः कामुकविषया रतिः, व्रीडा नूतनसंगमेन उद्भूता लज्जा । ) संकीर्णाः, न शुद्धाः इति भावः । अत्र पूर्वार्धेन परकीयानुभावानां अन्यना-यिकानुभावेभ्यः वैलक्षण्यं वैशिष्ट्यं वा प्रकाशितं; तथाहि स्वीयानां स्वपतिभिः, वेश्यानां च विटैः संगमने भयादित्रयं न जायते इति ॥ ८४१ ॥

ततः परं च चिरध्यातसंभोगार्थं वल्लभेन क्रियमाणः नीव्याः परिधानांशुकग्रंथेः श्लथनाय शैथिल्यापादनाय यः आरंभः उपक्रमः, तं, निरुन्धती स्वकराभ्यां नीवीमावृत्य प्रियस्य करौ वा धृत्वा निवारयंती; नीवीश्लथनेन बाह्यसंभोगानंतरं रतारंभसमय उपलक्षितः, यथोक्तं रतिरहस्ये—" अलिकचिबुकगण्डं नासिकाग्रं च चुंबन् पुनरुपहितसीत्कं तालु जिह्वां च भूयः । छुरितललितनाभीमूलवक्षोरुहोरुः श्लथयति दृढधैर्यः क्षोभयि-त्वाऽथ नीवीम् ॥" ( १०।३ ) इति । ( अलिकं ललाटं, गण्डः कपोलः, छुरितं तदाख्यं नखपदं, नाभिमूलं जघनम् । ) तथा च यत्र कामिन्याः स्मरावेगाधिक्यं तत्र नीवीबंधस्य श्लथत्वं स्वयमुपजायते, यत्र तु तत् कामुकस्य तत्र तेनैव क्रियते इति भेदः । अपि च, कितव हे धूर्त व्याजैः समागमसाधकत्वात्, यामि अपगच्छामि वंचितेति, यामियामि इति संभ्रमाद्विरुक्तिः, संभ्रमश्च—" शत्रुव्याघ्रादिसंभूता शंका स्यात्सैव संभ्रमः ।" इति लक्षितः; इति एवंप्रकारकैः, ] निभृतानि अल्पा-क्षराणि, [ अस्फुटानि अव्यक्तानि च अभिधानानि उक्तयः, तैः, स्मरस्य कर्तव्यं सुरताभिलाषं मदनजनितविलासान् वा, ] पल्लवयंती समुद्दीपयन्ती [ वर्धयंती वा ] । तथा चोक्तं—" पराङ्गनानां सुरताभ्यनुज्ञा मन्दोदिता एव निषेधवाचः ।" ( मुकुंदा-

---

८४२ °नारम्भे निरुन्धती तं न यामि ( गो. का ) । निहितास्फुटा° ( का ) निहता° ( कापा )

नयतीवान्तर्विलयं संग्रसमानेव सर्वगात्राणि।
संश्लिष्यतेऽन्ययोषा तिक्तं तस्यामृतं पुरतः ॥ ८४३ ॥
(नायिकावचनमहाकुलकम्)

---

नंदभाणे १३० ) इति। 'वं न याभि' इति पाठे नेति भिन्नपदं निषेधार्थकम् ॥ अनया कामावेगवर्धकं वामत्वं उक्तम्। तथाहि क्षेमेन्द्रः–"कामं नियमवामस्य स्वाधीनानभिलाषिणः। प्रायेण वर्धते जन्तोर्निषेधेनाधिकादरः ॥" (बोधिसत्त्वा० १२।२०) इति। तथैव च अयं छायाश्लोकः–"नननेति समुत्कंपिरसनांशुककर्षणे। गच्छामि मुञ्चमुञ्चेति क्वणन्ती कस्य नेप्सिता ॥" (बोधि० ८९।१३६) इति ॥ ८४२ ॥ कामशास्त्रकारैः सपदि सर्वांगतृप्तिकरत्वात् संभोगारंभे प्रयोज्यत्वेन प्रतिपादितं आलिंगनम्। तच्च अत्र सर्वविधसुरतोपलक्षणं परकीयायाः प्रशस्यते नयतीति। परकीयायाः आलिंगनस्य अनुरागातिशयेन अतिदृढत्वात्, कामुकं, अन्तः स्वमध्ये, विलयं एकरसत्वं नयती इव अंतर्भावयन्तीव, इव उत्प्रेक्षायां, अतः आलिंगनं 'लयः' इत्यपि अभिधीयते, यथोक्तं–"विनाशाश्लेषयोर्लयः" इति विश्वलोचने। तथैव सर्वगात्राणि शरीरस्य सर्वान् अवयवान्, ग्रसमाना अतिदृढतया गृह्णती इव, पट्केन वर्णितप्रकारा अन्ययोषा परदाराः, संश्लिष्यते आलिंग्यते, ] तस्य संश्लेषस्य पुरतः [ अग्रे, तुलने कृते, ] अमृतं [ सुधा ], अपि, तिक्तं निम्बतुल्यस्वादं [ 'कडवुं' इति भाषायां, भाति इति शेषः। ] अमृतादपि मधुरतरः [ परकीयायाः ] संश्लेषः इत्यर्थः। [ उत्प्रेक्षाव्यतिरेकालंकारयोः संसृष्टिः ॥ 'यत् श्लिष्यते न योषित्' इति पाठे यदि एतादृशी योषित् अर्थात् परकीया न आलिंग्यते तदा तादृशस्य अप्राप्ताश्लेषस्य पुरुषस्य पुरः प्राशनाय धृतं अमृतमपि तस्य तिक्तं भाति, चित्तवैधुर्यात् तदपि न गृह्णाति इति भावः ॥ परकीयाचेष्टितमित्थं वर्णितं पंचायुधप्रपंचभाणे–"गच्छामीति वदन्त्य एव चरणं यच्छन्त्यलीढं (कं ?) पुरः, संस्पर्शादपि पूर्वमस्फुटमलंवादान्मुहुः कुर्वते। संकेते मलयानिलेऽपि चलिते तिष्ठंति नैव क्षणं, को धन्यो विरतिं प्रपश्यति रतेरन्याङ्गनानां भुवि ॥" इति। ( संकेते संकेतस्थले। विरतिं अन्तम्। अनेन परकीयासुरतस्य कृच्छ्रत्वं, तत्संपूर्णतायां च कामुकस्य धन्यत्वं सूचितम्। ) वसन्ततिलकभाणे च– "दिगन्तान् पश्यन्ती दिशति न मुखे चक्षुरमृतं, न विश्रब्धं किंचित्कथयति नवाऽऽकर्णयति च। रतारंभे भूयो जिगमिषति साशाऽपि सुरते, तथाऽप्येषा भावैस्तरलयति

---

८४३ ददतीवा० (प. स्तं)। ग्रसमाने वार्धसर्व (का) ग्रसमाना सर्वगात्राणि (गो)। यत् श्लिष्यते न योषित् (प. स्तं) [ अत्र का पूर्वार्धपाठो दुष्टः ]।

'न कृतं तव रहसि पुरो बाष्पावृतकण्ठकुण्ठया वाचा ।
गेहस्वामितिरस्कृतिनिष्पादितदुःखवेगनिर्वहणम् ॥ ८४४ ॥
उपधानीकृत्य भुजावन्योन्यं निर्विशङ्कमावाभ्याम् ।
संवलितोरु न सुप्तं शिथिलाङ्गं रतिविमर्दखिन्नाभ्याम् ॥८४५॥
आत्मगृहादानीतं प्रच्छाद्य स्वादु भोजनं विजने ।
स्वकरेण मया दत्तं निर्वृतहृदयेन नाशितं भवता ॥ ८४६ ॥

---

चेतः परवधूः ॥ तदेवमर्धावशेषितमदनमनोरथस्यापि मुहुर्मुहुरुत्तुंगितबहुलानुरागस्य परयुवतिसंभोगसौख्यस्य षोडशीमपि कलां सुरतान्तराणि न स्पृशन्ति । " इति ॥८४३॥ अत्र गो. का. पुस्तकयोः 'नायिकावचनमहाकुलकम्' इति उट्टंकितं तत् ८५५ आर्यायाः अनन्तरं भवितुं युक्तं इति अत्र लेखकप्रमादात्पतितमित्यवगन्तव्यम् ॥ अथ द्वादशभिः उपालंभकुलकम् । तत्र परकीयायाः कामुकं प्रति शोकगर्भाणि उपालंभवचनानि । तत्रादौ त्रिभिः सा पूर्णावसरालब्ध्या असिद्धमनोरथविशेषान् सविषादं व्यक्तीकरोति नेति । रहसि एकान्ते, तव मम हृदयसर्वस्वभूतस्य, पुरः अग्रे, शोकावेशात् बाष्पेन आवृतेन निरुद्धेन कण्ठेन कुण्ठया जडीभूतया वाण्या; गेहस्वामी अनेन अस्तु स गृहस्य स्वामी न तु मम इति तस्मिन् विरागता सूचिता, तेन कृताः याः तिरस्कृतयः परपुरुषाभिगमनशंकया अन्यैर्वा कारणैः न्यक्काराः, तैः निष्पादितं जनितं यत् दुःखं तस्य वेगस्य अतिशयस्य निर्वहणं समाप्त्यंतं कथनमित्यर्थः, मया न कृतं संपादितं, तादृशनिवृत्तिसमयाद्यलाभात् इति भावः । "स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते ।" ( कुमार० ४।२६ ) इति यत् प्रसिद्धं तन्मया संपूर्णतया नानुभूतमित्यभिप्रायः॥८४४॥ एवमेव अनुकूलसमयस्थलादीनामभावात्, आवाभ्यां, रतिविमर्दखिन्नाभ्यां सुरतश्रमश्रान्ताभ्यां, रतान्ते, अन्योन्यं परस्परं, भुजौ बाहू, उपधानीकृत्य-उपधानं उच्छीर्षकं 'उशीसा' इति भाषायां, उपधानस्थले भुजं व्यापृत्य इत्यर्थः, यथोक्तं–"स्वापहेतुरनुपाश्रितोऽन्यया रामबाहुरुपधानमेष ते ॥ " ( उत्तररामचरिते १।३७ ) इति । शिथिलाङ्गं सुरतग्लान्यपनयनाय मुक्तावयवं, संवलितोरु लीलया परस्परस्योपरि पादनिःक्षेपेन मिश्रीभूतोरुभागं, तथा निर्विशंकं अकुतोभयं, ( शिथिलांगादीनि क्रियाविशेषणानि, ) न सुप्तं शयितम् । तथाहि मुकुन्दानन्दभाणे–"व्यामिश्रैकैकबाहु प्रवलितपृथुलैकैकचारूरुकाण्डं दष्टादष्टाधरोष्ठं दरशिथिलतनुश्लेषमालिंग्य कान्ताः । शश्वन्निःश्वासवेगस्फुरितगुरुकुचद्वंद्वसंघृष्टवक्षाः श्रान्तः शेते रतान्ते सुखमिह सुकृती लीलया कामिलोकः ॥ " ( ३३ ) इति ॥ ८४५ ॥ तथैव उपचारविशेषे आत्मनः अतृप्ति

---

८४४ [ का पूर्वार्धं दूषितं ] ८४५ संवरितोरु ( गो. का ) संछादितोरु ( कापा )

**न कृता चरित्ररक्षा न च भुक्तं त्वच्छरीरमपर्यन्त्रम् ।**
**दृष्टादृष्टभ्रष्टा क यामि किं वा करोमि दुर्जाता ॥ ८४७ ॥**
**अवगुण्ठनविनयरतिं स्वैरालापं च मन्दसञ्चारम् ।**
**सम्प्रति मम पापायाः करपिहितमुखा हसन्ति तत्त्वज्ञाः ॥८४८॥**

प्रकटयति आत्मेति । स्वगृहात्, प्रीत्या मयैव साधितं, स्वादु रसनादितोषजनकं, भोजनं खाद्यादिकं चतुर्विधं, प्रच्छाद्य वस्त्राञ्चलादिना आवृत्य, आनीतं, एतेन हार्दं प्रेम ध्वन्यते, विजने एकान्ते, स्वकरेण मया दत्तं, एतादृशगुणविशिष्टमपि, भवता निर्वृ-तहृदयेन ] निर्वृतं सुखितं [ हृदयं यस्य तादृशेन सता, ] न अशितं न भुक्तं, अपि तु शीघ्रं अनास्वादनपूर्वकं भक्षितम् । [ इदं मे अनुरागिण्याः अपरं शोकस्थानं इति भावः ॥इयं गुप्तचर्या ॥ ८४६ ॥ कुपथगमनेन उभयमार्गभ्रष्टतया आत्मानं शोचति नेति । मया, चरित्ररक्षा शीलपालनं, न कृता, त्वद्योगेन विषयानंदसमुल्लासप्राप्त्या-शया उभयलोकसाधनं पातिव्रत्यं त्यक्तं इति भावः । तथापि इष्टसिद्धिर्न जाता इत्याह न चेति । त्वच्छरीरं तव सौंदर्यादिगुणवान् भोगाश्रयो देहः, अपर्यंत्रं अप्रतिबन्धं निरर्गलतया वा, न भुक्तं यथेष्टालिंगनचुंबनादिभिः न भोगविषयीकृतं, तदर्थं पर्याप्तस्य कालस्यानुपलब्धेरिति भावः । 'मच्छरीरं' इति पाठे कपोलकुचादिभोग्यस्थाना-श्रयं त्वया न भुक्तं--त्वया प्रभूतचुंबनमर्दनादिभिः न मे कामशान्तिर्जनिता, चौर्यसुर-तस्य रभसेन निर्वर्त्यमानत्वात्, इति भावः । उभयपाठेऽपि स्वमनोरथस्य अपूर्तिः द्योतिता । फलितमाह दृष्टेति । इत्थं, दृष्टात् दृष्टफलात् विषयानन्दात्, अदृष्टात् पुण्यात् च, भ्रष्टा पातिव्रत्यभंगपापेन, एवं उभयतो नष्टा इत्यर्थः, अतः दुर्जाता दुष्टं अश्लाघ्यं जातं जन्म यस्याः सा दुर्भाग्या, क यामि किं वा करोमि इति दैन्यसूचिका स्वभावोक्तिः । अत्र दैन्याख्यो व्यभिचारिभावः, स च "दुःखादिजनिता चित्तवृत्तिर्दैन्यं स्वदोषकृत् ।" ( साहित्यसारे ४।१४६ ) इति लक्षितः ॥ ८४७ ॥ इतः पंचकेन लोके प्रतिष्ठा-भंगरूपां अनुशोच्यां दशां स्वानुभूतां 'लक्षिता परकीया' सा संवर्णयति, तेन च परपुरुषसेवनं स्त्रीणां ऐहिकानिष्टजनकं सत्याज्यं इति परमार्थं द्योतयति । पारलौकि-कानिष्टं शास्त्रदृष्टं प्रसिद्धमेवेति नोक्तम् । पंचके च प्रतिवृत्तं "अवज्ञादिसमुत्पन्ना वृत्ति-र्निर्वेद उच्यते ।" (४।१३९) इति साहित्यसारे लक्षितः निर्वेदाख्यो व्यभिचारिभावः ॥ अवगुंठनेति । कुलवधूत्वात् तासां नीतिमवलंब्य, मम, अवगुंठनं संवृतमुखत्वं गुरूणां

८४७ शरीररक्षा ( गो )। मच्छरीर ( गो ) मच्छरीरपर्यन्तम् (का) ८४८ रति ( प. स्तं ) ननयविरतिं (का) । स्वैरालपनं सुमन्द० ( प. स्तं ) ! भूमिज्ञाः ( प. स्तं )

यासामासीत्सख्यं मया समं समवयःकुलस्त्रीणाम् ।
ता वारयन्ति मत्तः कुसङ्ग इति तन्नियन्तारः ॥ ८४९ ॥
धिग्वादान् परिजनतः सहमानाऽनुचरा ह्यधोवदना ।
तिष्ठामि निरभिमाना निजनिर्मितदोषदौर्बल्यात् ॥ ८५० ॥

---

परपुरुषाणां वा समीपे लज्जया विनयेन वा मुखादर्शनाय तस्य वस्त्रांचलेन पिधानं, यत् गुर्जरभाषायां 'लाज काढवी' इत्युच्यते, तदेव विनयः नम्रता नीतिः वा, "विनयस्तु नतौ नीतौ शिक्षायां विनयो द्वयोः ।" इति विश्वलोचने, तत्र रतिः प्रीतिः, अनेन तादृशप्रसंगेषु सर्वदा मुखावगुण्ठनं विनयप्रदर्शनार्थं कृतं इति भावः; तथैव स्वैरालापः मन्दस्वरेण संभाषणं; तथैव मंदसंचारः अनुद्धततया गमनं; एतानि सर्वाणि शीलद्योतकानि, तानि पूर्वं मया अनुष्ठितानि, लोके प्रशंसितानि च; तान्येव अधुना कृतानि अपि, मम पापायाः व्यभिचारेण दुश्चरितप्रकाशेन च हतायाः; तत्त्वज्ञाः परेंगितज्ञाः लक्षणान्यवेक्ष्य अनुमानपराः, आवयोः लोकशास्त्रविरुद्धः अनुचितः संबंधः प्रकृतं तत्त्वं तत् जानंति ते; करपिहितमुखाः करेण मुखमावृत्य इत्यर्थः, तच्च हास्यसंगोपनार्थं, हसन्ति; कृतं क्रियमाणं च अवगुंठनादिकं लोकप्रतारणायैव इति निश्चिन्वानाः इति भावः ।]' अवगुंठनादीनां केवलं प्रतारणायैव विधानात् हासो युक्त एव ।' [इति टिप्पणी. ॥ ८४८ ॥ प्रयत्नेन गोप्यमानस्यापि कुलटात्वस्य प्रसिद्धिमुक्त्वा तज्जन्यां शिष्टगर्हामाह यासामिति । सख्यं मैत्री । समवयःकुलस्त्रीणां समवयस्काः याः सत्कुलोत्पन्नाः स्त्रियः तासां । तादृशीः, तन्नियन्तारः तासां मातृपत्न्यादयो गुरुजनाः, उक्तं च–" अस्वतंत्राः स्त्रियः कार्याः पुरुषैः स्वैर्दिवानिशम् । विषयेषु च सज्जंत्यः संस्थाप्याः आत्मनो वशे ॥" ( मनु० ९।२ ) इति; ताः पूर्वसखीः, मत्तः मत्सख्यात् इत्यर्थः, वारयंति निषेधयंति, तत्र हेतुः--कुसंग इति, यथाहं दुराचारा तथा मम संगत्या ता अपि " संसर्गजा दोषगुणा भवन्ति। " इति न्यायेन, तथाविधा भवेयुरिति भीत्या इति भावः। " असदाचारैरसंसर्गः ।" ( धर्मबिंदौ १।३२ ) इति, तथा "सूक्ष्मेभ्योऽपि प्रसंगेभ्यः स्त्रियो रक्ष्या विशेषतः । द्वयोर्हि कुलयोः शोकमावहेयुररक्षिताः ॥ " ( मनु० ९।५) इति हि उपदेशः । अत्र इतिशब्दः हेतौ । बालसखीभिरपि संप्रति त्यक्ता इत्यहो दुःखं इत्यभिप्रायः । 'कुसंगतिं' इति पाठे 'ता' इति 'कुसंगतिं' इति च कर्मद्वित्वं चिन्त्यम् ॥ ८४९ ॥ स्वमाननाशरूपां दोषप्राप्तिमाह धिगिति । परिजनतः परितो ये जनाः संबंधिनः सेवकाश्च

---

८४९. कुसंगतिं त० ( गो. का )। ८५० माना मुहुरथाप्यधो ( गो. ब )। स्वनिर्मित ( प. स्तं )

सद्भिर्विधीयमानं प्रसङ्गपतितं पतिव्रतास्तवनम् ।
हृदयेन दूयमाना मूढा सीदामि शृण्वन्ती ॥ ८५१ ॥
आसन्न उपविशन्तीं मां दाक्षिण्यान्नियन्तुमसमर्थाः ।
अन्योन्यमीक्षमाणा ज्ञातिजनाः सङ्कुचन्ति भुञ्जानाः ॥ ८५२ ॥

---

तेभ्यः, धिग्वादान् धिक्इति निन्दायां अव्ययं, धिक् इयं कुलटा इत्यादिप्रकाराः वादाः उक्तयः तान्, सहमाना, कथं, अनुत्तरा तूर्णीं शृण्वती, हि विशेषे तथाच इत्यर्थः, अधोवदना तिरस्कृतिजन्यलज्जया असंमुखीनदृष्टिः, निरभिमाना गर्वरहिता, तिष्ठामि वर्ते। तत्र हेतुमाह निजेति । निजनिर्मितदोषदौर्बल्यात् पतिभिन्नपुरुषसेवनात्मकः यः स्वकृतः दोषः पापं तेन यत् दौर्बल्यं मनसः अवसादः तस्मात्, हेतौ पंचमी-स्यस्याः अनौचित्यप्रवर्तनात् मनःसंकोचेन इति भावः ॥ उक्तं च–" दुराचारा, दिजा व्रीडा धाष्टर्याभावस्तमुन्नयेत् । साचीकृतांगावरणवैवर्ण्याधोमुखादिभिः ॥" इति । एनमर्थं क्षेमेन्द्रः उत्प्रेक्षते–" सा नग्ना निष्फलाकृष्टा लज्जाकष्टादधोमुखी । कुमार्गे हारितं यान्ती शीलरत्नमिवेक्षते ॥" (बोधि० ८९।१३९) इति॥ ज्ञातकुल-टाजातिः ॥ ८५० ॥ एवमेव तद्वैपरीत्येन, प्रसंगपतितं वार्तालापे स्मृतिविषयीभूतं, पतिव्रतानां पतिः व्रतमिव नियतोपास्यत्वात् यासां तासां सीतादीनां अपरासां विद्यमानानां च मद्विलक्षणानां साध्वीनां, यथोक्तं "नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणम् । पतिं शुश्रूषते येन तेन स्वर्गे महीयते ॥" ( मनु०५।१५५ ) इति स्तवनं प्रशंसनं, शृण्वंती, हृदयेन दूयमाना मया किमेतत् निन्द्यं पापं कृतं इति खिद्यमाना प्रक्षुब्धचित्ता, मूढा किंकर्तव्यताशून्या, सीदामि विषादं प्राप्नोमि ॥८५१॥ एवं द्वाभ्यां स्वगृहे एव अनुभूतां व्यथां अनूद्य बहिरपि प्राप्यमाणां तां कथयति आसन्न इति । ज्ञातिभोजनावसरे अत्तृपंक्तौ, आसन्ने समीपे, उपविशन्तीं भोजनाय आसनग्रहणं कुर्वतीं, मां, ] दाक्षिण्यात् औदार्यात् [ परच्छंदानुवर्तनात् वा, नियंतु-मसमर्थाः पतितायाः ज्ञातिबहिष्कारं कर्तुमपारयन्तः इति भावः, अतः अन्योन्यमी-क्षमाणाः इयं पतिताऽपि निर्लज्जतया अत्रागता इति सोल्लुण्ठं परस्परस्य मुखावलोकनं कुर्वाणाः एतादृशः, भुंजाना भोजनं कुर्वाणाः, ज्ञातिजनाः–ज्ञातिः ब्राह्मणादीनां अवान्तर-भूता तत्तज्जातिः स्वजातिव्यतिरिक्तैः भोजनकन्यादानव्यवहारप्रतिबंधवती, तस्यां विशिष्ट-जात्यां जन्मना अंतर्भूताः जनाः ज्ञातिजनाः समानपंक्तिभोजनाधिकारिणः ते, संकुचंति म्लाना भवन्ति । तथा चोक्तं मनुना–" असंभोज्या ह्यसंयाज्या असंपाठ्याविवाहिनः ।

---

८५२ मद्दाक्षिण्याक्षिषेद्गम० ( प. स्तं ) । ज्ञातिम्नानाः ( स्तं )

प्रकटीकृता त्वयैव क्षणमात्रममुञ्चता गृहोपान्तम्।
अस्मासु दृशं मग्नां प्रेमस्निग्धामनुद्धरता ॥ ८५३ ॥
परगृहविनाशपिशुनाः सुभगंमन्याभिरूप्यकृतदर्पाः।
कृकलासतुल्यरागा भवन्ति युष्मद्विधा एव ॥' ८५४ ॥

---

चरेयुः पृथिवीं दीनाः सर्वधर्मबहिष्कृताः॥" (९।२३८) इति। (सर्वेति पतिताः इत्यर्थः, दीनाः इत्यत्र स्त्रीपुंसयोः एकशेषः, दीनाः पुंसश्च दीनाः स्त्रियश्चेति।) ॥ ८५२ ॥ पंचकेन वर्णितायाः दुर्दशायाः कारणं तस्याः लोके पुंश्चलीत्वप्रकाशः, तत्र च कामुकस्यैव अविमृश्यकारिता प्रमादो वा निमित्तं इति तमेव उपालभते प्रकटीकृतेति। मम गृहस्य उपान्तं परिसरभागं, क्षणमात्रमपि अमुञ्चता मद्दर्शनसमागमाद्याशया तत्रैव दीर्घकालं परिभ्रमता, अपि च तत्र अन्यत्र च मयि त्वदृष्टिपथं पतितायां सत्यां, अस्मासु इति स्नेहगर्विततया बहुवचनं मयि इत्यर्थः, मग्नां लग्नां खचितां, प्रेमस्निग्धां प्रेम्णा स्नेहेन स्निग्धां आर्द्रां सरसां, दृशं दृष्टिं, अनुद्धरता ततः अन्यत्र न पातयता, अन्यासां मध्ये मामेव अत्यासंगात् भृशं मद्विषयानुरक्तप्रभया दृशा सततं सादरं सानुरागाकूतं वीक्षमाणेन इत्यर्थः, अनेन स्निग्धा दृष्टिः (पूर्वं ५०७ आ. टी. उक्तलक्षणा) लक्षिता; एवंविधाचारवता त्वयैव अहं 'गुप्ता' प्रकटीकृता प्रकाशमानीता, पुंश्चलीत्वेन इति शेषः। तव तादृशनिर्बंधाभावे मम कुलटात्वं सुप्रच्छन्नमेव स्थितं स्यात् इति भावः। यतः–"आचारः कुलमाख्याति, वपुराख्याति भोजनम्। वचनं श्रुतमाख्याति, स्नेहमाख्याति लोचनम् ॥" इति सहृदयानामनुभवः ॥ तद्गृहोपान्तपरिभ्रमणसततस्निग्धावलोकनलिंगाभ्यां तस्य कामुकत्वं तस्याः च तत्पात्रत्वं जनैः अनुमितं इति अनुमानालंकारः ॥ ८५३ ॥ तस्य चपलरागत्वेन स्नेहापकर्षमालक्ष्य उपालभते परेति। युष्मद्विधाः, युष्मदिति सोल्लुण्ठोक्तौ बहुवचनं, युष्मच्छब्देन तादृशानां बहुत्वाद्वा बहुवचनं, त्वत्प्रकाराः इत्यर्थः, सुंदरदुर्जनाः इति भावः। एवेत्यनेन अन्यविधानां स्वकीयामात्ररतानां व्यवच्छेदः। परेषां अन्येषां पुरुषाणां, गृहाणां लक्षणया गृहसुखानां इत्यर्थः, यद्वा "न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते।" इति न्यायात् तेषां दाराणां, शीलच्यावनेन यः विनाशः सर्वस्वनाशः, तस्मिन् पिशुनाः रहसि अनुचितार्थबोधकाः भेदनशीलाः खलाः दुर्जनाः, परगृहोपप्लावकाः इति समग्रस्यार्थः, तथा सुभगंमन्याः सौन्दर्यवत्त्वात् परकीयतरुणीमोहोत्पादनेन सुभगं-

---

८५३ प्रकटीकृतास्त्वयैवं (गो. का) [अरमणीयार्थः पाठः]। अस्मान्सुदृशां मध्ये (का) [अपार्थकः पाठः] ८५४ °भिरूप (प. स्तं. का)। तुल्यभागा (का)

अनभीष्टव्यवहारप्रभवरुषा पीडिताक्षरा इत्थम् ।
सोपालम्भा विजने धन्याः शृण्वन्ति बन्धकीवाचः ॥ ८५५ ॥

मन्यमानाः शोभनः भगः श्रीः कामः माहात्म्यं वीर्यं वा येषां तादृशान् आत्मनो मन्यंते ये तादृशाः च ते, आभिरूप्येण अभिरूपतया, अभिरूपता च—"यदात्मीयगुणोत्कर्षैर्वस्त्वन्यन्निकटस्थितम् । सारूप्यं नयति प्राज्ञैराभिरूप्यं तदुच्यते ॥" (१।१८३) इति रसार्णवसुधाकरे लक्षितः यौवनगुणविशेषः, तेन कृतदर्पाः सगर्वाः दुरभिमानिनः, यथोक्तं क्षेमेन्द्रेण दर्पदलने—"कुलं वित्तं श्रुतं रूपं शौर्यं दानं तपस्तथा । प्राधान्येन मनुष्याणां सप्तैते मदहेतवः ॥" (१।४) इति; कृकलासतुल्यरागाः—कृकलासः 'काचंडा' 'सरडा' वा इति भाषायां प्रसिद्धः स्ववर्णपरिवर्तनशक्तिमान् स्थूलशिराः सपुच्छः सविषः क्षुद्रचतुष्पात्, तेन तुल्यः समानः, रागः वर्णः पक्षे स्नेहो येषां ते, नवनवां आकांक्षमाणाः अस्थिरप्रेमाणः, न तु मञ्जिष्ठतुल्यरागा (३७३ आ. टी.) इति भावः, भवंति । तथा च क्षेमेन्द्रेण समयमातृकायां पंचमे समये कामिनां रागस्य अशीतिः भेदाः सलक्षणं उक्ताः, तेषु अष्टौ सुवर्णादिधात्वनुकारिणः, अष्टौ संध्यादिगगनसंगिनः, अष्टौ त्वगादीन्द्रियसंज्ञकाः, अष्टौ नृपादिप्राणिभेदजाः, अष्टौ शुकादिपक्षिजातयः, अष्टौ केशाद्यंगविभाविनः, अष्टौ छायारागादिमहारागाः, षोडश कौसुमादिप्रकीर्णकाः; तेषु एकः प्राणिभेदजः कृकलासरागः "कृकलासाभिधानश्च क्षणदर्शनचंचलः ।" (५।४६) इति तत्र लक्षितः ॥ त्वद्विधाः भवादृशाः एव सौंदर्यगर्विताः परस्त्रीचारित्रभ्रंशकराः क्षणरागिणश्च भवंतीति भावः । अत्र रागेति श्लेषोत्थापिता कृकलासतुल्येति उपमा॥८५४॥

कुलकमुपसंहरति अनभीष्टेति । इत्थं उक्तप्रकाराः, बध्नात्यनुरागं अनुरागेण वा इति बन्धकी तासां ] बन्धकीनां कुलटानां [ वाचः संभाषणानि, ताः विशिनष्टि पीडिताक्षराः सोपालंभाश्चेति । अनभीष्टः अनुचितः प्रकृतां विहाय अन्यत्र रागाधानात् यः कामुकस्य व्यवहारः रागादिह्रासरूपः सः प्रभवः जन्महेतुः यस्याः सा रुट् क्रोधः तया पीडितानि स्तंभितानि अक्षराणि यासांः तादृश्यः, क्रोधेन परुषा इति भावः; 'शुचा' इति पाठे शोकेन पीडिताः गद्गदाः इति यावत्; उपालंभाः निंदापूर्वकतिरस्काराः, 'परिभाषणं' इति संज्ञितं, तथाहि मंखकोशे—"यः सनिंदमुपालंभस्तत्र स्यात् परिभाषणम् ।" इति, 'ठपका' 'ओलंभा' इति भाषायां, तेन सहिताश्च, तादृश्यः; विजने एकान्ते, धन्याः महाभागाः चौर्यकामुकाः इति भावः, शृण्वंति, यतः "न पुण्यहीनं पुरुषं प्रार्थयन्ते परस्त्रियः ।" (शिवपु० धर्म० १०।१२१) इति, तेन च अनीदृशाः

८५५ °प्रभवशुचा (प. स्तं) शुचा॰पीडिता॰ (स्तं) । (युगलकं) (प. स्तं) ।

परतरुणीसद्भावस्नेहार्पितनयनभागदृष्टस्य ।
वेश्यारचितविलासाः कथिताः पुरतः पुराणतृणतुल्याः ॥८५६॥
उपनयति रतिमहोत्सवमाराधितदेवताविशेषाणाम् ।
वचनमपि प्रेमार्द्रं स्वैरिण्याः श्रवणमेति पुण्यवताम् ॥ ८५७ ॥

अधन्याः इति सूचितं, पूर्वोक्तानां च तादृशेभ्यो व्यतिरेकः ध्वनितः अत्र तादृशीना वाचां अप्रशस्तत्वेऽपि तच्छ्रवणार्हाणां धन्यत्वकथनरूपविरोधद्वारा वैलक्षण्यप्रति- पादनेन परकीयारतिप्रशंसैव ध्वनिता ॥ ८५५ ॥ एवं स्वोदरत्याः परकीयारत्या उत्कर्षमुक्त्वा, वेश्यारत्या अपि तं त्रिभिराह परेत्यादिभिः । परतरुण्या परकीययुवत्या सद्भावस्नेहार्पितः—शोभनः निष्कपटः अकृत्रिमः भावः मनोभावः यत्र स सद्भावः, तादृशः स्नेहः पूर्वं ( ४६६ आ. टी. ) उक्तलक्षणः, तेन, यद्वा सद्भावः स्नेहात्पूर्वभूतः मनोभावः सामान्येन पक्षपातरूपः, स्नेहश्च ताभ्यां, अर्पितः निःक्षिप्तः यः नयनभागः नेत्रैकदेशः कटाक्षः इति यावत्, तेन दृष्टस्य स्निग्धतत्कटाक्षवीक्षितस्य नरस्य पुरतः अग्रे, वेश्यया सामान्यनायिकया, रचिताः प्रादुर्भाविताः, अनेन तद्विलासानां प्रयत्नपूर्वकप्रयुक्तत्वं कृत्रिमत्वं च द्योतितं; विलासाः भ्रूनेत्रादीनां ललिता व्यापाराः, पुराणतृणतुल्याः जीर्णतृणसदृशाः निःसाराः ] दुर्बला हीना इत्यर्थः, [ कथिताः शृंगाररसविवेकिभिः तेषां केवलं धनलोभालंबनेन कृत्रिमप्रेमप्रभवत्वात् सगुणनिर्गुण साधारणत्वाच्च, इति भावः । उपमा अलंकारः, तथा च वेश्याविलासानां नीरसत्वं अनाह्लादकत्वं च सूचितं, तेन च परकीयाविलासस्य व्यतिरेको ध्वनितः ॥ ८५६ ॥ परदाररतिः पुण्यैर्विना नोपलभ्यते इत्याह उपेति । सा इत्यध्याहार्यं परतरुणी इत्यर्थः, आराधितदेवताविशेषाणां मंत्रजपपूजाहोमाद्यनुष्ठानेन प्राप्तदेवताविशेषप्रसादानां पुरुषाणां, कर्मणः शेषत्वविवक्षया षष्ठी, नीधातोः द्विकर्मकत्वात्; तादृशान् पुरुषान् इत्यर्थः । ( प्रकृते ता देवताश्च मन्मथः काल्यादिदशमहाविद्यानां च रूपविशेषाः; ) रतिमहोत्सवं—"उत्सूते हर्षमित्येष उत्सवः परिकीर्तितः ।" इति भावप्रकाशे, महांश्चासौ उत्सवश्च महोत्सवः, रतिः सुरतं तदेव तदाख्यो वा महोत्सवः रतिमहोत्सवः तं, महानंदजनकं सुरतं इत्यर्थः, उपनयति प्रापयति । अपिः समुच्चये चार्थकः, स्वैरिण्याः कुलटायाः, प्रेमार्द्रं स्निग्धं, वचनं उक्तिः, पुण्यवतां अर्जितधर्मकृत्यफलानां, श्रवणं एति कर्णगोचरं भवति॥ परकीयाप्रीतिवचनश्रवणं पुण्यफलं, रतिफलं तु तदधिकदेवताविशेषाराधन-

८५६ तरुणीसंभार ( गो. का )। नयनभंगि ( प. स्तं )। वश्या (प)। तृणकल्पाः ( गो. का ) वचनमतिप्रेमार्द्रं (प)

**का गणना विषयवशे पुंसि वराके, वराङ्गना स्पृहया ।**
**व्याजेन वीक्षमाणा ध्यानधियां स्पृशति सज्ज्ञानम् ॥ ८५८ ॥**

---

प्रयासजप्रसादलभ्यं इति भावेन परकीयासुरतस्य दुर्लभत्वं उक्तं, तेन च प्राप्तदुर्लभार्थस्य पुरुषस्य धन्यत्वं ध्वनितम् ॥ स्वैरिणी–यद्यपि स्ववर्णे रताः स्वैरिण्यः, असवर्णेऽपि रताः कामिन्यः, तत्राप्यतिचंचलाः पुंश्चल्यः इति भेदः, पुराणेषु च "पतिव्रता चैकपत्नी, द्वितीये कुलटा स्मृता । तृतीये धृषली ज्ञेया, चतुर्थे पुंश्चली स्मृता ॥ वेश्या च पंचमे षष्ठे, युंगी च सप्तमेऽष्टमे । तत ऊर्ध्वं महावेश्या साऽस्पृश्या सर्वजातिषु ॥" (ब्रह्मवैवर्त-पुराणे) इति तासां भेदाः कृताः, महाभारते च स्वैरिणी चतुःपुरुषगामिनी इति, तदुक्तं तत्र आदिपर्वणि कुंतीवाक्ये–"नातश्चतुर्थं प्रसवमापत्स्वपि वदंत्युत । अतः परं स्वैरिणी स्याद्बंधकी पंचमे भवेत् ॥ " (१२३।७७) इति, ( अतः परं चतुर्थेन संगमात् ), तथापि साहित्ये 'स्वेन स्वतंत्रतया, ईरितुं गन्तुं शीलमस्याः' इति स्वैरिणी व्यभिचारिणीत्यर्थे प्रयुज्यते । तथा च तद्भेदादिकं नारदस्मृतौ–"परपूर्वाः स्त्रियस्त्वन्याः सप्त प्रोक्ता यथाक्रमम् । पुनर्भूस्त्रिविधा तासां, स्वैरिणी तु चतुर्विधा ॥ (१२।४५)···स्त्री प्रसूताऽप्रसूता वा पत्यावेव तु जीवति । कामाद्या संश्रयेदन्यं प्रथमा स्वैरिणी तु सा ॥ मृते भर्तरि संप्राप्तान्देवरादीनपास्य या । उपगच्छेत्परं कामात् सा द्वितीया प्रकीर्तिता ॥ प्राप्ता देशाद्धनक्रीता क्षुत्पिपासातुरा च या । तवाहमित्युपगता सा तृतीया प्रकीर्तिता ॥ देशधर्मानपेक्ष्य स्त्री गुरुभिर्या प्रदीयते । उत्पन्नसाहसाऽन्यस्मै अन्त्या सा स्वैरिणी स्मृता ॥···। पूर्वापूर्वा जघन्याऽऽसां श्रेयसी तूत्तरोत्तरा ॥ " (१२।४९–५३) इति ॥ ८५७ ॥ कैमुतिकन्यायेन वैषयिकाणां पुरुषाणां सुंदरीभिः मोहाभिभवमाह केति । यदि, वराङ्गना उत्तमस्त्री सुगात्री, व्याजेन येन केनापि मिषेण, स्पृहया समागमतृष्णया, वीक्षमाणा पश्यंती, ध्यानधियां–धारितस्य वस्तुविशेषस्य विजातीयप्रत्ययानन्तरितः सजातीयप्रत्ययप्रवाहः ध्यानं, तद्रूपा धीः बुद्धिः येषां तेषां मुनीनां इत्यर्थः, सत् श्रेष्ठं ज्ञानं ध्येयविषयकं, स्पृशति येन तत् ध्यानं विच्छिन्नं भवति; तर्हि विषयवशे भोग्यवस्तुजाताप्रहृत-मनसि, अत एव वराके दीने, पुंसि मनुष्ये, का गणना तादृशस्य ज्ञानभ्रंशः स्यादिति किमु वाच्य इत्यर्थः । काव्यार्थापत्तिरलंकारः "कैमुत्येनार्थसिद्धिश्चेत्का-व्यार्थापत्तिरिष्यते ।" इति (साहित्यसारे ८।२६१) लक्षणात् ॥ ८५८ ॥

---

८५८ विषयवशे (प. स्तं) स्पृशति मज्जानां (स्तं)।

शिरसा रचिताञ्जलयो दधति निदेशं त्रिविष्टपे गणिकाः ।
परदाररसाकृष्टस्तथापि भेजे शचीपतिरहल्याम् ॥ ८५९ ॥
अप्सरसः किं न वशे वैदग्ध्यवतां च किं न धौरेयः ।
येन चकारासक्तिं गोविन्दो गोपदारेषु ॥ ८६० ॥

---

स्वीयादित्रिविधनायिकारतेषु परकीयारतेः उक्तं श्रेष्ठत्वं सुरासुराणां दृष्टान्तैः त्रिभिः समर्थयति । तत्रादौ सुरश्रेष्ठस्य चरितमुदाहरति शिरसेति । त्रिविष्टपे तृतीयं विष्टपं भुवनं त्रिविष्टपं स्वर्गः तत्र, शिरसा रचिताञ्जलयः आज्ञाधारणार्थं अलिकाग्रधृतसंयुक्तकरद्वयपुटकृतप्रणतयः, गणिकाः प्रकृते स्वर्वेश्याः अप्सरसः, ताश्च—"रंभोर्वशी मेनका च मञ्जुघोषा तिलोत्तमा । घृताचीति पुराणे तु षोढा वेश्याः प्रकीर्तिताः ॥" इति संख्यारत्नकोशे, निदेशं दधति सुरतदानाद्यन्ताः सर्वा आज्ञाः पालयंति, अनेन तस्य सामान्यनायिकासंभोगसुखावाप्तिः सूचिता; तथापि शचीपतिः शच्याः पुलोमपुत्र्याः पतिः स्वामी इन्द्रः, अनेन तस्यैव स्वीयारतिसुखप्राप्तिः अपि सूचिता; सोऽपि परदाररसाकृष्टः परकीयासंभोगसुखास्वादलालसः, अहल्यां महर्षेर्गौतमस्य पत्नीं, भेजे संभुक्तवान् । देवाधिदेवस्य महेन्द्रस्य अनेन वृत्तेन परदारसेवने उत्कृष्टतमो रसः मतः इति उक्तम् ॥ नलचंप्वां तु प्रकारान्तरेण निष्कृष्टार्थ उक्तः—"किमु कुवलयनेत्राः संति नो नाकनार्यः त्रिदिवपतिरहल्यां तापसीं यत्सिषेवे । हृदयतृणकुटीरे दीप्यमाने स्मराग्नावुचितमनुचितं वा वेत्ति कः पंडितोऽपि ॥" (५।५०) इति । इयं कथा श्रीरामायणे बालकाण्डे ४८ सर्गे स्पष्टा ॥ अपि च वेदे निशासूर्यौ (अहल्येन्द्रौ) अधिकृत्य यत् रूपकालंकारेण वर्णनं, तस्य कालान्तरेण वाच्यार्थमात्रमेवावलंब्य पुराणेषु तादृशकथोल्लेखपरिणामः इति नव्यानां मतम् । तथाहि शतपथब्राह्मणे (३।३)" इन्द्रागच्छेति गौरावस्कन्दिन्नहल्यायै जारेति० एष एवेन्द्रो य एष तपति " इत्यादि । ( तत्र अहल्या अहर्लीयते यस्यां इति रात्रिः, गौतमः चन्द्रः, इन्द्रश्च सूर्य इति रूपकम् । ) ॥ ८५९ ॥ दिव्यनायकस्य वृत्तमुदीर्य दिव्यादिव्यस्यापि तथाविधं वृत्तमुदाहरति अप्सरस इति । गोविंदः भगवतो नारायणस्य अष्टमोऽवतारः श्रीकृष्णः, तस्य च गोवर्धनोद्धरणेन गवां रक्षणात् गाः विंदते लभते इति गोविंद इति नाम जातं, तथाहि यादवाभ्युदयकाव्ये (७।१००)—" तिरोहितामंभसि विंदता गां पूर्वं त्वया पोत्रिवरेण लब्धा । निरुक्तनिष्णातकृताभ्यनुज्ञा व्यक्तिं पुनर्यातु शुभा त्वदाख्या ॥" इति ।

---

८६० वशा ( गो. का )

( गोत्रिवरेण महावराहेण त्वया पूर्वं प्रलयार्णवजलात् गां पृथ्वीं विंदता उद्धरणक्रियया लभमानेन गोविंद इति नाम लब्धम्। ) आनंदवृंदावनचंप्वां अपि—"गोविंदेत्यभिराम नाम यदपि प्रागेव सिद्धं सदा गोलाभादथ गोविचारकतया शश्वद्भवान्सत्तया। गोपेन्द्रात्मज भोस्तथापि भगवन्नद्याभिषेकोत्सवे श्रीगोवर्धनभूधरेन्द्रधर हे गोविंदनामा भव॥" (१५।२८१) इति। (विद्लृ लाभे विद विचारणे विद सत्तायां इत्येतैः साधितं गोविंदेति।) (अध्यात्मपक्षे तु गाः इंद्रियाणि विंदते अभिमानिदेवतात्वेन लभते इति गोविंदः आत्मा, यद्वा गाः इंद्रियाणि विद्यंते संति येनेति, यतः इंद्रियाणां इंद्रियत्वं तेनैव भवतीति भावः॥) तस्य वशे अधीनाः इत्यर्थः, अप्सरसः समुद्रजलोद्भूताः उर्वशीमेनकाद्याः देवयोषितः, तथा चोक्तं—"अप्सु निर्मथनादेव रसात्तस्माद्वरस्त्रियः। उत्पेतुर्मनुजश्रेष्ठ तस्मादप्सरसोऽभवन्॥" इति। अप्सरा इत्येकवचनान्तोऽपि शब्दः, तथाहि शब्दार्णवे "स्त्रियां बहुष्वप्सरसः स्यादेकत्वेऽप्सरा अपि।" इति, किं न, अनेन तस्य वेश्यासुरतसौलभ्यं उक्तम्। अपि च सः वैदग्ध्यवतां—वैदग्ध्यं तु—"लौकिके वैदिके वाऽर्थे तथा सामयिकेऽपि च। सम्यक्परिचयः प्रोक्तो वैदग्ध्यमिति गीयते॥" तद्वतां लौकिकालौकिकार्थकुशलानां इत्यर्थः, धौरेयः धुरीणः अग्रणीः, किं न, अनेन तस्य स्वीयासु रसोत्कर्षप्राप्तिः सूचिता। किमिति प्रश्ने। येन तदभावरूपहेतुना, सः गोविंदः, गोपदारेषु गोपानां गोपालकानां दारेषु स्त्रीषु राधाललितादिगोपीषु, आसक्तिं चकार ताभिः विलासादिकं अकरोत् इत्यर्थः। प्रसिद्धमिदं श्रीमद्भागवतपुराणे दशमस्कंधे। उक्तं च यशस्तिलकचंप्वां (३।२०४)—"सुरतरहस्यं पुंसां यदि भवति स्वासु देव योषासु। किमिति श्रीरतिमंदो गोविंदो बल्लवीलोलः॥" इति। (रहस्यं गोप्यतत्त्वं तत्सर्वस्वभूतं, सुरतरहस्यं सुरतानंदः इति यावत्।) कौतुकसर्वस्वप्रहसनेऽपि—"भेजे गौतमसुंदरीं सुरपतिश्चन्द्रश्च भार्यां गुरोर्धर्मोऽपि स्वयमेव पाण्डुनृपतेः पत्नीमयासीत् पृथाम्। गोपानां वनिता नितान्तमभजद्देवः स्वयं माधवो, मूढाः पंडितमानिनोऽभिदधिरे दोषं परस्त्रीरतौ॥" इति, तथा तत्रैवाग्रे—"अंभोनिधिसंभवाकुचकुंभपरिनिर्वृतोऽपि देवस्त्रिभुवनपतिर्ग्राम्यासु गोपवनितासु रतिमभजत इति, यतः परकीयतया रामाणां रामणीयकातिशयो भवति। यदाहुर्विदग्धमिश्राः—संकेतस्थलमिलिताऽबला परेषां शृंगारान्मनसि मुदं यथा विधत्ते। लावण्यव्यतिकरमोहितत्रिलोकी स्वागारे किल नोर्वशी तथा करोति॥ अन्यच्च—रमणीयतयाऽपि कामिनी भुजवल्लीव निजा न तुष्टये। हृदयेऽपि मुहुर्निवेशिता कुरुते केवलमार्तिदीपनम्॥" इति॥ अनेन सर्वेण पूर्ववत् पारदारिकरतिरसश्रेष्ठत्वं फलितम्॥—प्रकृते श्रीकृष्णचरिते श्रीकृष्णः मायया कृतावतारः परमात्मैव जीवभूतः

त्रैलोक्यगता वेश्याः स्वाधीना यातुधाननाथस्य ।
तदपि जहार कलत्रं दशरथतनयस्य रामस्य ॥ ८६१ ॥

अविस्मृतस्वपरमात्मभावः, गोप्यश्च चित्तवृत्तयः इति जीवन्मुक्तस्वरूपरूपकमवलम्ब्य तल्लीलावर्णनं बोध्यं, तेन सर्वान्तर्यामितया सर्वशरीरकस्य तस्य स्वपरदेहविवेका-भावात् नित्यापहतपाप्मत्वाच्च न भगवतो दोषप्रसक्तिः इति मतम् ॥ पौराणिकास्तु 'पुरा किल देवयोषितो भगवत्सौंदर्यवशीकृताः तदुपभोगसिद्धिमुद्दिश्य तमेवार्चयामासुः । ततः प्रसन्नो भगवान् भूमाववतीर्य गोपभूमिकामवलंब्य भवतीनामभिलषितं करिष्यामि, भवंत्योऽपि गोपकुलेऽवतरंत्विति समयं ददौ, ता एवाप्सरस इमा गोपिकाः इति ' इति ऊचुः ॥ भागवतास्तु--" इयं हि क्रीडा शृंगाररसाकृष्टचेतसो बहिर्मुखानपि स्वचरितश्रवणपरान्कृत्वा संसारादुत्तारयितुं भगवता लोकानुग्रहैकरसिकेन कृता, 'अनुग्रहाय भक्तानां मानुषं देहमाश्रितः । भजते तादृशीं क्रीडां यां श्रुत्वा तत्परो भवेत् ॥ ' इति (श्रीमद्) भागवतवचनात्, " (यादवाभ्युदयकाव्यटीकायां ८।६८) इति, तथाहि–" रागिणो हि संभोगपदश्रवणे स्वयमेव कुतूहलिनः प्रवर्तन्ते, तच्च श्रवणं भगवद्रूपविषयमाहात्म्यादन्तःकरणशुद्धिमाधाय रागादिकं क्षपयति " (यादवा० टीका. ४।१०१) इति चाहुः । तदेतदुक्तं यादवाभ्युदयमहाकाव्ये " रागादिरोगप्रतिकारभूतं रसायनं सर्वदशानुभाव्यम् । आसीदनुध्येयतमं मुनीनां दिव्यस्य पुंसो दयितोपभोगः ॥ " (४।१०१) इति ॥ ८६० ॥ असुराणामपि परदारासक्तिमुदाहरति त्रैलोक्येति । त्रयो लोकाः स्वर्गमृत्युपातालाख्याः त्रैलोक्यं, चतुर्वर्णादित्वात् स्वार्थे ष्यञ्, तद्गताः, त्रैलोक्यगताः " द्वितीया श्रित० " (पा. २।१।२४) इति द्वितीया तत्पुरुषः, वेश्याः, यातुधानाः यातूनि रक्षांसि एव दधति पुष्णंति न त्वन्यान् लोकान् इति यातुधानाः राक्षसाः, तेषां नाथः पतिः रावणः, तस्य स्वाधीनाः त्रैलोक्यविजयित्वात् तदाज्ञावशवर्तिन्यः, (असुराणां तामसत्वात् तेषु स्त्रीयासक्त्याः अभावात् पूर्ववत् तत्सूचनं नात्र कृतमिति बोध्यम् ।) तदपि तथापि, दाशरथेः इदं परशुरामबलरामयोः व्युदासार्थं, रामस्य, कलत्रं भार्यां सीतानाम्नीं, " कलत्रं भूभुजां दुर्गस्थानेऽपि श्रोणिभार्ययोः ।" इति विश्वलोचने, जहार चौर्येण रामाद्वियुज्य स्वगृहं नीतवान्, यत्प्रत्यानयनाय रामस्य लंकां प्रति अयनं गमनं अभूत्, यदधिकृत्य भगवता वाल्मीकिना श्रीरामायणाख्यं आदिकाव्यं प्रणीतम् ॥ 'रामभद्रस्य' इति पाठे रामभद्रपदं " भद्रश्चासौ रामश्च रामभद्रः । 'शुभमंगलयोर्भद्रं स्याद्रम्यश्रेष्ठयोस्त्रिषु ।' इति रत्न-

---

८६१ यातुधानस्य (का) । रामभद्रस्य (गो. का)

माला । बहुलग्रहणाद्भद्रशब्दस्य परनिपातः । यद्वा भद्र इव रामो रामभद्रः, 'उप-मितं व्याघ्रादिभिः—' इत्यादिना समासः, 'भद्रश्चापि गजान्तरे' इति रत्नमाला ।" इति महावीरचरितटीकायां (४।४४) वीरराघवेण समर्थितम् ॥ अस्यापि पूर्ववत् फलम् ॥ एवं ८११ आर्यामारभ्य ८६१ आर्यापर्यन्तं पञ्चाशता पारदारिकं प्रस्तुतम् ॥—यद्यपि पारदारिकं परस्त्रीविषयतया अधर्मपरिणामेन वैरस्याधायकं तथापि कारणवशात् क्वचिद्विहितं, लोकवृत्तत्वाच्च काव्येषु वर्णितम् । तथाहि तदुपदेशः अनंग-रंगे (८।१३)—"नारी चोन्नतयौवनाऽभिलषितं कान्तं न चेदाप्नुयादुन्मादं मरणं च विन्दति तदा कंदर्पसंमोहिता । संचिन्त्येति समागतां परवधूं रत्यर्थिनीं स्वेच्छया गच्छेत्क्वापि, न सर्वदा सुमतिमानित्याह वात्स्यायनः ॥" इति; तथा नागरसर्वस्वेऽपि—"हित्वाऽऽत्मकामं शमयेद्वशी यो नितंबिनीनां मदनज्वरार्तिम् । कृपान्वितो मन्मथ-शास्त्रवेदी समाप्नुयात्स्वर्गसुखं स धीरः ॥ (१।४) तथा चाह महेश्वरः—'कामं त्यक्त्वाऽऽत्मनः कामी कामव्याधिनिपीडिताम् । चिकित्सयति यो नित्यं पदं प्राप्नोति कामिकम् ॥" (१।५) इति ॥ एतादृशप्रसंगेषु न पुरुषस्य धर्मभंगः रागपरव-शानां तत्संभोगाभावे प्राणान्धारयितुमसमर्थानां स्त्रीणां प्राणत्राणार्थैव तत्परिग्रहणात् । तथा च महाभारते आदिपर्वणि पार्थतीर्थयात्रायां अर्जुनं प्रति उलूप्याः वचनं—"परित्राणं च कर्तव्यमार्तानां पृथुलोचन । कृत्वा मम परित्राणं तव धर्मो न लुप्यते ॥ यदि चाप्यस्य धर्मस्य सूक्ष्मोऽपि स्याद्व्यतिक्रमः । स च ते धर्म एव स्याद्दत्त्वा प्राणान्म-मार्जुन ॥" इति, "स्मरार्तां विह्वलां दीनां यो न कामयते स्त्रियम् । ब्रह्महा स तु विज्ञेयो व्यासो वचनमब्रवीत् ॥" इत्यपि । अतः अर्जुनोऽपि तत्स्वीकृतवानिति ॥ तदुक्तं काव्यालंकारे—"सर्वत एवात्मानं गोपायेदिति सुदारुणावस्थः । आत्मानं रक्षिष्यन् प्रवर्तते नायकोऽप्यत्र ॥" (१४।१४) इति ॥ अस्य काव्योपनिबंधनमुद्दिश्य उक्तं रसिकसंजीवन्यां (अमरुकशतकटीकायां,)—"परस्त्रीगतोऽप्ययं रस उपनिबध्यमानो न पातकाय, एवंविधसंविधानकैः स्त्रीणां चारित्रखण्डनं भवति तस्मात्प्रयत्नेनैताः संरक्षणीया इत्युपदेशपर्यवसितत्वात् । अन्यथा वात्स्यायनो महर्षिस्तत्तदुपायसाधनैः परस्त्रीसाधनं कथं प्रणीतवान् । उक्तं च—'संदृश्य शास्त्रतो योगान्पारदारिकल-क्षितान् । न याति च्छलनं कश्चित्स्वदारान् प्रति शास्त्रवित् ॥' इति" इति । "य एवंविधा विधयः परस्त्रीषु पुंसां संभवंति तानवबुध्य परिहरेदिति कवीनां भावः ।" इति च काव्यानुशासनविवेके । अत्र रुद्रटस्तु परकीयारतादेः रसाधाय-कत्वात् तद्वर्णनमात्रं काव्येषु अनुजानाति, तथा चोक्तं तेन—"नहि कविना परदारा एष्टव्या नापि चोपदेष्टव्याः । कर्तव्यतयाऽन्येषां न च तदुपायोऽभिधातव्यः ॥ किन्तु

अथ मञ्जर्या जननी निजपक्षसमर्थने कृतोत्साहा ।
आक्षेप्तुमाचचक्षे नृपसुतसचिवाश्रितां वाचम् ॥ ८६२ ॥

---

तदीयं वृत्तं काव्यांगतया स केवलं वक्ति । आराधयितुं विदुषस्तेन न दोषः कवेरत्र ॥" ( काव्यालंकारे १४।१२-१३ ) इति । एवंरीत्या वस्तुस्थित्या वा काव्येषु परकीयावर्णनं निर्दोषमेवेति ॥-प्रसंगतः परकीयाभेदाः कथ्यंते । "तत्र परकीया कन्यका परोढा च । तद्भेदाः-स्वयंदूती, सैव वाग्विदग्धा क्रियाविदग्धा उभयविदग्धा च; सुखसाध्या; कष्टसाध्या; असाध्या च । सुखसाध्या षड्विधा-अविदग्धस्य प्रमदा, वृद्धप्रमदा, बहुदिनरुग्णप्रमदा, ग्रामीणप्रमदा, बालकप्रमदा, अतिकामुकी चेति; अतिकामुक्येव कुलटा । कष्टसाध्या तु-दुष्टाभिचेष्टिता, लोकाद्भीता, दूतीवर्जिता, चंचलचित्ता, चेति चतुर्विधा । तथा असाध्याऽपि-साध्वी, गुरुजनाद्भीता, परिवाराभिवेष्टिता, भृशानुरागिणी पत्यौ इति चतुर्विधा ॥ गुप्ताविदग्धालक्षिताकुलटानुशयानामुदिताप्रभृतीनां परकीयायामेव अन्तर्भावः ॥" गूढपरपुरुषानुरागा परकीया, अतः सा व्यभिचारिणी । "व्यभिचारिणी द्विविधा-एका स्वत एव व्यभिचरति, अपरा अन्यां व्यभिचारयति कुट्टनीति यावत् । प्रथमा··· द्विविधा-दानव्यभिचारिणी, आदानव्यभिचारिणी च; तत्र धनादिव्ययोत्पादितपरपुरुषरतिः आद्या, परपुरुषतो धनमादाय संपादितरतिः द्वितीया··· कुट्टनी···चेष्टाः परस्त्रीपरपुरुषघटनाविदग्धवचनपरंपरा । परसद्मगामिनी···अस्याः अपि स्फुटगामिनी सव्याजगामिन्यादिभेदाः अवगंतव्याः ॥" इति कलिकाताकौतुके ॥ एताः अन्यसंभोगदुःखिताः वक्रोक्तिगर्विताश्च । अपराऽपि द्विविधा-सौंदर्यगर्विता प्रेमगर्विता च इत्यन्यत्र ॥ तत्र स्वाधीनपतिकाद्यष्टनायिकाभेदेषु, केवलं व्यवस्थापरकीया, संकेतात्पूर्वं उत्कंठिता, दूत्या सह गमने अभिसारिका, कुतोऽपि कारणात् संकेतस्थानमनागते प्रिये विप्रलब्धा चेति ॥ अस्याः मानवतीप्रकारः कैश्चित् नाद्रियते ॥ धर्मादिशृंगारत्रये स्वीयायाः धर्मशृंगारः, सामान्यायाः अर्थशृंगारः, परकीयायाः तु कामशृंगारः, तत्र कामः हेतुः साध्यो वा इति । इदं प्रायोवचनम् ॥ परकीया अंगिनि रसे नोपकारिणी इति तु साहित्यविदां निर्णयः ॥ ८६१ ॥ प्रसंगेन रताभासभूतं ग्राम्यरतं ८७४ आर्यां यावत् वर्णयति अथेत्यादिना । पूर्वोक्तिश्रवणानन्तरं, मंजर्याः ( ८०३-८०९ आर्याभिः वर्णितायाः ) नर्तक्याः, जननी माता, स्वस्याः पक्षस्य स्तेन समर्थनीयस्य स्वसाध्यस्य, प्रकृते वेश्याभिगमनोत्कर्षस्य इत्याशयः, समर्थने प्रमाणादिभिः संस्थापने, कृतोत्साहा उद्यमवती,

---

८६२ °श्रितं वाक्यम् ( प. स्तं )

घटयुवतिषु प्रगल्भो नागरिकादर्शनेन हृतपुंस्त्वः ।
ग्रामोषितोऽविदग्धो निन्दति गणिकां भवद्विधोऽवश्यम् ॥८६३॥
नार्द्रयति मनः पुंसामवगाहितमीनकेतुशास्त्राणाम् ।
नखदशनक्षतिहीनं जीवत्पतिबन्धकीसुरतम् ॥ ८६४ ॥

---

अतः राजकुमारमंत्रिणा कृतां पारदारिकप्रशंसां, आक्षेप्तुं निषेद्धुं, वक्ष्यमाण उवाच ॥ ८६२ ॥ तत्रादौ परदाररतप्रशंसाव्याजेन गणिकाः निन्दन्तं तमेव भर्त्सयति घटेति । ] घटयुवत्यः दास्यः, [ घटैः कुंभैः जलाहरणे नियुक्ताः युवत्यः स्त्रियः, 'पनीहारी' इति लोके वाच्यमानाः, तासु प्रगल्भः धृष्टः, नीचकोटिकः, अतः, नगरे भवा नागरिका अग्राम्या अतः विदग्धा, अनेन नासां भ्रूचेष्टितादिकोविदत्वं वरवस्त्राभरणादिप्रकाशमानत्वं वा सूचितं, तस्याः दर्शनेन तन्मात्रेणैव दूरे आलापादिकं इति भावः, हृतपुंस्त्वः मोहापन्नत्वात् नपुंसकतुल्यः मूढः इति यावत्, ग्रामोषितः ग्रामवासी ग्रामेयः, अतएव अविदग्धः अचतुरः, भवद्विधः त्वादृशः, गणिकां कामकलादिसंपन्नां, निंदति, अवश्यं निश्चयेन, ततः इदं नाश्चर्यकरं इति भावः, तादृश्या पराहृतचित्तत्वात् । वस्तुतः तस्य अग्राम्यत्वेऽपि गणिकानिंदनात् तस्य ग्रामाधिवासावसंयत्वात् हेतुरलंकारः ॥ ८६३ ॥ महता प्रबंधेन सचिवेन कृतं कुलटासुरतप्रशंसनं दूषयति नेति । न आर्द्रयति न स्निग्धं करोति, ] 'अर्दयति' [ इति पाठे ] प्रीणयति, [ मनः कर्म, अवगाहितेति अधीतकामशास्त्राणां, सम्यगधिगततच्छास्त्ररहस्यानां इति भावः । जीवत्पतिबंधकीसुरतं कर्तृ, जीवन् विद्यमानः पतिः यस्याः तादृश्या बंधक्या कुलटया सह सुरतं, तत्र हेतुद्योतकं विशेषणं नखेति—कुचकपोलादिस्थलेषु कृताः कामोद्दीपकाः नखदंतक्षताः लोकस्य पत्युर्वा नयनगोचरं गताः रहस्यभेदका भवेयुरिति तदभाववत्, अनेन भोगन्यूनतया आनंदन्यूनता सूचिता, तदेव च विदग्धरसिकानां अनाह्लादे बीजम् । अत्र नखेत्यादिविशेषणस्य साभिप्रायत्वात् परिकरालंकारः । उक्तरहस्यभेदभयवर्जनार्थं विदग्धैः उपपतिभिः प्रसिद्धानि नखदंतक्षतस्थानानि विहाय अन्यत्र ते क्रियंते इति विज्ञेयम्

---

८६३ प्रगल्भः सागरिका ( गो. का ) [ अपार्थकः पाठः ] । दर्शनहृत ( का )
८६४ नार्दयति ( गो. का ) । केतुना स्त्रीणां ( का ) [ अपार्थकः पाठः ] ।
क्षत ( का )

स्थापय घटकं तावत्, कुरु भूमितले तृणैः समास्तरणम् ।
सुरतोपक्रम ईदृग्ग्रामीणकतरुणमिथुनानाम् ॥ ८६५ ॥
बहलोशीरविलिप्तस्थितजूटकलापमल्लिकामाल्यः ।
पामरनार्या दृष्टः स्मरोऽहमिति मन्यते विटो ग्राम्यः ॥ ८६६ ॥

॥ ८६४ ॥ प्रपूर्वार्योक्तसन्चिवग्राम्यत्वं उद्दिश्य हीनतया रसिकोपहास्या विविधाः ग्राम्यसंभोगशृंगारभंगीः वर्णयति स्थापयेत्यादिभिः, तत्रादौ ग्राम्यसंभोगारंभस्य ऋजुत्वं कथयति स्थापयेति । पूर्वार्धे अविदग्धस्य ग्रामतरुणस्य मार्गसंगतां जलहारिणीं ग्रामतरुणीं प्रति रिरंसोक्तिः । घटः एव घटकः, तं कुंभं, तावत्, स्थापय भूमौ निधेहि । तथा संभोगाय भूमितले तृणैः निकटवर्तिक्षेत्रगतैः, समास्तरणं शय्यारचनं, कुरु निर्वर्तय । इयं ग्राम्योक्तिः अधमप्रकृतिप्रयुक्तत्वात् न दोषः, प्रत्युत गुणः, तदुक्तं– "वक्त्राद्यौचित्यवशतो दोषोऽपि च भवेद्गुणः ।" इति काव्यदर्पणे । ईदृक् एवंप्रकारकः, ग्रामीणकं यत् तरुणयोः स्त्रीपुंसयोः मिथुनं युगलं, तेषां सुरतोपक्रमः रतारंभः । एवमत्र नागरकप्रयोज्यालिंगनादिकामोद्दीपकबाह्यसुरतविशेषाभावात् तादृशस्य उपहास्यत्वं सूचितम् ॥ स्वभावोक्तिरलंकारः, तल्लक्षणं च काव्यप्रकाशे–" स्वभावोक्तिस्तु डिंभादेः स्वक्रियारूपवर्णनम् ।" इति ॥ ८६५ ॥ ग्राम्यविटस्य मौग्ध्यमाह बहलेति । यद्वा शृंगाराभासविशेषं वर्णयित्वा तदालंबनविभावं नायकाभासं वर्णयति बहलेति । पूर्वं बहलानि बहूनि, उशीराणि क्षेत्रजसुगंधितृणविशेषाः 'वीरणवाला' इति 'खस' इति च भाषायां प्रसिद्धाः तैः लक्षणया तच्चूर्णैः विलिप्तश्चासौ पश्चात् स्थितजूटकलापमल्लिकामाल्यश्चेति स्नातानुलिप्तवत् समासः; स्थितशब्दोऽत्र अंतर्भावितण्यर्थकः, तेन स्थापितः जूटकलापे ग्राम्यत्वात् केशप्रसाधनेन जटारूपकेशसंघाते मल्लिकानां 'बेला' 'मोगरा' वा इति प्रसिद्धानां पुष्पाणां माल्यं माला येन सः इत्यर्थः । उक्तं च साहित्यमीमांसायां–" कंथाभिः कंबलैः स्थालैर्वस्त्रैः पुष्पैस्तथा लिंदैः (लिपैः)। बालकोशीरकर्चूरहरिद्राकंदसेवनैः ॥ वेषः स्यात्, प्राकृतैस्तैस्तु वचोभिर्भाषणं भवेत् । भवंति हासयोग्याश्च चेष्टा ग्राम्येषु भूयशः ॥ " इति ॥ ग्राम्यः ग्रामे भवः ग्रामीणकः, विटः कामुकः खिङ्गः, पामरनार्या ग्राम्यया अतः मूर्खया इति भावः, दृष्टः विलोकितः सन्, 'स्मरोऽहं' कामदेव इव सौंदर्येण नारीणां परममोहकोऽहं इति मन्यते, आत्मानं स्मरोपमं अभिमनुते इति भावः । अत्र अत्यन्तं तदसदृशस्यापि

८६५ ईदृक् प्रायो ग्रामीणतरुण० (प. स्तं) । ८६६ विलुप्तस्थितजूटककरुणमल्लिका० (गो. का) [ असंगतार्थः पाठः ] । कूटकलाप···माल्याः ( स्तं ) । विटग्राम्यः ( का )

गृहकर्मकृतायासां प्रस्विन्नां सलिलकार्यनिर्याताम् ।
उपपतिरुपैति हर्षं निशागमे पामरीं प्राप्य ॥ ८६७ ॥
कूपक्षिप्तघटाया नार्यास्तत्काष्ठनिहितचरणायाः ।
वलितग्रीवं वीक्षितमुन्नमयति मानसं यूनः ॥ ८६८ ॥

---

स्वस्मिन् स्मराध्यवसायं कुर्वतः मौर्ख्येण उपहास्यता सूचिता ॥ ८६६ ॥ अपरविधं तदाह गृहेति । यद्वा तद्द्वितीयालंबनविभावं नायिकाभासं वर्णयति गृहेति । उपपतिः उपमितः पत्या, " अवादयः कुष्टाद्यर्थे तृतीयया " ( वा० १।४।७९ ) इति समासः, जार इत्यर्थः, गृहकर्मभिः पाकपेषणादिभिः ] कृतः संपादितः [ आयासः श्रमः यस्याः तां; अनेन श्रान्तायाः सुरतायोग्यत्वं सूचितं; प्रस्विन्नां आयासेन प्रभूतस्वेदवर्तीं, अनेन तस्याः ग्लान्युत्पादकत्वं सूचितं; संध्याकाले च, सलिलकार्याय कूपादिभ्यः जलाहरणाय निर्यातां स्वगृहात् बहिर्गतां, प्रातःसायंसंध्ययोः कूपादिभ्यः स्त्रीभिः जलाहरणं क्रियते इति आचारः, अत एव मार्गे मिलितां, तादृशीं पामरीं ग्राम्यनारीं, निशागमे रात्र्यारंभे सूर्यास्तसमये संध्यासमये इत्यर्थः, तथाहि कस्याश्चित् संकेतदात्र्या उक्तिः–"णोल्लेइ अणोल्लमणा अत्ता मं घरभरम्मि सयलम्मि । खणमत्तं जइ संझाइ होइ न व होइ वीसामो ॥" ( नुदत्यनार्द्रमनाः श्वश्रूः मां गृहभरे सकले । क्षणमात्रं यदि संध्यायां भवति न वा भवति विश्रामः ॥ ) इति; प्राप्य तया संगम्य संभोगं कृत्वा इति भावः, हर्षं उपैति प्रमोदं प्राप्नोति । "वह्निब्राह्मणपूज्यवर्गनिकटे नद्यां च देवालये दुर्गादौ च चतुष्पथे परगृहेऽरण्ये श्मशाने दिवा । संक्रान्तौ शशिसंक्षयेऽथ शरदि ग्रीष्मे ज्वरार्तौ व्रते संध्यायां च परिश्रमेषु सुरतं कुर्यान्न विद्वान् क्वचित् ॥" ( आयुर्वेदप्रकाशान्तर्गतकामशास्त्राध्याये १९४ ) इति निषिद्धदेशकालयोः सुरतसेवनेन तस्य उपहास्यत्वं प्रकाशितम् ॥ ८६७ ॥ पामरीणां उद्दीपनविभावाभासमाह कूपेति । जलोद्धरणाय कूपे क्षिप्तघटायाः, तथा कूपमुखवर्तिकाष्ठे 'पागटुं' इति गुर्जरभाषायां प्रसिद्धे न्यस्तैकपादायाः, यत् वलितग्रीवं वीक्षितं, जलोन्नयने ग्रीवावलनस्य स्वाभाव्यात् तादृशं अवलोकनं, कर्तृ, यूनः तरुणस्य, मानसं चित्तं, उन्नमयति हर्षेण उच्चैः करोति, प्रफुल्लं करोति इति भावः, शब्दशक्त्या च ऊर्ध्वं करोति इत्यपि प्रतीतिः । तथाहि कार्यवशात् किंचिद्विवृतपादां वलितग्रीवां च दृष्ट्वा "कामी स्वतां पश्यति " ( शाकुं० २।२ ) इतिन्यायेन स्वं साकूतं स्निग्धं

---

८६७ हर्षात् ( गो. का ) ८६८ कूपावतारिघटाया घटनार्याः काष्ठ० ( प ) वतारिघटाया नार्याः काष्ठ० ( स्तं ) । मुन्नमति ग्रामवासिनो यूनः ( गो. का )

'लग्नोऽसि यत्र गात्रे कथमपि दैवेन देवयात्रायाम् ।
अद्यापि तन्न मुञ्चति पुलकोद्गमकण्टकं तस्याः ॥ ८६९ ॥
उच्चेतुं कार्पासं प्रविष्टया गहनवाटिकां शून्याम् ।
टङ्कारितेन संज्ञा कृता तया त्वं च वेत्सि नो मूर्खः ॥ ८७० ॥

---

च पश्यति इति हृष्टचेतसः ग्रामविटस्य उपहास्यता स्पष्टा एव ॥ अत्र जलोन्नमनरूपात् प्रस्तुतात् कार्यात् विलक्षणस्य युवकचित्तोन्नमनरूपस्य कार्यस्य कथनात् द्वितीयो विचित्रमालंकारभेदः ॥ ८६८ ॥ इतः पंचकेन ग्राम्यविटान् प्रति दूतिकोक्तिप्रकाराणां अनुवादाः । देवयात्रायां–देवानां चलमूर्तीनां तिथिविशेषेषु यात्रा नगरभ्रमणं ग्रामसीमादिपर्यन्तगमनं यदर्थं लोकैरपि उत्सवः क्रियते तस्यां, यद्वा देवार्चनोत्सवकाले मंदिरे एव, तथा च धरणिः–"यात्रा स्याद्यापनायां च गतौ देवार्चनोत्सवे।" इति; दैवेन प्रारब्धयोगात् दिष्टया, कथमपि बुद्धिपूर्वकं लोकसंघट्टनेन वा इति अतर्क्यमाणं इति भावः, तस्याः, यत्र यस्मिन्, गात्रे शरीरावयवे, लग्नोऽसि कृतस्पर्शोऽसि, अनेन भावप्रबोधार्थं कृतं स्पृष्टकाख्यं आलिंगनं व्यञ्जितं, तथा चोक्तम्–"उत्सवे व्यसने देवयात्रायां रात्रिजागरे। क्रीडार्थगमने, सख्याः संमताया गृहान्तरे ॥ गृहे वा प्रतिवासिन्या जलार्थगमने तथा । एवमष्टविधे स्थाने योगं गच्छति कामिनी ॥" (२३–२४) इति कामप्रदीपे। तत् तद्गात्रं पुलकोद्गमकंटकं पुलकानां रोमाञ्चानां उद्गमाः प्रादुर्भावाः कंटकाः इव पुलकोद्गमकंटकाः, 'जातावेकवचनं' इति कंटकं, पामरीबालानां रूक्षत्वात् कण्टकोपमानं, अद्यापि गतेऽप्येतावद्दीर्घे काले, न मुंचति । अद्यापि सा त्वत्स्पर्शमात्रेण 'रोमाञ्चकंटकितवपुः' बिभर्ति इत्यतिशयोक्त्या तस्याः रागातिशयद्योतनं विटप्रलोभनार्थम् ॥ ८६९ ॥ तस्य संकेतानभिज्ञत्वेन अतिमौर्ख्यमाह उच्चेतुमिति । कार्पासं कर्पासस्य इदं, जातावेकवचनं, कार्पासफलानि इत्यर्थः, 'कालां' इति भाषायां, उच्चेतुं तेषां अवचयं कर्तुं, शून्यां निर्जनां, गहनवाटिकां कर्पासवृक्षैः निबिडं क्षेत्रं इत्यर्थः, तथा च कार्पासं क्षेत्रे वाटिकायां च उप्यते, तत्र क्षेत्रगतं 'वनकार्पासं' इत्युच्यते, तदत्रोद्दिष्टम् । ( अपरं 'हीरवणी' 'नरमो' वा इति गुर्जरभाषायां प्रसिद्धम् । ) प्रविष्टया, त्वयि आसक्तया तया; टंकारितेन भाण्डाघातजशब्देन, यद्वा पक्ष्युड्डापनाय उपयुज्यमानस्य चापस्य ज्याकर्षणेन उत्पादितटणितिध्वनिना, संज्ञा सूचनीयार्थसूचनपरः चेष्टाविशेषः, कृता, "संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना ।" इति अमरः । 'खांखारितेन' इति पाठे

---

८७० प्रविष्टया शून्यवाटिकागहनं ( गो २. का ) । खांखारितेन ( प. स्तं ) । कृता मया त्वं तु ( प. स्तं )

आलिङ्गितमुसलायास्त्वय्येव निविष्टचक्षुषस्तस्याः ।
आवृत्त्या भ्रमति पुरो जातः खलु शालिकण्डने विघ्नः ॥८७१॥
त्वां लोष्टमाक्षिपन्तं पार्श्वस्थैः स्तूयमानसामर्थ्यम् ।
गृहकर्तव्यं त्यक्त्वा पश्यति सा द्वाररन्ध्रेण ॥ ८७२ ॥
त्वयि मार्गनिकटवर्तिन्यविचिन्तितखेदया तया सुभग ।
प्रत्यासन्नगृहेष्वपि कृतः प्रसह्य स्मरातुरो लोकः' ॥ ८७३ ॥

---

खांखारितं ध्वनिविशेषानुकरणशब्दः, यद्वा देशीशब्दः, तत्प्रयोगश्च समाहितः पूर्वम् (३२१ आ. टी.) । त्वं, चः त्वर्थकः, नो नहि, वेत्सि विदितवान्, अत्र वेत्सि इति वर्तमाननिर्देशेन अद्यापि त्वं अनधिगततदनुरागो परममूर्ख एवासि इति सूच्यते, तथा तत्र अनागमनेन हस्तच्युतसुरतोत्सवस्य अहो ते मौर्ख्यातिशयः इति आकूतम् । अत्र नायिकायाः पामरीत्वेऽपि स्त्रीत्वात् आपेक्षिकं स्वाभाविकं पटुत्वं, नायकस्तु जड एव । तथा च निर्वर्णितं अर्जुनवर्मदेवेन अमरुकशतकटीकायां (१३)—"ग्रामीणाः प्रायो नायिकानुरागविदग्धवक्रोक्तिविरहवेदनानर्मभंगिष्वनभिज्ञा भवन्ति।" इति ॥ ८७० ॥ तस्याः तदासक्तिं वर्णयति आलिंगितेति । तस्याः पुरतः त्वयि, आवृत्त्या भ्रमति सति यातायातं कुर्वति, त्वयि एव अनुरागातिशयात् निविष्टचक्षुषः संलग्नदृष्ट्याः, अतः विस्मृतकर्त्तव्यायाः, ] आलिंगितं साश्लेषं हस्तधृतं, [ मुसलं अयोऽग्रस्थूलकाष्ठदंडः तन्नाम्नैव प्रसिद्धः, यया तस्याः; शालिः कलमः 'साँठी चावल' इति प्रसिद्धः धान्यविशेषः, तेषां कण्डने निस्तुषीकरणे मुसलाघातक्रियायां, विघ्नः अंतरायः जातः । तव दर्शने प्रकृतशालिकंडनव्यापारत्यागः तदनुरागस्य निदर्शनं इति भावः ॥ इयं अनुरागिणी । नायकः पूर्ववत् ॥ ८७१ ॥ अपि च लोष्टं धान्यभक्षणाय संप्राप्तपशुपक्षीणां उत्थापनार्थं मार्त्तिकशकलान् मृल्लोष्टखण्डान् इत्यर्थः, जातावेकवचनं, आक्षिपन्तं, हस्तेन 'गोफण' इति भाषायां प्रसिद्धया उत्क्षेपण्या वा, ततः तेषां दूरपातात् हतलक्ष्यत्वात् वा; पार्श्वस्थैः निकटवर्तिभिः, अतः प्रत्यक्षीकृततद्धस्तलाघवैः, प्रशस्यपानबलं, त्वां, सा त्वदपहृतचित्ता आवश्यकमपि गृहकर्म परित्यज्य, द्वारगतच्छिद्रेण लज्जया अतिनिगूढं यथा नान्यः कश्चित्पश्यन्तीं आत्मानं लक्षयेत्तथा पश्यति । इयं मुग्धा ॥ ८७२ ॥ अपरं इंगितमाह त्वयीति । सुंदरीकामितत्वात् हे

---

८७१ निविष्टचेतस० (गो. का) [औचित्यरहितः पाठः]। शालिखण्डन (गो. प. स्त)। ८७२ त्वां वेलुकां क्षिपन्तं (प. स्तं)। पार्श्वस्थे (स्तं)। वादरंध्रेण (स्तं) ८७३ न्यविचेतित० (गो. का)। कृतोंऽभ(ज ?)सा सातुरो (प) कृताम्भसामातुरो० (स्तं)

इति चतुरदूतिकोदित उपचितसौभाग्यगर्वपूर्णस्य ।
ऊर्मिसहस्रोल्लसितं भवति मनो ग्राम्यपिङ्गस्य ॥ ८७४ ॥

सुभग शोभनं भगं भाग्यं यस्य तादृश, त्वयि, मार्गनिकटवर्तिनि तद्गृहवीथीसमीपं आगते, त्वद्दर्शनाय द्वारोपान्ते स्थिततया तया, अविचिन्तितखेदया अगणितोर्ध्वस्थिति-सूर्यातपादिक्लेशया तया, प्रत्यासन्नगृहेषु अपि न केवलं तां पश्यन् मार्गगामी लोकः अपि तु प्रातिवेशिकोऽपि जनः यः तां द्वारस्थितां पश्येत् सोऽपि, प्रसह्य हठात् बलात्, स्मरातुरः कामोद्दीपितः कृतः, तस्याः त्वद्दर्शनलालसं सूर्यकरपरामृष्टतया अधिकं रक्तं वदनं दृष्ट्वा तेऽपि कामबाणविद्धाः अभवन् इति भावार्थः । अनया तस्याः अनुरक्तत्वं सौंदर्यं च सूचितम् ॥ ८७३ ॥ मंजर्याः जननी प्रस्तुतं उपसंहरति इतीति । इतिः एवंप्रकारे, चतुरया वाक्क्रियाविदग्धया दूतिकया प्रियसंयोगकारिण्या मिथुनसंघाटिकया, उदिते कथिते सति, तच्छ्रवणेन उपचितः संभृतः यः सौभाग्यस्य श्रीवल्लभत्वरूपस्य सुभगत्वस्य गर्वः–"रूपादिना निजोत्कर्षाद्गर्वोऽन्यस्यावहेलनम् ।" (साहित्यसारे ४।१५६) तेन पूर्णस्य भृतस्य, ग्राम्यपिङ्गस्य ग्रामीणकविटस्य, मनः,] ऊर्मिणां उत्कलिकानां [उत्कण्ठानां, यत् सहस्रं लक्षणया बहुतरत्वं, तेन उल्लसितं प्रफुल्लं, भवति, यथा चंद्रोदये समुद्रः ऊर्मिसहस्रमाली भवति तथा ॥–अस्मिन् प्रघट्टके ग्राम्याणां एव मनोहरणाय पर्याप्तानां पामरीणां क्षुद्रचेष्टादीनां वर्णनम् । उक्तं तु श्रीयोगवासिष्ठे–" न केचन जगद्भावास्तत्त्वज्ञं रञ्जयन्त्यमी । नागरं नागरीकान्तं कुग्रामललना इव ॥ " इति । (कुग्रामललनाः कुत्सिताः ' भ्रूविलासाद्यनभिज्ञाः ' अतः मूढाः ग्राम्ययोषितः । ग्राम्यजनशृंगारस्य रसत्वादिकमधिकृत्य मतभेदः पूर्वं (६२७ आ. टी.) उक्तः । अत्र तादृशः शृंगारः केवलं ग्राम्यजनप्रियः नागरिकाणां तु उपहास्य इति वर्णितम् । " भिन्नरुचिर्हि लोकः " (रघु० ६।३०) इति न्यायेन केषांचित् तु ग्राम्यस्त्रीणां मुग्धत्वात् तच्चेष्टाः चित्तरंजनाय भवन्ति । तदुक्तं–" न तथा नागरस्त्रीणां विलासा रमयन्ति नः । यथा स्वभावमुग्धानि वृत्तानि ग्राम्ययोषिताम् ॥ " इति । (अयं भट्टिकाव्यव्याख्याने (२।१५) भरतमल्लिकेन कौमुदी-नामकात् ग्रंथात् उद्धृतः ।) " तथाऽप्रकृतकोमालहासपल्लविताधरम् । मुखं ग्रामविलासिन्याः सकलं राज्यमर्हति ॥ " इति च । (अयं महाकविभर्तृमेण्ठस्य इति सदुक्तिकर्णामृते ।) कालिदासोऽपि–" त्वय्यायत्तं कृषिफलमिति भ्रूविलासानभिज्ञैः प्रीति-

---

८७४ कोदितवचसा सौ० (प. स्तं) कोदितवर्धितसौ० (गो २) । सौभाग्यपूर्णगर्वस्य (स्तं) । ग्रामपिङ्गस्य (स्तं) खिङ्ग (का) ।

विनिवार्य तत्प्रवर्तितवाक्यविकासं नतोत्तमाङ्गेन ।
श्रीसिंहटभटतनयं समुवाच वचोऽथ नर्तकाचार्यः ॥ ८७५ ॥
'नायकभूमौ भरतः कुशीलवाः कोहलादयो मुनयः ।
अप्सरसः स्त्रीनाट्ये गान्धर्वे कमलजन्मनस्तनयः ॥ ८७६ ॥

---

स्निग्धैर्जनपदवधूलोचनैः पीयमानः । " ( मेघ० १६ ) इत्यनेन इदमेव तत्त्वं सूचितवान् । ( तथाहि मेघदूतटीकायां विद्युल्लतायां—" जनपदवध्वः···कृषीवलमहिलाः ।" भ्रूविलासानभिज्ञैः···नगरसुंदरीनयनारविन्दवत् कृत्रिमविलासविरचनास्वशिक्षितैरित्यर्थः । एतेन स्वारसिकविलासैरेव तेषां सहृदयचमत्कारकारित्वं ध्वनितम् । " इति । प्रीतिस्निग्धैरिति 'अकृत्रिमप्रेमरसाभिरामा' तद्विलाससंपत् इति भावः ।) ॥ ८७४ ॥ अथ नर्तकाचार्यः राजपुत्रप्रलोभनाय इष्टं प्रसंगान्तरं अवतारयति विनिवार्येति । तया मंजर्या: मात्रा प्रवर्तितं वाक्यविकासं भाषणं, नतोत्तमाङ्गेन प्रतिषेधसूचकेन अवनतशिरसा, धुताख्यशिरश्चालनेन, तल्लक्षणं च—" पर्यायेण शनैस्तिर्यग्गतमुक्तं धुतं शिरः । " ( संगीतरत्नाकरे ७।५४ ) इति, विनिवार्य अलं इति सूचनेन प्रतिबंध्य । सिंहभट एव लोकोक्तौ सिंहटः, यथा मम्मभटः एव मम्मटः, कैयभट एव कैय्यटः, वाग्भट एव वाहटः, इत्यादिप्रकारेण; सिंहटश्चासौ भटः वीरः सिंहटभटः, श्रिया लक्ष्म्या युक्तः सः श्रीसिंहटभटः, तस्य तनयं राजपुत्रम् । नर्तकाचार्यः—मणिकादीनां संगीताध्यापकः; " नृत्यस्य धारणात् पात्रं नर्तकः परिकीर्तितः । " इति, तेषां नर्तकानां नर्तकीनां च गीतवाद्यनृत्तेषु शिक्षागुरुः ॥ ८७५ ॥ तत्रादौ युग्मेन राजपुत्रस्य तौर्यत्रिकज्ञानस्य तत्परीक्षाशक्तेश्च चाटुं करोति नायकेति । नायकः" नयति व्याप्नोति इतिवृत्तं फलं चेति नायकः " ( काव्यानुशासने ) नाटकादौ प्रधानतया वर्ण्यमानः पुरुषः नेता, तस्य भूमौ भूमिकायां वेषकल्पनायां, भरतः नाट्यशास्त्रकर्ता, यदि दैववशात् भवेत् चेत् इति शेषः, भरतः स्वयं नायकभूमिकां गृह्णीयात् इत्यर्थः, यदि च तत्र, कुशीलवाः अन्ये अभिनेतारः नटविशेषाः, " भूमिकाभिरनेकाभिः कर्मवागङ्गचेष्टितैः । यथाप्रकृतिसंधानकुशलास्ते कुशीलवाः ॥" इति लक्षणात् । भरतानुसारेण तु कुशीलवाः वाद्यवादकाः, तथाहि—" नानातोद्यविधाने (न?) प्रयोगयुक्तः प्रवादने कुशलः । आतोद्येऽप्यतिकुशलो यस्मात्स कुशीलवस्तस्मात् ॥ "

---

८७५ वाच्यविकासं (का) । श्रीसिंघट (प) । श्रीसिंहभटस्य सुतः···चार्यम् (गो. का) [ प्रस्तुतक्रमविरोधी पाठः ] ८७६ भवतः (का) [ अक्षरभ्रमजः अशुद्धश्च पाठः ] । स्त्रीलास्ये ( गो. का ) । गन्धर्वाः क···याः ( प. स्तं ) [ अनुचितार्थः पाठः ] ।

सुषिरस्वरप्रयोगप्रतिपादनपण्डितो मतङ्गमुनिः ।
यदि रञ्जयन्ति हृदयं भवतो, भूमिस्पृशां कुतः शक्तिः ॥८७७॥
अभ्यधिकं धृष्टत्वं प्रायेण हि शिल्पजीविनो भवति ।
आश्रितनर्तकवृत्तेर्विशेषतो विजितरङ्गस्य ॥ ८७८ ॥

---

( ३५।३७ ) इति । ( तदाश्रित्य यथायोग्यं लक्षणया नट इत्यर्थः द्रष्टव्यः । ) कोहलादयः आदिना नंदिकेश्वरधूर्तिलजटिलादीनां संग्रहः, ते स्युः । तथा स्त्रीनाट्ये स्त्रीपात्रेषु अनुकार्यशकुन्तलादिस्त्रीभूमिकासु, अप्सरसः ऊर्वश्यादिस्वर्गाङ्गनाः भवेयुः । गान्धर्वे "अत्यर्थमिष्टं देवानां तथा प्रीतिकरं पुनः । गंधर्वाणां च यदिदं तस्माद्गान्धर्वमुच्यते ॥ " ( नाट्यशास्त्रे २८।९ ) इत्युक्तेः संगीते इत्यर्थः, ] कमलजन्मनः [ विष्णोर्नाभिकमलाजातस्य ब्रह्मणः ] तनयः नारदो [ मुनिः महर्षिः वा, तथा च मनुस्मृतौ—" अहं प्रजाः सिसृक्षुस्तु तपस्तप्त्वा सुदुश्चरम् । पतीन्प्रजानामसृजं महर्षीनादितो दश ॥ मरीचिमत्र्यंगिरसौ पुलस्त्यं पुलहं क्रतुम् । प्रचेतसं वसिष्ठं च भृगुं नारदमेव च ॥ " (१।३४-३५) इति; " उत्संगान्नारदो जज्ञे दक्षोऽङ्गुष्ठात्स्वयंभुवः ।" इति च पुराणे; स च नारदः स्वशिष्याय दत्तिलाय रागभेदादीन् उपदिदेश इति नारददत्तिलसंवादरूपे रागसागरे प्रसिद्धम् ॥ ] ८७६ ॥ वंशादिवाद्यं सुषिरम् । [ सुषिरं छिद्रयुक्तं, लक्षणया छिद्रयुक्तं वाद्यमपि सुषिरं उच्यते तेषां, स्वराणां प्रयोगाः विविधप्रकारैः योजनाः, तेषां प्रतिपादने ऊहापोहेन कथने, पंडितः निपुणः, मतंगमुनिः मतंगनामा ऋषिः, अनेन तेन कश्चित् सुषिरवाद्यप्रबंधः प्रणीतः इति प्रतीयते । इमे नाट्यप्रयोगे मिलिताः यदि नाट्यप्रयोगं प्रवर्तेयुः तदा भवतो हृदयं स्वान्तं रंजयेयुः, भूमिस्पृशां मर्त्यानां अस्मत्सदृशां इति भावः, कुतः शक्तिः सामर्थ्यम् । अस्मच्छिक्षितमानुषनर्तक्यादिभिः भवतां हृदयरंजनं असंभाव्यमेव इति भावः । इयं अतिशयोक्त्या दुराराध्योक्तिः तस्य चाटुः ॥८७७॥ वक्ष्यमाणां नाट्यावलोकनप्रार्थनां प्रस्तावयति अभ्यधिकमिति । धृष्टत्वं प्रागल्भ्यं, प्रायेण प्रायशः बाहुल्येन, शिल्पं नृत्यगीतचित्रादिकलाकर्म, ' हुंनर ' ' कारीगरी ' इति वा भाषायां, तत् आश्रित्य यः जीवति आजीविकां लभते सः शिल्पजीवी कारुचित्रकारसुवर्णकारकुशीलवादिः, तस्य, भवति, हिशब्दः प्रसिद्धौ । शिल्पजीवी वाचालः भवति इति प्रसिद्धं इत्यर्थः । तत्रापि

---

८७७ योगे प्रति ( गो. का ) । रंजयति ( गो. प. का ) । रंजयति भवतो भूमिं स्पृशतां ( का ) स्पृशतः ( कापा ) ८७८ जीविनां ( कापा ) ।

विज्ञापयाम्यतस्त्वां नरेन्द्र नाट्यप्रजासदृशम् ।
अवलोकयाङ्कमेकं मा भवतु मम श्रमो वन्ध्यः ॥ ८७९ ॥
इति कथयन्नरभर्तुः पुत्रेण स चोदितो भ्रुवोन्नतया ।
रचिते सकलातोद्ये नियोजयामास सूत्रधृतम् ॥ ८८० ॥

---

आश्रितनर्तकवृत्तेः नर्तकस्य, विजितरंगस्य नृत्यभूमौ संप्राप्तकीर्तेः, विशेषतः आधिक्येन, अन्यशिल्पिभ्यः इति भावः, भवति । तथाचोक्तं—" असंबद्धप्रलापी च सदा भ्रूकुटितत्परः । हासप्रहासचतुरो वाचालो नृत्यकोविदः ॥" इति संगीतदामोदरे ॥८७८॥ तद्वचनमनूद्यते विज्ञापयामीति । अतः उक्तप्रकारेण स्वभावजात् धाष्टर्यात् । हे नरेन्द्र जनाधिप इति संबोधनम् । नाट्यप्रजासदृशं नाट्यप्रिया प्रजा नाट्यप्रजा, शाकपार्थिवादिवत् समासः, तस्याः सदृशं योग्यं अतः प्रीतिकरं इत्यर्थः, एकं अङ्कं "रत्नावल्यामेता विदधति करपादविक्षेपम् । " ( आ. ८०१ ) इति पूर्वमुक्तत्वात् रत्नावलीनाटिकायाः इति लभ्यते, एकं इति तस्य संपूर्णनाटिकाप्रयोगावलोकनोचितसमयाभावात्, अंकं अंकः अंक्यते नायकतादात्म्यं नटेन अत्र इति, स च नाटकपरिच्छेदस्य संज्ञा, तल्लक्षणं तु—"प्रत्यक्षनेतृचरितो बीजबिन्दुसमन्वितः । अंको नानाप्रकारार्थसंविधानरसाश्रयः ॥ एकाहे चैकरात्रे वा चरित्रं यत्र वर्ण्यते । प्रयुक्तैः पंचषैः पात्रैरन्ते तेषां विनिर्गमः ॥" इति, तं, अवलोकय पश्य । तेन च, मम श्रमः एतासां नर्तकीनां नाट्यशिक्षणे मत्कृतः प्रयासः, वंध्यः निष्फलः, मा भवतु न जायतां, भवद्रूपानुरूपप्रेक्षकदर्शनेन स सफलीभवतु इत्याशयः ॥ ८७९ ॥ इति पूर्वोक्तप्रकारेण, कथयन् विज्ञापनां कुर्वन्, नरभर्तुः राज्ञः पुत्रेण सुतेन सिंहभटतनयेन, उन्नतया भ्रुवा लीलया एकां भ्रुवं उन्नम्य इत्यर्थः, "कोपे वितर्के हेलायां लीलादौ सहजे तथा । दर्शने श्रवणे चैव भ्रुवमेकां समुत्क्षिपेत् ॥" ( नाट्य० ८।११८ ) इति भरतः, चोदितः प्रेरितः, सः नर्तकाचार्यः, सकलातोद्ये रचिते सति नाट्योपयोगिषु वीणामुरजवंशीकांस्यरूपचतुर्विधेषु वाद्येषु स्वरमेलनादिना सज्जीकृतेषु, अनेन रंगविधानं उक्तं, सूत्रधृतं सूत्रधारं, तथा च "अनुष्ठानं प्रयोगस्य सूत्रमाहुः सबीजकम् ।" इत्युक्तेः सूत्रं धारयति इति सूत्रधृत् नाट्यशिल्पवान्, तं, नियोजयामास आज्ञापयामास , नाट्यप्रयोगारंभं कर्तुं

---

८७९ आज्ञापया० ( गो २? ) । निर्मितमाद्यं प्रजासृजा सदृशम् ( प. स्तं ) ८८० विरचितस० ( प. स्तं ) । °मास स प्रकृतम् ( गो. का ) ।

वांशिकदत्तस्थानकतद्भावितभिन्नपञ्चमे सम्यक् ।
प्रावेशिक्यवसाने द्विपदीग्रहणान्तरेऽविशत् सूत्री ॥ ८८१ ॥

---

इति भाव: ॥ ८८० ॥ ] 'वांशिकेति । इत:प्रभृति प्रदर्शितरत्नावलीनाटिकाप्रथमाङ्ककथा ग्रथ्यते ।' [ इति टिप्पणी । इत: चक्रवर्तिश्रीहर्षप्रणीतरत्नावलीनाटिकाया: प्रस्तुतां प्रथमाङ्कस्य नाट्यप्रयोगविधिं विस्तरेण ९२८ आर्या यावत् वर्णयति । स च प्रयोग: न केवलं वर्तमानरत्नावलीपाठानुसारेण, किंतु पूर्वोक्त(८०५ आ. टी. )रीत्या नाट्यसूत्रिणा गेयाद्यंशै: मिश्रित: इति प्रस्तुतवर्णनात् अनुमीयते ॥ तत्रादौ 'नान्द्यन्ते सूत्रधार:' इत्यन्तं भागं प्रस्तुतप्रयोगानुसारिणं अनुवदति वांशिकेति । वांशिक: वंशशब्दस्य वंशवादने लक्षणावृत्तिस्वभावात् वंशवादनं शिल्पमस्येति वांशिक:, "शिल्पम् ।" (पा. ४।४।५५ ) इति सूत्रेण ठक्प्रत्यय: । तेन, दत्तं गातॄणां अनुसरणाय वंशस्वरविशेषेण प्रकाशितं, स्थानकं स्थानमेव स्थानकं, स्थानं च पूर्वं ( ८०४ आ. टी. ) उक्तं, तेन भाविते वासिते मेलापके कृते वा, भिन्नपंचमे मध्यमस्वरश्रुतियुक्त: पंचमस्वर: भिन्नपंचम: तस्मिन्; सम्यक् वंशीस्वरगातृस्वरयो: अविसंवादे इत्यर्थ: । प्रकृते संगीतदामोदर:—"स्थानकादिनयाभिज्ञो गमकाढ्य: स्फुटाक्षर: । शीघ्रहस्त: कलाभिज्ञो वांशिको रक्त उच्यते ॥" इति, तथा—"···गातॄणां स्थानदातृत्वं तद्दोषाच्छादनं तथा । वांशिकस्य गुणा एते मया संक्षिप्य दर्शिता: ॥" इति च । तथा च गातृस्वरस्थापनार्थं भिन्नपंचमस्वरेण वाद्यमाने वंशके इत्यर्थ: ॥ प्रावेशिक्यवसाने—प्रावेशिक्या: अवसाने अंते, प्रावेशिकी च ध्रुवाविशेष: आक्षिप्तिकाविशेषो वा, सा च पात्रप्रवेशसूचनार्थं नटै: ( भावै: ) जवनिकान्तरे गीयमान: गीतविशेष:, यथा विक्रमोर्वशीये चतुर्थांकप्रवेशके सहजन्याचित्रलेखयो: प्रवेशे, अग्रे च तदंकारंभे पुरूरवस: प्रवेशे; सा च आर्या(गाहा)च्छंदसा निबध्यते । तथाहि—"आक्षिप्तिकालक्षणमाह भरत:—"चञ्चत्पुटादितालेन मार्गत्रयविभूषिता । आक्षिप्तिका स्वरपदग्रथिता कथिता बुधै: ॥" इति । पात्रप्रवेश एव तस्या निवेश: ।" इति विक्रमोर्वशीयप्रकाशिकायां रंगनाथ: । तथा च सूत्रधारप्रवेशसूचनार्थं गीताया: प्रावेशिकीध्रुवाया: समाप्तौ इत्यर्थ:, तदुक्तं भरतेन—"स्थापकस्य प्रवेशे तु कर्तव्याऽर्थानुगा ध्रुवा ।" ( ५।१५५ ) इति, ( स्थापक: स्थापकसूत्रधार: । ) अनेन नाटकारंभे

---

८८१ दत्तकस्था० ( गो. का ) । स्थानक उद्ग्राहितभिन्नपञ्चमे ( प. स्तं ) । प्रावेशिका ( प. स्तं ) । न्तरे विशति सूत्रीम् ( का ) [ दुष्ट: पाठ: । ]

अवश्यकर्तव्यायाः नान्द्याः पूर्वरंगाङ्गत्वं कवेः अभिप्रेतं इति ज्ञेयम् ॥ द्विपदीग्रहणान्तरे–द्विपदी लयविशेषः, लयश्चाग्रिमार्यायां निरूपयिष्यते, तस्य ग्रहणं नेपथ्ये कुशीलवैः निर्वर्तनं न तु सूत्रधारेण इति ज्ञेयं, तस्य अन्तरे मध्ये, द्विपदीलयं गृहीत्वा नटैः गीयमाने गीतिविशेषे इत्यर्थः; अविशत् प्रविशति स्म, सूत्री सूत्रं प्रयोगानुष्ठानं तद्वान् सूत्री सूत्रभृत् सूत्रधारः ॥ तथा च द्विपदिकया सूत्रधारप्रवेशः, यदाह–"शोकविभ्रमयुक्ते तु व्याधिचिन्तासमाश्रिते । श्रुतवार्तादिवैरूप्ये योज्या द्विपदिका बुधैः ॥" इति । (मालतीमाधवटीकायां जगद्धरेण उदाहृतोऽयं श्लोकः । नाट्यनिर्वर्तनचिंताग्रस्तत्वात् सूत्रधारस्य तथाप्रवेशः । सा द्विपदी च संगीतदामोदरोक्तचत्वारिंशल्लयान्तर्गतः लयविशेषः । नाट्यगाने द्वादश भंगाः षड् उपभंगाः द्विचत्वारिंशच्च लयभेदाः उक्ताः, तत्र द्विपदीनामा प्रथमो लयः, तल्लक्षणादिकं च समुद्धृतं आदिभरतात् भट्टराघवेण अभिज्ञानशाकुंतलटीकायां–"विलंबितलया यत्र गुरवो द्विपदी तु सा । शृंगारे करुणे हास्ये योज्या चोत्तममध्यमैः । अवस्थान्तरमासाद्य गातव्या साऽधमैरपि ॥" इति । व्याख्यातं च तेनैव–"अत्र गुरुः तालरूपी ज्ञेयः, ग्रामरागेण ढ(ट?)क्काख्येन चास्या बंध इति ज्ञेयम् ।" इति । तत्र "द्विपदी करणाख्येन तालेन परिगीयते ।" इति भरतः ॥ एवं च विक्रमोर्वशीये चतुर्थांकगताः 'द्विपदी' 'जंभलि(ट्टि?)का' 'खण्डधारा' 'खंडकः' 'खुर(रि)कः' 'वलंतिका' 'नर्तकः' (नर्दटकः) 'चर्चरी' इत्येताः वस्तुतः लयविशेषा एव, ते च संगीतदामोदरे निरूपिताः, तेषां प्रयोगाश्च पूर्ववत् भिन्नभिन्नाः ॥–सूत्री तु अत्र स्थापकनामा सूत्रधारोऽभिप्रेतः । तथाहि सूत्रधारो द्विविधः, नांदीसूत्रधारः कथासूत्रधारश्च यः स्थापकसंज्ञितः, उपचारेण च सूत्रधार इत्येव व्यवह्रियते । तत्र प्रथमः कुशीलवैः सह पूर्वरंगं कृत्वा तदंगभूतां नांदीं तैः सह एकाकी वा पठति । तन्निष्क्रान्तौ च अपरः प्रविश्य आमुखेत्यपराभिधानप्रस्तावनान्तं भागं निर्वर्तयति ॥ तथा च नाटकेषु "नान्द्यन्ते सूत्रधारः" इति पदयोः नान्दीसूत्रधारपाठ्यायाः नान्द्याः अन्ते समाप्तौ तन्निष्क्रान्तौ स्थापकसूत्रधारः प्रविशति वदति च इति अध्याहारः । एतदेव प्राचीननाटकेषु "नान्द्यन्ते ततः प्रविशति सूत्रधारः" इत्युल्लेखेन स्पष्टतरमुक्तम् । क्वचित् यत्र नांदी पाठ्येन न निर्वर्त्यते तत्र अयं सूत्रधारः सामाजिकहृदयावर्जनार्थं आशीर्वादात्मकं मंगलं पठति, यथा आश्चर्यचूडामणिनाटके भासनाटकेषु च । तत्र 'नान्द्यन्ते ततः प्रविशति सूत्रधारः' इत्युल्लेखः, तदनन्तरं च सूत्रधारः यत् आशीर्वादाद्यात्मकं पठति सा न नान्दीसूत्रधारनिर्वृत्ता नान्दी, अपि तु कथासूत्रधारस्यैव आशीर्वादः इति विज्ञेयम् । साहित्यदर्पणकाराः तु प्रकारान्तरेण समर्थयन्ति, तथाहि–" अत एव प्राक्तनपुस्तकेषु

उत्साहभावयुक्तः सामाजिकहृदयरञ्जनं कुर्वन् ।
कविनैपुणवत्सेश्वरचरितस्य विधेयदाक्ष्यसामग्र्या ॥ ८८२ ॥

'नान्यन्ते सूत्रधारः' इत्यनन्तरमेव 'वेदान्तेषु-' इत्यादिश्लोकलिखनं दृश्यते । यच्च पश्चात् 'नान्यन्ते सूत्रधारः' इति लिखनं तस्यायमभिप्रायः-नान्द्यन्ते सूत्रधारः इदं प्रयोजितवान्, इतःप्रभृति मया नाटकमुपादीयत इति कवेरभिप्रायः सूचित इति ।" इति । अत्रोक्तं-"पूर्वरंगं विधायादौ सूत्रधारे विनिर्गते । प्रविश्य तद्वदपरः काव्यमास्थापयेन्नटः ॥" (दशरूपके ३।२) इति । (अत्र पूर्वरंगमित्यनेन तस्यांगभूता नान्दी अपि संगृहीता । नटः स्थापकसूत्रधारः, यत्संबंधात् प्राचीनतरनाटकेषु प्रस्तावना 'स्थापना' इति व्यवहृता ।) तत्र पूर्वरंगस्य द्वाविंशतिसंख्याकाङ्गेषु नान्द्याः अवश्यकर्तव्यतया तस्याः पद्यरूपतया च सा कविभिरेव नाटकादौ निबध्यते, यथा श्रव्यकाव्यादौ मङ्गलम् । उक्तं च-"यद्यप्यंगानि भूयांसि पूर्वरंगस्य नाटके तथाप्यवश्यं कर्तव्या नांदी नंदीश्वरप्रिया" ('विघ्नोपशान्तये') ॥ इति केचित्तु एक एव सूत्रधारः पटान्तरितः सन् नान्दीं पठित्वा रंगं प्रविशति वदति च इत्याहुः । प्रबोधचंद्रोदयटीकाचंद्रिकायां तु-" यदा तु सूत्रधार एव नान्दीं प्रयुंक्ते तदा स्थापकनामा सूत्रधारवेषधारी कश्चन प्रविशेत् । यदा नान्दीं कुशीलवाः प्रयुजते तदा सूत्रधारस्ये(स्यै?)व प्रवेशित (प्रवेश?) इति ।" इति समाहितम् ॥ प्रकृते नान्दीं पूर्वरंग एव अंतर्भाव्य स्थापकसूत्रधारस्य प्रवेश उक्तः ॥ ८८१ ॥ तस्यैव प्रस्तावनान्तं कर्म त्रिभिर्विशेषकेण आह उत्साहेत्यादिना । उत्साहाख्यः भावः चित्तवृत्तिः उत्साहभावः, उत्साहश्च-"कार्यारंभेषु संरंभः स्थेयानुत्साह इष्यते ।" इति कर्णभूषणे । तादृशः सन्, सामाजिकानां समाजे समवेतानां सभ्यानां सहृदयप्रेक्षकाणां उत्कृष्टनाटकप्रयोगदर्शनेन तदर्थरसास्वादिनां, "सभायामुपविष्टा ये सभ्याः सामाजिकाश्च ते ।" इति कोशः, तद्गुणाश्च-"प्रयोगज्ञाः धनिनो युवानः कृतकृत्याः।" इति प्रपंचहृदये, हृदयरंजनं कुर्वन् चित्तानंदं जनयन्, तेषां आभिमुख्यं संपादयन् इति भावः, तदुक्तं अनर्घराघवे-"प्रीतिर्नाम सदस्यानां प्रिया रंगोपजीविनः।' (१।३) इति, कया विधया इत्युत्तरार्धेणाह कवीति । कविनैपुणं यत् वत्सेश्वरचरितं तस्य-कवेः श्रीहर्षस्य, नैपुणं निपुणस्य भावः कर्म वा नैपुणं "हायनान्तयुवादिभ्योऽण्" (पा. ५ । १ । ३०) इति अण्, तच्च वत्सानां जनपदस्य प्रयागात्

८८२ सामाजिकचित्तर० (प. स्तं)। कविनिपुणे…ग्र्याः (प) कविनैपुण (स्तं)

**अष्टकलापरिमाणां ध्रुवां च परिकल्प्यताललययुक्ताम् ।**
**आहूय नटीं कृत्वा तया समं स्वगृहकार्यसंलापम् ।। ८८३ ।।**

---

पश्चिमदेशस्य, यस्य कौशांबी राजधानी आसीत्, तस्य ईश्वरस्य राज्ञः उदयनाख्यस्य चरितं, प्रकृते तस्य रत्नावल्याख्यस्त्रीरत्नप्राप्तिरूपं श्रीहर्षेण रत्नावल्याख्यनाटिकानामरूपकभेदे परिणामितं, तस्य । विधेयं प्रयोगः तस्मिन् दाक्ष्यं निपुणता प्रयोगविषयिका, तथा च विधेयदाक्ष्यं विनियोगचातुर्यं, नायकपरिजनादीनां अनुकार्याणां अवस्थानुकृतौ कौशल्यं, तस्य साक्षात्कारायमाणत्वपरिपोषकत्वस्य सामग्र्या समस्ततया संपूर्णया संपत्त्या इत्यर्थः । उत्साहभावयुक्तः इति पदं रत्नावल्यां सूत्रधारवाक्ये–"अद्याहं वसंतोत्सवे सबहुमानमाहूय···राजसमूहेनोक्तः" इत्युक्तेः अनुवादकम् । आर्यास्थः शेषश्च रत्नावलीगतस्य–"अये, आवर्जितानि च मया सकलसामाजिकानां मनांसीति मे निश्चयः । यतः–श्रीहर्षो निपुणः कविः, परिषदप्येषा गुणग्राहिणी, लोके हारि च वत्सराजचरितं, नाट्ये च दक्षा वयम् ।" (१।२) इत्यस्य छायारूपः । अनेन प्रस्तावनायाः प्ररोचनाख्यं अंगं प्रस्तावितं, तल्लक्षणं च–"निवेदनं प्रयोज्यस्य निर्देशो देशकालयोः । काव्यार्थसूचकैः शब्दैः सभायाश्चित्तरंजनम् ॥" इति ॥ ] 'कविषु नैपुणं यस्य असौ कविनैपुणः' [ इति टिप्पणी ॥ ८८२ ॥ आमुखापरनामकप्रस्तावनायाः अंगं नट्याह्वानं तत् नट्या सह आलापं च वर्णयति अष्टेति । तत्र नट्याः आह्वानं नेपथ्यशालावलोकनपूर्वकं अत्र प्रयोगे ध्रुवया कृतम् । तत्सामान्यलक्षणं भरतोक्तं–"यानि चैवं निबद्धानि च्छंदोवृत्तिविधानतः । मुखप्रतिमुखादीनि गीताङ्गान्येव सर्वशः । यदात्मकानि तानि स्युर्ध्रुवासंज्ञानि नाटके ॥" इति संगीतरत्नाकरटीकायां कल्लिनाथेन उदाहृतम् । तां विशिनष्टि अष्टेति, अष्टौ कलाः परिमाणं मात्रा कालेन मितत्वं यस्याः तां, कला चात्र पंच निमेषाः ( नाट्य० ३१।२ ) नाम पंचलघ्वक्षरोच्चारमितः कालः; तथा तालेति, तालः वादित्रसंभवः कालेन नर्तनगलवादनक्रियाणां मानं, ते च चंचत्पुटादयः; लयः लीयंते श्लिष्यंते अनेन इति यद्वा लयंति व्रजंति साम्यं गीतादयोऽत्रेति लयः, गीतवाद्यपादन्यासानां क्रियाकालयोः परस्परं समता, ताभ्यां युक्ताम्; तथाहि लयस्थानविवर्जनं तु गायकदोषाणां एकः, तस्मात्तेन रहितां इति भावः । 'तानलययुक्तां' इति पाठस्तु ध्रुवालक्षणविरोधी इति अनुपादेयः । तादृश्या ध्रुवया गानविशेषेण, नटीं नटगृहिणीं, आहूय, तथाहि काव्यानुशासनविवेके हेमचंद्रः–"यादृशा लयतालादिना यादृगर्थसूचनयोग्योऽभिनयः सात्त्विकादिः प्रधानरसानु-

---

८८३ ध्रुवां परिकम्य ( प. स्तं )। तानलय० ( गो. का )

सूचितपात्रागमनः कियन्ति दत्वा पदानि ललितानि ।
निश्चक्राम गृहिण्या सार्धं निःसरणगीतेन ॥ ८८४ ॥
आश्रित्य कथोद्घातं प्रविवेश ततः सविस्मयोऽमात्यः ।
दुर्घटसंघटनेन क्षितिनाथस्योदयेन मुदितश्च ॥ ८८५ ॥

---

सारितया प्रयोगयोग्यः, तदुचितार्थपरिपूरणं ध्रुवागीतेन क्रियते।" इति। तया समं सह, स्वगृहकार्यसंलापं स्वदुहितुः देशान्तरस्थाय वराय दत्तायाः पाणिग्रहणसंबंधिनीं चिंतां अधिकृत्य आलापं, कृत्वा। अनेन प्रस्तावनायाः अपरं अंगं आमुखाख्यं प्रस्तावितम्। (केचन आमुखं प्रस्तावनायाः नामान्तरं मन्यन्ते।) तल्लक्षणं च–"सूत्रधारो नटीं ब्रूते मारिषं वा विदूषकम्। स्वकार्यप्रस्तुताक्षेपि चित्रोक्त्या यत्तदामुखम्॥" (दशरूपके ३७–८) इति। (मारिषः नटः।) ॥८८३॥ प्रस्तावनामुपसंहरति सूचितेति। सूचितं बोधितं, पात्रस्य प्रकृते गृहीतवत्सराजप्रधानयौगन्धरायणभूमिकस्य, आगमनं रंगप्रवेशः येन, "आर्ये, नन्वयं मम यवीयान् भ्राता गृहीतयौगन्धरायणभूमिकः प्राप्त एव" इत्यादिना, सः सूत्रधारः, कियंति त्रिचतुराणि ललितानि शोभनानि, पदानि, दत्त्वा परिक्रम्य, अनाविद्धगतेन इत्यर्थः, गृहिण्या नट्या, सार्धं सह, निःसरणगीतेन नैष्क्रामिक्यां ध्रुवायां नेपथ्यगतैः नटैः गीयमानायां, निश्चक्राम रंगात् जवनिकान्तः अपसरति स्म। तथा च ध्रुवायोगात् गानं पंचविधं, यदाह भरतः–"प्रवेशाक्षेपनिष्क्रामप्रासादिकमथान्तरम्। गानं पंचविधं विद्याद्ध्रुवायोगसमन्वितम्॥" (३२।३१७) इति। तत्रैकं नैष्कामिकीध्रुवाख्यं, तद्विनियोगमपि स आह–"अंकान्ते निष्क्रमणे पात्राणां गीयते प्रयोगेषु। निष्क्रामोपगतगुणं विद्यान्नैष्कामिकीं तां तु॥" (३२।३१९) इति। (अंकः अत्र प्रस्तावनाप्रवेशकादीनां उपलक्षणम्) ॥८८४॥ इतः अंकवस्त्वारंभः, तत्र द्वाभ्यां शुद्धविष्कंभकवस्तु संक्षिपति आश्रित्येति। आश्रित्य अनुसृत्य। कथोद्घातं–रूपके आमुखं कथोद्घातादिभेदैः त्रिविधं, तत्र प्रकृते कथोद्घातरूपं तत्। कथोद्घातश्च–"स्वेतिवृत्तसमं वाक्यमर्थं वा यत्र सूत्रिणः। गृहीत्वा प्रविशेत् पात्रं कथोद्घातो द्विधैव सः॥" (३।९–१०) इति दशरूपके उक्तः। (स्वस्य प्रवेशिनः पात्रस्य। अर्थं वाक्यार्थम्। द्विधा स्वेतिवृत्तसमशब्दग्रहणेन वाक्यार्थग्रहणेन च इति।) प्रकृते "द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात्।

---

८८४ किंचिद्दत्वा पदानि निपुणानि (गो. का) ८८५ आश्रित्य पदोद्घातं (गो. का) [शास्त्रविरुद्धः पाठः]। °यो नृपामात्यः (प) [मात्राधिक्यमत्र]। दुर्घटघटनेन (गो. का)। [का. उत्तरार्धं दुष्टम्]

**प्रासादमारुहन्तं कुसुमायुधपर्वचर्चरीं द्रष्टुम् ।**
**निर्दिश्य वत्सराजं समनन्तरकार्यसिद्धये निरगात् ॥ ८८६ ॥**

---

आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥" (१।६) इति सूत्रधारवाक्यमेव पठतः यौगंधरायणस्य शब्दग्रहणेन प्रवेशः । ततः सूत्रधारनट्योः निष्क्रान्तेः अनंतरं, अमात्यः प्रविवेश प्रविशति स्म, रंगं इति शेषः । ] अमात्यः यौगंधरायण इत्यर्थः । [ अमात्यः अमा सह राज्ञा भवः तेन "अव्ययात् त्यप्" (पा० ४।२।१०४) इति त्यप्प्रत्ययः, स च "शान्तो विनीतः कुशलः सत्कुलीनः शुभान्वितः। शास्त्रार्थतत्त्वज्ञो(गो ?)ऽमात्यो भवेद्भूमिभुजामिह ॥" इति युक्तिकल्पतरौ उक्तः। स कीदृशः, दुर्घटसंघटनेन असंभाव्यसंयोगनिष्पत्त्या, सविस्मयः आश्चर्यान्वितः, विस्मयश्च—"विविधेषु पदार्थेषु लोकसीमातिवर्तिषु । विस्फारश्चेतसो यस्तु स विस्मय उदाहृतः ॥" इति साहित्यदर्पणे लक्षितः । तथा च रत्नावल्यां—"अन्यथा क्व सिद्धादेशप्रत्ययप्रार्थितायाः सिंहलेश्वरदुहितुः समुद्रे प्रवहणभंगनिमग्नायाः फलकासादनं, क्व च कौशाम्बीयेन वणिजा सिंहलेभ्यः प्रत्यागच्छता तदवस्थायाः संभावनं, रत्नमालाचिह्नायाः प्रत्यभिज्ञानादिहानयनं च ॥" इति तदुक्तिः । पुनश्च क्षितिनाथस्य राज्ञः उदयनस्य, उदयेन संभाव्यमानरत्नावलीपरिणयेन भाविन्या सार्वभौमपदप्राप्तिरूपया समुन्नत्या, मुदितः हर्षं प्राप्तः, च । तथा च तत्रैवाग्रे तद्वचनं—"(सहर्षम् ।) सर्वथा स्पृशंति नः स्वामिमभ्युदयाः ।" इति । इदं च—"येयं सिंहलेश्वरस्य दुहिता सा सिद्धेनादिष्टा यथा—योऽस्याः पाणिग्रहणं करिष्यति स सार्वभौमो राजा भविष्यति" (रत्ना० ४) इत्येतन्मनसि निधाय ॥ ८८५ ॥

सः अमात्यश्च—प्रासादं राजगृहं सप्तभूमिकं, आरुहन्तं निश्रेणिकया उपरिभूमिकाविशेषं गच्छन्तं, किमर्थमित्याह—कुसुमायुधपर्वचर्चरीं द्रष्टुमिति । कुसुमायुधः पुष्पबाणः मदनः तस्य पर्व महः उत्सवः—'सुवसंतकः' 'वसंतोत्सवः' 'चैत्रपर्व' 'चैत्रोत्सवः' इति वा ख्यातः, स च चैत्रे शुक्लत्रयोदशीं आरभ्य कृष्णप्रतिपदं यावत् मदनस्य व्रतपूजासंगीतादिभिः निर्वर्त्यः । तथा च स्कन्दपुराणे—"मधुमासे तु संप्राप्ते शुक्लपक्षे चतुर्दशी । प्रोक्ता मदनभञ्जीति सिद्धिदा तु महोत्सवे ॥...चैत्रे मासि चतुर्दश्यां मदनस्य महोत्सवः ॥ जुगुप्सोक्तिभिस्तत्र गीतवाद्यादिभिर्नृणाम् । भगवांस्तुष्यते कामः पुत्रपौत्रसमृद्धिदः ॥" इति। ( मधुः वसंतर्तुः, वसंतश्च वसन्ति अत्र मदनोत्सवाः ) इति अन्वर्थनामायं ऋतुः, स च चैत्रवैशाखमासद्वयात्मकः इति केचित्, फाल्गुनचैत्रात्मकः

---

८८६ चर्चरीं द्रष्टुम् ( स्तं )। वत्सनाथं ( प. स्तं )

सः इत्यन्ये "वसंतः कुंभमीनयोः" इति दर्शनात् इति; अपि च "मधुमाधवौ वसंतः, फाल्गुनचैत्रौ वसंतः" इति सुश्रुते सूत्रस्थाने षष्ठाध्याये। तस्य चर्चरीं इति–"चर्चरी वाद्यविशेषः इति केचित्, गीतभेद इत्यन्ये, अनेकशब्दानां मिश्रीभवनं इत्यपरे, हर्षक्रीडा इतीतरे (सुभूतिः), करशब्द इति परे (रुद्रः)" (इति रत्नावली–प्रभायां, ); "कापटिकानां सादरवचनं तौर्यत्रिकं चेत्यन्ये, वसंतसमयक्रीडा इत्येके इत्यभरटीकायां भरतः, हर्षक्रीडावाक् तत्पर्यायः चर्भटी इति हेमचंद्रः।" इति शब्दकल्पद्रुमः। प्रकृते तु 'द्रष्टुं' इति पदसान्निध्यात् हर्षक्रीडां इति अर्थो ग्राह्यः। कुसुमायुधपर्वचर्चरीं द्रष्टुं इति 'मदनमहमहीयांसं पुरजन प्रमोदमवलोकयितुं' इति रत्नावलीस्थपदानामनुवादः। मूलरत्नावलीनाटिकायां यौगंधरायणोक्तौ तु–'चर्चरीध्वनिः', इत्यत्र अग्रे विदूषकोक्तौ च 'चर्चरीशब्दमुखररथ्या–' इत्यत्र गीतिविशेष एवार्थः, तत्रतत्र तस्य मृदंगादिवाद्यानुगतत्वोक्तेः। पुनः तदग्रे तस्यैवोक्तौ "मामप्येतच्चर्चरिकं शिक्षयतम्।" इत्यत्र, अग्रे च दास्येक्तौ–"न खलु एषा चर्चरी।" इत्यत्र सर्वत्र तथैवार्थः। तथा च विक्रमोर्वशीयप्रकाशिकायां रंगनाथः–"चर्चरीसंज्ञो गीतिविशेषः, यदुक्तं–"द्रुतमध्यलयं समाश्रिता पठति प्रेमभरान्नटी यदि। प्रतिमंठकरासकेन वा द्रुतमध्या प्रथमा हि चर्चरी॥" इति। तथा संगीतरत्नाकरेऽपि प्रबंधाध्याये (४)—"रागो हिंदोलकस्तालश्चचरी षड्वोऽङ्घ्रयः। यस्यां षोडश मात्राः स्युर्द्वौद्वौ च प्राससंयुतौ। सा वसंतोत्सवे गेया चचरी प्राकृतैः पदैः (॥ २९२॥) चचरीच्छंदसेत्यन्ये क्रीडातालेन वेत्यपि। वृत्तादिच्छंदसा वाऽस्य च्छंदोलक्ष्मोदिता भिदाः (॥ २९३॥)" इति। अपि च रूपकाणां मध्ये केचित् पदार्थाभिनयात्मकाः नृत्यविशिष्टाः अवान्तरभेदाः तोटकादयः विंशतिः। तत्रैको यः नाट्यरासकः स एव चर्चरी। तदुक्तं भावप्रकाशे नवमाधिकारे–"कामिनीभिर्भुवो भर्तुश्चेष्टितं यत्र नृत्यते। रागाद्वसंतमालोक्य स ज्ञेयो नाट्यरासकः॥ चर्चरीति च तामाहुर्वर्णतालेन तत्र तु। प्रविशेत्कामिनीयुग्मं समरथ्यादिशिक्षितम्॥ वामदक्षिणसंचारैरंगैस्तत्तत्परिष्कृतम्। ततस्तदेव वर्णान्त आलीढद्वयसंस्थितम्॥ छोटिकादिद्रुतं तालो वादकानां प्रदर्शयेत्।" इत्यादि। एवमेव कर्पूरमंजरीसट्टके चतुर्थजवनिकान्तरे "ततः प्रविशति चर्चरी।" इत्यत्र चर्चरीशब्दः तथैव व्याख्येयः। विस्तरेण वर्णिता च सा बहुविधा तत्रैव विदूषकेन (४।९–१७), तत्र च "मुक्त्वा अन्या मणिवारणानि (काणि ?) यंत्रैर्धारासलिलं क्षिपंति। पतन्ति ताश्च प्रियाणामंगे मनोभुवो वारुणबाणकल्पाः॥" इत्यादि। वत्सराजं उदयनं, निर्दिश्य सूचयित्वा, समनंतरकार्यसिद्धये स्वकर्तव्यशेषं राज्ञः रत्नावलीपाणिग्रहणहेतुभूतं तस्य सिद्ध्ये तन्निष्पत्त्यै करणीयसंबद्धं विचारं कर्तुं इत्यर्थः, निरगात् कोलाहलरहितं स्वगृहं गतवान्। अत्र रत्नावल्यां 'अये, मधुरमभिहन्य-

अथ विशति स्म नरेन्द्रः प्रासादगतः समं वयस्येन ।
अवलोकयन् प्रमोदं प्रमुदितचेताः स्वसौख्यसंपत्त्या ॥ ८८७ ॥
विस्मयभावाकृष्टः प्रोत्फुल्लविलोचने ततो विसृजन् ।
नृत्यति पौरजनौघे प्रोवाच 'वयस्य पश्यपश्येति ॥ ८८८ ॥

---

मान'''' इत्याद्या 'कार्यशेषं चिन्तयामि ।' इत्यन्ता यौगंधरायणोक्तिः अनुसंधेया । अत्र च अर्थोपक्षेपकस्य विष्कंभकस्य अन्तः ॥ ८८६ ॥ अथ अमात्यनिष्क्रमानन्तरं, विशति स्म प्राविशत्, रंगं इति शेषः, नरेन्द्रः राजा नायकः उदयनः, प्रासादगतः प्रासादस्य भूमिकाविशेषं आरूढः, समं वयस्येन वसंतकनाम्ना विदूषकेन सह । किं कुर्वन्, पौराणां प्रमोदं उत्सवपूर्वकं हर्षं, अवलोकयन् समंततः पश्यन् सन्, कथंभूतः सः, स्वसौख्यसंपत्त्या निजसुखसमृद्ध्या, प्रमुदितचेताः प्रहृष्टान्तःकरणः । तथा च रत्नावल्यां राजोक्तिः--"राज्यं निर्जितशत्रु, योग्यसचिवे न्यस्तः समस्तो भरः, सम्यक्पालनलालिताः प्रशमिताशेषोपसर्गाः प्रजाः । प्रद्योतस्य सुता, वसंतसमयस्त्वं चेति, नाम्ना धृतिं कामः काममुपेत्वयं मम पुनर्मन्ये महानुत्सवः ॥ " ( १।९ ) इति । ( अत्र विशिष्टराज्यादिभिः पड्भिः स्वसुखसंपत्तिरुक्ता । ) ॥ ८८७ ॥ ततः प्रासादारोहणानंतरं, विस्मयाख्यः यः चित्तविस्तरात्मा भावः चित्तविकारः, पूर्वं ( ८८५ आ. टी. ) उक्तलक्षणः, तेन आकृष्टः बलात् हृतचित्तः विस्मितः विस्मयस्य स्थायित्वेन अद्भुतरसाविष्टः इति यावत्, नृत्यति मदनमहोत्सवनिमित्तेन हर्षेण नानाविधान् गात्रविक्षेपान् कुर्वति, तदुक्तं--" नृत्तं त्वत्र नरेन्द्राणामभिषेके महोत्सवे । यात्रायां देवयात्रायां विवाहे प्रियसंगमे ॥ नगराणामगाराणां प्रवेशे पुत्रजन्मनि । ब्रह्मणोक्तं प्रयोक्तव्यं मंगल्यं सर्वकर्मसु ॥ " ( ७।१५-१६ ) इति संगीतरत्नाकरे । पुरे भवः पौरः नागरिकः, पौरश्चासौ जनश्च पौरजनः स्त्रीपुंसमयः तस्य ओघे समूहे, विषयसप्तमी, प्रोत्फुल्लविलोचने विस्मयेन विकसिते नयने, विसृजन् व्यापारयन्, अनेन विस्मिता दृष्टिः उक्ता, तथा च भरतः--"भृशमुद्वृत्ततारा या नष्टोभयपुटाञ्चिता । समा विकसिता दृष्टिर्विस्मिता, विस्मये स्मृता ॥ " ( ८।६० ) इति । प्रोवाच विदूषकं प्रति, किं, वयस्य, यथोक्तं--"वयस्येत्यथवा नाम्ना वाच्यो राज्ञा विदूषकः । " ( साहि-

---

८८७ विस्मयति स्म'''प्रगाढं समुदित''स्वसैन्य''( का ) [ रत्नावल्यनुसारी पाठः ] ८८८ पौरजनोऽत्र ( स्तं ) । वयस्य पश्येति ( का )

तुल्यशिशुतरुणवृद्धं समगुप्तागुप्तयुवति सविचेष्टम् ।
अगणितवाच्यावाच्यं क्रीडन्ति जनाः प्रवृद्धहर्षेण ॥ ८८९ ॥
पिष्टातकपिञ्जरितं सुचिरोच्छ्रितविविधकुसुमनिर्यूहम् ।
गात्रायाससमुत्थितबहुनिःश्वासप्रकीर्णपटवासम् ॥ ८९० ॥

---

त्यदर्पणे ६।१४६ ) इति, पश्यपश्येति द्विरुक्तिः हर्षे, तदुक्तं—"विषादे विस्मये हर्षे, खेदे दैन्येऽवधारणे । प्रसादने संभ्रमे च द्विस्त्रिरुक्तं न दुष्यति ॥" इति ॥ ८८८ ॥ तुल्येत्यादिभिः सप्तभिः राजा नयनगोचरं पौराणां संक्रीडितं वर्णयति । जनाः पौराः, प्रवृद्धहर्षेण प्रमोदप्रवृद्धया वृद्धिंगतमनःप्रसादेन, क्रीडंति रमन्ते । कथमिति चतुर्भिः क्रियाविशेषणैः आह । तुल्याः शिशवः अल्पवयस्काः बालाः तरुणाः मध्यमवयसः युवानः वृद्धाः परिणतवयसः प्रौढाः यस्मिन् क्रीडनकर्मणि यथा स्युः तथा, अविगणितवयोभेदजन्यविवेकं इत्यर्थः । पुरुषाणां वृत्तमुक्त्वा स्त्रीणां अपि तदाह समेति, तथा समाः तुल्याः गुप्ताः युवतयः गृहिण्यः कुलीनस्त्रियः, अगुप्ताश्च युवतयः वेश्याः गणिकाः यथा स्यात् तथा, त्यक्तलज्जस्त्रीकं इत्यर्थः । अपि च सविचेष्टं विशेषेण विविधा वा चेष्टाः विचेष्टाः हास्यजनककर्माणि ताभिः सहितं यथा स्यात् तथा, सपरिहासक्रियं इत्यर्थः; 'परिगुप्तागुप्तयुवतिपरचेष्टं' इति पाठे परिगुप्ताः गृहे एव स्थिताः अगुप्ताः च रथ्यासु गमनागमनं कुर्वत्यः या युवतयः तासु पराः चेष्टाः पुरुषाणां अस्मिन् क्रीडनकर्मणि यथा स्युः तथा इत्यर्थः, तादृश्यः सर्वा अपि-सर्वैः कृतखेला इति भावः । अगणितवाच्यावाच्यं इदं बालेभ्यः गुरुभ्यः स्त्रीभ्यः तत्सन्निधौ च वाच्यं न वा वाच्यं इति अनादृत्यैव अविशेषेण अश्लीलादिवाक्प्रवर्तनं यथा स्यात् तथा । इत्येतत् पश्येति पूर्वस्याः आर्यायाः आकृष्यते ॥ ८८९ ॥ स्वभावतः क्रीडाप्रतिकूलमपि वृद्धजनं क्रीडन्तं दृष्ट्वा पिष्टातकेत्यादिभ्यां द्वाभ्यां तं वर्णयन् मदनमहोत्सवस्य सर्वोत्कृष्टत्वं सूचयति । परस्परोपरि निःक्षिप्यमाणेन पिष्टातकेन पिञ्जरितं पीतीकृतं, पिष्टातकः पटवासकः हरिद्रातंडुलकुंकुमादिभिः निर्वर्तितं चूर्णद्रव्यं उत्सवेषु उपयुज्यमानं, 'गुलाल' 'बुका' वा इति भाषायां प्रसिद्धम् । रत्नावल्यां तु भेदेन राजोक्तिः—"कीर्णैः पिष्टातकौघैः कृतदिवसमुखैः कुंकुमक्षोदगौरैः ।" ( १।१० ) इति, विदूषकोक्तिश्च—"प्रकीर्णपटवासपुंजपिंजरीकृतदिशामुखस्य मदनमहोत्सवस्य" इति ॥ तथा सुचिरं दीर्घकालं, उच्छ्रिताः

---

८८९ परिगुप्ता० ( गो ) । युवतिपरचेष्टं ( प. स्तं ) । क्रीडति जनता प्रवृद्धहर्षरसा ( प. स्तं. गो २ ) ८९० रुचिरोच्छ्रित ( का ) रचितोल्बणविविध''स्थितसमधिकनिःश्वासकीर्णपदगीतं ( प. स्तं ) [ मूलाननुरोधी पाठः ]

र्यरवव्यामिश्रितकरतालैरुद्भुजं प्रनृत्यन्तम् ।
मुहुरुपजातस्खलनं संदर्शितदार्ढ्यसौष्ठवं स्थविरम् ॥ ८९१ ॥
अस्तु वसन्तः सततं स्वाधीनाभीष्टजनसमाश्लेषः ।
इति गायन्ती रभसादालिङ्गति मदवशात्तरुणी ॥ ८९२ ॥

उच्चैःकृताः उष्णीषेषु धृतत्वात्, विविधकुसुमानां वसंते प्रादुर्भूतानां अशोकबकुलतिलककुरवककर्णिकारादिपुष्पाणां ] निर्व्यूहाः स्तबकाः [ येन तम् ; तथा च रत्नावल्याम्–" हेमालंकारभाभिर्भरनमितशिरःशेखरैः कैंकिरातैः । " (१।१०) इति । पुनश्च क्रीडासंभूतः यः गात्रायासः शरीरश्रमः तस्मात् समुत्थितः प्रादुर्भूतः यः बहुः प्रभूतः निःश्वासः प्राणवायोर्बहिः निःसरणं तेन प्रकीर्णः विकीर्यमाणः इति भावः, शरीरवस्त्रादिषु लग्नः पटवासः पूर्वोक्तः यस्य तम् ॥ ८९० ॥ पुनः, तूर्यं 'तुरी' इति भाषायां प्रसिद्धं सुषिरवाद्यं, तथाहि संगीतसारोद्धारे सुधाकलशः–" काहला श्वापचं वाद्यं, तूररीयं तु नाट्यगम् । रणवाद्यं मधुकरी, लास्यजं सुषिरं विदुः ॥ " (४।४६) इति; तेषां रवैः नादैः व्यामिश्रिताः संवलिताः, करतालाः तूर्यगानानुसारिणः करयोः तालाः हस्तद्वयास्फोटाः कराघाताः, 'ताली' इति भाषायां प्रसिद्धाः, तैः, करणे तृतीया, उद्भुजं तालवादनार्थं उद्गतौ उच्चैः कृतौ भुजौ यथा स्यात् तथा, प्रनृत्यन्तं नानाप्रकारं नृत्यं कुर्वन्तम् । तथा मुहुः वारंवारं, वृद्धत्वेन क्रीडामदेन वा, उपजातस्खलनं भूमौ प्रातपतनं; तथापि संदर्शितेत्यादिसंदर्शितं शरीराणां दार्ढ्यं बलवत्ता च सौष्ठवं अंगप्रत्यंगानां शोभनं निवेशनं च येन, तम् स्थविरं कर्म जातावेकवचनम्; स्थविरान् वृद्धान् इत्यर्थः, पश्य इति क्रियापद ८८८ आर्यायाः आकर्षणीयम् ॥ ८९१ ॥ इतश्चतुर्भिः रमणीनामपि क्रीडाप्रकारानाह । अस्त्विति । काचित् तरुणी युवतिः, अनेन तस्याः मदोद्धतत्वं सूचितं, मदवशात् मदपरतंत्रा सती, मदश्च–" मदो विकारः सौभाग्यतारुण्याद्यवलेपजः । " इति ( कर्णभूषणे ) लक्षितः, रभसात् वेगेन, कंचित् स्वमनोभिलषितं प्रियं, आलिंगति; किं कुर्वती, गायन्ती; किं गायन्तीत्याह अस्तु इति । अयं वसंतः योग्यत्वात् प्रकृतत्वाच्च लक्षणया वसंतोत्सव इत्यर्थः, सततं निरंतरं, अस्तु वर्तताम्, प्रार्थनायां लोट् । तत्र हेतुगर्भं विशेषणमाह–स्वाधीनेति; स्वाधीनः स्वस्यैव आयत्तः अतः सुलभ इति भावः, अभीष्टजनेन प्रियेण स्वपत्या अपरेण कामुकेन वा स्वपत्न्या अपरया स्वाभिलषितया वा इत्यपि, समाश्लेषः आलिंगनं यत्र, तथाभूतः सन् ।

८९१ करतलतालोद्भुजं ( गो ) । मुहुरपि ( प. हस्तं ) ८९२ श्लेषात् (प. हस्तं. का)

क्रीडन्त्या श्रमरहितं शृङ्गकसलिलेन ताडितस्तरुणः।
सीमन्तिन्या गणयति हृष्टात्मा सुभगमात्मानम्॥ ८९३॥
भग्ने लज्जासेतौ पर्वावसरेण कुलवधूवदनात्।
अश्लीलोक्तिजलौघो निर्यातः केन वार्यते प्रसभम्॥ ८९४॥

---

तथाहि अस्मिन् महोत्सवे सर्वैः पटवासकौसुंभजलादीनां प्रक्षेपविलेपनादि निर्लज्जं अगणितपरापरभेदं च क्रियते, तेन स्वाभिलषितेन क्रीडन् पुमान् स्त्री वा परैः न दूष्यते। 'समाश्लेषात्' इति पाठे हेतौ पञ्चमी। स्वाधीनेत्यादिविशेषणस्य साभिप्रायत्वात् परिकरालंकारः॥ ८९२॥ श्रमरहितं श्रमः दीर्घश्वासस्वेदादिसूच्यः आयासप्रभवः खेदः तेन रहितं शून्यं यथा स्यात् तथा क्रीडंत्या अश्रांतं क्रीडां कुर्वंत्या इत्यर्थः, सीमन्तिन्या सीमंतः केशेषु वर्त्म 'सेंथी' इति भाषायां प्रसिद्धः सः प्रशस्तः यस्याः सा सीमंतिनी, (वृद्धायाः सीमंतस्य केशहीनत्वेन अप्रशस्तत्वात्, विधवायाश्च सीमंतरचना निषिद्धेति ताभ्यां भिन्नया,) तया तरुण्या, शृंगकजलेन शृंगकं 'पीचकारी' इति भाषायां प्रसिद्धं जलोत्क्षेपणयंत्रं क्रीडाम्बुयंत्रं तस्मात् विमुक्तेन जलेन कुंकुममिश्रेण इति भावः, ताडितः प्रहृतः, तरुणः युवा, हृष्टः आत्मा अंतःकरणं यस्य तादृशः सन्, आत्मानं स्वं, सुभगं तरुणीवल्लभत्वरूपैश्वर्यशालिनं, गणयति मनुते। तदुक्तं—"पलाशकुसुमोद्भूतशुभवारिप्रसेचनम्। विधीयते मिथो लोके वसंतप्रीतये ध्रुवम्" इति। रत्नावल्यां तु विदूषकोक्तिषु—"मधुमत्तकामिनीजनस्वयंग्राहगृहीतशृंगकजलप्रहारनृत्यन्नागरजनजनितकौतूहलस्य···मदनमहोत्सवस्य" इति, "एतदपि सुविदग्धजनजलभरितशृंगकजलप्रहारमुक्तसीत्कारमनोहरं वारविलासिनीजनविलसितं" इति च॥ अत्र ताडितोऽपि हृष्टात्मा भवति इति विरोधः, ताडनेऽपि तत्कार्यरोदनाद्यनुत्पत्तौ विशेषोक्तिः, ताडनस्य दोषत्वेऽपि स्वेष्टत्वेन गुणत्वकल्पनात् लेशालंकारः, आत्मानं सुभगं गणयति इति अन्येभ्यः तस्य व्यतिरेकव्यंजनात् व्यतिरेकालंकारो व्यंग्यः, एतेषां च परस्परावलंबनतया संसृष्टिः॥ अत्र नायिका परकीया प्रौढा, नायकश्च मुदितः॥ ८९३॥ तरुणप्रियां नारीणां अश्लीलोक्तिं काकुविशिष्टेन आक्षेपेण उन्नाटिकं कथयति भग्ने इति। पर्व उत्सवः तस्य अवसरः प्रस्तावः तेन मदनमहोत्सवनिमित्तेन इति भावः, लज्जा व्रीडा सा एव इच्छाप्रसरनिरोधकत्वात् सेतुः

---

८९३ °न्त्याशयरहित (प. स्तं)। गावति (का)। दुष्टात्मा (प. स्तं) [अक्षरसंभ्रमोत्थः पाठः] ८९४ अम्लानोक्ति (का)। जनौघे निर्यातिः···प्रसरः (गो), प्रसरन् (का)

तुल्यव्यापारगिरां ललनानां देवनप्रसक्तानाम् ।
आर्यानार्यावगमं वदनावृतिजालिका कुरुते ॥' ८९५ ॥

जलप्रवाहरोधः, तस्मिन् भग्ने, वधूजने निर्लज्जीभूते सति इत्यर्थः, कुलवधूनां सत्कुलजानां साध्वीनां अपि, वदनात् मुखात्, अत्र तडागाख्योपमानस्य शब्दानुपात्तत्वे एकदेशविवर्ति रूपकं; अश्लीलोक्तिः–श्रीरस्याः अस्तीति श्रीला, "सिध्मादिभ्यश्च" (पा. ५।२।९७) इति श्रीशब्दात् लच्, श्रीमती इत्यर्थः, न श्रीला अश्रीला इति नञ्तत्पुरुषः; "पृषोदरादीनि यथोपदिष्टम् ।" (पा. ६।३।१०९) इति श्रीशब्दे रेफस्य लकारः; एवं अश्लीला श्रीरहिता असभ्या व्रीडादिसंपादिका. उक्तिः अश्लीलोक्तिः, ता एव जलौघः नीरप्रवाहः सः, निर्यातः निर्गतः, केन, प्रसभं बलात्कारेण वार्यते प्रतिबध्यते, काका न केनापि निरोद्धुं शक्य इति भावः । तथाहि अस्मिन् महोत्सवे अश्लीलोच्चारणं न दोषः, यथोक्तं–"दूषणमपि प्रयुक्तं प्रत्युत कुत्रापि भूषणं भवति । ननु शृणुत होलिकायामवाच्यमप्युच्यते श्रेयः ॥" (११) इति होलामहोत्सवभाणे; धर्मशास्त्रमपि–"निर्लज्जा मानरहिता गतेर्ष्या गतसाध्वसाः । क्रीडेयुः सकला लोका वसंतस्योत्सवं प्रति ॥" इत्यादि; स्कान्दे च–"चैत्रे मासि चतुर्दश्यां मदनस्य महोत्सवः । जुगुप्सितोक्तिभिस्तत्र गीतवाद्यादिभिर्नृणाम् । भगवांस्तुष्यते कामः" इति । तादृशोक्तिप्रकारादि होलामहोत्सवभाणे द्रष्टव्यम् ॥ ८९४ ॥ देवने पाशके 'पासा' इति भाषायां, तस्मिन्, अक्षक्रीडायां इति यावत्, प्रसक्तानां निरतानां, ललनानां विलासवतीनां स्त्रीणां, कीदृशीनाम् ? तुल्याः व्यापाराः चेष्टाः गिरः वचनानि च यासां तासां, आर्यानार्यावगमं इमाः आर्याः कुलवध्वः इमाश्च अनार्याः आर्यचरितरहिताः वेश्याः तासां अवगमं बोधं भेदज्ञानं इत्यर्थः, वदनस्य मुखस्य ] आवृतिजालिका निरंगी [ तिरस्करिणी 'बुरखा' इति भाषायां, सा कुरुते । सर्वासां ललनानां चेष्टानां उक्तीनां च समानतया निर्लज्जत्वेन तदार्यत्वादिगमकाभावेऽपि मुखपटभावाभावाभ्यां तद्विवेको जायते इति भावः । यद्यपि द्यूतं "महतोऽपि क्षणान्नाशो धनस्य हीविमुक्तता । निस्सत्यता निष्ठुरता क्रोधो वाक्छलखंडनम् ॥ (१५।४४) प्रतिक्षणं क्रोधहर्षौ संतापश्च प्रतिक्षणम् । प्रतिक्षणं च संक्लेशः साक्षिप्रश्नः प्रतिक्षणम् ॥" (१५।४७) (कामन्दकीयनीतिसारे) इत्यादिभिः निंदितं, नलपांडवरुक्मिदन्तवक्त्रादीनां दृष्टान्तैश्च प्रतिषिद्धमपि, तथापि, दीपोत्सवाद्युत्सवविधिषु "द्यूतक्रीडां ततः कुर्याद्ब्राह्मणप्रमुखो जनः ।"

८९५ मदना···पिका (का) [ अपार्थकः पाठः ]

अथ सहचरनिर्दिष्टे मदस्खलच्चरणविघटिताभिनयम् ।
वासवदत्ताप्रहिते नृत्यन्त्यौ प्रविशतश्चेट्यौ ॥ ८९६ ॥
दर्शितसरोजवर्तनमात्राभिनये शरेऽभिनेतव्ये ।
विदधाने वीरदृशावायुधमात्रं समाश्रित्य ॥ ८९७ ॥

---

इत्याद्युक्तेः महोत्सवेषु तदप्रतिषिद्धं अनुमतं वा द्रष्टव्यम् । यद्वा पणरहिताया: केवलाया: पाशक्रीडायाः अबाधितत्वात् तादृशी प्रकृते ग्राह्या ॥८९५॥ अथ युग्मेन वासवदत्ताप्रेषितचेट्योः रंगप्रवेशं वर्णयति अथेत्यादिना । अथ अनंतरं, सहचरनिर्दिष्टे सहचरः वयस्यः विदूषकः, तेन निर्दिष्टे दर्शिते सूचिते, वासवदत्तया उदयनमहिष्या प्रहिते प्रेषिते, चेट्यौ चेटति परप्रेष्यत्वं करोति सा चेटी दासी ते मदनिकाचूतलतिकानाम्न्यौ नृत्यं कुर्वंत्यौ प्रविशतः, रंगं इति शेषः । नृत्यक्रियां विशिनष्टि मदेति । मदेन मधुपानमदतुल्येन यौवनजेन अवलेपेन स्खलंतौ इतस्ततः पतंतौ चरणौ तेन ] विघटितः विसंष्ठुलः [ व्याकुलः, अभिनयः अग्रिमार्यायां वर्ण्यमानः, यथा स्यात्तथा ॥ प्रकृते रत्नावल्यां विदूषकोक्तिः—"भो वयस्य, प्रेक्षस्वप्रेक्षस्व । एषा खलु मदनिका मदवशविसंष्ठुलं वसंताभिनयं नृत्यंती चूतलतिकया सहेत एवागच्छतीत्यवलोकयतु प्रियवयस्यः ।" इति ॥८९६॥ नृत्यंत्यौ ते वर्णयति दर्शितेति । हस्ताभ्यां दर्शितः सरोजस्य कमलस्य वर्तनस्य भ्रमणस्य अभिनयः याभ्यां ते, अनेन कमलवर्तनाख्यं बाहुकरणं उक्तं, तत्स्वरूपमाह कोहलः—"पद्मकोशाभिधौ हस्तौ व्यावृत्तादिक्रियान्वितौ । आश्लिष्टौ च करौ क्षेत्रे व्यावृत्तपरिवर्तितौ । मिथः पराङ्मुखौ सन्तौ सैषा कमलवर्तना ॥" इति । तथा तदनंतरं शरे बाणे अभिनेतव्ये सति, तथा च वसंतोन्मिलेन पुष्पबाणाना अभिनये प्रस्तुते, आदौ पुष्पबाणस्य प्रथमं बाणं अरविंदं अभिनीय कर्तव्यतया बाणस्य अभिनये प्राप्ते सति इति भावः, स च कपित्थाख्येन हस्तेन, तदुक्तं संगीतरत्नाकरे—"अंगुष्ठाग्रेण लग्नाग्रा तर्जनी शिखरस्य चेत् । कपित्थः स्यात् तदा,''' । चक्रचापगदादेश्च शराकर्षादिकर्मणि । अन्योन्यकार्यविषयौ कपित्थशिखरौ क्वचित् ॥" ( ७। १३४-५ ) इति, आयुधमात्रं आश्रित्य—न केवलं शरस्य एव अपि तु शक्तितोमरचक्रचापगदादीनां अन्येषां यावतां आयुधानां अभिनयं प्रस्तुत्य, अर्थात् मुष्टिशिखरखटकामुखाख्यान् विविधान् हस्तान् निर्वर्तन्त्यौ, वीरदृशौ वीररसप्रकाशके नयने

---

८९६ [ का. पूर्वार्धं अशुद्धम् ] । विविशतुश्चेट्यौ ( प. स्तं ) ८९७ वर्तनगात्रा ( का ) वर्तनसाम्याभिनयं ( गो ) । शिरे ( प ) । दर्शितशरोज''नेतव्या ।''दशा चायुध''( स्तं ) [ का. पूर्वार्धोत्तरदलं दुष्टम् ] । निदधाने वीरदशा'''त्रां ( का )

उद्गलितनयनवृत्तिः कौतुकहृतमानसो नराधिपतिः ।
निजगाद 'निर्भरमहो क्रीडितमनयोर्विलासिन्योः ॥ ८९८ ॥
करपीडनोपमर्दव्यतिकरसमये कदर्थ्यमानोऽपि ।
स्तनमण्डले स्थितोऽहं त्वं पुनराकृष्य कुत्रचित्क्षिप्तः ॥ ८९९ ॥

---

विदधाने कुर्वन्त्यौ, प्रविशतः इति पूर्वार्यास्थपदेन अन्वयः। अनेन वीरा दृष्टिः सूचिता, तल्लक्षणं च भरते (८।४९)–"क्रूरा रूक्षारुणोद्वृत्तनिष्टब्धपुटतारका। उत्फुल्लमध्या दृष्टिस्तु वीरा वीररसाश्रया ॥" इति ॥ अत्र अभिनेतव्यतया उक्तौ सरोजशरौ तु रत्नावल्यां "इह प्रथमं मधुमासो जनस्य हृदयानि करोति मृदुलानि। पश्चाद्विध्यति कामो लब्धप्रसरैः कुसुमबाणैः ॥" (१।१५) इति मदनिकागीते कुसुमबाणैः इति पदस्य अभिनये लब्धपदौ प्रतीयेते ॥ ८९७ ॥ ततः, उद्गलितनयनवृत्तिः वसंतक्रीडादर्शनव्यापारात् अपनीतचक्षुः, तयोः नृत्यस्य दर्शनकुतूहलेन विस्मृतान्यविषयः, नराधिपतिः राजा उदयनः। अहो इति आश्चर्ये, अनयोः पुरोवर्तमानयोः विलासिन्योः–विलसति क्रीडति तच्छीला विलासिनी "सुप्यजातौ णिनिस्ताच्छील्ये।" (पा. ३।२।७८) इति णिनिः, विलासश्च नेत्रादिव्यापाराणां विशेषेण लसनं यत् सः, तद्वत्योः, निर्भरं अतिमात्रं, क्रीडितं क्रीडा नृत्यरूपा, भावे क्तः। तथा च रत्नावल्यां राजोक्तिः–"अहो मधुरोऽयमासां निर्भरः क्रीडारसः।" इत्यादिकः ॥ ८९८ ॥ रत्नावलीस्थतद्वर्णनश्लोके "व्यस्तः कंपानुबंधादनवरतमुरो हन्ति हारोऽयमस्याः।" (१।१६) इति तृतीयपादमाश्रित्य, नृत्यंत्योः उच्छलता हारेण कंचुकिकायाः हननं उत्प्रेक्षते करेति युग्मेन। हारः वारवाणं (कंचुकं) वदति–स्तनमंडले कुचाभोगे, मंडलशब्दशक्त्या च स्तन एव देशः तत्र, कामुकस्य कराभ्यां हस्ताभ्यां यत् स्तनयोः पीडनं उपमर्दः च, तयोः व्यतिकरस्य व्यतिषंगस्य समये काले, करेण राजग्राह्यभागेन च यौ प्रजानां पीडनोपमर्दौ ततः यः व्यतिकरसमयः व्यसनप्रसंगः, "भवेद्व्यतिकरः पुंसि व्यसनव्यतिषंगयोः।" इति विश्वलोचनः; ततः कदर्थ्यमानोऽपि पीडां प्राप्नुवन् अपि, अहं हारः मुक्तावली तत्पीडां सहमानोऽपि स्थितः न तु प्राकृतजनवत् तत्संगं त्यक्तवान् अपि तु वीर इव सन्मित्रं इव वा दृढतया स्थितः, त्वं कंचुकः, पुनः तु भेदे, आकृष्य उत्तार्य, अनुस्वानशक्त्या बलात् गृहीत्वा च, कुत्रचित् यस्मिन्कस्मिंश्चित्स्थले, क्षिप्तः दूरं न्यस्तः। यथा कश्चित् सुहृत् राजकरेण

---

८९८ तद्गलित (प. स्तं) चलित (का) [ न्यूनमात्रः पाठः ] ८९९ समकदर्थ्य (का)। करमण्डले (प) [ अनुचितः पाठः ]। कुत्र विक्षितः (प) [ अक्षरभ्रमात् पाठः ]।

अधुनाऽन्तरयसि मामिति कोपादिव वारवाणमभिरामम् ।
बहुचित्रपदन्यासैर्वल्गन्त्या हन्ति हार उच्छलितः ॥ ९०० ॥
चूतलता धम्मिल्लस्थानच्युतशेखरं दधौ श्लाघ्यम् ।
अधृत पतन्निर्यूहां न त्वेषा मदनिका वेणीम् ॥ ९०१ ॥

---

पीड्यमाने मित्रे तं व्यसने न त्यजति, तदानीं अन्यः दुर्बलः सुहृदपि दूरीभवति तद्वत् इति अप्रस्तुतस्यापि परिस्फूर्तेः समासोक्तिरलंकारः ॥ ८९९ ॥ एवं सति, अधुना एतादृशे महोत्सवकाले इति व्यज्यते, मां हारं उक्तप्रकारेण विपत्तावपि संगिनं इति भावः, अंतरयसि सावकाशं करोषि, तव सत्तया स्तनमंडलात् विरहयसि, इतिः हेतौ, इतिहेतोः इत्यर्थः, कोपात् "रोषस्तात्कालिकः कोपः ।" इत्युक्तलक्षणात्, इव उत्प्रेक्षायां, बहुचित्रपदन्यासैः नृत्यकाले करणेषु चारीषु च ये बहवः विविधाः चित्राः आश्चर्यकराः पदन्यासाः चरणक्षेपाः तैः, लक्षणे तृतीया, वल्गन्त्याः नृत्यंत्याः, उच्छलितः ऊर्ध्वं उत्पतन्, हारः मुक्तासरः, अभिरामं सुंदरं, वारवाणं–वारं वरणीयं सुंदरं वानं स्यूतिकर्म यस्य तत् कंचुकं 'चोली' इति भाषायां, हंति तत्र आघातं करोति, तं ताडयतीति वा, धातोरनेकार्थत्वात् 'दुंदुभिं हंति' इतिवत् योग्यतया ताडयति इत्यर्थः ॥ हेतूत्प्रेक्षालंकारः, अन्योऽपि कोपाविष्टः उच्छलन् प्रतिपक्षस्योपरि प्रहारान् करोति इति समासोक्तिः च ॥ ९०० ॥ तयोः नृत्यतारतम्यं सूक्ष्मं निरीक्ष्य वक्ति चूतलतेति । चूतलता तदाख्या चेटी, धम्मिल्लः संयतः केशपाशः, तस्मात् नृत्यावेशवशात् च्युतं भ्रष्टं, शेखरं शिरसि तिर्यक् नद्धा स्रक्, "आपीडशेखरोत्तंसावतंसाः शिरसि स्रजः ।" इति हलायुधः, श्लाघ्यं क्रियाविशेषणं प्रशस्तरीत्या, दधौ धारयामास, पतिष्णुमपि तं कौशलेन पतितुं न अदात् इत्यर्थः । एषा पुरो दृश्यमाना, मदनिका तन्नाम्नी अपरा चेटी, तुः पूर्वोक्तवैलक्षण्ये, पतन्निर्यूहां गलत्स्तबकां, वेणीं बंधविशेषेण रचितं केशपाशं, न अधृत अकौशलात् मदातिरेकवशाद्वा पुष्पस्तबकपतनं न निरुरोध इत्यर्थः ॥ अत्र मदनिकायाः अकौशलपक्षे चूतलतिकायाः उत्कर्षः, मदातिरेकपक्षे मदनिकायाः उद्दामक्रीडारसैकतानतया तस्याः उत्कर्षः, व्यंजितः । यद्वा चूतलतायाः नृत्ये कौशलं, मदनिकायास्तु तत्र तदेकपरत्वं निरीक्षितं इति पृथक्पृथग्धर्मेण उभे अपि प्रशंसिते इति बोध्यम् ॥ अत्र रत्नावलीस्थतत्क्रीडावर्णनात्मकश्लोकस्य "स्रस्तः स्रग्दामशोभां त्यजति विरचितामाकुलः केशपाशः ।" इति आद्यपादस्य अर्था-

---

९०० वल्यन्त्या ( गो ) । [ का. पाठोऽशुद्धः ] ९०१ अधृतपतनि( त्रि ? )र्व्यूहा ( प. स्तं ) निर्यूहं( गो ) । नन्वेषा ( स्तं ) । वेणी ( प. स्तं ) वेणीः ( गो ) [ का. पाठोऽतीवाशुद्धः ]

**स्तनभारावनतस्य प्रतनोर्मध्यस्य नास्ति तेऽपेक्षा ।**
**इत्थमिव पादलग्नौ क्रीडन्त्या नूपुरौ रसतः ॥ ९०२ ॥**

---

ऽनुसंधेयः ॥ ९०१ ॥ तयोः नर्तनजान् नूपुरस्वनान् उत्प्रेक्षते स्तनेति । क्रीडंत्याः इति एकवचनं द्वयोरप्युपलक्षणम् । नूपुरौ पादांगदौ मञ्जीरौ 'पैंजण' इति 'झांझर' इति च भाषायां ख्याते पादभूषणे, पादलग्नौ पादस्थौ सन्तौ, इत्थं इति पूर्वार्धोक्तप्रकारेण, रसतः शिञ्जाते स्वरवेण कथयतः इत्यर्थः, इव उत्प्रेक्षायाम् । किं कथयत इत्याह स्तनेति । इदं नूपुरयोः मध्यं प्रति वचनम् । स्तनयोः कुचयोः, भारेण, स्तन्यते शब्द्यते स्तूयते पीनत्वेन परिणाहवत्त्वादिना वेति, यद्वा स्तनयति कथयति वक्षःशोभां इति स्तनशब्देन तयोः पीनत्वं परिणाहवत्त्वं वा, भारशब्देन प्रौढिः गुरुत्वं वा व्यञ्जितं, अवनतस्य निम्नीभूतस्य, अपि च प्रतनोः कृशस्य, अनेन सुतरां भारासहत्वं सूचितं, एवं सतः मध्यस्य अवलग्नस्य कटिप्रदेशस्य, ते तव, तव वृत्तेः इति भावः, अपेक्षा आकांक्षा, नास्ति, महोत्सवयुद्धादिषु निर्बलानां अवस्थानस्य अयोग्यत्वात् ॥ अत्र संततभाराक्रान्तः तत्पीडया वलितः कृशश्च भवति, तादृशं च अन्यः पादयोः पतित्वा भारत्यागं प्रार्थयते इति समासोक्तिः ॥ अत्र मुद्रितस्य रत्नावलीग्रंथस्य 'स्रस्तः' इत्यादिश्लोकस्य ( १।१६ ) "क्षीवाया नूपुरौ च द्विगुणतरमिमौ क्रंदतः पादलग्नौ ।" क्रीडन्त्याः पीडयेव स्तनभरविनमन्मध्यभंगानपेक्षम् ॥ " इति द्वितीयचतुर्थचरणौ अनुसंधेयौ ॥—अत्र इदं अवगंतव्यं यत् प्रकृतार्याचतुष्टयक्रमानुरोधेन रत्नावलीप्राचीन-पुस्तकेषु "व्यस्तः कंपानुरोधात्" इत्यनेन प्रथमपादेन, "स्रस्तः स्रग्दामशोभां" इत्यनेन द्वितीयपादेन, "क्षीवाया नूपुरौ च" इत्यनेन तृतीयपादेन, "क्रीडंत्याः पीडयेव" इत्यनेन चतुर्थपादेन, तत्रापि, एतदार्यार्थानुरोधात् "मध्यभंगानपेक्षाम्" इति पाठेन च भवितुं युक्तमिति । एवं च मूले रत्नावल्यां उत्तरार्धस्य—'क्रीडन्त्याः क्षीवायाः इमौ पादलग्नौ नूपुरौ च पीडया इव स्तनभरविनमन्मध्यभंगानपेक्षां द्विगुणतरं क्रंदतः' इत्यन्वयः, क्रीडन्त्याः नृत्यंत्याः इति अन्यपादयोः संबध्यते, क्षीवायाः मत्तायाः, इमौ पादलग्नौ नूपुरौ च, पीडया इव कृपया इव, "पीडाऽवमर्द-कृपयोः सरलद्रुशिरोध्वजे ।" इति विश्वलोचने, मध्यभंगो न भवेत् इति हेतोः, स्तनभरविनमन्मध्यस्य भंगस्य त्रुटेः नाशस्य वा अनपेक्षां अनावश्यकतां, द्विगुणतरं प्रभूततरं अतिशयेन क्रंदतः, इति चार्थः ॥ यथास्थितमुद्रितपाठे तु—हारः स्तनभरविन-मन्मध्यभंगानपेक्षं उरः हंति इत्येव अन्वये स्तनेत्यादेः विशेषणत्वे क्रियाविशेषणत्वे

वहति स्म यं नितम्बं कथमपि कृच्छ्रेण मन्दसंचारा ।
कलयति तं तूललघुं, जयति मनोजन्मनो महिमा ॥ ९०३ ॥
उदयनसमनुज्ञातो नर्नर्ति वसन्तकोऽपि मुदितात्मा ।
हास्यत्रपाभिरामं चर्चरिकार्धेन तन्मध्ये ॥ ९०४ ॥

---

वाऽपि अर्थासंगतिः स्पष्टैव ॥ ९०२ ॥ मूलादधिकत्वेन नितम्बं प्रकृत्य किमपि विस्मयजनकं वर्णयति वहतीति । या मंदसंचारा करेणुवत् मन्थरगामिनी, नितंब-भारादेव इति भावः, तथाहि शाकुंतले—" यातं यच्च नितंबयोर्गुरुतया मन्दं विलासादिव ।" ( २।२ ) इति, कथमपि येन केन प्रकारेण, कृच्छ्रेण कष्टेन, नितंबं नितान्तं अत्यन्तं ताम्यते मर्दनताडनाद्यैः खिद्यते तदर्थं वा इष्यते कामुकैः सः नितंबः श्रोणिबिंबं तं, वहति स्म उवाह, स्मयोगे भूतार्थे लिट् " लट् स्मे " ( पा. ३।२।११८ ) इति, नितंबस्य गुरुत्वं पृथुत्वं च प्रशस्तं, तदुक्तं—" नितंबबिंबो नारीणामुन्नतो मांसलः पृथुः । महाभोगाय संप्रोक्तस्तदन्योऽशर्मणे मतः ॥ " इति स्कान्दे काशीखंडे, तादृशं तं, अस्मिन् नर्तने, सा, तूललघुं तूलं कार्पासः तद्वत् लघुं तुच्छं भाररहितं, कलयति गणयति मनुते, नृत्ये तस्याः पादन्यासानां लाघवं दृष्ट्वा इयं साश्चर्या स्वभावोक्तिः । एनं विरोधं अर्थांतरन्यासालंकारेण समाधत्ते जयतीति । मनोजन्मनः संकल्पप्रभवस्य कामदेवस्य, महिमा ऐश्वर्यं, जयति सर्वोत्कर्षेण वर्तते, यः गुरुमपि लघुं, लघुमपि गुरुं, अधरखंडनादिपीडाजनकं अपि आनंदकरं, चंद्रादिकं आह्लादकं अपि संतापदं अनुभावयन् वैपरीत्यप्रतीतिकृत् वर्तते । दशावताराः सन्तीतिवत् जयतीति लट्प्रयोगेण कालत्रयेऽपि स महिमा अबाध्यः इति सूचितम् ॥ ९०३ ॥ राजोक्त्यंते प्रवृत्तमाह उदयनेति । उदयनेन राज्ञा, समनुज्ञातः ' एवं क्रियतां ' इत्यनुमोदितः, वसंतकः तन्नामा विदूषकः, अपि, मुदितात्मा नर्तनाय राज्ञः अनुज्ञया मुदितः हर्षितः आत्मा अन्तःकरणं यस्य सः, तन्मध्ये तयोः चेट्योः अन्तरे स्थित्वा, चर्चरिकार्धेन चर्चर्याख्यगीतविशेषस्य अर्धं खण्डं गायन् इत्यर्थः, चर्चरी च व्याख्याता पूर्वं ( ८८६ आ. टी. ), नर्नर्ति वारंवारं नृत्यति, क्रियासमभिहारे नृत्यतेः यङ्, " यङोऽचि च । " ( पा. २।४।१४ ) इति तस्य लुक्, ततो लडादौ रूपम् । नर्तनक्रियां विशिनष्टि हास्येति । द्विपद्यादिगीतिविशेषाणां अज्ञानेन परनिष्ठं हास्यं, तज्जन्या च स्वनिष्ठा त्रपा लज्जा, ताभ्यां अभिरामं मनोहरं यथा स्यात्तथा ॥

---

९०३ या नितम्बं ( गो ) यन्नितम्बं ···रः ( प ) । तन्नूनमयं ( गो. का ) [ का. पूर्वार्धमर्तावाशुद्धम् ] ९०४ प्रणनर्त ( गो ) । हास्यत्रपा ( गो ) हास्यत्रया ( प. स्तं ) । चर्चरिकार्धेन ( गो २. का. ) चर्चरिताळेन ( गो. प. स्तं )

धीरोद्धतललितपदैः क्रीडित्वा ते चिराय नरनाथम् ।
प्रद्योतस्य सुतायाः संदेशकमूचतुः समुपगम्य ॥ ९०५ ॥
'आदिशति देव देवी'त्यर्धोक्ते, ते सलज्जमन्योन्यम् ।
अवलोक्य मुखं, 'नहि नहि-विज्ञापयति प्रणम्य विनयेन ॥९०६॥

अत्र रत्नावली–" विदूषकः–भो वयस्य, अहमेतासां वधूपरिजनानां मध्ये नृत्यन् मदनमहोत्सवं मानयिष्यामि । राजा–( सस्मितम् । ) वयस्य, एवं क्रियताम् ॥ विदूषकः–यद्भवान् आज्ञापयति । ( इति उत्थाय चेट्योर्मध्ये नृत्यति । ) भवति मदनिके, भवति चूतलतिके, मामप्येतच्चर्चरिकं शिक्षयतम् । " इत्यादि ॥ एतदनुसारी 'चर्चरिकार्धेन' इति पाठः । 'चर्चरितालेन' इति पाठस्तु अशुद्धः, चर्चरीशब्दस्य दीर्घान्त्यत्वात् । चर्चरीतालस्तु–" विरामान्तद्रुतद्वंद्वान्यष्टौ लघु च चच( र्च )री । " इति संगीतरत्नाकरे ( ५।२६५ ) । 'हास्यत्रयाभिरामं' इति पाठे अशुद्धनर्तनेन प्रेक्षकेषु उत्तमानां स्मितं, मध्यमानां उपहसितं, नीचानां च अपहसितं इति त्रिप्रकारं हास्यं उत्पन्नं इति तेन हास्यत्रयेण अभिरामं इत्यर्थः ॥ ९०४ ॥ ततः ते निर्दिष्टे चेट्यौ, धीरोद्धतललितपदैः यथोचितं धीरैः शास्त्ररीतिमत्यजद्भिः शास्त्रमर्यादानुल्लङ्घकैः, उद्धतैः नृत्ताय उच्चैःकृतैः, ललितैः सार्वांशसुंदरैः च, पदैः पदविक्षेपैः, यद्वा धीरोद्धतैः वीररौद्रभावप्रधानैः, धीरललितैः वीरशृंगारभावप्रधानैः; गानरहितेन नृत्तमात्रेण इति भावः, चिराय दीर्घकालं, क्रीडित्वा नर्तित्वा इत्यर्थः, समुपगम्य राज्ञः समीपं-गत्वा, प्रद्योतस्य कौशाम्ब्यधिपतेः प्रद्योतनामकराज्ञः, सुतायाः दुहितुः, वासवदत्ताख्यायाः उदयनमहिष्याः, संदेशकं वाचिकं अर्थं अल्पां संदिष्टार्थां वाचं, नरनाथं प्रजाधिपं तं उदयनं, ऊचतुः वदतः स्म ॥ तथाहि रत्नावल्यां चूतलतिकोक्तिः–" हंजे मदनिके, चिरं खलु आवाभ्यां क्रीडितम् । तदेहि निवेदयावस्तावद्भर्त्र्याः संदेशं महाराजस्य । " इति ॥ ९०५ ॥ संदेशकथनं प्रारभेते आदिशति इति । आदिशति आज्ञापयति । देव महाराज, " देवेति नृपतिर्वाच्यो भृत्यैः प्रकृतिभिस्तथा " । ( भरतीये ११।१९ ) इत्युक्तेः । देवी पट्टराज्ञी, " देवी कृताभिषेकायां " इति अमरः । इति एवंप्रकारे, अर्धोक्ते वाक्यापरिसमाप्तौ एव, ते उभये, सलज्जं 'आदिशति' इत्यनुचितपदप्रयोगेण जातवैलक्ष्यात् सव्रीडं, तथाहि आदेशः ( आज्ञापनं ) स्वापेक्षया निकृष्टं प्रति भवति, स च वासवदत्तायाः राजानं प्रति अयुक्त इति; अन्योन्यं मुखं अवलोक्य अनुचितं

९०५ परैः ( गो२. का. ) । संदेशमथोचतुः ( गो२. का ) ९०६ 'त्यर्धोक्तवचः सल' ( गो ) 'क्ते सल' ( का )

मकरध्वजस्य पूजां त्वत्पादसरोजसन्निधौ कर्तुम् ।
पृथिवीमण्डलमण्डन समीहते मे मनोवृत्तिः ॥ १०७ ॥
प्रियरतिभोगो मदनो दयितवसन्तो जनस्य मनसि वसन् ।
भावेन भवान् पूज्यो, लोकस्थित्या नु कुसुमशरपाणिः' ॥१०८॥

---

उक्तं इति ज्ञापयितुं परस्परं दृष्ट्वा । दुष्टं उक्तं निषेधतः नहिनहीति, दार्ढ्याय द्विरुक्तिः, 'आदिशति' इति पदं चिरन्तनतथाभ्यासात् वदनात् निर्गतं, न तु विवक्षितं इत्यभिप्रायः । संदेशं संदधतः विज्ञापयतीति । देव, देवी–विज्ञापयति प्रार्थयते, विनयेन नम्रतया, प्रणम्य प्रकर्षेण शिरोनतिपूर्वकं हस्तसंयोजनात्मकं नमनं कृत्वा ॥ १०६ ॥ विज्ञापनामनुवदतः मकरेति । मकरध्वजः कामदेवः, तस्य पूजा, तथा च भविष्यपुराणे–" चैत्रशुक्लत्रयोदश्यां मदनं दमनात्मकम् । कृत्वा संपूज्य विधिवद्वीजयेद्व्यजनेन तु ॥ तत्र संधुक्षितः कामः पुत्रपौत्रविवर्धनः ॥ कामदेवस्त्रयोदश्यां पूजनीयो यथाविधि । रतिप्रीतिसमायुक्तो ह्यशोकमणिभूषितः ॥" इति । ( संधुक्षितः संदीपितः । ) अपि च वसंतमधिकृत्य–" मनोऽधिकं चात्र विलासलास्ये प्रेंखासु दोलासु च सुंदरीणाम् । गीते च गौरीचरितावतंसे, पूजाप्रपञ्चे च मनोभवस्य ॥...यो माधवीमुकुलदृष्टिषु वेणिबंधो यः कोकिलाकलरुतेः कथने च लाभः । पूजाविधिर्दमनकेन च यः स्मरस्य, तस्मिन्मधुः स भगवान्गुरुरंगनानाम् ॥ " ( ११८ ) इति काव्यमीमांसायाम् । ( दमनकः गंधोत्कटः ' डमरो ' इति ' दौंना ' इति वा भाषायां प्रसिद्धः । ) क्वचित् कुमारीभिः अपि मदनपूजा सुरूपं पतिं प्राप्तुं क्रियते, यथोक्तं विद्धशालभंजिकायां ( ३ ) विचक्षणया–" सखि मृगांकावलि, इह वासगृहे मकरध्वजोऽवतरति । तं च दृष्ट्वा कण्ठात्कृष्टेन हारकुसुमदाम्ना त्वयाऽर्चितव्यो, येन ते तादृशः कान्तो भवतीति ॥ " इति । तां त्वत्पादसरोजसन्निधौ महाराजसमक्षमेव इत्यर्थः, कर्तुं संपादयितुं, हे पृथ्वीमंडलमंडन धराभूषण, मंडनेतिपदौचित्येन स्वकर्तृकपूजायाः सकलवसुधालंकारभूतस्य संनिधानेन कोऽपि शोभातिशयो भविष्यतीति किमु वाच्यं इति सूचितम् । मे देव्याः वासवदत्तायाः, मनोवृत्तिः मनसः भावविशेषः, समीहते स्पृहयति ॥ तथाहि रत्नावल्यां–" उभे–(उपसृत्य ।) जयतुजयतु भर्ता । भर्तः, देवी आज्ञापयति–(इत्यर्धोक्ते लज्जां नाटयन्त्यौ) नहिनहि, विज्ञापयति–...एवं देवी विज्ञापयति, अद्य खलु मया मकरंदोद्यानं गत्वा रक्ताशोकपादपतलसंस्थापितस्य भगवतः कुसुमायुधस्य पूजा निर्वर्तितव्या, तत्र आर्यपुत्रेण संनिहितेन भवितव्यम् ॥" इति ॥ १०७ ॥ स्वप्रार्थनां स्वीकारयितुं चाटुगर्भं

---

१०७ समीहते मम ( प. स्तं ) १०८ [ का.पाठः अतीवाशुद्धः ]

**इति दत्त्वा सन्देशं प्रकृतिवयःकालसमुचितं भ्रान्त्वा ।**
**ते मदमदनाविष्टे बभूवतुर्जवनिकान्तरिते ॥ ९०९ ॥**

---

स्वव्याजं विशदयति प्रियेति । ] रतिः प्रीतिः मदनप्रिया च । [ तत्र कामदेवपूजासमये, भावेन चित्तवृत्त्या, अत एव परमार्थेन इति भावः, भवान् देवः प्रियपतिः, एव इत्यनेन अन्ययोगव्यवच्छेदः सूचितः, पूज्यः अर्चनीयः, भविष्यति । तर्हि कामदेवपूजनस्य का गतिः इत्याह लोकेति । लोकस्थित्या लौकिकाचारेण, तु इति तुना पूर्ववैलक्षण्यं उक्तं, कुसुमशरपाणिः कुसुमानि एव शराः ते पाणौ हस्ते यस्य सः कामदेवः, पूज्यो भविष्यति । प्रत्यक्षे बाह्ये वा मदनपूजा, मानसे अंतः वा प्रियपूजनं, मानसपूजा च परमार्थः इति, इति देव्याः अभिप्रायः । तादृशं पूजनं च उभयोः परमसाम्ये सिध्यति इति तत् श्लिष्टविशेषणैः प्रकटीकरोति प्रियेत्यादिभिः । तत्र राजपक्षे—प्रियः रतेः सुरतादेः भोगः सेवनं यस्य सः, तथा रूपातिशयेन स्त्रियः मदयति हर्षयति इति मदनः, दयितः प्रियः सुहृत्त्वात् वसंतः तन्नामा विदूषकः यस्य सः दयितवसंतः, जनस्य लोकानां मनसि चित्ते वसन् दत्तपदः प्रजारक्षणरंजनवात्सल्यादिगुणगणैः लब्धवर्णत्वात् तैः सततं संस्मर्यमाणः इत्यर्थः । कामदेवपक्षे तु—प्रियः इष्टः रतेः तन्नाम्न्याः स्वपत्न्याः भोगः विलासादिः यस्य सः, तथा जनानां मनांसि स्वप्रभावेण मदयति इति मदनः यथार्थनामा, तथा दयितः प्रियः सुहृत् वसंतः तदाख्यः कुसुमलांछनः कालः मधुमाधवमासात्मकः ऋतुः यस्य सः, ऋतोः तस्य कामिनां उद्दीपनाय प्रभूतसामग्रीवत्त्वात् तेन मदनस्य परमसाहाय्यापादकत्वात् तस्य तथात्वं, तथा चोक्तं—"क्व नु ते हृदयंगमः सखा कुसुमायोजितकार्मुको मधुः ।" (कुमार० ४।२४) इति, (मधुः वसंतः ।) जनस्य लोकानां स्त्रीपुरुषात्मकानां, जातावेकवचनं, मनसि वसन् तत्र कृतवसतिः, अत एव 'मनसिशयः' इति तस्यापरं नाम, तथा च हलायुधः—"दर्पकः शूर्पकारातिरनंगो विषमायुधः । आत्मभूर्मनसिशयः पुष्पधन्वा मनोभवः ॥" (१।३३) इति । इयं रत्नावल्याः प्रथमाङ्कविष्कंभके—"विश्रान्तविग्रहकथो रतिमाञ्जनस्य चित्ते वसन् प्रियवसंतक एव साक्षात् । पर्युत्सुको निजमहोत्सवदर्शनाय वत्सेश्वरः कुसुमचाप इवाभ्युपैति ॥" (१।८) इति यौगंधरायणोक्तेः छायारूपा ॥ ९०८ ॥ इति पूर्वोक्तप्रकारेण, देव्याः संदेशं निवेद्य, मदेन प्रकृतिजेन गर्वेण आनंदसंमोहसंभेदेन वा, मदनेन यौवनवसंतादिजनितेन रतिभावेन, आविष्टे आक्रान्ते, ते चेट्यौ, प्रकृतिः स्वभावः नर्महास्याद्यात्मकः, वयः प्रकृते यौवनं, कालः वसंतर्तुः तत्रापि मदनमहोत्सवः, तेषां समुचितं यथा स्या-

---

९०९ वयःसमुचितं (प. स्तं) । तुर्यव॑ (प. स्तं)

अपनीततिरस्करिणी ततोऽभवन्नृपसुता समं चेट्या ।
अविदितरत्नावल्या पूजोचितवस्तुहस्तयाऽनुगता ॥ ९१० ॥
अथ दृष्ट्वा सागरिकां प्रमादितां परिजनस्य निन्दित्वा ।
काञ्चनमालामवदन्नृपमहिषी जातसंक्षोभा ॥ ९११ ॥

तथा, तदनुरूपं इत्यर्थः, भ्रान्त्वा परिक्रमणं कृत्वा सविलासमदर्दर्प रंगं परिक्रम्य इत्यर्थः, जवनिका यवनिका युनोति आवृणोति अनया इति तिरस्करिणी पिधानपटः नेपथ्यं, तया अंतरिते अपवारिते आच्छादिते बभूवतुः, नेपथ्यं प्रविविशतुः इत्यर्थः ॥ ९०९ ॥ उपक्षिप्तस्य कुसुमायुधपूजनस्य सिद्ध्यै दृश्यान्तरं प्रस्तौति अपेति । ततः उक्तप्रसंगानंतरं नृपसुता प्रद्योतदुहिता देवी वासवदत्ता, चेट्या दास्या कांचनमालाख्यया सह, तथा पूजोचितानि पूजासंपादनार्थं उचितानि योग्यानि यानि वस्तूनि कुसुमकुंकुमचंदनधूपदीपादीनि द्रव्याणि स्थालीनिहितानि हस्ते यस्याः तादृश्या, अविदितरत्नावल्या–अविदिता अलक्षिता, देव्या इति शेषः, सा चासौ रत्नावली च तया, अनुगता किंचिदन्तरेण अनुसृता, भर्तृदर्शनात् रक्षिता रत्नावली एव अनुगच्छतीति देव्या अविदितं इति भावः, सा वासवदत्ता, अपनीततिरस्करिणी दूरीकृता पात्राच्छादकजवनिका यया तादृशी अभवत्, अर्थात् उक्तपरिजनसंगता रंगं प्रविवेश ॥ ९१० ॥ अथ अनंतरं, सागरिकां तदपरनाम्नीं रत्नावलीं, स्वसमीपे दृष्ट्वा, सागरिका–सिंहलेश्वरस्य विक्रमबाहोः दुहिता रत्नावलीति ख्याता, सा वत्सराजेन प्रार्थिता तस्मै प्रतिपादयितुं सिंहलेश्वरेण स्वामात्यवसुभूतिना सह प्रेषिता मध्येसमुद्रं यानभंगात् निमग्ना, केनापि कौशांबीयेन वणिजा सागरादुपलब्धा रत्नावलीचिह्नेन तेन अभिज्ञाता यौगंधरायणाय समर्पिता, तेन च वासवदत्ताहस्ते सगौरवं निःक्षिप्ता, समुद्रात् प्राप्तेति सागरिकेति व्यवहृता । तथा च रत्नावल्यां चतुर्थेऽङ्के वासवदत्तोक्तिः–" अमात्य, एषा खलु सागरात्प्राप्तेत्युक्त्वाऽमात्ययौगंधरायणेन मम हस्तं(स्ते) निःक्षिप्ता, अत एव सागरिकेति शब्दायते । " इति । तद्दर्शनेन जातसंक्षोभा संजातचित्तवैक्लव्या, तथाहि रत्नावल्यां–" वासवदत्ता–( निरूप्यात्मगतम् । ) अहो प्रमादः परिजनस्य । यस्यैव दर्शनपथात् प्रयत्नेन रक्ष्यते तस्यैव दृष्टिगोचरं पतिता भवेत् । " इति, नृपमहिषी पट्टराज्ञी " कृताभिषेका महिषी, भट्टिन्य इतराः स्मृताः । " इति हलायुधः, परिजनस्य सेवकवर्गस्य, प्रमादितां अनवधानतां, निंदित्वा तिरस्कृत्य, कांचनमालां तदाख्यां

९१० पूजोदित ( गो. का ) ९११ अथ बुद्ध्वा ( गो. का ) । प्रमादतः ( कः )

'प्रेषय कन्यामेनामवरोधं, त्वं गृहाण कुसुमादि ।
यावन्न भवति विषये वीक्षणयोर्भूमिनाथस्य' ॥ ९१२ ॥
उपगम्य ततश्चेटी तामवदत्त्वं किमर्थमायाता ।
मेधाविनीं विमुच्य, व्रज, तस्मिन्मा विलम्बस्व ॥ ९१३ ॥
विहिते देव्यादेशे मनसीदं संविधाय सा तस्थौ ।
विहगी सुसङ्गताया हस्ते निहिता, मनोभवसपर्याम् ॥ ९१४ ॥

---

प्रधानचेटीं, अवदत् ॥ ९११ ॥ तस्याः अपवार्योक्तमनुवदति प्रेषयेति । एनां अपरोक्षां, कन्यां अनूढां कुमारिकां सागरिकामित्यर्थः, अवरोधं राज्ञः अन्तःपुरं, प्रेषय तत्र गमनाय आज्ञापय । त्वं च तद्धस्तगतं कुसुमादिपूजोपकरणं स्वहस्तधृतं कुरु, यावत्, इयं सागरिका, भूमिनाथस्य नृपस्य, वीक्षणयोः चक्षुषोः, विषये गोचरे, न भवति; आगच्छतः राज्ञः दृष्टिगोचरा इयं न भवेत् तावत् तां शीघ्रं अंतःपुरगतां कुरु इत्यर्थः ॥ मूलनाटिकायां तु स्वमुखेनैव वासवदत्तया सागरिकायाः प्रेषणम्॥ ९१२॥ ततः, चेटी कांचनमाला, उपगम्य सागरिकायाः समीपं गत्वा, तां अभ्यवदत् । किमित्याह–त्वमित्यादि । त्वं सागरिका, मेधाविनी मेधया अतिशायिन्या बुद्धिवृत्त्या युक्ता "अस्मायामेधास्रजो विनिः" ( पा. ५ । २ । १२१ ) इति मत्वर्थे विनिप्रत्ययः,–इति अन्वर्थनाम्नी सारिका तां; सारिका ( 'शारिका' ) च शुकवत् व्यक्तवाक् कापि चटकविशेषस्त्री, शुकांगना इति केचित्, 'मेना' इति भाषायाम् । तां, विमुच्य एकाकिनीं बिडालादिभ्यः अरक्षितां त्यक्त्वा, किमर्थमिति "चतुर्थी" ( पा. २।१।३६ ) इत्यनेन अर्थशब्देन कस्मै इदं ( पठनं ) इत्यर्थे समासः, क्रियाविशेषणत्वाच्च द्वितीया, कं प्रयोजनमुद्दिश्य इत्यर्थः, आयाता इह आगता । तस्मात् व्रज इतो निर्गच्छ इति भावः । तस्मिन् गमने, विलंबं मा कुरु ॥ ९१३॥ युग्मेन सागरिकावृत्तमाह विहितेत्यादिना । देव्याः, आदेशे आज्ञायां विहिते कृते सति, अर्थात् अंतःपुरं प्राप्तुं कतिचित्पदानि गत्वा, सा सागरिका, इदं वक्ष्यमाणं, मनसि संविधाय विचार्य इत्यर्थः, तस्थौ तत्र किंचिद्दूरे अतिष्ठत् । तस्याः विचारं शब्दैर्निरूपयति विहगीति । विहगी पक्षिणी सारिका । सुसंगतायाः तन्नाम्न्याः चेट्याः हस्ते निहिता रक्षणार्थं तस्यै पूर्वं दत्ता एव, अतः देवीप्सितकर्मभंगभयं मे नास्ति इति भावः, अतः, मनोभवसपर्यां कामदेवपूजां, एतत्पदस्य अवलोकयामीति

---

९१२ 'वरोऽन्य त्वं···दिम् (स्तं) ९१३ तामभ्यवदत्किं (गो. का) ९१४ संनिधाय (प. स्तं)। हस्ते दत्ता (गो. का)। मनोभवस्येयम् (स्तं)

अवलोकयामि तावत्तिरोहिता सिन्दुवारविटपेन ।
तातान्तःपुरिकाभिर्यथाऽर्च्यते किं तथैतदुत नेति ॥ ९१५ ॥
पिण्डीकृतमिव रागं हृच्छयमिव लब्धविग्रहोत्कर्षम् ।
समुपेत्य वत्सराजं जगाद सा जयतु देव इति ॥ ९१६ ॥
परिभुक्तमपि नवत्वं शृङ्गारं मदनपर्वणा नीतम् ।
भजमानो भजमानां स्वागतवचसाऽभिनन्द्य तामूचे ॥ ९१७ ॥

---

उत्तरार्यास्थितपदेन अन्वयः ॥ ९१४ ॥ तावत् अवधारणे, सिन्दुवारविटपेन तदाख्यवृक्षेण, तिरोहिता अन्तर्हिता यथा देव्यादिः कोऽपि न पश्येत् तथा, अवलोकयामि पश्यामि । अवलोकनविषयं स्फुटयति तातेति । यथा येन प्रकारेण, तातस्य सिंहलेश्वरस्य, आन्तःपुरिकाभिः अंतःपुरे भवाः आंतःपुरिकाः ताभिः अवरोधस्त्रीजनैः, अर्च्यते पूज्यते, तथा साकल्येन तत्प्रकारेणैव, एतत् अत्रत्यं कामपूजनं, उतशब्दः वितर्के, "उत प्रश्ने वितर्केऽर्थे" इति विश्वलोचनः, न तथा अपरप्रकारेण कैश्चिद्भेदैः वा, इतिशब्दः प्रकारे ॥ तथाहि रत्नावल्यां सागरिकोक्तिः—"( कतिचित्पदानि गत्वा आत्मगतम् । ) सारिका मया पुनः सुसंगतायाः हस्ते समर्पिता । इदमप्यस्ति मे प्रेक्षितुं कौतूहलं, किं यथा तातस्यान्तःपुरे भगवाननंगोऽर्च्यते इहापि तथैव किं अन्यथेति ।" इति ॥ ९१५ ॥ इदानीं देवीवृत्तमाह पिण्डीति । सा वासवदत्ता, वत्सराजं उदयनं, कीदृशमित्युत्प्रेक्षते, पिण्डीकृतं घनीभावं प्रापितं, रागं स्नेहं, इव उत्प्रेक्षायां, अपि च, हृच्छयं सर्वेषां प्राणिनां अवस्थाविशेषे हृदि अंतःकरणे शेते सुखेन वर्तते इति ] हृच्छयः कामः, लब्धः विग्रहस्य शरीरस्य उत्कर्षः सौन्दर्यातिशयः [ शिवेन भस्मीकरणात् पूर्वं वर्तमानात् देहात्, ] येन इति च [ तादृशं, इव उत्प्रेक्षायां, अपूर्वशरीरसौंदर्यशालिनं इति भावः, इदं श्लेषेण वत्सराजस्यापि विशेषणं, तत्र लब्धः विग्रहात् युद्धात् उत्कर्षः अतिशयः येन तं इत्यर्थः, युद्धेषु जयेन कीर्तिमन्तं इति भावः, " संग्रामे विग्रहः ख्यातः कायविस्तारयोरपि ।" इति शाश्वतः, तं, समुपेत्य सम्यक् समीपं गत्वा, जगाद अवदत् । किमित्याह—देवः परमेश्वरः राजा, जयतु सर्वोत्कर्षेण वर्तताम्, इति ॥ ९१६ ॥ ततः राज्ञो वचनमवतारयितुमाह परीति । परिभुक्तं सम्यगन्तर्बहिश्च अनुभूतमपि, ] 'मदनपर्व मदनोत्सववसंतसमयः' [ इति टिप्पणी । मदनपर्वणा मदनमहोत्सवेन

---

९१५ यथोच्यते किं तथेह नो वेति ( प. स्तं ) ९१६ जयति (का) ९१७ शृंगाररसं म ( गो २. का )

'भर्गविलोचनपावकदाहाभ्यधिकां मनोभवो मन्ये ।
प्राप्स्यति तव करसङ्गमसुखविरहसमुत्थितां पीडाम्' ॥ ९१८ ॥
सा मन्मथमभ्यचर्य(भ्यार्चत्?) क्षितिनाथं तदनु साधिकं, तस्याम् ।
परमां मुदं वहन्त्यां विग्रहवन्मदनमनासि कन्यायाम् ॥९१९ ॥

---

चैत्रे मासि शुक्लपक्षे चतुर्दश्यां तिथौ माननीयेन, "पर्व स्यादुत्सवे ग्रंथौ दर्शप्रतिपदोरपि । तत्संधौ विषुवादौ च प्रस्तावे लक्षणान्तरे ॥" इति विश्वलोचनः, नवत्वं अभुक्तपूर्वत्वं, नीतं, शृंगारं शृंगाररसं कामिवृत्तिं, भजमानः सेवमानः, "कालप्रदेशवेषव्यापारस्थितिविशेषघटनाभिः । चिररूढोऽपि हि यूनां नवत्वमुपनीयते रागः ॥" (आ. ६८८) इति अनेनैव कविना पूर्वमुक्तेन न्यायेन अभिनवशृंगारभावुकः इत्यर्थः; भजमानां सेवमानां स्वस्मिन् परमानुरागवतीं इति यावत्, तां वासवदत्तां, स्वागतवचसा 'शोभनं आगतं ते' इति वचः उक्तिः स्वागतवचः तेन, अभिनंद्य तस्याः हर्षमुत्पाद्य, ऊचे अवदत् ॥ 'भजमानो भजमानां' इति अर्थभेदेन शब्दावृत्त्या यमकं शब्दालंकारः ॥ ९१७ ॥ राज्ञः वचनं अनुवदति भर्गेति । मनोभवः कामदेवः, अनेन तस्य अनंगत्वं सूचितं; भर्गः ( पापानि ) भर्जति दहति इति भर्गः शिवः, भर्गः इति समुचितं पदं, तस्य विलोचनस्य विशिष्टस्य तृतीयस्य लोचनस्य नेत्रस्य, पावकः अग्निः, तेन तस्य यः दाहः प्रज्वलनं, तस्मादपि अभ्यधिकां अधिकतरां, पीडां व्यथां तापं, कुत इत्याह करेति—पूजनकाले यः तव करेण हस्तेन कामदेवस्य संगमः संयोगः तस्मात् यत् सुखं आनंदः तस्य विरहेण पूजासमाप्त्युत्तरकालं त्वत्करसंपर्कलाभराहित्येन, समुत्थितां उत्पन्नां, प्राप्स्यति लप्स्यते; इति मन्ये तर्कयामि तत्त्वदृष्टौ एवं स्फुरति इति वा ॥ इयं देवीं प्रति राज्ञः चाटूक्तिः ॥ भर्गनेत्रजन्मनो वह्नेरप्यधिकतया तापकः तस्याः विरहाग्निः इति व्यतिरेकालंकारध्वन्यनुप्राणितः मन्ये इति पदेन उत्प्रेक्षालंकारः । अपि च कामदेवस्य पूजनात् हर्षप्राप्तिः उचिता, प्रकृते तु पीडारूपविरुद्धकार्योत्पत्तिकथनात् विभावनाविशेषध्वनिः, तत्सिद्ध्यै च करसंगमविरहोक्तेः काव्यलिंगमलंकारः ॥ रत्नावल्यां तु मदनपूजासमये प्रकारान्तरेण राज्ञः चाटूक्तिः—"अनंगोऽयमनंगत्वमद्य निंदिष्यति ध्रुवम् । यदनेन न संप्राप्तः पाणिस्पर्शोत्सवस्तव ॥" (१।२२) इति ॥ ९१८ ॥ सेति युग्मम् । सा वासवदत्ता, आदौ देवं कामं अभ्यार्चत् अपूजयत्, तदनु पश्चात्,

---

९१८ शर्वविलो° (प) सर्वविलो (स्तं) । दाहात्यधिकां (गो २. का) । संगति (प. स्तं) ९१९ अथ मन्मथं (प. स्तं) । तदनु समधिकं (प. स्तं) । विग्रहवन्मनसि (गो. का)

शृङ्गाररससमुद्रं सोत्कलिकं निपतिते तथा नृपतौ।
तारमधुरस्फुटार्थं नग्नाचार्यः पपाठ नेपथ्ये ॥ ९२० ॥

क्षितिनाथं राजानं, साधिकं विशेषेण तस्य प्रियपतित्वात्, अभ्यार्चत्। अत्र उपलब्धकोशेषु 'अभ्यर्च्य' इति पाठे सत्यपि तस्य क्लिष्टान्वयतया 'अभ्यार्चत्' इति पाठः स्यादिति तथा व्याख्यातम्। यद्वा यथास्थितपाठे क्षितिनाथमिति पदमनु 'अभ्यार्चत्' इत्यध्याहर्तव्यम्। इदं सर्वं दृष्ट्वा, तस्यां पूर्वनिर्दिष्टायां प्रसिद्धायां, विग्रहवन्मदनमनसि कन्यायां—कुसुमावचयव्यापृतया सागरिकया देवीकृतं कामदेवमूर्तिपूजनं न दृष्टं, पश्चाच्च राज्ञ एव पूजनं दृष्टं, तेन सुरूपे उदयने एव तस्याः शरीरिणः कामदेवस्य बुद्धिः जाता, तदेतदुक्तं विग्रहवन्मदनमनसि; कन्यायां अनूढायां सागरिकायां, परमां सातिशयां, तथात्वे च हेतुः विग्रहेत्यादि, मुदं प्रियलाभनिमित्तं हर्षं, वहन्त्यां सत्यां, मोदावस्थां अनुभवन्त्यां इत्यर्थः।] 'विग्रहवन्मनसि [इति पाठे] रोषाक्रांतचेतसि' [इति टिप्पणी अशुद्धा, विग्रहवान् शरीरी मदनः कामदेवः अयं इति मनः बुद्धिः यस्याः तस्यां, इति मध्यमपदलोपी समासः, तथाऽर्थश्च; तथाहि कामदेवस्य पूजनमदृष्ट्वा उदयनस्यैव पूजनदर्शनात्, तस्य च लोकोत्तरसौन्दर्यात्, तया उदयनः सशरीरकामदेवत्वेन गृहीतः इति भावः। तथा च नाटिकायां सागरिकोक्तिः—"कथं प्रेक्षित एवापूर्वः कुसुमायुधः। अस्माकं तातस्यान्तःपुरे चित्रगतोऽर्च्यते, इह प्रत्यक्षीकृतः, तदहमप्येभिः कुसुमैरिह स्थित्वैव भगवंतं कुसुमायुधं पूजयिष्ये।" इति ॥ ९१९ ॥ तथा नृपतौ उदयने, सोत्कलिकं उत्कलिकया उत्कण्ठया सहितं यथा स्यात्तथा इति क्रियाविशेषणस्य 'निपतिते' इत्यनेनान्वयः, श्लेषे विशेषणं च, उत्कलिकाभिः कल्लोलैः सहितं, "भवेदुत्कलिका हेलोत्कण्ठासलिलवीचिषु।" इति विश्वलोचनः, शृंगाररस एव समुद्रः सागरः, तं, अत्यंतसंयोगे द्वितीया, तस्मिन्नित्यर्थः, नितरां पतिते सति, राज्ञि अत्यंतं उत्कण्ठिते सति इति भावः। नग्नाचार्यः नग्नानां बन्दिनां आचार्यः वैतालिकः, नेपथ्ये जवनिकान्तरे वेषपरिग्रहस्थले, "नेपथ्यं स्याज्जवनिका रंगभूमिप्रसाधनम्।" इति अजयः, तारमधुरस्फुटार्थ—तारं उच्चैः, मधुरं श्रुतिसुखकरं, स्फुटार्थं सुव्यक्तार्थकं च यथा स्यात् तथा, पपाठ। तारेत्यादि—क्रियाविशेषणेन पाठस्य सौष्ठवं सूचितं, तदुक्तं—"पंचस्थानसमुद्भववर्णेषु यथास्वरूपनिष्पत्तिः। अर्थवशेन च विरतिः सर्वस्वमिदं हि पाठस्य॥" (काव्यमीमांसा १।७) इति ॥ ९२० ॥

'नयनानन्दमखण्डितमण्डलमभिराममभृतरश्मिमिव ।
सायन्तन आस्थाने क्षितिपतयः सन्त्युदयनं द्रष्टुम्' ॥ ९२१ ॥

वैतालिकपाठः नयनेति । सायंतने सायंकालीने समये सायंकाले, "सायं चिरं०" (पा. ४। ३।२३ ) इत्यादिना ट्युप्रत्ययः तुडागमश्च । अमृतरश्मि अमृतवत् तृप्तिदायकाः रश्मयः किरणाः यस्य सः चंद्रः, मध्यमपदलोपी समासः लुप्तोपमा च, यद्वा नास्ति मृतं मरणं यस्मात्तदमृतं तदेव रश्मयो यस्य सः, तं इव, उदयनं त्वां, त्वां इति वक्तव्ये उदयनं इति बहुमानेन ताटस्थ्येन उक्तिः, श्लिष्टविशेषणैः औपम्यं समर्थयति नयनेत्यादिभिः । नयने आनंदयति इति नयनानंदः तं नेत्रानंदजनकं, चंद्रपक्षे सौम्य-शीतलत्वशुभ्रत्वादिगुणैः, राजपक्षे प्रजापरिपालकत्वात्; अखण्डितमण्डलं अखण्डितं संपूर्णं शुक्लचतुर्दशीतिथित्वात् मंडलं बिम्बं यस्य तं; राजपक्षे–मंडलशब्देन प्रकृतिमंडलं लक्षितं, न तु द्वादशराजकादिकं, प्रकृतिमंडले तु–"पुरोधाश्च प्रतिनिधिः प्रधानः सचिवस्तथा । मंत्री च प्राड्विवाकश्च पंडितश्च सुमंत्रकः । अमात्यो दूत इत्येता राज्ञः प्रकृतयो दश ॥" (शुक्रनीतौ २।६९–७०) इति तदात्मकं मंडलं संपूर्णं यस्य तं; कामंदकीयनीतिसारस्य उपाध्यायनिरपेक्षाख्यायां टीकायां तु–"सप्तप्रकृतिकं राज्यं मंडलमित्यभिधीयते । ताश्च सप्तापि प्रकृतयः स्वस्वगुणसंपदुपेता यदा भवंति तदा संपूर्णं मण्डलमुच्यते ॥" इति, ताः प्रकृतयश्च "स्वाम्यमात्यश्च राष्ट्रं च दुर्गं कोशो बलं सुहृत् । परस्परोपकारीदं सप्तांगं राज्यमुच्यते ॥" (४।१) इति कामंदकीये । अभिरामं सुंदरं, इदं उभयसाधारणं; तथा च कामंदकीयनीतिसारे–"रोचते सर्व-भूतेभ्यः शशीवाखंडमंडलः । संपूर्णमंडलस्तस्माद्विजिगीषुः सदा भवेत् ॥" (८।२) इति । द्रष्टुं तस्य दर्शनं कर्तुं अर्थात् प्रणामादिभिः सत्कर्तुं, तथा च सायंकाले पूर्ण-चंद्रोदयः सहर्षं लोकैः आनन्दो भवतीति दृश्यते इति, तथा प्रातः सायं च स्वामी भृत्यादिभिः प्रणामादिभिः सेव्य इति शिष्टाचारः प्रायः राजकुलेषु इति, क्षितिपतयः राजानः, उदयनस्य चक्रवर्तित्वात् तेऽपि; आस्थाने "आस्थानं नृपतेः सभा" इति हलायुधः, लक्षणया सभामंडपे; संति मिलिता वर्तन्ते ॥ अनया प्रगीतिकया वैता-लिकेन संध्याकालः समुपस्थितः इति, दर्शनसमुत्सुकानां राज्ञां तोषाय तेन शीघ्रं अपगं-तव्यं इति च सूचितम् ॥ अत्र श्लेषानुविद्धः उपमालंकारः । अपि च अत्र चंद्रमिव उदयनं उदयनमिव च चंद्रं द्रष्टुं इति परिस्फूर्तेः उभयोः उपमेयत्वे उपमानत्वे च उपमेयोपमाध्वनिः । तथा उदयनं इति पदं चंद्रेऽपि योजयितुं शक्यं, तत्र उत् ऊर्ध्वं

९२१ °तयस्तस्थुरुद° (प. स्तं)

उच्चारितेऽन्यनाम्नि त्रिदशपतौ तत्क्षणाच्च्युतपदायाम्।
उत्पन्नविस्मयरतिर्निदधे नरभर्तुरात्मजा हृदये ॥ ९२२ ॥
अयमुदयनः स राजा तातः सत्कृत्य मां ददौ यस्मै।
हन्त परप्रेषणमपि न निष्फलं साम्प्रतं जातम् ॥ ९२३ ॥

---

अयनं गमनं यस्य तं उदयमानं इत्यर्थः, यद्वा उत् उत्कर्षेण ऊर्ध्वं वा अयते गच्छ-ति इति, " नन्दि० "(पा.३।१।१३४) इति नंद्यादित्वात् कर्तरि ल्युः, नन्दयतीति नंदन इतिवत् ॥ रत्नावल्यां नेपथ्ये वैतालिकपाठः एवं–" अस्तापास्तसमस्तभासि नभसः पारं प्रयाते रवावास्थानीं समये समं नृपजनः सायंतने संपतन्। संप्रत्येत्र सरोरुहद्युतिमुषः पादांस्तवासेवितुं प्रीत्युत्कर्षकृतो दृशामुदयनस्येन्दोरिवोद्वीक्षते ॥ " ( १।२३ ) इति ॥ ९२१ ॥ एतच्छ्रवणेन सागरिकायाः भावमाह उच्चारिते इति। च्युतानि निर्गतानि पदानि शब्दाः यस्यां तस्यां वैतालिकपठितायां, आर्यायां इति शेषः, त्रिदशपतिः इन्द्रः अतिशयोक्त्या उदयनः तथात्वेन उक्तः, यद्वा त्रिदशानां देवानां पतौ यज्ञदानादिकर्मभिः आहुत्यादिदानादिना पालके इति वा, तस्मिन्, मदन इति मदननामापेक्षया अन्यनाम्नि उदयन इति तदभिधाने, उच्चारिते कथिते सति, तत्क्षणात् उदयनेतिनामश्रवणक्षणे एव, नरभर्तुः राज्ञः सिंहलेश्वरस्य, आत्मजा तनुजा दुहिता, उत्पन्नौ विस्मयः–यः कामदेव इति पूर्वं गृहीतः स तु परमार्थतः उदयनः इति ज्ञानेन विस्मयः, रतिः–स्नेहभावः च ( तत्कारणं अग्रिमार्यायां वक्ष्यति, ) यस्याः सा, हृदये निदधे एवं वक्ष्यमाणं विचारयामास इत्यर्थः। यद्वा ' च्युतपदायाम्' इति पाठो भवेत्, तां च सा हृदये निदधे इत्यन्वयः तत्र ॥ ९२२ ॥ तस्याः विचारस्य स्वरूपमाह अयमिति। अयं पुरोवर्ती, उदयनः वैतालिकनिर्दिष्टः, सः राजा यस्मै, तातः स्वपिता सिंहलेश्वरः विक्रमबाहुः, सत्कृत्य सन्मानपूर्वकं, तत्प्रार्थनां स्वीकृत्य इति भावः, ददौ उद्वाहार्थं वाग्दानं कृतवान्। इदं वैतालिकवाक्यान्तर्गतोदयननाम्ना निश्चितम्। हंत हर्षे, " हंत हर्षे विषादे च वाक्यारंभानुकंपयोः। " इति शाश्वतः, परस्य अन्यस्य, प्रेषणं दासकर्म, अपि, सांप्रतं अधुना, " युक्तार्थमधुनार्थं च सांप्रतं संप्रयुज्यते। " इति शाश्वतः, निष्फलं फलहीनं वृथा न जातं, इष्टलाभात् इत्यभिप्रायः। यद्वा न निष्फलं अपि तु सांप्रतं युक्तार्थं जातं, इत्यपि योजयितुं शक्यम्। दास्यकर्मणः दोषवत्त्वेऽपि प्रियप्राप्तिरूपगुणकथनात् लेशालंकारः ॥

---

९२२ तेथ ना° (प. रत्नं)। तत्क्षणं व्यपेतायाम् (रत्नं)। विस्मयपरा मानं दधे (का) °यमतिर्नि (प. रत्नं) ९२३ यस्मिन् (गो. का)। परप्रेक्षण (प) ( अस्याः पूर्वार्धे प. पुस्तके त्रुटिः )

**यावन्न वेत्ति कश्चित्तावदितस्त्वरितमेव निर्यामि ।**
**इति कथमपि नायकतो हृत्वा दृशमुत्ससर्ज रङ्गभुवम् ॥९२४॥**
**'कन्दर्पमहमहोत्सवहृतहृदयैर्नावधारितोऽस्माभिः ।**
**संध्यातिक्रमकालः पश्य त्वं प्रियवयस्यक तथाहि ॥ ९२५ ॥**

---

अत्र रत्नावल्यां–" सागरिका–( श्रुत्वा सहर्षं परिवृत्य राजानं दृष्ट्वा सस्पृहम् । ) कथमयं स राजा उदयनः यस्मै अहं तातेन दत्ता । तत् परप्रेषणकृशितमपि मे शरीरं एतस्य दर्शनेन इदानीं बहुमतं संवृत्तम् । " इति ॥ ९२३ ॥ यावदित्यादि । देवीनिदेशमुल्लंघ्य एतावंतं कालं अत्रैव विटपान्तरिता स्थिता इति कोऽपि न जानीयात् तथा अंतःपुरं शीघ्रं अलक्षिता प्रवेक्ष्यामि इत्यर्थः । इतिशब्दः हेतौ, एवं विचार्य इति भावः । कथमपि यत्नेन कष्टेन, नायकतः उदयनतः, दृशं हृत्वा लग्नं चक्षुः अपकृष्य, रंगभुवं "रंगो नृत्ये रणे रागे " इति धरणिः, रंगाय नृत्याय या भूः सा रंगभूः तां नाट्यस्थलं, उत्ससर्ज तत्याज, नेपथ्यं प्रविष्टा इत्यर्थः ॥ ९२४ ॥ तदनंतरं विशेषकेण राज्ञः उक्तिः कंदर्पेत्यादिना । कंदर्पमहः मदनोत्सवइतिनामा यः महोत्सवः महान् उत्सवः " उत्सूते हर्षमित्येष उत्सवः परिकीर्तितः । " इति हर्षोल्लासकरः कृत्यविशेषः, तेन हृतं आकृष्टं व्यापारान्तरेभ्यः हृदयं अंतःकरणं येषां तैः, वसंतोत्सवप्रेक्षणमदनपूजादिसक्तचेतोभिः अस्माभिः, संध्यातिक्रमकालः संध्याकालमर्यादोल्लंघनं, सायंसंध्याकालस्तु–अहोरात्रसंध्यात्मकः, द्विनाडिकामितः, आदित्यादर्धास्तमितादारभ्य यावत् तारकाः नभसि न परिस्फुटाः तावत् सायंसंध्या, न अवधारितः न लक्षितः विकालः संवृत्तः इति; यत् राज्ञां सायंकृत्यं-राजसभां आस्थाय मांडलिकामात्यादिसेवकप्रजामुख्यपुरुषादीनां प्रणामादिस्वीकरणं यत् वैतालिकोक्तौ–" नृपजनः सायंतने संपतन्' 'पादांस्तवासेवितुं " ( रत्नावल्यां १।२३ ) इत्यनेन सूचितं, ततश्च अवश्यविहितसंध्यावंदनकालः यदाक्रमणेन राज्ञः धर्मापराधभीतिः, तया च तस्य धर्मपरायणत्वं सूचितम् । हे प्रियवयस्यक प्रियसुहृत्, त्वं पश्य अवलोकय । तथाहि इति अवयवसमुदायः विवरणोपक्रमे । अत्र रत्नावल्यां उदयनोक्तिः–" कथमुत्सवापहृतचेतोभिरस्माभिः संध्यातिक्रमोऽपि नोपलक्षितः । देवि, पश्य । " इति ॥९२५॥

---

९२४ °कतः कृष्ट्वा (प. दृशं) ( प. पुस्तके चरमदलपृष्ठभागो नष्टः ) ९२५ ( अत्रापि प. पृष्ठं भग्नं ) [ प. पुस्तकस्य ९२२–९२५ श्लोकमयं पत्रं अर्धमेव, तेन तत्र त्रुटिः । ]

"उद्यनगान्तरितमियं प्राची सूचयति दिङ् निशानाथम्।
परिपाण्डुना मुखेन प्रियमिव हृदयस्थितं रमणी" ॥ ९२६॥
देवि त्वन्मुखपद्मं पद्मान् विदधाति पश्य विच्छायान्।
अलयोऽपि लज्जिता इव शनैःशनैस्तदुदरेषु लीयन्ते ॥' ९२७॥

---

संध्यासमयवर्णनाय रत्नावलीस्थामेव आर्यां (१।२४) कविः उद्गृह्णाति उदयनेति। इयं प्राची पूर्वा, दिक् दिशा, परिपांडुना मुखेन—तत्रैव चंद्रोदयस्य नियतत्वात् अचिरमुदेष्यचंद्रज्योत्स्नया शुभ्रेण दिशः ऊर्ध्वभागेन, उदयनगान्तरितं उदयनगः उदयाचलः तेन अंतरितं आच्छादितं पिहितं, निशानाथं निशायाः रात्र्याः नाथं पतिं चंद्रं, सूचयति उदयचंद्रास्तित्वं प्रकाशयति, इव उपमायां यथा, रमणी अंगना, प्रकृते उचितत्वात् विरहिणी, परिपांडुना सर्वतः म्लानेन विच्छायेन 'पारदरससिक्तकांचनच्छायेन' (विद्धशा० २।१६), मुखेन वदनेन, हृदयस्थितं विरहात् अदृश्यं चित्तनिहितं, प्रियं वल्लभं, सूचयति अनुमापयति। तथाहि मुखस्य परिपांडुत्वं प्रियविरहद्योतकं, यथाह क्षेमेन्द्रः—"आपांडुता मदनकीर्तिसखी मुखेंदौ प्रौढिं बिभर्ति विरहे हरिणायताक्ष्याः। अच्छिन्नबाष्पविसरारुणनेत्रकोणलीनप्रतापमिव मन्मथमुद्वहंत्याः ॥" (चतुर्वर्गसंग्रहे ३।१५) इति। तथा विद्धशालभंजिकानाटिकायामपि— "दरदलितहरिद्राग्रन्थिगौरे शरीरे स्फुरति विरहजन्मा कोऽप्ययं पाण्डुभावः।" (३।१७) इति। अत्र उपमालंकारः। अपि च यथा रमणी परिपांडुना मुखेन गर्भिणी इति ज्ञायते एवं प्राची दिक् अपि स्वीयपरिपांडुमुखेन चंद्रं गर्भस्थं सूचयति इत्यपि अत्र परिस्फुरति, यथोक्तं यादवाभ्युदयकाव्ये (२।५०)—"निशाकरेण प्रतिपन्नसत्त्वा निःक्षिप्तदेहेव पयोधितल्पे। जगत्समीक्ष्या जहती च कार्श्यं प्राची दिशा पाण्डरतामयासीत् ॥" इति। प्राचीनैस्तु उदयन् चंद्र एव पांडुना कामिनीगण्डेन उपमितः, तथा च—"ततः कुमुदनाथेन कामिनीगंडपांडुना। नेत्रानंदेन चंद्रेण माहेन्द्री दिगलंकृता ॥" (महाभारते द्रोणपर्वणि अ. १८४।४६) इति, तथा "ततोऽरुणपरिस्पंदमंदीकृतवपुः शशी। दध्रे कामपरिक्षामकामिनीगंडपांडुताम् ॥" इति ॥ 'उदयतटान्तरितं' इति पाठे उदयाख्यगिरेः तटेन वप्रेण इत्यर्थः ॥ ९२६ ॥ देव्याः चाटुद्वारा पुनरपि संध्याकालं वर्णयति देवीति। देवि इति महिषीसंबुद्धौ, यदाह भरतः—"देवीति महिषी वाच्या राज्ञा परिजनेन तु।" (१७।८६) इति। पश्य। तव

---

९२६ उदयतटान्त (प. स्तं)

**एवमभिधाय चित्रैश्चरणन्यासैः परिक्रमं कृत्वा ।**
**नैष्क्रामिक्या ध्रुवया विनिर्ययौ नायकोऽपि सह सर्वैः ॥९२८॥**

मुखमेव पद्मं कमलं, रूपकं, एकमपि सत् अन्यान् सजातीयान्, पद्मान् कमलानि, "पद्मोऽस्त्री पद्मनालेऽब्जे व्यूहसंख्यान्तरे निधौ । पद्मके नागभेदे ना, पद्मा भार्ङ्गीश्रियोः स्त्रियाम् ॥" इति विश्वलोचनः, विच्छायान् अस्तमितशोभान् कान्तिहीनान्, "छाया सूर्यप्रिया कान्तिः प्रतिबिंबमनातपः ।" इत्यमरः, विदधाति करोति । उपमालंकारः, "तस्य मुष्णाति सौभाग्यं तस्य कांतिं विलुंपति...शब्दाः सादृश्यसूचकाः ।" (काव्यादर्शे २।६३–६५) इत्युक्तेः । अनेन तस्याः मुखस्य व्यतिरेकः ध्वनितः । अपि च संध्याकाले कमलानां म्लानत्वं प्रकृतिजं तथापि तत्कारणत्वेन देवीमुखपद्मस्य कल्पितत्वात् संबंधातिशयोक्तिरलंकारश्च । अलयोऽपि भ्रमराश्च, शनैःशनैः वीप्सायां (आधिक्ये) द्वित्वं, अतिमंदं इत्यर्थः, तेषां कमलानां, उदरेषु मध्यभागेषु, लीयंते अदृश्या भवंति कमलानां मुकुलीभवनेन, तदुत्प्रेक्षते, लज्जिता इव, कस्मात् इत्याकांक्षायां तु रत्नावल्यनुसरणे तत्र उक्तं "श्रुत्वा ते परिवारवारवनितागीतानि" (१।२५) इति पूरणीयम् । इयं रत्नावलिस्थायाः उदयनोक्तेः अनुवादः । सा च–"देवि, त्वन्मुखपंकजेन शशिनः शोभातिरस्कारिणा पद्म्याब्जानि विनिर्जितानि सहसा गच्छन्ति विच्छायताम् । श्रुत्वा ते परिवारवारवनितागीतानि भृंगांगना लीयंते मुकुलान्तरेषु शनकैः संजातलज्जा इव ॥" (१।२५) इति ॥ अन्येऽपि तिरस्कृताः पराजिता वा विच्छाया भवंति, स्वमुखानि दर्शयितुं अशक्ताः क्वापि लीनाश्च भवंति इति समासोक्तिः ॥ अत्रेदमवधेयं–यत् मूले भ्रमराणां लयने हेतुत्वेन लज्जा उत्प्रेक्षिता, परंतु लज्जाकारणं नोक्तं, यथा रत्नावल्यां उक्तम् । तत्रेयं अभिसंधिः–"किं पद्ममन्तर्भ्रान्तालि किं ते लोलेक्षणं मुखम् ।" (काव्यादर्शे २।२६) इति संशयोपमोदाहरणवत् देव्याः सेक्षणं मुखं अत्र पद्मत्वेन अभिप्रेतं, तत्र पूर्वार्धेन मुखेन केवलं पद्मानां तिरस्कारं उक्त्वा तत्रत्यलोलेक्षणैः पद्ममध्यमकरंदलोलुपानां अलीनां पराजयः उत्तरार्धे प्रकटीकृत इति सर्वं समंजसम् ॥ ९२७ ॥ प्रकृतं रत्नावलीनाटिकायाः प्रथमांकस्य नाट्यं उपसंहरति एवमिति । एवं पूर्वोक्तप्रकारेण, अभिधाय संध्यासमयं वर्णयित्वा, चित्रैः चरणन्यासैः परिक्रम्य द्विपदिकाद्युचितचारीभिः रंगभूमौ भ्रमणं कृत्वा, सर्वैः देवीविदूषकादिभिः पात्रैः सह, नायकोऽपि राजा उदयनोऽपि, नैष्क्रामिक्या ध्रुवया तस्यां नेपथ्ये गीयमानायां इत्यर्थः, तथा चोक्तं

९२८ निष्कामन्पादुकया विनिं (का) [अशुद्धः पाठः] । सह सचिवैः (प. स्तं) [न्यूनार्थकः पाठः]

अङ्के जातसमाप्तौ गीतातोद्यध्वनौ च विश्रान्ते ।
प्रेक्षणकगुणग्रहणं नृपसूनुः प्रववृते कर्तुम् ॥ ९२९ ॥
"नाट्यप्रयोगतत्त्वे मतयो न विशन्ति मादृशां प्रायः ।
वाहनयानपदातिग्रामादिककार्यदत्तहृदयानाम् ॥ ९३० ॥

---

भरतेन—"प्रवेशाक्षेपनिष्क्रामप्रासादिकमथान्तरम् । गानं पंचविधं ज्ञेयं ध्रुवायोगसमन्वितम् ॥" ( ३२।३२१ ) इति, तत्र नैष्क्रामिकी ध्रुवा तु—"अंकान्ते निष्क्रमणे पात्राणां गीयते प्रयोगेषु । निष्क्रामोपगतगुणं विद्यान्नैष्क्रामिकीं तां तु ॥" (३२।३१९) इति । "उद्युक्तजनानां निष्क्रामसूचनात् नैष्क्रामिकी । निःष्क्रामः प्रयोजनमस्या इति नैष्क्रामिकी । 'प्रयोजनम्' (पा.५।१।१०९) इति ठक् ।" इति प्रबोधचंद्रोदयचंद्रिकायाम् । विनिर्ययौ रंगभूमिं उत्ससर्ज निष्कान्त इत्यर्थः, इदं अंकसमाप्तिं सूचयति, तदुक्तं—"तेषामन्तेऽस्य निर्गमः ।" ( दशरूपके ३।४१)इति । ( तेषां पात्राणां, अस्य अंकस्य । ) ध्रुवा नाम गीतांगानि, ताश्च नानाविधाः, तदुक्तं भरतेन—"या ऋचः पाणिका गाथा सप्तरूपांगमेव च । सप्तरूपप्रमाणं च तद्ध्रुवेत्यभिसंज्ञितम् ॥" ( १२।२ ) इति, तथा "वाक्यवर्णा ह्यलंकारा यतयः पाणयो लयाः । ध्रुवमन्योन्य-संबद्धा यस्मात्तस्माद्ध्रुवाः स्मृताः ॥" ( १२।८ ) इति ॥ ९२८ ॥ नाट्यवर्णनान्ते पुनः मंजर्युपाख्यानं अनुसंदधाति अंके इति । अंकः नाटकपरिच्छेदः, अंकलक्षणमाह—"अंक इति रूढिशब्दो भावैश्च रसैश्च चिह्न( 'रोह' )यत्यर्थान् । नानाविधानयुक्तो यस्मात्तस्माद्भवेदंकः ॥ यत्रार्थस्य समाप्तिर्यत्र च बीजस्य भवति संहारः । किंचिदवलग्नबिन्दुः सोऽङ्क इति सदाऽवगन्तव्यः ॥'''एकदिवसप्रवृत्तं कार्यं त्वंकेऽथ बीजमधिकृत्य ।'''रंगं तु ये प्रविष्टाः सर्वेषां भवति तत्र निष्क्रान्तिः ॥" ( १८।१४–१५–२२–२४ ) इति भरतः । तस्मिन् लक्षणया तन्नाम्ये, जातसमाप्तौ समाप्तिं गते, अतः गीतस्य गानस्य, तत्सहकारिणां आतोद्यानां वीणामुरजादिवाद्यानां च, ध्वनौ शब्दे, विश्रान्ते तूष्णींभावं प्राप्ते, नृपसूनुः समरभटः, प्रेक्षणकस्य नाट्यस्य, गुणानां भावितानां भावाभिनयसंगीतादीनां गुणानां, ग्रहणं कर्तुं बुद्धया निर्देशं कर्तुं, प्रववृते उद्युक्तोऽभूत् ॥ ९२९ ॥ इतः ९४७ आर्यां यावत् तदुक्तं अनुवदति नाट्येति । नाट्यस्य नायकाद्यवस्थानुकरणस्य, नाट्यं तु—"अवस्था या तु लोकस्य सुखदुःखसमुद्भवा । तदीयानुकृतिः प्राज्ञैर्नाट्यमित्यभिधीयते ॥" इति लक्षितं तस्य प्रयोगः भूमिकाभिनयादिना कुशीलवैः प्रदर्शनं तस्य, तत्त्वे याथात्म्ये याथार्थ्ये वास्तविकत्वे, प्रायः बाहुल्येन,

---

९३० प्रयोजनक (त.?) त्वे (प) प्रयोजकत्वे (स्तं) । वाहनजयनपं (प.स्तं)

आस्ते लिखितो ग्रामो गृहाण तं सत्प्रदेशबहुभूमिम् ।
वासय तत्रावासं भवसि ततष्ठक्कुरो दिवसैः ॥ ९३१ ॥
'कृतजीवनसंस्थो हि त्वमपि किमर्थं करोषि विज्ञप्तिम् ।
अर्पय वा यदि नेच्छसि कुरु स्थितिं हस्तदानेन ॥ ९३२॥

---

वाहनेत्यादिविशिष्टानां मादृशां मत्सदृशानां पुरुषाणां, मतयः धियः, न प्रविशंति मादृशाः नाट्यतत्त्वं अवधारयितुं अशक्ताः इति विनयगर्भा उक्तिः । वाहनेति हेतुगर्भं विशेषणं, वाहनानि वाह्यते अनेन इति वाहनं अश्वहस्त्यादि तानि, यानानि याति अनेन इति यानं रथशिबिकादि तानि, पदातयः पादस्था एव योद्धारः 'पाला' 'सिपाही' इति वा भाषायां ख्याताः, पदातिः--पादाभ्यामेव अतति गच्छति इत्यर्थे, अतते· "पादे च"(उणा० ४।१३२) इति इण्प्रत्यये वृद्धौ "पादस्य पदाज्यातिगोपहतेषु।" (पा.६।३।५२) इति पादस्य पद्भावे योगरूढोऽयम् । ग्रामाः खेटकाः, ग्रामश्च–"भवेत्क्रोशात्मको ग्रामो रूप्यकर्षसहस्रकः ।" इति लक्षितः (शुक्रनीतौ १।१९३ ), ( क्रोशमानं तु मतभेदैः भिन्नं तत्रैव द्रष्टव्यं, ) तानि आदौ येषां, तादृशेषु कार्येषु दत्तं हृदयं व्यापृतं मनो येषां तादृशानाम् । तथाहि राज्ञा आवश्यकैः ग्रामादिसाधनावेक्षणादिविषयान्तरैः ग्रस्तचित्तत्वात् संगीतादिललितकलाविज्ञानं न सम्यक् प्राप्यते, अतोऽहं अस्य नाट्यप्रयोगस्य गुणान् यथार्थतया ग्रहीतुं वक्तुं तदनुरूपं पारितोषिकं च निर्धार्य दातुं अशक्तः इति भावः ॥ ९३० ॥ राजधर्मत्वात् संतोषप्रकाशाय दानेन तं संमानयति आस्ते इति । अस्मिन् लेख्यपत्रे तुभ्यं दातव्यत्वेन, ग्रामः, लिखितः लेखेन निर्दिष्टो वर्तते । एतद्बलेन तं ग्रामं, कीदृशं, सन् शोभनः प्रदेशः देशः, बह्वी आयामादिभिः विस्तृता च भूमिः पृथ्वी यस्य तम् । इदं दानपत्रस्य दानशासनस्य वा अर्पणम् । तत्र तस्य रुचिं उत्पादयति वासयेति । तत्र तस्मिन् ग्रामे च, तव आवासं निवासस्थानं गृहं वासय, तत्रैव स्वीयैः सह निवस इत्यर्थः । ततः दिवसैः गते कस्मिंश्चित् काले, ] ठक्कुरः श्रेष्ठः, [ वस्तुतः ठक्कुरः इति भूमिमतां मानपदं 'ठाकोर' इति 'टागोर' इति वा भाषायां प्रसिद्धं, भवसि भविष्यसि, "वर्तमानसामीप्ये वर्तमानवद्वा" (पा. ३।३।१३१ ) इति भविष्यति लट् ॥ ९३१॥ एतत्प्रसंगेन स्वस्य शीघ्रं फलदातृत्वं उद्दिश्य अन्येभ्यः सेव्येभ्यः स्वोत्कर्षं सूचयन् वाक्प्रपंचैकसाराणां स्वामिनां

---

९३१ तां सत्प्र° (प. स्तं) [ का.पाठः बहुलदोषः ] ९३२ [ इतः ९४२ अंकश्लोकपर्यन्तपाठस्य द्वित्रिपत्राणि प. पुस्तके १८४ पत्रांकमारभ्य त्रुटितानि ] । °संस्थोऽपि त्वमपि ( स्तं ) । हस्तदाप्ये (प्ये ?)न (स्तं)

न च पत्तयो न सप्तिर्न च पोष्यजनस्तथाप्यसन्तुष्टः ।
लभमानेऽपि सदाऽयं चिरन्तनत्वाभिमानेन ॥ ९३३ ॥
विज्ञप्तिकोन्मुखत्वं दूरत एवावधारितं भवतः ।
तूष्णीं क्रियतामस्माच्छ्रोष्यसि कार्यं प्रतीहारात् ॥ ९३४ ॥

---

सेवकान् प्रति नानाप्रकाराः मिथ्यासान्त्वनादियुक्ताः उक्तीः अनुवदति कृतेत्यादिभिः सप्तभिः । हे वेतनवृद्ध्यभिलाषिन् सेवक, कृता जीवनस्य वृत्तेः संस्था व्यवस्था यस्य तादृशोऽपि त्वं किमर्थं विज्ञप्तिं वेतनादिवृद्धये प्रार्थनां, करोषि । मया वेतनवृद्धिर्न कार्या इति भावः । यदि नेच्छसि एवं सति यदि सेवां कर्तुं इच्छा नास्ति, तदा अर्पय भृत्यत्वं त्यज इत्यर्थः । सोत्प्रासं वदति कुरु इति । ततश्च मत्सेवासुखं परित्यज्य, ] हस्तदानेन करार्पणेन [ 'मजुरी' इति भाषायां प्रसिद्धेन, स्थितिं कुरु स्वजीवननिर्वाहं अवलंबस्व ॥ ९३२ ॥ उच्चश्रेणिं कंचित्सेवकं वेतनवृद्धिं प्रार्थयन्तं उद्दिश्य निकटस्थान् अन्यानाह नेति । अस्य न पत्तयः पदातयः 'सिपाही' इति भाषायां व्यवहृताः, विद्यंते, न च सप्तिः अश्वः, नापि पोष्यः भरणीयः जनः स्त्रीपुत्रादिः विद्यते, इदं सर्वं सोत्प्रासमुक्तं; तथापि अयं सेवकः, लभमाने वस्त्रवेतनादौ मत्तः प्राप्यमाणे वस्तुनि, सदा सर्वदा, असंतुष्टः न अलंबुद्धिः, अधिकाधिकवाञ्छः लोभी सः इति भावः । तत्र कारणमाह चिरंतनेति, चिरकालीनोऽहं भृत्यः इति अभिमानेन अहंकारेण आग्रहेण वा । अनुचितोऽस्य वेतनवृद्ध्यभिलाष इति भावः । 'लभमानोऽपि स दायं' इति पाठे स ] दायं दानं [ प्रीतिदानं इति यावत्, चिरंतनत्वाभिमानेन मत्सकाशात् प्राप्नुवानोऽपि इत्यर्थः ॥ यद्वा 'लभमानोऽपि सहायं' इति मूलपाठः स्यात्, स च सरलार्थकः ॥ ९३३ ॥ अन्यः सेव्यः अन्यं सेवकं वदति विज्ञप्तीति । भवतः तव, विज्ञप्तिकोन्मुखत्वं वेतनवृद्धये विजिज्ञापयिषा, दूरत एव त्वां आगच्छन्तं दूरे एव दृष्ट्वा, अवधारितं मया निश्चितम् । अतः तूष्णीं क्रियतां ते वक्तव्यं मया अनुमानेन ज्ञातमेव ततः तद्विषये मूको भव, अपि च यत् कार्यं मया आज्ञापनीयं त्वया च निर्वर्तनीयं कर्म तत्, अस्मात् प्रतीहारात् "द्वारि द्वाःस्थे प्रतीहारः" इति विश्वलोचनः, ( 'प्रतिहारः' इत्यपि क्वचित् रूपं, ) तस्मात् द्वारपालात्, त्वं श्रोष्यसि आकर्णयिष्यसि । मूकः सन् आज्ञप्तं कार्यं इदानीं कुरु,

---

९३३ °पत्तयो न च पतिर्न च पोष्यजनस्तथापि संतुष्टः (स्तं) । लभमानेऽपि (का) लभमानोऽपि सदाऽयं (स्तं) ९३४ °मस्मान् श्रोष्यसि (स्तं)

यूयं कुटुम्बमध्ये, क्व गम्यते, गोत्रपुत्रसामान्यम् ।
आदाय संविभागं स्वगृह इव स्थीयतां यथासौख्यम् ॥ ९३५ ॥
अभ्यन्तरव्ययार्थं न विलब्धो यो मया महोद्रङ्गः ।
तत्रापि तेऽनुबन्धो नो जाने किं करोमीति ॥ ९३६ ॥
प्रथमतरमेव कल्पितमनल्पफलजीवनं प्रदेशस्थम् ।
अद्यापि ते न जातं, नियोगिनां पश्य मन्थरताम्' ॥ ९३७ ॥

---

वेतनादिसंबद्धः विचारः अग्रे भविष्यति इति भावः ॥ ९३४ ॥ अन्यः अपरं वात्सल्यप्रदर्शनेन सान्त्वयति यूयमिति । यूयमिति आदरार्थे बहुवचनं, कुटुंबमध्ये भ्रातृपुत्रादिवर्गः कुटुंबः तस्य मध्ये, अर्थात् कुटुंबिवत् गण्यध्वे । अतः क्व गम्यते मत्सेवां परित्यज्य अन्यत्र क्व सेवार्थं युष्माभिः गम्यते, कुटुंबिजनवत् अत्रैव स्थातुं योग्यमिति भावः । गोत्रं कुलं वंशः पौत्रप्रभृति अपत्यं, पुत्राश्च तैः सामान्यं साधारणं, संविभागं द्रव्यांशं, आदाय ग्रहीत्वा, अत्रैव स्वगृहे इव इदं स्वीयं गृहमेव इति गणयित्वा, यथासौख्यं सुखस्य भावः सौख्यं तदनतिक्रम्य यथासौख्यं सुखेन इत्यर्थः, युष्माभिः स्थीयतां नैव गम्यताम् ।] 'गोत्रपुत्रसामान्याः' [इति पाठे] गृहस्थाः [ इति टिप्पणी, यथा सगोत्राः पुत्राश्च एकस्मिन् एव गृहे वर्तंते तद्वत् इत्यर्थः । एवं स्वामी सान्त्वयति न तु किंचित् ददातीति भावः ॥९३५॥ अन्यः अन्यं अनुचितलोभव्याजेन उपालभते अभ्यन्तरेति । अभ्यंतरव्ययार्थं गृहव्ययार्थं ( अभ्यंतरव्ययः 'खानगी खरच' इति भाषायां व्यवहृतः, ) अपि, यः महोद्रंगः महान् चासौ उद्रंगश्च, उद्रंगस्तु नगरीविशेषः, " कर्वटादधमो द्रंगः पत्तनादुत्तमश्च सः । उद्रंगश्च निवेशश्च स एव द्रंग इत्यपि ॥ " इति वाचस्पतिकोशात् उद्धरणं अभिधानचिंतामणिटीकायाम् । पत्तनं पंचाशद्ग्रामात्मकं, कर्वटं च चतुःशतग्रामपरिमितम् । लक्षणया तस्मात् आयः, न मया विलब्धः न मया उपयुज्यते अपितु आपत्तिसंग्रहरूपेण संरक्ष्यते, तादृशे द्रव्येऽपि ते अनुबंधः यदि अन्यस्मात् उत्पन्नात् दातुं न शक्यते तदा तस्मात् अपि अपवादतया दीयतां इति वारंवारं याचनम् । एवं स्थिते, किं करोमि कथं कस्मात् तुभ्यं दातव्यं, इतिशब्दः प्रकारे, नो जाने निर्णेतुं न पारयामि । अतः न किंचिदपि अधिकं दास्ये इति भावः ॥ ९३६ ॥ अपरः अकृतकिंचनः मिथ्यावचनः सेवकस्य फलालाभे राज्याधिकारिषु

---

९३५ सामान्याः ( गो. का ) भागं गृहेएव ( गो. का ) ९३६ [ इतः ९५० अंकश्लोकपर्यन्तं का. मूलपुस्तकयोः अशुद्धिबहुलत्वात् का. पाठोऽपि तादृश एव ]। न लब्धो....महाद्रंगः (स्तं) ९३७ वियोगिनां (गो. का) । मत्सरिताम् (स्तं)

एवम्प्रायैरनुदिनलाभोदयमोहकारिभिर्वचनैः ।
फलशून्यैरनुजीवी प्रतारितः कः कियत्कालम् ॥ ९३८ ॥
एतद्विषये नैपुणमत्र तु भूमीभुजां समाश्रित्य ।
मुखरतया कथयामो जडमिव सामांजिकोचितं किञ्चित् ॥ ९३९ ॥

---

दोषं आरोपयति प्रथमेति । प्रदेशस्थं भूम्यादिदेशगतं, अनल्पफलजीवनं बहुद्रव्यलभवती वृत्तिः, प्रथमतरं एव तव याचनात् पूर्वमेव, तव कल्पितं मया शासनलेखादिना निर्वृत्तं, तथापि तव वचनात् इदानीं जाने यत्, अद्यापि एतत्क्षणपर्यन्तं, ते तव, न जातं हस्तगतं स्वात्मीकृतं वा न अभूत् । तत्र कारणं स्वयमेव सूचयति नियोगिनां इति । नियोगिनां विनियोगिनां " अनेनेदं तु कर्तव्यं विनियोगः प्रकीर्तितः ।" इति नियोगः प्रेरणं, सः अस्यास्तीति नियोगी, तेषां दूतक–शासनलेखक–मुद्रापरिपंथकाद्यधिकारिणां, मन्थरतां मंदकार्यकरणतां कार्ये विलंबशीलत्वं, पश्य अवलोकय । राजकीयव्यवहारदोष एव अत्र अपराध्यति इति भावः ॥ ९३७ ॥ प्रस्तुतान् कुसेव्यवचनप्रकारान् उपसंहरति एवमिति । एवंप्रायैः उक्तप्रकारप्रचुरैः, अनुदिनं दिनेदिने अनुदिनं प्रतिदिवसं इत्यर्थः, लाभः द्रव्याधिगमः, उदयः उच्चपदाधिगमः, तयोः विषये मोहकारिभिः विपर्ययमत्युत्पादकैः फलशून्यैः लाभादिप्राप्तिवंचितैः, वचनैः वाक्यैः, कः प्रश्ने, अनुजीवी सेवकः दासः, कियत्कालं कियंतं कालं अभिव्याप्य, प्रतारितः वंचितः, भवेत्, काक्वा एतादृशैः फलदर्शकैः अपि तच्छून्यैः वचनाभासैः सेवकानां दीर्घकालं प्रतारणं असंभाव्यं इति भावः ॥ एतदुपन्यासेन नाट्यदर्शनात् संतुष्टेन स्वेन तत्कालमेव ग्रामशासनं प्रदत्तं इति स्वस्य सुस्वामित्वं सूचितम् ॥ ९३८ ॥ प्रक्रान्तं ( आ. ९३० ) नाट्यगुणग्रहणं पुनः अनुसंदधानः तदवतारयति एतदिति । अत्र प्रकृते, तुः पूर्वगतविषयवर्णनभेदे, एतद्विषये नाट्यविषये, भूमिभुजां राज्ञां नैपुणं लक्ष्यलक्षणादिपरिशीलनात् व्युत्पत्तिमत्त्वं लोकप्रसिद्धं समाश्रित्य अवलंब्य, सामाजिकोचितं नाट्यं दृष्ट्वा सामाजिकैः तद्गुणदोषकीर्तनं कार्यं इति कृत्वा, यत् सामाजिकस्य सभासदः प्रेक्षकस्य उचितं योग्यं तत् इत्यर्थः, मुखरतया वावदूकतया, न तु तद्रहस्यवित्तया इति भावः, जडमिव मौर्ख्यविशिष्टमिव, किंचित् अल्पं, कथयामः

---

९३८ 'दिनलोभोदय' (स्तं) ९३९ एतद्विषमं ( गो२. का )। भूमीभृतां (गो२. का)। समाश्त्य (स्तं)। कथ(थ ?)यामस्तथापि सामा० (स्तं)

सप्ताश्रयः षडात्मा शारीरस्त्रिःप्रमाणपरिमाणः ।
सत्त्वाधिक्याज्ज्येष्ठो व्यस्तसमस्तैस्त्रिभिर्विनिष्पाद्यः ॥ ९४० ॥
स(सु?) कुमाराविद्धक्रिय उपरञ्जकरञ्जितो विविधवृत्तिः ।
आदेयहेयमध्यैर्भावैः संपादितः प्रयोगोऽयम् ॥ ९४१ ॥

---

निरूपयामः ॥ ९३९॥ तदेव नाट्यगुणनिरूपणं सप्तेत्यादिभिः सप्तभिराह । तत्र सप्तेति युग्मेन दृष्टप्रयोगस्य सामान्यतः प्रशंसा । अयं प्रयोगः नाट्यस्य, यः अत्र दृष्टः सः, सप्ताश्रयः–षड्जादिसप्तस्वराणां तदुक्तं "श्रुतिभ्यः स्युः स्वराः षड्जर्षभगांधारमध्यमाः । पंचमो धैवतश्चाथ निषाद इति सप्त ते ॥" इति (संगीतरत्नाकरे १।२४), तेषां आश्रयः निवासस्थानं, यद्वा मार्गसंगीतयुक्तं–तदुक्तं "स्वरा ग्रामास्तथा जातिवर्धमानादिगीतकं । आलापादिक्रियाबद्धं सप्त मार्ग इति स्मृतः ॥" इति । तथा षडात्मा सुस्वरादिप्रधानः, तथा चोक्तं–"सुस्वरं सरसं चैव सरागं मधुराक्षरम् । सालंकारप्रधानं च षड्विधं गीतलक्षणम् ॥" इति । तथा शारीरः प्रयोगस्य गाननृत्यप्रधानत्वात् उभयोश्च शरीराधीनत्वात् तन्निर्वर्त्यत्वात् शारीरः, यद्वा गीतहेतुतया प्रसिद्धेन शारीरेण संपन्नः, शारीरं च–"रागाभिव्यक्तिशक्तत्वमनभ्यासेऽपि यद्ध्वनेः । तच्छारीरमिति प्रोक्तं शरीरेण सहोद्भवात् ॥" इति (संगीतरत्नाकरे ३।८०)। तथा त्रिप्रमाणपरिमाणः यथोक्तं भरतेन–"लोको वेदस्तथाऽध्यात्मं प्रमाणं त्रिविधं स्मृतम् । लोकाध्यात्मपदार्थेषु प्रायो नाट्यं व्यवस्थितम् ।" (२५।१२३) इति । तथा सत्त्वाधिक्यात् ज्येष्ठः–वाद्यप्रयोगे च सत्त्वाधिक्यात्, सत्त्वं च "लयतालवर्णपदयतिगीत्यक्षरवादकं भवेत् सत्त्वम् ।" इत्युक्तं तस्य प्राधान्यात्, ज्येष्ठः उत्तमः । तथा त्रिभिः व्यस्तसमस्तैः त्रयाणां समा–स्रोतोवहा–गोपुच्छा–इति नामभिः ख्यातानां लयत्रयाणां आसारप्रसारविधिभिः विनिष्पाद्यः संपाद्यः ॥ ९४० ॥ अपि च, स(सु?)कुमाराविद्धक्रियः सुकुमारं यथा स्यात्तथा नाम कोमलतया आविद्धाः ओतप्रोताः गानवाद्यनृत्याभिनयादिक्रियाः यत्र, अर्थात् अनुद्धतः । तथा उपरंजकरंजितः गमकालप्त्यादियोगैः संयुक्तः । तथा विविधा वृत्तयो यत्र तादृशः, तदुक्तं–"नाटके वृत्तयः प्रोक्ताश्चतस्रो नाट्यवेदिभिः । भारती कैशिकी चैव सात्वत्यारभटी तथा ॥" इति, तथा "भारती शब्दवृत्तिः स्याद्रसे रौद्रे च युज्यते । शृंगारे कैशिकी, वीरे सात्वत्यारभटी पुनः ॥" इति । तथा आदेयहेयमध्यैः भावैः–आदौ आदेयाः पश्चात्

---

९४० शारीरस्त्रितोऽप्रमाणपरिमाणः (स्तं)। सत्त्वाधिक्यो ज्येष्ठो (स्तं) ९४१ विविधनृत्यः (स्तं)। ¹हेयमत्यैर्भावैः (गो. का ) हेयमध्ये (गो २.)। संपादितप्रयोगोऽयम् (स्तं)

गम्भीरमधुरशब्दं परिबृंहितगीतविविधभङ्गयुतम् ।
दर्शयतो वैचित्र्यं न भ्रष्टो वादकस्य लयकालः ॥ ९४२ ॥

---

हेयाः त्याज्याः तथा मध्याः आदेयहेयकालयोः मध्ये वर्तमानाः अर्थात् व्यभिचारिणः ये भावाः भावयंति व्याप्नुवन्ति सामाजिकानां मनः इति ते धृत्यादयः त्रयस्त्रिंशत् चित्तवृत्तिविशेषाः, उक्तं च काव्यानुशासनवृत्तौ–" स्थायिरूपचित्तवृत्तिसूत्रस्यूता एवामी स्वात्मानमुदयास्तमयवैचित्र्यशतसहस्रधर्माणं प्रतिलभमानाः स्थायिनं विचित्रयंतः प्रतिभासंते । " इति, " एते च स्थित्युदयप्रशमसंधिशबलत्वधर्माणः । " इति च, तैः संपादितः सम्यक् निर्वर्तितः, वर्तते इति शेषः । तथा चोक्तं भरतेन–" रसा भावास्त्वभिनया धर्मी वृत्तिप्रवृत्तयः । सिद्धिः स्वरास्तथाऽऽतोद्यं गानं रंगस्य संग्रहः ॥ " ( ६।१० ) इति ।–अत्रेदं प्रतिभाति–यत् नाट्यप्रयोगः अत्र काव्यपुरुषवत् समासोक्त्या पुरुषत्वेन कल्पितः । तथाहि–तत्पक्षे पुरुषः जीवात्माऽपि सप्ताश्रयः सप्तानां रसादिधातूनां स्थूलदेहद्वारा आश्रयः, तथा च " रसो रुधिरमांसे च मेदो मज्जाऽस्थिरेतसी । धातवः सप्तवैते स्युः स्थूलदेहसमाश्रयाः ॥ " इति वेदांत-सिद्धांतादर्शे । तथा " कोशाः पंच समाख्यातास्छादकत्वान्निजात्मनः । अन्नं प्राणो मनो बुद्धिरानंदश्चेति तन्मयाः ॥ " इति अन्नमयादिपंचकोशविशिष्टः मनःसहितानि इन्द्रियाणि षडूर्मयः वा आत्मानः यस्य स तथाभूतः षडात्मा । शारीरः शरीरे भवः जीवः । तथा त्रिप्रमाणानि प्रत्यक्षानुमानशब्दात्मकानि परिमाणं प्रमापकं यस्य सः । तथा सत्त्वरजस्तमोगुणेषु यत्र सत्त्वगुणस्य आधिक्यं सः तत्कारणात् ज्येष्ठः उत्तमः गण्यते । तथा त्रिभिः स्थूलसूक्ष्मकारणशरीरैः समस्तैः समष्ट्यात्मकः विराड्हिरण्यगर्भेशाख्यः तैरेव व्यस्तैश्च व्यष्ट्यात्मकः प्राज्ञतैजसविश्वाख्यः, विनिष्पाद्यः वेदान्त–शास्त्रैः ( ९४० ) । तथा सुकुमारेण भूतदयादिना इति भावः, आविद्धाः युक्ताः क्रियाः जपयागादिकाः यस्य सः । उपरंजकैः रमणीयदर्शनभोगादिभिः रंजितः प्रसन्नतां नीतः । विविधाः कामक्रोधहर्षशोकादिरूपा वृत्तयः चित्तविकाराः यस्य सः । केचित् भावाः पदार्थाः आदेयाः अनुकूलत्वात् ग्रहणीयाः, केचित् हेयाः प्रतिकूलत्वात् त्याज्याः, तथा केचन मध्याः औदासीन्येन प्रेक्ष्याः, तादृशैः भावैः संपादितः संगमितः । एतादृशः प्रयोगः प्रकर्षेण योगः संसारेण यस्य तादृशः, अयं पुरुषः जीवात्मा ॥ ९४१ ॥ प्रयोगसहकारिषु वाद्यवादकं प्रशंसति गंभीरेति । वादकस्य मुरजादिवाद्यवादकस्य, वादने वैचित्र्यं विस्मयजनकं

---

९४२ परिरक्षित (स्तं. गो २) । विविधभंग (गो २. का)। दर्शयितुं (स्तं)। लयतालः (स्तं)

अपरित्यक्तस्थानकरसकाकुव्यञ्जितस्फुटार्थपदम् ।
अभिरामाविश्रान्तं पठितं निरवद्यमखिलभाषासु ॥ ९४३ ॥
नियमितदीपनगमनं द्रुतमध्यविलम्बितालययुक्तम् ।
रसवत्स्वरोपपन्नं कृतसाम्यं साधु गातृभिर्गीतम् ॥ ९४४ ॥

---

दर्शयतः; तद्वैचित्र्यं विशेषणाभ्यां निरूपयति गंभीरेति, गंभीरः मंद्रः, तथाल्पेऽपि मधुरः कलः च शब्दः वाद्यजः यत्र तादृशं, तथा परिबृंहिताः कुशलतया वर्धिताः गीतानां विविधाः किंचिद्भेदभिन्नानां नानाप्रकाराः भंगाः परम्पराः तैः युतं संयुक्तम्। लयकालः न भ्रष्टः लयेषु न स्खलितम् । तेन च तालभंगो न जातः इति सूचितम् । लयकालस्तु—"तालान्तरालवर्ती यः स कालो लय उच्यते । त्रिविधः स च विज्ञेयो द्रुतो मध्यो विलम्बितः ॥" इति ॥ ९४२ ॥ नाट्यप्रयोगस्य अंगभूतं पाठं अपि प्रशंसति अपरित्यक्तेति । स्थानानि उरःकंठशिरांसि अपरित्यक्तानि यत्र तत्, अर्थात् स्थानप्राप्त्या मन्द्रमध्यतारव्यवस्थां दधानं, स्वराणां क्षत्याधिक्यदोषरहितं इति यावत् । काकुव्यंजितानि स्फुटाः अर्थाः स्फुटानि पदानि च यत्र तत् काकुव्यञ्जितस्फुटार्थपदं, काका व्यंजितानि काकुव्यंजितानि; काकुः च व्याख्याता पूर्वं (८०४आ. टी.), अपि च काकुः "अभिप्रायवान् पाठधर्मः ।" इति काव्यमीमांसायां, तथा "कामं विवृणुते काकुरर्थान्तरमतन्द्रिता । स्फुटीकरोति तु सतां भावाभिनयचातुरीम् ॥" इति तस्याः फलमपि तत्रोक्तम् । स्फुटाः निःसंदिग्धाः, अर्थाः वक्तव्याः, स्फुटानि स्थानप्रयत्नविशुद्धानि, पदानि सुप्तिङन्तादीनि । तथा अभिरामं सुंदरं, अविश्रान्तं स्खलनरहितं च अभिरामाविश्रान्तम् । निरवद्यं दोषरहितम्, अखिलभाषासु नाटके प्रयुक्तासु संस्कृतप्राकृताद्यासु, पठितं पाठः । केचित्तु एवं पंच पाठगुणान् मन्वंते—"अदर्शितविच्छेदं पठतां ओजः, विच्छिद्य पदानि पठतां प्रसादः, आरोहावरोहतरंगिणि पाठे माधुर्यं, ससौष्ठवमेव स्थानं पठतां औदार्यं, अनुच्चनीचं पठतां साम्यं" इति । पाठं अधिकृत्य उक्तं काव्यमीमांसायां—"यथा जन्मान्तराभ्यासात् कण्ठे कस्यापि रक्तता । तथैव पाठसौन्दर्यं नैकजन्मविनिर्मितम् ॥" इति, ( रक्तता रंजकमाधुर्यम् । ) तथा "ललितं काकुसमन्वितमुज्ज्वलमर्थवशकृतपरिच्छेदम् । श्रुतिसुखविविक्तवर्णं कवयः पाठं प्रशंसन्ति ॥" इति च ( १।७ ) । काकुकलनायाः पाठप्रतिष्ठायाश्च विस्तरः तत्रैव द्रष्टव्यः ॥ ९४३ ॥ क्रमप्राप्तां गातॄणां प्रशंसां करोति नियमितेति ।

---

९४३ खिलभावबुंदम् (का) निरवद्यभाषासु (गो २. का) ९४४ गमन (प. स्तं)। तानलय (गो. का) तालयुक्तम् (गो २) । साधु गात्रिभिः (प. स्तं)

प्रकृतिविशेषावस्थाप्रतिपादकवेषरचनसामग्र्या ।
अनुकरणमभ्यतीतं सिद्धिद्वयसंपदा धाराम् ॥ ९४५ ॥

---

गातृभिः गायनैः गायकैः, साधु सुष्ठुतया दोषरहितत्वेन, गीतं गानप्रयोगः कृतः, कीदृशं तत्प्रकृतं गीतं इत्याह नियमितेत्यादि । नियमितं मानेन स्थापितं, दीपनं नाम त्रिस्थानशोभित्वं वर्धमानस्वरत्वं च, यद्वा अलंकारादिभिः शोभापादनं; तथा गमनं स्वराणां आरोहावरोहादिभिः प्रवर्तनं यत्र तादृशम्; अनेन गातारः ग्रहमोक्षविचक्षणा इति सूचितम् । तथा द्रुतमध्यविलम्बिताख्याः ये त्रिविधाः चञ्चत्पुटादितालानां लयाः तैः युक्तं, लयश्च—"तालान्तरालवर्ती यः स कालो लय उच्यते ।" इत्युक्तः; अनेन गातारो न वितालाः अपि तु तालज्ञाः इति सूचितम् । तथा रसवत् आनंदोत्पादकगुणयुक्तम्; अनेन गातारो न विरसाः इति सूचितम् । स्वरोपपन्नं तत्तद्रागेषु विहितैः स्वरैः उपपन्नं शुद्धं स्वरक्षत्यादिहीनं इति यावत्; अनेन ते न अपस्वराः इति सूचितम्; यद्वा भरतेन शृंगारादौ स्वरविशेषा उक्ताः तै उपपन्नं युक्तं, ते च यथा—"हास्यशृंगारयोः स्वरितोदात्तत्वं, वीररौद्राद्भुतेषूदात्तस्वरितं, करुणबीभत्सभयानकेष्वनुदात्तस्वरितमुत्पादयेत् ।" इति ( सा. द. टीकायां रामचरणतर्कवागीशेनोद्धृतम् । ) यद्वा—"हास्यशृंगारयोः कार्यौ स्वरौ मध्यमपंचमौ । षड्जर्षभौ तु कर्तव्यौ वीररौद्राद्भुतेष्वथ ॥ निषादवान् सगांधारः करुणे संविधीयते । धैवतश्चापि कर्तव्यो बीभत्से सभयानके ॥" ( नाट्यशास्त्रे १७।१००—१०१ ) इति । तथा कृतसाम्यं रागविशेषेषु लक्ष्यलक्षणयोः विरोधे स्वरान्तराणां गुंफेन संपादिताविरोधम्; अनेन गातारः चतुरा इति सूचितम् ॥ ९४४॥ क्रमात् अवस्थानुकृतिरूपं नाट्यमपि प्रशंसति प्रकृतीति । प्रकृतिविशेषाः स्वभावविशेषाः यथा राजविदूषकादीनां नायिकाप्रतिनायिकादीनां च भिन्नाः, अवस्थाः यथा कामकृताः अभिलाषादयः दश; तासां प्रतिपादकानि दर्शनमात्रेण गमकानि प्रत्यायकानि, यानि वेषरचनानि नेपथ्यनिर्वर्तनानि, "भूमिका रचनायां स्याद्वेशान्तरपरिग्रहे ।" इति मेदिन्युक्तेः, वेषरचनयोः उभयोः ग्रहणं पुष्पमालावत् वेषस्य उत्कर्षप्रतीत्यर्थं, यद्वा 'वेषवचनसामग्र्या' इति पाठः भवेत्, तेषां सामग्र्या सामस्त्येन नटत्वबुद्धेः आच्छादिकया सामग्र्या इति भावः, हेतौ तृतीया;

---

९४५ अनुकरणे ह्यभिनीत्य(तं ?) सिद्धिद्वयसंपदां(दा ?) मनो दूरम् (प) अनुकरणे ह्यभिनीता सिद्धिद्वयसम्पदा मनो दूरम् (स्तं) अभिनयकरणे नीता सिद्धिद्वयसंपदा वारम् (गो २. का)

**भरतसुतैरुपदिष्टं क्षितिपतिनहुषावरोधनारीणाम् ।**
**मन्ये ता अपि नाट्ये शोभासंदोहमीदृशं नापुः ॥ ९४६ ॥**

---

तया या सिद्धिद्वयसंपत् आंगिकादिचतुर्विधाभिनये षडलंकारविशिष्टे विवर्जितपाठ्यघात-स्थाने पाठ्ये च या सिद्धिः अदोषा सगुणा सालंकारा निष्पत्तिः सा सिद्धिद्वयं तस्य संपदा श्रिया, च इति अध्याहर्तव्यं, अनुकरणं नाट्यं, "अवस्थानुकृतिर्नाट्यं"(१।७) इति दशरूपके, धारां स्तुतिं, "धारा पंक्तौ द्रवद्रव्यस्रवेऽश्वगतिपंचके ।···भृंगारादेश्च नालायां, धाराऽभ्यासे नुतावपि ।···" इति विश्वलोचनः, अभ्यतीतं अतिक्रम्य वर्तते, दृष्टनाट्यगुणगणस्य प्रशंसनं कर्तुं अस्माभिः अशक्यं इत्यर्थः ॥ 'अनुकरणे ह्यभिनीता(तं?) सिद्धिद्वयसंपदा मनो दूरम् ।' इति स्तं.पुस्तके उत्तरार्धस्य पाठः, तत्र अनुकरणे अस्माकं प्रेक्षकाणां मनः चेतोवृत्तिः दूरं अत्यर्थं, अभिनीतं हृतं इत्यर्थः, अन्यत् समानम् ॥ ९४५ ॥ नाट्यप्रशंसां उपसंहरति भरतेति । भरतसुतैः कोहला-दिभिः ( ८२ आ. टी. ), क्षितिपतेः पृथ्वीनाथस्य नहुषस्य तदाख्यस्य चंद्रवंशी-यराजस्य, अवरोधनारीणां अन्तःपुरसुंदरीणां, उपदिष्टं शिक्षितं, इदं नाट्यं इति शेषः । तथाहि—नहुषः कदाचित् पराक्रमेण पुण्येन च स्वर्गराज्यं प्राप्नोत्, तत्र च नाट्यं अपश्यत् । तेन तत् पृथिव्यामपि स्वनगरे द्रष्टुं तस्य अभिलाषोऽभूत् । तेन देवाः प्रार्थिताः । तैः प्रेरितः स स्वाभिलाषं पूरयितुं आचार्यं भरतं व्यजिज्ञपत् । तेन तदंगीकृत्य स्वपुत्रादयः पृथिव्यां अवतारिताः । तैश्च तत् नाट्यं नहुषान्तःपुरनारीणां शिक्षितम् । ततश्च भूलोके नाट्यावतारोऽभूत् इति कथा । अस्याः विस्तरः भरतीये नाट्यशास्त्रे अंतिमे सप्तत्रिंशेऽध्याये द्रष्टव्यः । उक्तं च तत्र—"···नहुषो नाम पार्थिवः (१) । प्राप्तं वा ( प्राप्तवान् ? ) देवराज्यं हि नयबुद्धिपराक्रमैः (२)।···कृतांजलिः प्रयोगार्थी प्रोक्तवान् स सुरान्नृपः । (४) । ···प्रोक्तवांस्तु ततो मां तु नृपतिः स कृतांजलिः ॥(७)॥ इदमिच्छामि भगवन्नद्य मु( न्नाट्यम् )र्व्यां प्रवर्तितम् ।··· (८।) सुताश्चाहूय संप्रोक्ताः···गम्यतां सहितैर्भूमिं प्रयोक्तुं नाट्यमेव हि ।···ततश्च वसुधां गत्वा नहुषस्य गृहे द्विजाः । स्त्रीणां प्रयोगं बहुधा बुद्धिवंतो यथाक्रमम् ।" इत्यादि । ताः नहुषस्त्रियः, अपिना नाट्याचार्यभरतपुत्रशिष्या अपि इति सूच्यते, नाट्ये अनुकार्यवेषावस्थाद्यनुकरणात्मकनटकर्मणि, ईदृशं यथाऽस्मिन्प्रयोगे मया दृष्टं, शोभायाः कान्तेः, संदोहं समुच्चयं, नाट्यस्य नानाविधानि अंगानि ( ९४२–९४५ आर्यासु उक्तानि ) उद्दिश्य संदोहं इत्युक्तिः, न आपुः इति मन्ये । भरतपुत्रशिष्याभ्योऽप्ये-

---

९४६ क्षितिपतिजनुषा॰ (गो. का) क्षि·· नघुषा (प) । वाचे (प) [ लेखकभ्रमात् पाठः ]

सुश्लिष्टसन्धिबन्धं सत्पात्रसुवर्णयोजितं सुतराम्।
निपुणपरीक्षकदृष्टं राजति रत्नावलीरत्नम् ॥" ९४७ ॥
एवंविधगुणकथनप्रसङ्गिनि विभावितात्मनृपतनये।
पठति स्मार्यमन्यः स्मृतिविषयमुपागतां प्रसङ्गेन ॥ ९४८ ॥

तासां नाट्यप्रयोगे उत्कर्षः इति व्यतिरेकः अनया द्योतितः ॥ ९४६ ॥ प्रकृतप्रयोगभित्तिभूतायाः चक्रवर्तिश्रीहर्षप्रणीतायाः रत्नावलीनाटिकायाः प्रशंसनेन स्वोक्तिमुपसंहरति सुश्लिष्टेति। रत्नावलीरत्नं रत्नावल्याख्या नाटिका एव रत्नं मणिः, कीदृशं तत् इति सुश्लिष्टेत्यादिभिः त्रिभिः श्लिष्टविशेषणैः विशिनष्टि। सुश्लिष्टः सुघटितः संधीनां मुखादिनाट्यांगविशेषाणां बंधः योजनं यत्र तत्, तथा च नाटके मुख–प्रतिमुख-गर्भ-विमर्श( 'अवमर्श' )-निर्वहण( 'संहृति' )–नाम्न्यः वस्तुप्रपंचिकाः चतुःत्रष्टयंगात्मिकाः पंच संधयः वर्तन्ते, संधिसामान्यलक्षणं तु–"अन्तरैकार्थसंबंधः सन्धिरेकान्वये सति।" (१।२३) इति दशरूपके, तत्र नाटकबीजस्य मुखसंधौ उत्पत्तिः, प्रतिमुखे दृष्टनष्टमिव तस्योद्धाटनं, गर्भे उद्भेदः, अवमर्शे गर्भनिर्भेदः, निर्वहणे च तस्य समानयनम्। विशेषस्तु दशरूपकादौ द्रष्टव्यः। रत्नावल्यां च प्रथमांके मुखसंधिः, द्वितीयांके प्रतिमुखसंधिः, तृतीयांके गर्भसंधिः, चतुर्थे च विमर्शनिर्वहणसंधिद्वयं, इति ज्ञेयं, यथा च इमाः पंच सांगाः रत्नावल्यां तथा विविच्य दर्शितं दशरूपके प्रभाख्यरत्नावलीटीकायां च इति तत्र अवलोकनीयम्। रत्नपक्षे सुश्लिष्टः घनः संधीनां त्रसरेणुसंयोगानां बंधः घटितत्वं यस्य तत्। तथा शोभनानि पात्राणि अनुकार्याणि उदयनवासवदत्तारत्नावलीयौगंधरायणादीनि, सुवर्णानि शोभनानि अक्षराणि पदवाक्यगतानि च, तैः योजितं संपादितं; रत्नपक्षे सत्पात्रेण उत्तमकारुकेण सुवर्णेन हेम्ना योजितं संघटितम्। तथा निपुणैः पदवाक्यरसादिविद्भिः इति भावः, परीक्षकैः सदसद्व्यक्तिहेतुभिः सहृदयैः, दृष्टं पठितम्; रत्नपक्षे निपुणैः चतुरैः परीक्षकैः रत्नानां गुणदोषनिरीक्षकैः रत्नशास्त्रविद्भिः इत्यर्थः, दृष्टं परीक्षितं निर्दोषत्वेन अवधारितम्; ईदृशं सत्, सुतरां अतिशयेन, राजति शोभमानं वर्तते। श्लिष्टरूपकं अलंकारः। अनया रत्नावल्याः रसालंकारौचित्यादिगुणैः गरिष्ठप्रबन्धत्वं उक्तं, उत्तमकनकभूषणघटितोत्तमरत्नवत् तस्याः अनर्घत्वं च सूचितम् ॥ ९४७ ॥ विषयान्तरं प्रस्तौति एवमिति। एवंविधानां पूर्वोक्तानां गुणानां कथने प्रसंगः व्यापारः तद्वति प्रसंगिनि, विभावितात्मा तत्र

९४७ आश्लिष्ट (गो. का)। सर्वत्र सुवर्ण...सुभगम् (गो २) ९४८ कथनप्रसरद्गिरि विभा॰ (प) [मात्राधिक्यमत्र पाठे] ॰सरद्गिरि भाविता॰ (स्तं)

'संग्रामादनपसृतिः प्रेक्षाभिज्ञा सुभाषिताभिरतिः ।
आच्छोदनाभियोगः कुलविद्या राजपुत्राणाम् ॥' ९४९ ॥
एतद्वस्तुनि याते श्रुतिमार्गं नृपतिनन्दनो रसतः ।
आरब्धकथाच्छेदकमाखेटकवर्णनं चक्रे ॥ ९५० ॥
* 'चललक्ष्यवेधकौशलमश्वप्रजवे स्थिरासनाभ्यसनम् ।
भूमिविभागज्ञानं भवन्ति मृगयाभियोगेन ॥ ९५१ ॥

---

प्रवर्तितचित्तः चासौ नृपतनयश्च समरभटः तस्मिन्, सति, अन्यः कोऽपि पुरुषः, प्रसंगेन स्मृतस्य उपेक्षानर्हत्वं प्रसंगः तेन, स्मृतां आर्यां वक्ष्यमाणां, पठति स्म पपाठ ॥ ९४८ ॥ तामेवार्यां पठति संग्रामादिति । संग्रामात् युद्धात् अनपसृतिः अपलायनम् । प्रेक्षाभिज्ञा प्रेक्षायाः नाट्यस्य अभिज्ञा दर्शनेन ज्ञानम्, उक्तं च भरतेन—"न तच्छ्रुतं न तच्छिल्पं न सा विद्या न सा कला । नासौ योगो न तत्कर्म यन्नाट्येऽस्मिन्न दृश्यते ॥" इति । सुभाषितेषु साधुभाषणेषु हितवचनेषु रमणीयार्थप्रतिपादककाव्यादिषु वा अभिरतिः व्यसनम् । आच्छोदनाभियोगः ] आच्छोदनं मृगया, [ "आच्छोदनं मृगव्यं स्यादाखेटो मृगया स्त्रियाम् ।" इति अमरः, तत्र अभियोगः अभ्यासः अभिनिवेशो वा दृष्टशौर्यबलादिवृद्धिगुणत्वात्, तथा च शुक्रनीतौ—"शौर्यं प्रवर्धते नित्यं लक्ष्यसंधानसाधनम् । अकातरत्वं शस्त्रास्त्रशीघ्रपातनकारिता ॥ मृगयायां गुणा एते" ( १।३३३–३३४ ) इति । अमी, राजपुत्राणां क्षत्रियजातीयानां, कुलविद्याः कुलस्य वंशपरंपरायाः गृहस्य वा विद्याः । राजपुत्राणां उक्तेषु युद्धादिचतुर्षु सहजं ज्ञानं अभिरतिश्च इति भावः ॥ ९४९ ॥ एतच्छ्रवणफलमाह एतदिति । एतस्याः आर्यायाः वस्तुनि तात्पर्यार्थे, श्रुतिमार्गं याते श्रुते, नृपतिनंदनः राजपुत्रः समरभटः, आरब्धायाः प्रस्तुतायाः कथायाः वार्तायाः नाट्यसंबंधिन्याः इति भावः, च्छेदकं विरामकारकं, आखेटकस्य मृगयायाः वर्णनं, रसतः प्रीत्या, चक्रे । आर्याश्रवणानंतरं सः नाट्यकथां त्यक्त्वा मृगयावर्णने प्रवृत्तोऽभूदिति भावः ॥ ॥ ९५० ॥ इतः सप्तभिः तदेव वनविहारविशेषमृगयावर्णनं भयानकरसगर्भमाह चलेत्यादिभिः । तत्रादौ मृगयालाभान् कथयति चलेति । मृगयाभियोगेन तदभ्यासात्,

---

९४९ 'भिज्ञा सुभावना' ( गो २ का ) । आच्छोटना' (प. स्तं. का) ९५०रभसात् (का) । च्छेदनमा (प. स्तं) । आरंभ्य कथाच्छेदकमाखेटं वा''' इत्यंतिमा पंक्तिः का.-संपादकैः प्राप्तपुस्तकयोः । * इतः गो. प. स्तं. संज्ञितानि पुस्तकानि अवलम्ब्य पाठः समाप्तिं यावत् ९५१ स्थिराभ्यसनं ( गो ) [ न्यूनार्थः पाठः ]

वहति जवेन तुरङ्गे निबिडास्थितपादकटकपादाग्रः ।
तिर्यक्प्रणिहितकायो निम्नोन्नतमग्रतो भुवः पश्यन् ॥ ९५२ ॥
यावत्प्राणं धावत्याकुलिते विश्वकद्रुभिर्भीत्या ।
गोचरपतिते जीवे लघुक्रियः क्षिपति मार्गणं धन्यः ॥ ९५३ ॥
(संदानितकम्)

---

चलं चंचलं यत् लक्ष्यं वेधनीयं पश्वादिरूपं, तस्य वेधने शरादिना भेदने, कौशलं निपुणत्वं, भवति, तच्च प्रशस्तं, यथोक्तं अभिज्ञानशाकुन्तले—"उत्कर्षः स च धन्विनां यदिषवः सिध्यंति लक्ष्ये चले ।" (२।५) इति । अश्वस्य आरोहणविषय-भूतहयस्य, प्रजवे अतिद्रुतगतौ, अपि, स्थिरस्य निश्चलस्य आसनस्य उपवेशनस्य, अभ्यसनं अभ्यासः, लक्षणया तज्जा सिद्धिः, अर्थात् अतिवेगेन धावमानेऽपि अश्वे तस्मात् च्युतिर्न जायते । तथा भूमेः पृथिव्याः विभागाः क्षेत्रारण्यनदीपर्वतप्रदेशादयः तेषां ज्ञानं च भवति, मृगानुसरणे अटवीप्रदेशज्ञानस्य अपेक्षितत्वात् । मृगयागुणाः अनूदिताः कामंदकीये नीतिसारे—" जितश्रमत्वं व्यायाम आममेदःकफक्षयः । चलस्थिरेषु लक्ष्येषु बाणसिद्धिरनुत्तमा ॥ मृगयायां गुणानेतानन्ये प्राहुः ।" (१५।२६-२७) इति ॥ ९५१ ॥ मृगयाविनोदे लघुक्रियस्यैव उत्कर्षात् पङ्भिः तस्य विविध-प्रकारान् वर्णयति । तत्रादौ युग्मेन स्वभावोक्त्यलंकारद्वारा मृगयाकुशलं प्रशंसति वहतीत्यादिना । जवेन वेगेन, तुरंगे तुरं त्वरितं गच्छति इति तुरंगः तस्मिन् अश्वे, वहति धावति, निबिडं दृढतया स्थितौ ] पादकटकयोः चरणाधारवलययोः [ 'पैंगडा' इति भाषायां प्रसिद्धयोः, सप्तमी, पादयोः अग्रभागौ यस्य सः । धावमानस्य अश्वस्य उपरि उपवेशने कायस्य तिर्यक्त्वं स्वभावः । तथा वहति अश्वे प्रस्खलनरक्षार्थं, अग्रतः पुरस्तात्, भुवः निम्नोन्नतं गर्तादिकं निम्नं प्रस्तरादिना उच्चं प्रदेशं पश्यन् निरीक्ष-माणः मृगयारसिकः ॥ ९५२ ॥ यावत्प्राणं प्राणं मर्यादीकृत्य यावत्प्राणं पूर्णबलेन, "प्राणा असुष्वथ प्राणे विद्वातेऽप्यनिले बले । काव्यजीवे च बोले च, प्राणं तु त्रिषु पूरिते ॥" इति विश्वलोचनः, (बोलं 'बोलं' स्वनामख्यातवणिग्द्रव्यं गन्धरसाख्यं,) धावति वेगेन प्रयाति, तथा विश्वकद्रुभिः मृगयोपयुक्तश्वभिः, "विश्वकद्रुः खले ध्याने स्यादाखेटिककुक्कुरे ।" इति विश्वलोचनः, भीत्या भयेन, आकु-लिते परवशीकृते, एतादृशे जीवे प्राणिनि पशौ, लघ्वी क्षिप्रा क्रिया शरादिक्षे-परूपा यस्य सः लघुक्रियः, धन्यः श्लाघ्यः कृतार्थो वा, मार्गणं शरं "मार्ग-

---

९५२ तिर्यक्परिणतकायो (प. स्तं)। भुवं (प. स्तं)

**मूले स्थितस्य निभृतं मृगयुभिरुच्चाट्य ढौकितं निकटे ।**
**पातयतो मृगमुत्प्लुतमव्यपदेश्यं सुखं किमपि ॥ ९५४ ॥**
**गीतश्रवणोत्कर्णं निश्चलतृणकवलगर्भमुखहरिणम् ।**
**उपवेशितमस्पन्दं स्पृहणीया एव गृह्णन्ति ॥ ९५५ ॥**

---

णो याचके बाणे " इति शाश्वतः, क्षिपति मुञ्चति, तं शरव्यतां नयति इत्यर्थः । लघुक्रियस्यैव मृगयायां इष्टप्राणिवधसिद्धेः तस्य धन्यत्वम् ॥ सन्दानितकं युग्मं पूर्वं व्याख्यातम् ( ७९२ आ. टी. ) ॥ ९५३ ॥ एवं अश्वाद्यारोहेण पशुं अनुसृत्य क्रियमाणां मृगयां वर्णयित्वा, पुरुषेण कस्मिंश्चित् एकस्मिन् स्थाने स्थित्वा मृगया क्रियते तां वर्णयति मूले इति । यस्य कस्यचित् उचितस्य महतः वृक्षस्य, मूले मूलभागे, निभृतं मृगाणां शंकानिवृत्त्यर्थं वृक्षपत्रादिभिः गूढं यथा स्यात्तथा, स्थितस्य पुरुषस्य, निकटे समीपे, मृगयुभिः मृगान् वधार्थं यातीति मृगयुः व्याधः ' शिकारी ' इति भाषायां, तैः, उच्चाट्य स्थाल्यादिवादनचीत्कारादिभिः भापयित्वा, ढौकितं समीपे प्रापितं, उत्प्लुतं फालेन आगतं, मृगं मृग्यते तद्वधाकांक्षिभिः यद्वा मृगयते तृणादिकं इति मृगः पशुः तं, " मृगः कुरंगेऽपि पशौ मृगयामृगशीर्षयोः। हस्तिभेदेऽपि याच्ञायां " ( मृगशीर्षं नक्षत्रविशेषः । ) इति विश्वलोचनः, पातयतः शरवेधेन भूमिपतितं कुर्वतः, किमपि इति अव्ययसमुदायः अनिर्वर्णनीयार्थकः, अव्यपदेश्यं अनिर्वचनीयं सुखं आनंदः, जायते इति शेषः । अत्र मृगपदेन सिंहव्याघ्रादयः उग्राः हिंस्राः पशवः उद्दिष्टाः, येषां वधः प्रायः एकत्र वृक्षादौ स्थित्वा क्रियते ॥ ९५४॥ अन्याभ्यो विलक्षणां हरिणमृगयामाह गीतेति । गीतस्य संगीतस्य श्रवणाय कर्णयोः तद्ध्वनिप्रवेशाय, उत्कर्णं उच्चैः कृतौ अवधानप्राप्त्यै कर्णौ येन स उत्कर्णः तं, निश्चलः स्थिरः चर्वणक्रियायाः स्तंभितत्वात् तृणानां हरिणभक्ष्याणां कवलः ग्रासः गर्भे मध्ये यस्य तादृशं मुखं यस्य तं तादृशं हरिणं बहुव्रीहिगर्भो बहुव्रीहिसमासः, उपवेशितं गीतश्रवणाय आसीनतामुपगतं, तत्रापि अस्पन्दं श्रवणैकाग्र्येण चलनवलनादिरहितं, मृगाणामेतदवस्थावर्णनं नागानंदनाटकेऽपि, तथा—" विदूषकः—भो वयस्य, किन्नु खल्वेते ईषद्वलितकंधरा निश्चलमुखापसरद्दरद्दलितदर्भगर्भकवलाः समुन्नमितदत्तैककर्णा निमीलितलोचना आकर्णयन्त इव हरिणा लक्ष्यंते ॥ नायकः—...एते दन्तान्तरालस्थिततृणकवलच्छेदशब्दं नियम्य व्याजिह्मांगाः कुरंगाः स्फुटललितपदं गीतमाकर्णयंति ॥" ( १।१३ ) इति । तादृशं स्पृहणीयाः दुष्करकर्मकारित्वात् धन्या एव

---

९५४ °रुत्पाट्य ढौ° ( प. स्तं ) । °मव्यपदेशं ( गो )

दावानलसन्तापान्निर्यातं गहनवीरुधोऽभिमुखम् ।
यो निरुणद्धि स धन्यः सूकरमेकप्रहारेण ॥ ९५६ ॥
घनवृक्षोदरसुप्तं समुपेत्य स्वैरमकृतपदशब्दम् ।
व्याधवर एव कुरुते निर्जीवं हेलया शशकम् ॥' ९५७ ॥

गृह्णंति विना शस्त्रप्रहारं जीवन्तमेव हस्तगतं कुर्वंति । तथाहि अपरेभ्यः प्राणिभ्यः हरिणानां लघुशरीरतया वेगातिशयेन धावतां शरव्यत्वं दुष्करं, तत्रापि तेषां जीवतामेव ग्रहणं सुदुष्करं, तच्च गीतेन साध्यं इति मृगयासक्तानां संगीतज्ञानं उत्कर्षदं, तच्च तादृशां सर्वेषां विरलं इति सूचितम् । हरिणानां गानात्यासक्तिः प्रसिद्धा, तदुक्तं–"वनेचरस्तृणाहारश्चित्रं मृगशिशुः पशुः । लुब्धो लुब्धकसंगीते गीते त्यजति जीवितम् ॥ " ( संगीतरत्नाकरे १।२९ ) इति । हस्तिसर्पमयूरादयः केचन प्राणिनस्तु वीणामुरलीमृदंगादिवाद्यविशेषाकर्णनेन वशीभवंति, हरिणास्तु कण्ठजगीतश्रवणेन इति भेदः । स्वभावोक्तिः परिसंख्या च अलंकारः ॥ ९५५ ॥ चातुर्यविशेषापेक्षिणीं सूकरमृगयां आह दावेति । दावस्य वनस्य, " दवो दावश्च पुंस्येव वनेऽपि वनपावके ।" इति विश्वलोचनः, तस्य यः अनलः अग्निः स दावाग्निः, तस्य संतापात् प्रचंडतापेन, गहनस्य काननस्य या वीरुध् लता तस्याः वीरुधः, पंचमी, जातावेकवचनं च, लतानिबिडजालात् स्वनिवासभूतात् इत्यर्थः, अभिमुखं स्वस्य संमुखं, निर्यातं विनिर्गत्य उपस्थितं, सूकरः वराहः, 'शूकरः' इत्यपि शब्दः, 'सुवर' इति भाषायां प्रसिद्धः बहिर्निर्गतदंतः क्रूरपशुविशेषः तं, एकप्रहारेण कुंत-( भाला )जातीयशस्त्रस्य एकेनैव आघातेन, यः मृगयाकोविदः, निरुणद्धि स्वस्य उपरि आक्रमणे असमर्थं करोति, सः धन्यः प्रशंसनीयः ॥ ९५६ ॥ जात्यैव अतिभीरूणां शशकानां मृगयाविशेषमाह घनेति । घनानां गाढानां निबिडतया स्थितानां वृक्षाणां यत् उदरं मध्यभागः तत्र सुप्तं अत्यंतगूढभागे निलीय निर्भीकतया शयानं, शशकः शशः 'ससलो' इति भाषायां प्रसिद्धः अतिलघुः चतुष्पात्, तं, स्वैरं मंदगत्या, न कृतः पदानां पदनिःक्षेपानां शब्दः यथा स्यात्तथा अश्राव्यपदरवं, यथा आगमनं लक्षितं न भवेत् तथा, समुपेत्य अतिसमीपं गत्वा, व्याधवरः व्याधः मृगयुः 'पारधी' इति भाषायां, तेषु वरः श्रेष्ठः कुशलः, एवेति न अन्यः साधारणः इति सूच्यते, एतत्कर्मणः दुष्करत्वात् , हेलया यत्नं विना अनायासेन, निर्जीवं गतप्राणं

९५६ °निर्यान्तं ( गो ) । वीरुधाभि° ( गो ) । स वन्यः ( प. स्तं ) ९५७ वनकक्षो° ( प ) घनकक्षो ( स्तं. गो २ )

इति विदधति सैंहभटावाखेटकशक्तिलाघवश्लाघाम् ।
हृदयागतामगायत् प्रसङ्गतो गीतिकामपरः ॥ ९५८ ॥
'आस्तां व्यापाररसः प्रवर्तिता संकथाऽपि मृगयायाः ।
अन्तरयति तन्मनसामाहारादिक्रियोचितं कालम्' ॥९५९॥
अवधार्य गीतिकार्थं दानं प्रति धननियुक्तमभिधाय ।
उत्तस्थौ समरभटो मञ्जरिकां समवलोकयन् प्रेम्णा ॥९६०॥

---

मृतं, तस्य अतिभयशालीनतया, करोति ॥ ९५७ ॥ इति पूर्वोक्तप्रकारेण, सैंहभटौ सिंहभटस्य अपत्यं पुमान् सैंहभटिः तस्मिन् समरभटे; आखेटकशक्तौ मृगयासामर्थ्ये, यत् ] लाघवं क्षिप्रकारिता, [ तस्य श्लाघां प्रशंसां, विदधति कुर्वाणे । हृदयागतां स्मृतां, प्रसंगतः निमित्तविशेषेण ॥ ९५८ ॥ तां गीतिमुदाहरति आस्तां इति । मृगयायाः स्त्रीलिंगत्वात् अन्यांगनाया इव इति उपमा ध्वन्यते, तेन च लिंगौचित्यं परं शोभते, प्रवर्तिता प्रस्तुता, संकथा तत्संबद्धः वार्तालापः, अपिना किमु वाच्यं साक्षात् मृगयाव्यापाररसस्य इति सूच्यते, तन्मनसां मृगयागुणादिश्रवणैकचित्तानां, आहारादिक्रियाणां आदिना तत्पूर्वं एव निर्वर्त्यानि संध्यावंदनाद्यावश्यककर्माणि लक्षितानि, उचितं योग्यं शास्त्रादिना नियमितं, कालं समयं, अन्तरयति विघ्नितं कुरुते, मृगयाकथा मनोहरणेन तत्तत्कालोचितं आहारादिकं विस्मारयति इति भावः । ततः आस्तां व्यापाररसः–दूरे वार्ता यद्वा का कथा, मृगयायाः यः व्यापारः कर्म तस्मिन् रसः चेतसः द्रुतिः तस्य । "कैमुत्येनार्थसिद्धिश्चेत्काव्यार्थापत्तिरिष्यते ।" इति कुवलयानंदकारैकमतः काव्यार्थापत्तिरलंकारः ॥ ९५९ ॥ एतच्छ्रवणेन स्मृतकर्तव्यस्य राजपुत्रस्य व्यापारमाह अवधार्येति । गीतिप्रतिपाद्यं वस्तु मनसा निश्चित्य, अर्थात् क्रियान्तराणां संपादनाय गृहं प्रति गंतव्यं इति निर्णयं कृत्वा, ततः मंदिरसेवकेभ्यः दरिद्रेभ्यः याचकादिभ्यश्च यथोचितं दानं दातुं, धननियुक्तं कोषाधिकारिणं, अभिधाय उक्त्वा आदिश्य इत्यर्थः, समरभटः राजपुत्रः, मंजरिकां नाटितरत्नावलीभूमिकां नर्तकीं, प्रेम्णा स्नेहेन समवलोकयन् गमनकाले पश्यन्, अंतर्गतप्रेम्णः सूचिकां स्निग्धां दृष्टिं तस्यां पातयन् सन् इति भावः, उत्तस्थौ स्वगृहं प्रति गमनाय आसनं त्यक्तवान् ॥ ९६० ॥

---

९५८ इति निगदितसिंहभटे ( प. स्तं )[ ८७९ आर्याविरुद्धोऽयं पाठः ] । श्लाघ्यं (प) श्लाघं ( स्तं ) । हृदयं गता ( प ) ९५९ °पारः संप्रवर्तितानां क° (गो )। मृगयायां ( प. स्तं ) । °रादिकरणोचि° ( प. स्तं ) ९६० गीतिकार्थान् ( स्तं )

गत्वाऽथ स्वावसथं विनिवर्तितभोजनादिकर्तव्यः ।
मञ्जरिकाकृष्टमना अभिदध्यौ सचिवसन्निधावेवम् ॥९६१॥
भ्रूभङ्गस्मितवीक्षितमृदुवक्रवचोङ्गहारगमनेषु ।
कुसुमप्रहरण एको युगपद्विहिताश्रयः कथं तस्याः ॥९६२॥

---

तस्य मंजरीविषयकं उद्भिन्नानुरागं पल्लवयति गत्वेत्यादिना । आवसथं गृहम् । विनिवर्तितं संपूर्णतां नीतं कृतं, भोजनादिकं, कर्तव्यं अवश्यतया कार्यं, येन सः । मंजर्यपहृतान्तःकरणः, तत्सुरूपाद्यनुभूतिपरवशः अत एव तां कामयमानः इति भावः । सचिवः सहायः मंत्री मित्रं इति यावत्, यस्याग्रे स्वसुखदुःखानि आविष्कर्तुं शक्यम् । तस्य सन्निधौ निकटे, अभिदध्यौ चिन्तयाञ्चक्रे, मनोगतं प्रकाशयामास इत्यर्थः । एवं–वक्ष्यमाणाभिः ९६२–९८८ आर्याभिः ॥ तथा चोक्तं–" मदो जनयति प्रीतिं, साऽनंगं मानभंगुरम् । स प्रियासंगमोत्कण्ठां सा सह्यो मनसः शुचम् ॥" (भामहालंकारे२।२७) इति ॥ तथा–" सुहृत्संचारितरहस्यं हि चेतः संविभक्तचिंताभारमिव लघूभवति । " ( विद्धशालभंजिकायाम् १ ) इति ॥ ९६१ ॥ अत्र विप्रलंभशृंगारस्य नायकगता नायिकासौंदर्यादिगुणश्लाघारूपा गुणकीर्तनाख्या चतुर्थी अवस्था, तेन च स्वस्य तद्विषयो महाननुरागः प्रकटीकृतः इति बोध्यम् । तत्रादौ तस्याः चेष्टाविशेषाणां उद्दीपनत्वमाह भ्रूभंगेति । तस्याः मंजर्याः । भ्रूभंगः भ्रुवः भ्रुवोः वा भंगः जलतरंगवत् उन्नयनादिकं कर्म इत्यर्थः, तच्च सप्तविधं भरतेन कथितं, तद्विस्तरः तत्रैव ( ८।११३–१२२ ) द्रष्टव्यः । स्मितं, उत्तमानां आत्मस्थो हासः, तल्लक्षणं च–" ईषद्विकसितैर्गण्डैः कटाक्षैः सौष्ठवान्वितैः । अलक्षितद्विजं धीरमुत्तमानां स्मितं भवेत् ॥ " ( ६।५४ ) इति भरतः । वीक्षितं विशेषेण ईक्षितं, भावे क्तः, ईक्षणं इत्यर्थः, तत् कटाक्षादि नेत्रकर्म । मृदु स्वरे शब्दे अर्थे च श्लक्ष्णं, तथा वक्रं यथायोग्याक्षेपान्योक्तिव्याजोक्तिकाक्वादिगर्भं, च वचः वाणी । अंगहारः हस्तपादाद्यवयवविक्षेपः, " लास्यांगनृत्यधारीणि करणानि भवंति हि । (६।२ ) यथैको जायते रागः स्वरग्रामादिभिर्धनैः । स्वस्वांगोपांगप्रत्यंगनृत्यांगे करणं तथा ॥ ( ६।४ ) । करणजनिताश्च अंगहाराः द्वात्रिंशत् । " इति संगीतसारोद्धारे ) । गमनं यातं गतिः, च, वेषु; कुसुमानि प्रहरणानि प्रहारसाधनानि आयुधानि यस्य सः कामदेवः, एकः एकसंख्यात्वावच्छिन्नोऽपि, युगपत् एककालावच्छेदेन, कथं इति प्रश्ने अव्ययं, तेन च आश्चर्यं

---

९६१ °सथं निर्वर्तित (प) । मञ्जर्याकृष्ट (प) । मनाः समभिदध्यौ (गो २)

सुन्दोपसुन्दनाशः फलमात्मभुवस्तिलोत्तमासृष्टेः ।
जनमृतये तां सृजता किं दृष्टं सुरहितं तेन ॥ ९६३ ॥

द्योत्यते, भ्रूभंगादिषु बहुषु स्थलेषु, विहिताश्रयः कृतस्थितिः, कायव्यूहसिद्धिमन्तं योगिनं मुक्त्वा एकशरीरिणः बहुत्र अवस्थितेः असंभवात् । अद्भुतः रसः व्यंग्यः । भ्रूभंगादयः सर्वेऽपि कामोद्दीपकाः इति भावः, तेन च तस्याः सर्वातिशायिकामोद्दीपकत्वं ध्वनितम् ॥ अत्र विशेषालंकारः, तल्लक्षणं च काव्यालंकारे ( ९।७ ) —"यत्रैकमनेकस्मिन्नाधारे वस्तु विद्यमानतया । युगपदभिधीयतेऽसावत्रान्यः स्याद्विशेष इति ॥" इति । ( पर्यायेणावस्थाने तु पर्यायालंकारः भिन्नः । ) ॥ ९६२ ॥ वितर्कद्वारा तस्याः श्लाघ्यं लोकोत्तरं सौंदर्यं सूचयति सुंदेति । आत्मभुवः जगत्स्रष्टुः ब्रह्मणः, तिलोत्तमा तदाख्या अप्सरसः स्वोपादानभूतैः सर्वरत्नानां तिलैः तिलप्रमाणैः अंशैः उत्तमा इति अन्वर्थनाम्नी, तदुक्तं महाभारते—"तिलंतिलं समानीय रत्नानां यद्विनिर्मिता । तिलोत्तमेति यत्तस्या नाम चक्रे पितामहः ॥" ( १।२१२।१७ ) इति, तस्याः सृष्टेः निर्माणस्य, फलं प्रयोजनं लाभो वा, सुंदस्य उपसुंदस्य च, सुंदोपसुंदनाम्नोः निकुंभपुत्रयोः असुरयोः नाशः मृत्युः, तद्द्वारा च ताभ्यां पीडितानां सुराणां सुखप्रापकत्वं च इति शेषः । एतत्कथा महाभारते आदिपर्वणि २०९–२१२ अध्यायेषु विस्तरेण द्रष्टव्या । सा संक्षेपतस्तु कथासरित्सागरे, यथा—"सुंदोपसुंदनामानौ भ्रातरौ द्वौ बभूवतुः । असुरौ विक्रमाक्रान्तलोकत्रितयदुर्जयौ ॥ तयोर्विनाशकामश्च दत्त्वाज्ञां विश्वकर्मणा । ब्रह्मा निर्मापयामास दिव्यनारीं तिलोत्तमाम् ॥ रूपमालोकितुं यस्याश्चतुर्दिक्कं चतुर्मुखः । बभूव किल शर्वोऽपि कुर्वाणायाः प्रदक्षिणम् ॥ सा पद्मयोनेरादेशात्पार्श्वं सुंदोपसुंदयोः । प्रलोभनाय प्रययौ कैलासोद्यानवर्तिनोः ॥ तौ चासुरौ जगृहतुस्तां दृष्ट्वान्तिकमागताम् । उभावप्युभयोर्बाह्वोः सुंदरीं काममोहितौ ॥ परस्परविरोधेन हरंतौ तां च तत्क्षणम् । प्रवृत्तसंप्रहारत्वाद्द्वावपि क्षयमीयतुः ॥" ( १५।१३५–१४० ) इति ॥ परंतु, तां मंजरीं, जनमृतये जनानां तत्सौंदर्यावलोकनेन मोहितानां, तस्याः अयोगे मोहातिशयात् विप्रलंभस्य अभिलाषादिनवावस्थाः अनुभूयापि मरणाख्याया दशम्याः अपि असह्यविरहपीडान्तकत्वबुद्ध्या अंगीकारेण, मृतये नाशाय, सृजता निर्मितवता, तेन ब्रह्मणा स्रष्ट्रा, किमिति प्रश्ने, सुरहितं सुराणां असुरभिन्नानां देवानां हितं पथ्यं सुखकरं, दृष्टं मनसि धृतं विचारितम्; तत् तर्कितुमप्यशक्यमिति भावः । प्रश्नेन तद्द्वारा जनमारणेन न किमपि सुरहितं संभाव्यते इत्याक्षिप्यते ॥

९६३ मात्मभुव ( प. ) । सृष्टौ ( प. स्तं ) । मृत एतां ( प ) [ दुष्टः पाठः ]

सुमनोभिः परिकरिता मृगशावकतरलचक्षुषस्तस्याः ।
कामोचितफलहेतुर्देहभृतां दीर्घिका वेणी ॥ ९६४ ॥
कमलमिव वदनकमलं पिबन्ति तस्यास्त्रिविष्टपभ्रष्टाः ।
सदलिकमपेतदोषं सविभ्रमं मधुमदाताम्रम् ॥९६५॥

---

अत्र असंबंधे संबंधातिशयोक्तिरलंकारः ॥ ९६३ ॥ वर्णनाय उपात्तेषु तस्याः मुख्यांगेषु आदौ वेणीं वर्णयति सुमनोभिरिति । मृगशावकतरलचक्षुषः मृगशावकस्य हरिणपोतस्य नेत्रे इव तरले चंचले विलोले चक्षुषी यस्याः तस्याः, अनेन तरलाख्यो मनोहरो दृष्टिविकारः तस्याः स्वाभाविक इति सूचितं, तदुक्तं—"तरलं तदिति प्राहुर्लोलतारकनीनिकम् ।" इति । तस्याः मंजर्याः, सुमनोभिः पुष्पैः,] परिकरिता ग्रथिता, [ दीर्घिका दीर्घा, स्वार्थे कन्, केशानां दीर्घत्वं लंबत्वं प्रशस्तं, वेणी केशबंधविशेषः, "वेणी सेतुप्रवाहयोः । देवताडे केशबन्धे" इति हैमः । ( देवताडः वृक्षविशेषः 'देताड' इति प्रसिद्धः । ) वर्णिता च सा उत्प्रेक्षांगत्वेन माघकाव्ये—"सीमंत्यमाना यदुभूभृतां बलैर्बभौ तरद्भिर्गवलासितद्युतिः । सिन्दूरितानेकपकंकणांकिता तरंगिणी वेणिरिवायता भुवः ॥" ( १२।७५ ) इति, ( गवलं माहिषविषाणं, कंकणं शेखरः शिरसि धृता पुष्पस्रक्, तरंगिणी नदी, प्रकृते च सा यमुना, वेणिशब्देन स्रोतश्च केशबंधश्च विवक्षितः । अत्र वेण्याः सीमंतवत्त्वं, कृष्णत्वं, पुष्पयुक्तत्वं दीर्घत्वं च गुणाः उपलक्षिताः । ) देहभृतां प्राणिनां, कामोचितफलहेतुः कामस्य कामदेवस्य यत् उचितं योग्यं फलं भोग्यं तस्य हेतुः कारणं, सा प्रबलस्मरविकारजनिका इत्यर्थः, तेन वेण्याः उद्दीपनविभावत्वं सूचितम् ॥ ९६४ ॥ अवयवेषु तस्याः उत्तमाङ्गं वर्णयन् तद्भोगप्राप्तेः दुर्लभत्वं उपमया वर्णयति कमलमिति । तस्याः मञ्जर्याः, वदनकं—वदनेन ( उक्त्या ) अन्यः अवक्षिप्यते कुत्स्यते इति वदनकं, "अवक्षेपणे कन्" (पा. ५।३।९५ ) इति कन्प्रत्ययः, चतुरोक्तिगर्वितं वक्त्रं इत्यर्थः, यद्वा वदनमेव वदनकं तत् ; त्रिविष्टपभ्रष्टाः त्रिविष्टपात् स्वर्गात् भ्रष्टाः च्युताः, "क्षीणे पुण्ये मर्त्यलोकं विशंति" इति स्मृतेः 'स्वल्पीभूते सुचरितफले स्वर्गिणो गां गता ये' ते, स्वर्गभ्रष्टाः अर्थात् पुण्यवंतः, अलं अतिशयेन, पिबन्ति धयंति अर्थात् वदनस्थाधरोष्ठपानं कुर्वन्ति । अनेन तादृशां भ्रमरोपमत्वं ध्वनितम् । कीदृशं वदनं इत्युपमयाह कमलमिव । श्लिष्टविशेषणैः साधर्म्यमाह सदेत्यादिभिः । सदलिकं—सत् शोभनं अलिकं अल्यते भूष्यते चन्द्राख्यतिलकेन इति ललाटं यत्र तत्, यद्वा सन्तः अलिकाः

---

९६४ परिखिता (प)

यः शैलेन्द्रनितम्बं सुरताप्त्यै सेवते तपोनिरतः ।
स्पृहयति सोऽपि नितम्बं सुरताप्त्यै समवलोक्य तन्वङ्ग्याः ९६६॥

---

भ्रमरकाः ललाटालकाः यत्र तत् ; कमलपक्षे सन्तः वर्तमानाः अलयः एव कुत्सिता अल्यो वा अलिकाः, स्वार्थे "कुत्सिते" (पा. ५।३।७४) इति वा कन्, भ्रमरा यत्र तत् । तथा अपेतदोषं अपेताः अविद्यमानाः दोषाः रोमशत्वपरुषत्वनिर्मांसित्वदुर्गन्धित्ववक्रत्वविरूपतादयः यत्र तत् ; कमलपक्षे—अपेता दूरीभूता दोषा रात्रिः यस्मात् तत्, तस्य दिवसे एव विकासभावात् । तथा सविभ्रमं विभ्रमैः विलासैः शृंगारचेष्टाभिः सहितं, विभ्रमलक्षणं च—"क्रोधः, स्मितं, च कुसुमाभरणादियाच्ञा, तद्वर्जनं च, सहसैव विमण्डनं च । आक्षिप्य कान्तवचनं लपनं सखीभिर्निष्कारणस्थितगतेन, स विभ्रमः स्यात् ॥" इति (नागरसर्वस्वे १३।१३), ( विमण्डनं विशेषेण मंडनम् । ) कमलपक्षे—विशेषेण भ्रमः भ्रान्तिः चलनं तरंगवाताद्याहतिभिः तेन सहितं, यद्वा वीनां पक्षिणां भ्रमः संचारः तेन सहितम् । मधुमत्—मधु अधरोष्ठवर्तिरसविशेषः क्षौद्रवन्मिष्टः, मदिरावत् मादकः, दुग्धवत् पुष्टिदः इति तत्संपन्नं, यद्वा मधु मद्यं तत्पानजः यः मदः तेन आ समन्तात् रक्तं रक्तवर्णं; कमलपक्षे—मधु पुष्परसः मकरन्दः तद्वत् । आताम्रं सौकुमार्यातिशयेन ईषद्रक्तवर्णं, तेन तस्याः शुद्धरक्तपुष्टत्वं अतिहृद्यत्वं च सूचितम्; कमलपक्षे—आ समंतात् रक्तं, अनेन रक्तोत्पलं कोकनदं अभिप्रेतं इति ज्ञेयम् । स्वर्गभ्रष्टानां पुण्यशेषोपभोगः अस्याः वदनगताधरामृतपानेन एव निर्वर्त्यते इति भावः, तथाहि "प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः । शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥" ( गीता ६।४१ ) इति भगवदुक्तौ पूर्वोपचितभोगवासनाप्रादुर्भावात् विषयभोगेच्छायाः पुण्यशेषस्य च ज्ञापनात् । एवं तस्या अत्यंताभिलषणीयता उक्ता । अत्र सदलिकं इत्यादिभिः श्लेषोपमा, प्रकृते अर्थश्लेषस्य सत्त्वात् ॥ प्रकृते पद्ममुखयोः उपमानोपमेयभावं अवलंब्य तत्पाने काश्चन नायकोक्तयः । तत्र अप्राप्तयोगस्य यथा—"मदघूर्णितलोचनषट्चरणं घनरागमनंगकराभरणम् । कमलद्युति मुग्धवधूवदनं सुकृती पिबतीह सुधासदनम् ॥" इति, ( क्षेमेंद्रस्यायम् । ) तथा नागानंदनाटके नायकस्योक्तिः—"दिनकरकरामृष्टं बिभ्रत् द्युतिं परिपाटलां दशनकिरणैरुत्सर्पद्भिः स्फुटीकृतकेसरम् । अयि मुखमिदं मुग्धे ! सत्यं समं कमलेन ते, मधु मधुकरः किन्त्वेतस्मिन् पिबन् न विभाव्यते ॥ " ( ३।१३ ) इति । तथा कस्यचित् तथाविधस्यैव प्रकृतार्थवैपरीत्यवैचित्र्येण—"स्वर्गप्राप्तिरनेनैव देहेन वरवर्णिनी । अस्या रदच्छदरसो न्यक्करोतितरां सुधाम् ॥" इति ॥ कस्यचित् प्राप्तसंयोगस्य यथा—"नलिन्या इव तन्वंग्यास्तस्याः पद्ममिवाननम् । मया मधुव्रतेनेव पायंपायमरंस्यत ॥ " ( काव्यादर्शे

त्रिकरो मध्यविभागो बाह्वोर्युगलं करद्वयोपेतम् ।
जनयति तदपि मृगाक्षी सहस्रकरतोऽधिकं तापम् ॥ ९६७ ॥

२।४५ ) इति ॥९६५॥ कामुकैरतिस्पृहणीयं नितम्बं प्रशंसति य इति । यः, तपोनिरतः तपः " भिक्षोपवासनियमार्कमरीचिदाहैर्देहोपशोषणविधिः" ( प्रबोधचं० २।२२ ) तस्मिन् नितरां देहेन चित्तेन च रतः आसक्तः सन्, ] सुरतायाः देवत्वस्य आप्त्यै लब्ध्यै, [ शैलेन्द्रस्य सिद्धसेवितहिमालयादिपर्वतस्य, नितंबं पर्वतकटिप्रदेशं तन्मध्यभागं, अधित्यकायां अद्रेः उपरिभूम्यां शीतातपवाताद्याधिक्यात् उपत्यकायां ( अद्रेः मूलासन्नभूम्यां ) च जनसंसर्गहिंस्रादिभयवत्त्वात् च ते त्यक्त्वा इति भावः, सेवते आश्रयते, स्वर्गसुखप्राप्तये निर्विघ्नं तपोनुष्ठानाय इति भावः; सोऽपि तादृशोऽपि, तस्याः तन्वंग्याः, नितम्बं–निभृतं अत्यंतं तम्यते कांक्ष्यते कामुकैः इति यद्वा नितरां ताम्यति ग्लायति सुरतसंमर्दे इति नितंबः कटिपश्चाद्भागः रमणः, नितंबस्य द्वित्वप्रत्यक्षात् जात्यभिप्रायमेवैकवचनं, यद्वा एकस्यैव अर्धद्वयमयत्वात् द्वित्वेन प्रत्यक्षत्वं इति बोध्यं, तं समवलोक्य दृष्ट्वा, तस्मै एव फलाय–] सुरताप्त्यै सुरतस्य ( संभोगस्य ) प्राप्त्यै, [ " सुरतं स्यान्निधुवने, देवत्वे सुरता मता । " इति मेदिनी, स्पृहयति वाञ्छति, " स्पृहेरीप्सितः ।" ( पा. १।४।३६ ) इति चतुर्थी । तपस्वी अपि तस्याः नितंबसौन्दर्येण आकृष्टः सन् सुरताय उत्कंठितो भवति इति भावः । उक्तं हि शृंगारशतके–" मात्सर्यमुत्सार्य विचार्य कार्यमार्याः समर्यादमिदं वदंतु । सेव्या नितंबाः किमु भूधराणामुत स्मरस्मेरविलासिनीनाम् ॥ " ( ३६ ) इति, (स्मरस्मेराः मदनमदोत्कटाः । सति वैराग्ये गिरिनितंबाः, अन्यथा विलासिनीनितंबाः सेव्याः इति भावः । ) प्रकृते विरागिभिः अपि तन्नितंबाय स्पृह्यते इति विशेषः उक्तः, तेनास्याः व्यतिरेकः सूचितः । ' नितंबं सुरताप्त्यै ' इति दलद्वये अन्यार्थानां वर्णानां श्रुतिक्रमैक्येन यमकं, शब्दश्लेषश्च, इति द्वयोः शब्दालंकारयोः संसृष्टिः ॥ ९६६ ॥ एवंविधसौंदर्येऽपि विप्रलंभे तस्याः संतापदत्वमाह त्रिकर इति । तस्याः मध्यविभागः कट्युदरादिप्रदेशः, त्रिकरः त्रिकं पृष्ठास्थ्नोऽध ऊर्वोः संधौ त्रिसंघट्टं राति ददातीति त्रिकरः त्रिकप्रदेशघटकः, यद्वा करः राजग्राह्यनियतधनभागः बलिः, श्लेषे बवयोरभेदात् वलिः, त्रयः कराः वलयः यस्य सः ] त्रिकरः वलित्रययुक्तः, [ बाह्वोः भुजयोः युगलं द्वयं, तुः शब्दः अप्यर्थकः, करद्वयवत्, आस्कंधात् अंगुल्यन्तो भागः बाहुः आमणिबंधादंगुल्यन्तो भागः करः इति बाहुकरयोः भेदः; तदपि तथापि, सा मृगाक्षी हरिणनयना,] तथा च [ यस्याः एवं ] कथमपि पंचकरत्वनिष्पत्तिः [ सा, सहस्रकरतः सहस्राणि

सा स्रग्धरा सुवदना प्रहर्षिणी सैव सैव तनुमध्या ।
न करोति कस्य विस्मयमिति रुचिरा मञ्जुभाषिणी सैव॥९६८॥
अनुकुर्वत्या कन्यां तथातथा नायकस्तया दृष्टः ।
येन जरत्स्वप्यटनी धनुषः स्पृष्टा दशार्धबाणेन ॥ ९६९ ॥

---

असंख्यातानि—सहस्रपदं अनेकोपलक्षणं सहस्रपत्रं कमलमितिवत्—कराः किरणाः यस्य स सूर्यः तस्मादपि, अधिकं तापं संतापं विरहजन्यं मनोदेहयोः संतापं, जनयति उत्पादयति । पंचकरवती सहस्रकरतोऽप्यधिकं तापं जनयति इति आश्चर्यम् । करशब्दस्य श्लिष्टत्वेन श्लेषोत्थापितो विरोधालंकारः । ] वक्रभणित्या प्रशंसा ॥ ९६७ ॥ पुनः तस्याः अपरं आश्चर्यकरत्वं प्राह सेति । सा स्रग्धरा मालाधारिणी; सुवदना शोभनमुखी [ प्रशस्तलक्षणमुखवती; तथाभूता सैव ] प्रहर्षिणी हर्षयित्री [ प्रकर्षेण हर्षस्य इष्टलाभजन्यानंदस्य दात्री; तादृशी सैव न तु अन्या; ] तनुमध्या सूक्ष्ममध्यभागा [ तनुः सूक्ष्मः स्थौल्यरहितः मध्यः कटिप्रदेशः यस्याः सा सुश्रोणिः; तथा ] रुचिरा सुंदरी [ मनोहरा ], मंजुभाषिणी मधुरभाषणशीला, सैव । तत्रैव एषां गुणानां समुच्चयेन वर्तित्वं, न तु भिन्नासु व्यक्तिषु इति भावः । स्रग्धरादयः छन्दोभेदाश्च । तथा च भिन्नभिन्नलक्षणानां स्रग्धरादीनां [ एकत्रैव ] समावेशे तस्याः विस्मापकत्वं युक्तमेव । [ स्रग्धरादीनां छन्दसां लक्षणानि तु—"म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् ।" "ज्ञेया सप्ताश्वषड्भिर्मरभनययुता म्लौ गः सुवदना ।" "म्नाशाभिर्मनजरगाः प्रहर्षिणीयम् ।" "त्यौ चेत्तनुमध्या ।" जभौ सजौ गिति रुचिरा चतुर्ग्रहैः ।" "सजसा जगौ च यदि मञ्जुभाषिणी ।" इति छंदोमंजर्याम् ॥ एवं बह्वीभिः असंगतिभिः तस्याः लोकोत्तरत्वं सूचितम् । अद्भुतो रसः । अत्र स्रग्धरादीनां गुणानां यौगपद्येन अवस्थानेन समुच्चयालंकारः, श्लेषोत्थापितः द्रव्यस्य द्रव्येण विरोधात् विरोधालंकारश्च, तयोः संसृष्टिः ॥ ९६८ ॥ एवंवर्णनपरस्य तस्य स्मृतिपथमागतं तस्याः नाट्ये अनुभूतं विशिष्टं उद्दीपकत्वं प्रकाशयति अनुकुर्वत्येत्यादिभ्यां द्वाभ्याम् । ] कन्यां [ अनूढां ] रत्नावलीमित्यर्थः, [ अनुकुर्वत्या तद्भूमिकापरिग्रहे तां अभिनयंत्या, तथातथा तैस्तैः प्रकारैः, बहुत्वे द्विरुक्तिः, ] नायकः वत्सराज इत्यर्थः, [ तया मंजर्या, दृष्टः अवलोकितः, तथाच "अलसवलितैः प्रेमार्द्रार्द्रैर्मुहुर्मुकुलीकृतैः···निमेषपराङ्मुखैः हृदयनिहितं भावाकूतं वमद्भिरिवेक्षणैः"

---

९६८ °रास्तु नार··सैव तनु··ति कथं विस्मयमनिन्दिता चारुहासिनी सैव (प. स्तं)
९६९ दायक (प) । ज्व (ज ?) रत्सुघटनी (प) [ अक्षरभ्रमात् पाठः ] ज्वरस्त्वघटनी ( स्तं )

रूपं यौवनचित्रितमनङ्गविकृतानि नाट्यदीप्तानि ।
शमिनामपि शमगर्वं संमुष्णन्त्यविकलं तस्याः ॥ ९७० ॥

---

विलोकितः, येन यथा, ] दशार्धबाणेन [ पंचबाणेन ] कामेन, [ धनुषः स्वचापस्य, अटनी 'अटनिः' कोटिः धनुषः प्रान्तभागः, स्पृष्टा तत्र ज्यारोपणं कृतं इति भावः, ततः तदाकर्षणं तेन शरक्षेपश्च तत्कार्याणि च संमोहनस्तंभनोन्मादनतापनशोषणानि लक्ष्यंते । नाट्ये प्रेक्षकेषु ये गलितकामाः वृद्धाः तेऽपि तस्याः नायके प्रेरितैः विविधनेत्रविलासैः उज्जीवितकामाः बभूवुः इति व्यज्यते, तेन किमु वाच्यं मादृशां शृंगारस्निग्धानां यूनां इत्याक्षिप्यते । प्रतीयमानस्यार्थस्य 'जरत्स्वपि अटनी स्पृष्टा' इत्यनया भंग्या कथनं इति पर्यायोक्तिः अलंकारः ॥ ९६९ ॥ अपि च तस्याः रूपं—"अंगान्यभूषितान्येव प्रक्षेप्याद्यैर्विभूषणैः । येन भूषितवद्भान्ति तद्रूपमिह कथ्यते ॥" इत्युक्तलक्षणं आकारो वा, "सौंदर्याकारयो रूपं" इति मंखकोशः, यौवनेन तारुण्येन तच्च व्याख्यातं पूर्वं ( आ. ६७५ टी. ), चित्रितं मण्डितं, तथा च कालिदासः—"कुसुममिव लोभनीयं यौवनमंगेषु सन्नद्धम् ।" ( शाकुं. १।२१ ) इति । तथाहि—"दोर्मूलावधिसूत्रितस्तनमुरः, स्निह्यत्कटाक्षे दृशौ, किंचित्ताण्डवपंडिते स्मितसुधासिक्तोक्तिषु भ्रूलते । चेतः कन्दलितं स्मरव्यतिकरैर्लावण्यमंगैर्धृतं, तन्वंग्यास्तरुणिम्नि सर्पति शनैरन्यैव काचिद्गतिः ॥" इति । तथा च कर्पूरमंजरीसट्टके विदूषकः—"इह जइ वि कामिणीणं सुंदेरं धरइ अवअवाणं सिरी । अहिदेवदे व्व णिवसइ तहवि हु तारुण्णए लच्छी ॥" ( २।४८ ) इति । ( इह यद्यपि कामिनीनां सौन्दर्यं धारयति अवयवानां श्रीः । अधिदेवता इव निवसति तथापि खलु तारुण्ये लक्ष्मीः ॥) ( "तथा च यौवनेऽमनोज्ञस्यापि सौभाग्यवृद्धिर्भवति," किमु वाच्यं रूपवत्याः इति भावः । 'रूपं यौवनचित्रितं' इत्यनेन अन्योन्यालंकरणमपि अभिप्रेतं, यथोक्तं काव्यालंकारे—"रूपं यौवनलक्ष्म्या यौवनमपि रूपसंपदस्तस्याः । अन्योन्यमलंकरणं विभाति,…" ( ७।९२ ) इति । तथा अनंगविकृतानि कामावेशदर्शिकाः शृंगारचेष्टाः शृंगारानुभावाः, यद्वा भावहावहेलाख्याः त्रयः अंगजाः लीलादयो दश च स्वाभाविकाः इति मिलित्वा त्रयोदश क्रियात्मानः स्त्रीणामलंकाराः तानि, नाट्येन नटकर्मणा अभिनयेन, दीप्तानि उज्ज्वलितानि । अत्रेदमवधेयं यत्—चाण्डालीनामपि हि रूपलावण्यसंपदो दृश्यंते, न तु चेष्टालंकाराः—ये देहमात्रनिष्ठाः न तु चित्तवृत्तिरूपाः, ये च बाल्ये अनुद्भिन्नाः, वार्धक्ये तिरोभूताः, यौवने तु उद्रिक्ता दृश्यंते, तेषामनंगविका-

---

९७० गर्वं मुष्णन्त्यविकल्पितं तस्याः ( र. स्तं )

**दग्धेऽपि वपुषि भीतिं न विमुञ्चति नीललोहितसमुत्थाम् ।**
**तत्क्षेत्रे वसति यतः प्रमदारूपेण शम्बरध्वंसी ॥ ९७१ ॥**

---

राणामत्र संग्रहः तस्याः केवलरूपवतीभ्यः व्यवच्छेदाय वैलक्षण्याय च इति । एवं तस्याः यौवनावच्छिन्नं रूपं, नाट्योद्दीतानि अनंगविकृतानि च संभूय, शमिनां शमवतां मुनीनामपि, शमस्य वशीकृतेंद्रियव्यापारत्वस्य जितेन्द्रियत्वस्य, वर्णितं च तस्य स्वरूपं क्षेमेन्द्रेण यथा–" येन प्राणमनःप्रिया वसुमती संत्यज्यते लीलया, त्रैलोक्याभिमतेऽपि यः स्मरसुखे वैमुख्यदीक्षागुरुः । संमोहे व्यसनातुरं जगदिदं येनानुकम्पास्पदं, पुण्यैः कोऽपि स जायते मतिमतां संसारवामः शमः ॥" ( बोधि० कल्प० ४०।६२ ) इति, ( अत्र प्रथमपादेन अर्थे वैराग्यं, द्वितीयेन कामे च तत्सूचितम्; तृतीयेन धर्मपरता सूचिता । तस्य गर्वं परावज्ञारूपं अभिमानं, अविकलं निःशेषतया संपूर्णतया, मुष्णंति चोरयंति अपहरन्ति, यथोक्तं काव्यालंकारे ( ७।६७ )–" तारुण्यमाशु मदनं, मदनः कुरुते विलासविस्तारम् । स च रमणीषु प्रभवञ्जनहृदयावर्जनं बलवत् ॥" इति । उक्तं च सूक्तिमुक्तावल्यां–"तारुण्यामृतनिर्झरप्रसृतिभिः सिक्ताऽखिलाऽङ्गस्थली, जातास्तत्र नवीनयौवनकलालीलालतापंक्तयः । तस्मिन्नेव विशेषशीतलतरच्छायासु सुप्तोत्थितः कंदर्पस्त्रिजगज्जयोद्यमपरो ह्यद्यापि निद्रालसः ॥ " इति ॥ ९७० ॥ पुनः तां प्रकारान्तरेण वर्णयति दग्धे इति । वपुषि देहे, दग्धे भस्मीभूते, अपि देहाभावेऽपि इत्यर्थः, कामः अनंगः, नीललोहितः शिवः, तदुक्तं–" नीलं येन ममांगं तु रसाक्तं लोहितत्विषम् । नीललोहित इत्येवं तेनाहं परिकीर्तितः ॥" इति, शिवपुराणे तु–" भूत्वा लोहितमाश्वेव पुनर्नीलमभूत्ततः । नीललोहित इत्येव तेनासावभवत्प्रभुः ॥" इति; यद्वा कंठावच्छेदेन नीलः, सर्वांगावच्छेदेन लोहितः; अथवा नीला प्रकृतिः तमःप्रधानतया, लोहितः पुरुषः रजःप्रधानतया, उभयात्मकत्वान्नीललोहितः इति, तस्मात् समुत्थां उत्पन्नां, भीतिं भयं हरनेत्रजकोपानलात् अनुभूतं, न विमुंचति न त्यजति । एतन्निर्णये हेतुमाह–तदिति । यतः यस्मात् , तस्याः मंजर्याः क्षेत्रे देहे, " क्षेत्रं शरीरे दारेषु केदारे सिद्धसंश्रये ।" इति विश्वलोचनः, प्रमदारूपेण स्त्र्याकारेण मंजर्याकारं स्त्रीरूपं धृत्वा इति भावः, शम्बरध्वंसी शंबरनाम्नः दानवस्य हिरण्यकशिपुपूर्वजस्य विनाशकः कामदेवः, दंत्यादिरपि शंबरशब्दः, तदुक्तं–" तालव्या अपि दंत्याश्च शंबशंबरशूकराः । रशनाऽपि च जिह्वायां, शृगालः कलशोऽपि च ॥" इति । तथा च शिवपुराणे धर्मसंहितायां अष्टमाध्याये–" रुद्रेण या पुरा दग्धा ललाटनयनाग्निना । कामस्य मूर्तिराद्या सा पुनर्जाता हरेर्गृहे ॥ ४३ ॥ त्रैलोक्य-

यदि वः परलोकमतिः शृणुत श्रेयस्तपोधना मत्तः ।
उत्सृज्य यात तूर्णं वारवधूभूषितं स्थानम् ॥ ९७२ ॥

---

जयिनी विष्णोः प्राद्युम्नी तैजसी शुभा । हरितः श्यामवर्णा च सर्वभूतमनोहरा ॥४४॥ रुक्मिण्यां जातमात्रस्तु शंबरेण हृतः पुरा । तामसं ज्ञानमाश्रित्य मायावत्यै समर्पितः ॥ ४५ ॥ तया संवर्धितो भूयः पूर्वरत्या पतिश्च सः । बोधितस्तु ततस्तेन शंबरो निहतो युधि ॥ ४६ ॥ " इति, वसति " स्त्रियः अवध्याः " इति कृत्वा । अनंगोऽपि कामः हरात् भीतभीतः सन् " स्त्रियोऽवध्याः " इति मंजर्याः रूपं धृत्वा स्त्रीरूपेण तिष्ठति इति उक्तं भवति । तेन सा अनंगवत् परं रत्युद्दीपनी इति ध्वन्यते । अनुमानालंकारः साध्यस्य पूर्वार्धस्य हेतोः उत्तरार्धे वर्णनात् । स च अपन्हुत्यलंकारेण उत्थापितः, उत्तरार्धे प्रकृतायाः मंजर्याः अप्रकृतेन स्त्रीरूपधारिणा मदनेन अपलापात् , स च रूपशब्दनिबंधनः । द्वयोरंगांगिभावेन संकरः ॥ ९७१ ॥ अप्रत्यक्षान् श्रेयस्कामान् लक्ष्यीकृत्य स्वानुभवमुपदिशति यदीति । हे तपोधनाः धनस्यैव परमप्रेमास्पदत्वात् तेषां तपः एव परमप्रेमास्पदं इति, अतः तेषां अर्थकलत्रादिविषयकः अभिलाषः निरस्तः, यद्वा तपः धनं धनवत् इष्टार्थसाधकं येषां ते तपोधनाः; वः युष्माकं, यदि इति संभावनायां, परलोके परस्मिन् उत्कृष्टे लोके भुवने स्वर्गाख्ये इति यावत् , मतिः इच्छा, "मतिर्बुद्धौ स्मृतीच्छयोः " इति विश्वलोचनः, स्वर्गकामोऽस्ति चेत् , तदा मत्तः मत्सकाशात् , श्रेयः निःश्रेयसं मोक्षः लक्षणया तत्साधनं इत्यर्थः, शृणुत आकर्णयध्वं, इति अवधानदानशिक्षा । तत् किमित्याह वारेति । वारवधूभिः कामास्त्रभूताभिः सुरसुंदरीभिः वेश्याभिः वा, इदं अन्यासां वनितानामप्युपलक्षणं, भूषितं मंडितं अधिष्ठितं इति यावत् , स्थानं, उत्सृज्य त्यक्त्वा, तूर्णं शीघ्रं, यात निर्गच्छत । यतः " अप्रतिहताशो मदनः " इति विश्वामित्रादिवत् ताभिः स्वर्गपदवीनिरोधकः तपोभंगः सुकरः । तथा चोक्तं— "यदि वाञ्छसि परपदमारोढुं, मैत्रीं परिहर सह वनिताभिः । मुह्यति मुनिरपि विषयासंगाच्चित्रा भवति हि मनसो वृत्तिः ॥ " ( छंदःसूत्रवृत्तौ हलायुधेन ) इति; अपि च " भववीतये हृतबृहत्तमसामवबोधवारि रजसः शमनम् । परिपीयमाणमिव वोऽसकलैरवसादमेति नयनांजलिभिः ॥ " ( किरात० ६।४१ ) इति, ( तमोगुणनाशे जातेऽपि रजोगुणस्य निवर्तकं यत् ज्ञानजलं, रजः धूलिः इत्यपि, तत् , युष्माकं वारवधूनां असकलैः असमग्रैः अर्धोन्मीलितैरित्यपि सूच्यते, नयनांजलिभिः नेत्रपूरैः पीयमानमिव अवसादं क्षयं एति । ) तथा " शृणु हृदय रहस्यं यत्प्रशस्तं मुनीनां न खलु न

---

९७२ वारवध्वदूषितं ( प. स्तं )

चिरमपि विकल्प्य निश्चितिरियमेव स्थाप्यते, न गतिरन्या ।
तन्निर्माणे जाता लावण्यमयाः कणा विधेरणवः ॥ ९७३ ॥
आसाद्य समुच्छ्रायं तस्याः स्तनयुगलमविहतप्रसरम् ।
क्षपयति यज्जनमेवं कस्त्यक्ष्यति तद्विवेकवान् पतितम् ॥९७४॥

---

खलु योषित्संनिधिः संनिधेयः । हरति हि हरिणाक्षी क्षिप्रमक्षिक्षुरप्रैः पिहितशमतनुत्रं चित्तमप्युत्तमानाम् ॥" इति । ( क्षुरप्रः घासच्छेदनास्त्रं, 'खरपी' इति प्रसिद्धं, तनुत्रं कवचम् । ) इदं उपदेशः, तल्लक्षणं च–"हितैषितयाऽज्ञातज्ञापनमुपदेशः ।" इति कर्णभूषणे ॥९७२॥ तस्याः स्फुरल्लावण्यायाः लावण्यातिशये कारणं कल्पयति चिरमिति । सुदीर्घकालमपि, विकल्प्य तुल्यबलान् विरुद्धान् पक्षान् विचार्य, इयमेव उत्तरार्धेन वक्ष्यमाणा, निश्चितिः निश्चयः संदेहरहितं ज्ञानं, स्थाप्यते दृढीक्रियते; न अन्या गतिः न अन्यः कोऽपि मार्गः पक्षः इति यावत् निश्चयकोटिं अवगाहते । तामेवाह तदिति । तस्याः निर्माणे देहघटने, विधेः स्रष्टुः प्रजापतेः, अणवः तद्देहरूपद्रव्योपादानकारणीभूताः परमाणवः, लावण्यमयाः कणाः सूक्ष्मांशवः, जाताः अभूवन् । लावण्यमयाः– लावण्यं तु "मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदंगेषु लावण्यं तदिहोच्यते ॥" इति (रसार्णवसुधाकरे १।१८१) लक्षितं, तस्य प्राचुर्यं यत्र ते, अत्र "प्राचुर्यार्थे मयट् ।" सर्वेऽप्यवयवाः केवलं लावण्यमयाः इति भावः । एवं वासवदत्तायां कंदर्पकेतुमुद्दिश्य–"वेधसा जगत्त्रयसमवायिरूपपरमाणूनादाय विरचितोऽयमिति ।" इति । अत्र साध्यस्य तल्लावण्यातिशयस्य प्रतीतये अलौकिकसाधननिर्देशात् अनुमानालंकारः, णकारस्य असकृदावृत्तेः अनुप्रासश्च ॥ ९७३ ॥ तस्याः स्तनयुगलमुद्दिश्य आह आसाद्येति । तस्याः स्तनयुगलं कुचद्वंद्वं, अविहतप्रसरं प्रतिदिनं निर्बाधं व्यायामं प्राप्नुवत्, समुच्छ्रायं उन्नतिं, आसाद्य प्राप्य, तथाहि आभोगि उन्नतं च स्तनयुगलं प्रशस्तं, तदुक्तं–"सुवृत्तमुन्नतं पीनमदूरोन्नतमायतम् । स्तनयुग्मं सदा शस्तं" इति भविष्यपुराणे, यत् युग्मं कर्तृ, जनं लोकं निरपराधिनं, एवं अविहतप्रसरं यथाप्रसिद्धं यथाप्रत्यक्षं वा, क्षपयति क्षि क्षये इत्यस्य णिजन्तं रूपं दौर्लभ्येन क्षीणं करोति इत्यर्थः, तत् युगलं कर्म, पतितं लक्षणया समागतं इत्यर्थः, चक्षुषोः इति वा अध्याहार्यं, तेन दृष्टं इत्यर्थः, विवेकवान् सारासारयोः लाभालाभयोः वा ज्ञाता, कः पुरुषः, त्यक्ष्यति परिहरिष्यति, न कोऽपि, अपराधिनो ग्रहणं युक्तमेवेति

---

९७३ गतिरस्याः ( स्तं ) । लावण्यसरित्कणा ( प. स्तं ) ९७४ °मवहितप्रसरम् (गो) । यज्जनमेकं ( गो ) । कस्त्यक्ष्यति तद्वि° ( प. स्तं ) कः स्प्रक्ष्यति ( गो ) । यतितम् ( स्तं )

स कथं न स्पृहणीयो विषयरतैस्तन्नितम्बविन्यासः ।
शान्तात्मनाऽपि विहितं विश्वसृजा गौरवं यस्य ॥ ९७५ ॥
स्मरणाद्यस्योत्पत्तिः सुमनस इषवोऽबलाश्रया शक्तिः ।
सोऽपि व्यङ्गः प्रहरति, धातुरहो चित्रमाचरितम् ॥ ९७६ ॥

---

इति भावः । तथा च कश्चित् राज्ञः पुरुषः प्राप्तोन्नतपदः अप्रतिबद्धक्रियः सन् प्रजाः पीडयन् दृष्टिगोचरतां गतः विवेकिभिः न परिह्रियते अपि तु अपराधितया संगृह्यते एव इति गम्यत्वेन समासोक्तिरलंकारः ॥ 'कः स्प्रक्ष्यति' इति पाठे तादृशं आदौ औद्धत्येन लोकपीडाजनकं कालातिक्रमेण पतितं भ्रष्टं कः स्प्रक्ष्यति तस्य स्पर्शं कोऽपि न करिष्यति इत्यर्थः; यतः "कासां न सौभाग्यगुणोऽङ्गनानां नष्टः परिभ्रष्टपयोधराणाम् ॥" इति, तथा–"पतितानां संसर्गं त्यजंति दूरेण निर्मला गुणिनः । इति कथयजरतीनां हारः परिहरति कुचयुगलम् ॥" (४।८३) इति वाग्भटालंकारे । अतः इदानीमेव तदुपभोग्यं इति भावः । अपि च पतितं स्वकर्महीनं पातकिनं यद्वा स्वाधिकारात् भ्रष्टं पूर्वं उन्नतं पदमवाप्य प्रजापीडकं न कोऽपि स्पृशति इति अस्मिन् पाठे समासोक्तिः ॥ उभयोः पाठयोः प्रथमस्य शृंगारगर्भत्वात् सः श्रेयान् ॥ उत्तरार्धे 'एवं' इत्यत्र 'एकं' इति पाठं स्वीकृत्य ] 'एकं असहायमेव, इदं स्तनयुगलेनान्वेति ।' [ इति टिप्पणी । "स्वकर्महीने पतितो गते भ्रष्टेऽपि च त्रिषु ।" इति मंखकोशः ॥ प्रकृतार्यायाः वैपरीत्यभावेन काचित् सूक्तिः–"सुवृत्तस्यैकरूपस्य परप्रीत्यै कृतोन्नतेः । साधोः स्तनयुगस्येव पतनं कस्य तुष्टये ॥" इति ॥ ९७४ ॥ कामिनां अतिप्रेमास्पदत्वेन वर्णितमपि (आ. ९६६) नितंबं पुनः वर्णयति स इति । अनेन तस्य कामातिशयः सूचितः । तस्याः सः नितंबस्य कटिपश्चाद्भागस्य विन्यासः रचना, विषयरतैः-पुरुषं विसिनंति बध्नन्ति ते विषयाः रूपरसादयः इंद्रियार्थाः तेषु रतैः आसक्तैः, कथं न स्पृहणीयः अभिलषणीयः, यस्य नितंबस्य नतस्य, शान्तात्मना शान्तः विषयेभ्यो व्यावृत्तः विरुद्धः वा आत्मा चित्तवृत्तिः यस्य तादृशा, अपि, विश्वसृजा विधात्रा, गौरवं–गुरोः भावः गुरुत्वं महत्त्वं भारवत्त्वं, पक्षे आराध्यत्वं पूज्यत्वं, विहितं कृतम् । नितंबस्य गौरवं प्रशस्तं, तदुक्तं स्कांदे काशीखंडे–"नितंबबिंबो नारीणामुन्नतो मांसलः पृथुः । महाभोगाय संप्रोक्तः" इति । (पृथुः गुरुः ।) तथा च तादृशगौरवान्विते नितंबे अस्मत्सदृशां कामिनां अभिलाषः अनिवार्य एव इत्याशयः । श्लेषमूलिका काव्यार्थापत्तिः अलंकारः, अप्राकरणिकात् नितंबस्य विधिविहितगौरववृत्तान्तात् प्राकरणिकार्थस्य आपतनात् ॥ ९७५ ॥ कामस्य तद्द्वारा धातुः

---

९७५ गौरवं यत्र (सुभा०)

**तिष्ठन्त्वन्ये, दृष्ट्वा सारं जगतां तदङ्गनारत्नम् ।**
**नष्टपठनावधानो भवति ब्रह्मा सनिर्वेदः ॥ १७७ ॥**

---

च चित्रचरितमाह स्मरणात् इति । स्मरणात् मनोधर्मविशेषात् स्मृतेः युवत्याः, यस्य कामस्य, उत्पत्तिः जन्म, यथोक्तं–" काम जानामि ते मूलं संकल्पाज्जायसे किल । " इति, तथा " मनो हि मूलं हरदग्धमूर्तेः ।" ( बृहत्संहितायां ७७।१४ ) इति, अतः 'स्मरः' 'मनसिजः' 'आत्मभूः' इति तस्य नामान्तराणि; अमूर्तात् स्मरणात् जातत्वात् सः असारः इति भावः । सुमनसः पुष्पाणि यस्य इषवः बाणाः, अतः 'कुसुमेषुः' इति तस्य नाम, सुकुमारप्रहरणः सः इति भावः । तथा शक्तिः बलं, न विद्यते बलं यासां तादृश्यः स्त्रियः आश्रयो अवलंबनं यस्य, यथोक्तं रतिरहस्ये–" अनंगेनाबलासंगाज्जिता येन जगत्त्रयी ।" ( १।१ ) इति, दुर्बलबलः सः इति भावः । " धनुर्भृंगश्रेणिर्जलतनुरमात्यः शशधरो, वसंतः सामंतः, कुसुममिषवः, सैन्यमबलाः । तथापि त्रैलोक्यं जयति मदनो देहरहितः, ( क्रियासिद्धिः सत्त्वे वसति महतां नोपकरणे ) ॥" इति । सोऽपि एवंप्रकारोपि वर्णितविधः, व्यंगः विगतानि नष्टानि अंगानि हस्तपादादीनि यस्य हरेण भस्मीकृतत्वात् सः, अतः 'अनंगः' इति तस्य नाम, स्थूलशरीररहितः सः इति भावः । एवं निःसारप्रभवदेहाश्रयप्रहरणोऽपि प्रहरति युवसु वृद्धेषु च घातं करोति, इति अत्यन्तविस्मयजनकं इति आकूतम् । अनया असंगत्या कामदेवस्य लोकोत्तरः अचिंत्यः प्रभावः प्रकाशितः । तत्समर्थयति धातुरिति । 'अहो इति अद्भुतानुवेधपारवश्यद्योतकं अव्ययं,' धातुः विश्वसृजः, चित्रं अद्भुतं, आचरितं कर्म । यथोक्तं–" विचित्राणि हि विधेर्विलसितानि " इति नागानंदनाटके ( ५ ), तथा–" अहो निसर्गजिह्मस्य दुरन्ता गतयो विधेः ॥" इति । अद्भुतो रसः । " विरूपकार्यानर्थयोरुत्पत्तिर्विरूपसंघटना च विषमम् ।" इति अलंकारसर्वस्वलक्षणात् विषमालंकारः, तस्य अर्थान्तरन्यासेन संकरः ॥ १७६ ॥ मंजरीरूपावलोकनोद्भूतां मुख्यदेवत्रयाणां अवस्थां त्रिभिः क्रमेण वर्णयति तिष्ठंत्वित्यादिभिः । तिष्ठंतु अन्ये मनुष्याः, तेषां वराकाणां का कथा इति भावः । ब्रह्मा आदिपुरुषः, जगतां चतुर्दशभुवनानां, सारं उत्कृष्टं वस्तु, तत् मंजरीस्वरूपं, अंगनारत्नं " जातौ जातौ यदुत्कृष्टं तद्धि रत्नं प्रचक्षते ।" इत्युक्तेः सर्वांगनासु उत्कृष्टा, यद्वा " सारं तु महिलारत्नं संसार इति निश्चयः ।" इत्युक्तेः, बृहत्संहितायां–" द्विपहयवनितादीनां स्वगुणविशेषेण रत्नशब्दोऽस्ति ।" ( ७९।२ ) इति चोक्तेः; ( ते गुणाश्च तत्रैव उक्ताः–" स्त्रीणां गुणा

---

१७७ जगतस्त॰ ( गो )

यदि पश्यति तां शर्वस्तदपररामासमागमाद्विमुखः ।
निन्दति मूर्धनि सोमं स्मराग्निसंधुक्षणं शरीरं च ॥ ९७८ ॥

---

यौवनरूपवेषदाक्षिण्यविज्ञानविलासपूर्वाः । स्त्रीरत्नसंज्ञा च गुणान्वितासु, स्त्रीन्याधयोऽन्याश्चतुरस्य पुंसः ॥" ( ७७।१३ ) इति । ( दाक्षिण्यं आनुकूल्यं, विज्ञानं कामशास्त्रोक्तप्रकारैः कलाभिश्च पुरुषचित्तग्रहणे कौशलम् । ) अंगना एव रत्नम्; अनेन सत्सु अपि अन्येषु हीरकमाणिक्यादिरत्नेषु अनयैव वसुंधरा रत्नवती इति सूचितं; तथा अन्येषां पामरप्रसिद्ध्यैव रत्नत्वं इयं तु परमार्थतः इति अपह्नवो व्यंग्यः । दृष्ट्वा, नष्टं अवसितं पठने चतुर्वेदपाठे अवधानं चित्तैकाग्र्यं यस्य सः, तद्रूपोपहतः वेदपाठे विस्मृत्या स्खलनशीलः सन् इति भावः, सनिर्वेदः " निर्वेदः स्वावमानना " तद्वान् स्वनिंदकः इत्यर्थः, भवति । ब्रह्मणो वेदस्खलनेषु तद्रूपावलोकनस्य कारणत्वकल्पनात् असंबंधे संबंधरूपा अतिशयोक्तिः अलंकारः, काव्यार्थापत्तिश्च, उभयोः संकरः ॥ ९७७ ॥ ब्रह्मणोऽनन्तरं महेश्वरस्य दशामाह यदीति । यदीति संभावनायां, तां मंजरीं, शर्वः प्रलये सर्वं शृणाति हिनस्ति इति शर्वः महादेवः, पश्यति पश्येत् नयनयुगलावलोकनविषयीकुर्यात्, तत् तदा, मंजरीं विहाय अपरस्याः अन्यस्याः कस्याश्चिदपि, रामायाः रमयते इति रामा रमणी तस्याः, समागमात् पराङ्मुखः भूत्वा, मूर्धनि शिरसि, स्थितं, स्मराग्नेः कामदाहस्य संधुक्षणं प्रवर्धकं, सोमं कामसुहृदं चन्द्रं, तदुक्तं—कर्णसुंदरीनाटिकायां—" परं मैत्रीपात्रं त्रिभुवनजिगीषोः स्मृतिभुवः । " ( २।१३ ) इति; तथैव अनंगमुद्दिश्य " परमसुहृदनंगो रोहिणीवल्लभस्य । " ( विद्धशालभंजिकानाटिकायां १।१ ) इति, यतः चन्द्रोऽपि कामस्य उद्दीपनविभावेषु एकः; निंदति निंदिष्यति, वर्तमानसामीप्ये लट्; तथा स्मराग्निना कामानलेन संधुक्षणं संतपनं दाहः यस्य तं कामशरलक्ष्यभूतं इति यावत्, स्वस्य शरीरं शीर्यते इति शरीरं देहं च, निंदति, यथोक्तं—" तव कुसुमशरत्वं शीतरश्मित्वमिन्दोर्द्वयमिदमयथार्थं दृश्यते मद्विधेषु ।" ( शाकुं० ३।२ ) इत्यादि । स्मराग्निसंधुक्षणं इत्यत्र अर्थश्लेषः, तथा हरेण तृतीयनेत्राग्निना कामशरीरं दग्धं, अनेनापि हरशरीरे तदेव क्रियते इति सूचनात् परिवृत्तिः व्यंग्या । देवदेवस्य तद्दर्शने इयं दशा, किमु वाच्या सा पामराणां जनानां इत्यर्थापत्तिपूर्वकः आक्षेपोऽपि अत्र पूर्वस्यां आर्यायां च ध्वन्यते । अत्र काव्यप्रकाशानुसारेण यद्यर्थातिशयोक्तिः अलंकारः, कुवलयानंदानुसारेण संभावनालंकारः ॥ ९७८ ॥

---

९७८ सर्वस्त° ( स्तं ) । °स्तद्रूपरामा (प) । [ अधिकमात्रः यतिभंगदूषितश्च पाठः ।] संधूक्षणं ( स्तं ) ।

केशव इह सन्निहितः, साऽपि मनोहारिरूपसंपन्ना ।
तद्वक्षः श्र्यवनभुवं कथमुज्झति सैन्धवीशङ्काम् ॥ ९७९ ॥
उदयति न पण्डितानां कथमात्मनि कौतुकं गजेन्द्रगतिः ।
यन्नववयसां पुंसां विना क्रियायोगमुपसर्गाः ॥ ९८० ॥

---

विष्णोस्तु भ्रममाह केशव इति । अत्र अर्थक्रमेण अन्वयः बोध्यः । सा मंजरी, अपि अपिना लक्ष्मीवत् इति बोध्यते, मनोहारि चित्ताकर्षकं यत् रूपं अनाकलितभूषणाद्याडंबरं सौन्दर्यं तेन संपन्ना अतिरूपवती इत्यर्थः । तथा तद्वक्षः वक्षःस्थलं कुचाभोगः, श्रिया औन्नत्यकाठिन्यादिशोभासंपत्त्या अवनं प्रीणनं भवति यस्मात् तत् श्र्यवनभुवम् । एवं सति केशवः, केशिनं असुरं वाति हन्ति इति केशवः, यद्वा कः ब्रह्मा च ईशः ईश्वरश्च तौ ध्येयत्वेन अस्य स्तः इति केशवः, इह मंजरीसन्निधौ, सन्निहितः समीपे वर्तमानः; कथं, तस्याः विषये, सिन्धोः समुद्रस्य अपत्यं स्त्री सैन्धवी लक्ष्मीः तस्याः शंकां वितर्कं इयं लक्ष्मीरिति भ्रमं, उज्झति त्यजति, न कथमपि इति भावः । तथाहि केशवः तामेव लक्ष्मीं मनुते इति तात्पर्यम् । अपि च श्लेषबलेन अपरोऽप्यर्थः उद्दिष्टः, यथा—केशवः केशाः प्रशस्ताः सन्ति अस्य इति केशवः, "केशाद्वोऽन्यतरस्याम् ।" (पा. ५।२।१०९) इति वः, केशवान् केशपाशः इत्यर्थः, इह मंजरीशरीरे संनिहितः, तथा सा अतिरूपवती सिन्धुवत् चित्ताकर्षिणी । तस्याः वक्षः वक्षःस्थलं श्रियः लक्ष्म्याः रूपलक्ष्म्याः इति भावः, अवनं रक्षणं, "प्रीणने रक्षणेऽवनम् ।" इति मंखकोशः, भवति यस्मात् तत्, लक्ष्म्याः समुद्रमथनेन जातत्वात् तस्य पितृत्वेन लक्ष्म्याः तत्र निवासाच्च समुद्रस्य तत्पालकत्वम्, अतः केशवसांनिध्यात् मनोहारिरूपवत्त्वात् लक्ष्मीनिवासात् च, लोकः इति शेषः, मंजरीविषये सिन्धोः अब्धेः समुद्रस्य संबंधिनीं सैंधवीं इयं सिन्धुः इति शंकां भ्रमं, भ्रमस्य सादृश्यमूलकत्वात्, तच्चात्र श्लेषेण निर्व्यूढं, कथं त्यजति । अत्र श्लेषः ससंदेहश्च अलंकारौ ॥ ९७९ ॥
पंचभिः अद्भुतफलां तस्याः विस्मापकतां वर्णयति उदयतीत्यादिभिः । गजेन्द्रगतिः कुचनितंबभारेण अलसतया हस्तिवत् मन्दगामिनी अलसगमना वा सा, आत्मनि स्वविषये, पंडितानां पण्डा शास्त्रोज्ज्वला बुद्धिः सा संजाता अस्य इति पंडितः, तारकादित्वात् इतच्, तेषां विदुषां, कौतुकं कुतूहलं, कथं न, उदयति उत्पादयति

---

९७९ °क्षश्र्यवन (गो. प. स्तं) [ केवलं लिपिसारूप्यमोहाद्भ्रमरहितः पाठः ] । कथमुदयति सैन्धवी शङ्का (गो) सैन्धवीशङ्काम् (प. स्तं) ९८० °मति (प) । °मुपसर्गः (गो. स्तं)

श्रुतिकुवलयमीक्षणतां कुवलयतां वा विलोचनं यायात् ।
हरिणदृशो यदि न स्यात् कनकोज्ज्वलकेसरं मध्ये ॥ ९८१ ॥

उत्पूर्वकस्य ई गतौ इ गतौ इत्यस्य वा अंतर्भावितण्यर्थस्य रूपम् । कथमेवमित्याह यदिति । यत् यतः, नववयसां आद्यतारुण्यावतारभूमीनां, प्रथमतारुण्यं च वर्णितं ( ६७५ आ. टी. ), पुंसां पुरुषाणां, एतद्विषये क्रियायोगं विना, उपसर्गाः दृश्यंते; तथाहि–उपसर्गाः निपातवत् अंतरंगाणि विशेषणानि, क्रियाविशेषार्थाभिव्यक्तिकारिणः कर्मप्रवचनीयेभ्यः भिन्नाः, स्वभेदेन क्रियायाः अर्थभेदजनकाः, तेषां धातोः पूर्व प्रयोगः, ते च अव्यवहिताः सन्तः अर्थकारिणः, तथा च व्यक्तिविवेके–" विशेषणं हि द्विविधमान्तरं बाह्यमेव च । तत्राव्यवहितं यद्यदर्थकारि तदान्तरम् ॥ ... विशेष्योऽपि द्विधा ज्ञेयो धातुनामार्थभेदतः ।...तत्रोपसर्गाणां प्रायो (प्रायस्तत्रोप० ?) धात्वर्थो विषयो मतः । " इति । प्रादयः द्वाविंशतिः उपसर्गाः, क्रियायोगवंत एव द्योतकाः, तच्छून्यास्तु न द्योतकाः इति सिद्धान्तः, तद्वैपरीत्यमत्र क्रियायोगं विना उपसर्गास्तित्वरूपं दृश्यते इति सिद्धान्तविरोधेन पंडितानां विस्मयः । विरोधपरिहारस्तु क्रियायोगं क्रिया संयोगरूपा तया योगं संबंधं विना, उपसर्गाः उपद्रवाः उपप्लवाः पीडाः विरहजन्या इति भावः, तरुणानां भवंति इति ।] ' क्रिया समागमरूपो व्यापारः इत्यर्थः, भ्वादिक्रियाशब्दाश्च । उपसर्गः पीडा प्रादिशब्दाश्च । प्रादीनां उपसर्गत्वं क्रियायोग एव शब्दशास्त्रे भवति, अत्र [ युवविषये ] तु तां विना तत्प्राप्त्या कौतुकजनकत्वं युक्तमेव ।' [ इति टिप्पणी । अत्र श्लेषोत्थापितः विभावनालंकारः, विरोधश्च व्यंग्यः । एतच्छायया कस्यापि राज्ञः चाटुः–" ' उपसर्गाः क्रियायोगे ' ( पा. १।४।५९ ) पाणिनेरिति संमतम् । निष्क्रियोऽपि तवारातिः सोपसर्गः सदा कथम् ॥ " इति ॥ ९८० ॥ नेत्रसौन्दर्यं वर्णयति श्रुतीति । हरिणदृशः मृगाक्ष्याः तस्याः श्रुतिकुवलयं श्रुतौ कर्णे अलंकारत्वेन धृतं कुवलयं नीलोत्पलं, ईक्षणतां यायात् नेत्रत्वेन गृहीतं भवेत् , वा इति विकल्पे, विलोचनं नेत्रं वा नीलोत्पलत्वेन गृहीतं भवेत् , उभयोरभेदादिति भावः, यदि मध्ये नीलोत्पलस्य इति भावः, कनकवत् हेमवत् उज्ज्वलं दीप्तं केसरं किंजल्कं पुष्पमध्यवर्तितन्तुमंडलं प्रायः पीतवर्णं, जातावेकवचनं, न स्यात् , कमले पीतवर्णकिञ्जल्कसद्भावेन नीलोत्पलनेत्रयोः अन्योन्याध्यासः न उद्भवति इति भावः । कमले केसराभावे सति जनैर्भ्रान्त्या तस्या नेत्रं कमलत्वेन, कमलं वा नेत्रत्वेन गृहीतं स्यादित्याशयः । अनेन तस्याः नेत्रयोः आकर्णान्तगामित्वरूपदैर्घ्यं नीलत्वं च व्यञ्जितम् ।

९८१ कुवलयितां वा (प)

ललनास्तदतुल्यतया पुरुषा अपि तदुपभोगविरहेण ।
गच्छन्ति शोषमनिशं, प्रकृतिद्वयवर्जिताः स्वस्थाः ॥ ९८२ ॥
दुर्वृत्तयोर्न वृत्तं श्लाघास्पदमेति तत्पयोधरयोः ।
यौ दत्त्वाऽमलमूर्तिं मध्ये हारं जनक्षयं कुरुतः ॥ ९८३ ॥
भूमण्डलेऽत्र सकले नातःपरमपरमद्भुतं किञ्चित् ।
नो जाता यदपार्था कृशोदरी धार्तराष्ट्रयाताऽपि ॥ ९८४ ॥

---

अत्र निषेधमुखसंभावनाद्वारा कल्पितभ्रांतिमान् अलंकारः॥ ९८१ ॥ पुनश्च ललनाः रमण्यः अपराः स्त्रियः, तदतुल्यतया रूपविलासादिषु तस्याः असमानतया, ततः हीनत्वात् इति भावः; तथा पुरुषाः पुल्लिंगाः, तस्याः उपभोगस्य आलिंगनादिसुरतान्तसेवनस्य विरहेण अप्राप्त्या, दर्शनेऽपि स्पर्शनादेः अभावेन इति भावः, अनिशं निरन्तरं, शोषं तानवं कार्श्यं श्लेषबलेन तदाख्यं रोगं च, गच्छंति उपयांति । स्त्रियः ईर्ष्याग्निना तप्यमानाः शरीर-तानवं, पुरुषाश्च विरहाग्निना दंदह्यमानाः शोषरोगं प्राप्नुवन्ति इति भावः । "शोष-स्तानवरोगयोः" इति मंखकोशः । ननु एवं अस्मिन् लोके न कोऽपि सुखी इति चेत् न, ] प्रकृतिद्वयवर्जिताः [ स्त्रीपुरुषभिन्नाः ] पण्ढाः [ इत्यर्थात् ; स्वस्थाः स्वस्मिन् आत्मनि तिष्ठन्ति ते अव्याकुलचित्ताः सुखिनः इत्यर्थः ॥ स्वस्थाः इत्यस्य साध्यत्वे प्रकृतिद्वयवर्जितत्वरूपहेतुकथनात् अनुमानालंकारः ॥ ९८२ ॥ हारालंकृतस्तनौ वर्ण-यति दुर्वृत्तयोरिति । दुष्टं वृत्तं चरित्रं ययोः तयोः ] दुर्वृत्तयोः दुराचारयोः [ अपि च सुदृढयोः, "वृत्तमध्ययने पद्ये चरित्रे वर्तने मृते । अल्पाशये त्रिलिंगः स्यादतीते निस्तले दृढे ॥" इति मंखकोशः, तस्याः पयोधरयोः कुचयोः, वृत्तं चरितं श्लाघास्पदं न एति न प्रशस्तम् । ] दुराचारमेव प्रतिपादयति यौ इति । [ यौ कुचौ, अमलमूर्तिं स्वच्छं, अपि च अपापं, हारं मुक्तावलिं, मध्ये आत्मनोः अन्तरे, दत्त्वा स्थापयित्वा, संप्रापितशोभातिशयेन, अपि च श्लिष्टपदबलात् अपापं निष्कपटं कञ्चन मध्ये कृत्वा नाम मध्यस्थं कृत्वा प्रतिभूतया संस्थाप्य, जनक्षयं लोकमृत्युं, कुरुतः संपादयतः, तदेतद्वृत्तं तयोः दुर्वृत्तत्वपोषकं निंद्यं इति भावः ॥ व्याजस्तुतिः अलंकारः, अत्र दुर्वृत्तादिशब्दैः प्रतिपाद्यमानायाः निंदायाः पयोधरयोः वृत्तत्वहारवत्त्वमनोहर-त्वादिस्तुतौ पर्यवसानात् ; तल्लक्षणं च "व्यक्तिर्व्याजस्तुतिर्निन्दास्तुतिभ्यां स्तुतिनि-न्दयोः ॥" इति कुवलयानंदे ॥ अत्र वक्रभणित्या प्रशंसनम् ] ॥ ९८३ ॥ 'अपार्था पार्थाः युधिष्ठिरादयः तद्भिन्ना इत्यर्थः, निरर्थरूपा च नो जाता । धार्तराष्ट्रेषु दुर्योध-

---

९८२ शोकमनिशं ( प. स्तं ) [ हीनार्थः पाठः ] ९८४ याता नो गद पार्था ( प. स्तं) [ अर्थरहितोऽक्षरमात्रः पाठः ]

कृश एष मध्यदेशस्तन्व्या नाहार्यमण्डनं वोढुम् ।
शक्त इति कृतं विधिना रोमावलिभूषणं सहजम् ॥ ९८५ ॥

नादिषु याता अनुगता, हंसगामिनी च ।' [ इति टिप्पणी । पूर्वार्धोक्तं अद्भुतं उत्तरार्धे प्रकटयति नो इति । इयं कृशोदरी कृशं अस्थूलं अनुन्नतं निम्नतलं, उदरं नाभ्यधोभागः 'पेट' इति भाषायां प्रसिद्धः, यस्याः सा; स्त्रीणां तादृशस्य उदरस्य प्रशस्तत्वात् तद्वती, तदुक्तं–" उदरेणातितुच्छेन विशिरेण मृदुत्वचा । योषिद्भवति भोगाढ्या नित्यं मिष्टान्नसेविनी ॥" (काशीखंडे) इति ॥ धार्तराष्ट्रैः धृतराष्ट्रपुत्रैः कौरवैः सह याता गता अपि, अपार्था पृथायाः कुन्त्याः पुत्राः पार्थाः पाण्डवाः न विद्यंते यस्याः सा तादृशी नो ज ता, कौरवपाण्डवानां वैरित्वात् सहावस्थानासंभवेऽपि तया सह तद्दर्शनात् अद्भुतत्वम । विरोधपरिहारस्तु–धार्तराष्ट्रः कृष्णवर्णचंचूचरणयुक्तः हंसभेदः 'गेडिहंस' इति वंगभाषायां प्रसिद्धः, (रक्तवर्णचंचूचरणयुक्तस्तु राजहंसः इति भेदः,) तद्वत् लीलाञ्चितसविभ्रमं यातं गमनं यस्याः सा हंसगामिनी, अपिः चार्थकः, अपार्था अपगतः निवृत्तः अविद्यमानः अर्थः प्रयोजनं जनुषः इत्यर्थात् यस्याः सा, नो जाता न अभूत्, अतिरूपवत्त्वात् लोकनेत्रानंददायित्वात् सफलजनूः इति भावः ॥ अत्र श्लेषोत्थापितविरोधालंकारेण अद्भुतो रसो व्यंग्यः ॥ ९८४ ॥ तस्याः रोमावलिं वर्णयति कृश इति । अस्याः तन्व्याः अस्थूलशरीरायाः, अनेन तस्याः स्वाभाविकं कृशत्वं सूचितं; एषः मध्यदेशः कटिभागः, कृशः अतिकनीयान् सन्, ] 'अहार्यः पर्वतः, अत्र स्तनौ तत्त्वेनोक्तौ' [ इति टिप्पणी, तत्र " त्रिषु हर्तुमशक्ये स्यादहार्यं पर्वते पुमान् ।" इति मंखकोशः, त प्रकृते असंगतम् । वस्तुतस्तु आहार्यमंडनं इति च्छेदः, आहार्यमंडनं च आहर्तुं शक्यं यत् आभरणं तत्, आभरणं च चतुर्विधं, तथाहि भरतः–" चतुर्विधं च विज्ञेयं देहस्याभरणं बुधैः । आवेध्यं बंधनीयं च क्षेप्यमारोप्यकं तथा ॥ आवेध्यं कुंडलादीह यत्स्याच्छ्रवणभूषणम् । श्रोणिसूत्रांगदैर्मुक्ताबंधनीयावि(नि ?) निर्दिशेत् ॥ प्रक्षेप्यं नूपुरं विद्याद्वस्त्राभरणमेव च । आरोप्यं हेमसूत्राणि हाराश्च विविधाश्रयाः ॥" ( २१।११–१३) इति, प्रक्षेप्यं रशनादिकं, तत् वोढुं धारयितुं, न शक्तः कृशत्वात्, इतिशब्दः हेतौ, विधिना विधत्ते करोति इति विधिः स्रष्टा तेन, रोमावलिः जघनादूर्ध्वं नाभिपर्यंतं नाभेरूर्ध्वं वा रोम्णां सूक्ष्मवालानां रेखा यौवनप्रादुर्भावसूचिका सा एव भूषणं अलंकारः, सहजं शरीरेण सहैव जातं अकृत्रिमं (स्वाभाविकं) च कृतं निर्मितं,

९८५ मण्डलं ( गो ) [ असंगतार्थः पाठः ] । °ण्डनं वाहुं ( प ) [ असंगतार्थः पाठः ]

साकम्पोऽधर, ईक्षणयुगलस्याधीरता, भ्रुवो भङ्गः ।
तन्वङ्ग्या बलमीदृग् जयति जगत्तदपि निःशेषम् ॥ ९८६ ॥
वहतु नितम्बः स्थूलो रशनां, हारं च कुचयुगं पीनम् ।
तद्बाहुमृणालिकयोः सापायं कटकयोजनमयुक्तम् ॥ ९८७ ॥

---

सहजानां अंगानां मूर्ध्नि स्थितानां वा केशानां भारः न भवति इति कृत्वा, यद्वा 'सहजानां परस्परकृतपरिश्रमः सह्य एव न तथाऽन्यसंपादितः' इति न्यायेन तेन सहजं भूषणं कृतं इति भावः । अनया सा स्वभावेनैव तनुमध्या कोमला अकृत्रिमरूपवती च इति ध्वनितम् । पदार्थहेतुकं काव्यलिंगमलंकारः, तनुः मध्यदेशश्च अहार्यः पर्वत एव मंडनं तत् वोढुं अशक्तः, मध्यदेशे पर्वताभावात् इति समासोक्तिः अपि । ॥ ९८५ ॥ समुच्चयेन अधरादीन् वर्णयन् 'अबलाकुलगुरुवत् (कामदेववत्) अबलायाः अपि तस्याः अद्भुतबलवत्त्वमाह साकम्प इति । तस्याः अधरः ओष्ठः,साकम्पः ईषत् कम्पः आकम्पः तेन सहितः साकम्पः किञ्चित्स्फुरन्, अयं रत्युद्भवसूचकः अधरस्य गुणः, तथापि अनेन तस्य भीरुता सूचिता । एवमन्यत्र । ईक्षणयुगलस्य नेत्रयोः अधीरता चाञ्चल्यं, अनेन तयोः वीरोचितधैर्यस्य अभावः लक्षितः । भ्रुवः नेत्रोर्ध्वस्थरोमराजेः, इदं अपरस्या अपि उपलक्षणं, भंगः भेदः कौटिल्यं वक्रिमा, भ्रूभंगः चिल्लीवल्ली, अत्र भंगशब्देन भयवशात् नाशः व्यंजितः । तन्वंग्याः तनुविशेषणेन प्रधानस्य उक्तांगविशिष्टांगिनः अपि निर्बलत्वं ध्वनितं, ईदृग् वर्णितप्रकारकं, बलं सामर्थ्यं अपि च शब्दशक्त्या सैन्यं,अर्थात् स्वस्याः तदंगभूतानां च बललेशाभाव एव, तदपि तथापि, निःशेषं सकलं, जगत् लोकं, जयति पराभवति स्वस्याः वशवर्ति कुरुते इति भावः, इयं मंजरी । इत्यहो आश्चर्यं इति भावः ॥ अनया तस्या जगज्जैत्रं सौन्दर्यं लोकोत्तरं इत्युक्तम् ॥ समुच्चयविषमालंकारविशेषयोः संसृष्टिः, "विरूपकार्यस्योत्पत्तिरपरं विषमं मतम् ।" इति कुवलयानंदीयलक्षणात् ॥ ९८६ ॥ तस्याः अन्यानलंकारान् विवेचयति वहतु इति । तस्याः नितंबः स्थूलः बृहन् सन्, रशनां 'रसना' इत्यपि शब्दः कांची, तां वहतु, काञ्च्याः भारवत्त्वेऽपि नितंबस्य पुष्टत्वात् तद्भारं वोढुं सामर्थ्यात्; एवं कुचयुगं अपि पीनं पुष्टं प्राप्तसमुचितपरिणाहोच्छ्रायं सत्, हारं मुक्तादिरत्नमयं, पूर्वोक्तन्यायेन वहतु, न तत्र कापि विप्रतिपत्तिः हानिः वा इति भावः । परंतु तस्याः बाहू मृणालिके बिसतंतू इव, तद्वत् कोमलौ इति भावः, तयोः सापायं अपायः अनर्थः तेन सहितं सापायं, अनर्थकरं इति भावः, कटकयोजनं

---

९८६ भ्रुवोर्भङ्गः (प. स्तं) [ वचने प्रक्रमभङ्गदूषितः पाठः ] ९८७ रसनां (स्तं)

**बहलोपायाभिज्ञा गुणविषये सततमाहितप्रीतिः ।**
**बलिनः स्थापयति वशे करभोरुर्विग्रहेण मृदुनैव ॥' ९८८ ॥**

कटकः वलयः [ 'कडुं' इति भाषायां प्रसिद्धं बाहुभूषणं, श्लेषेण ] अद्रेः नितंबश्च, "कटकोऽस्त्री नितंबोऽद्रेः क्लीबे वलयसैन्ययोः ।" इति मंखकोशः, तस्य योजनं संगमनं, अयुक्तं अनुचितं, मृणालिकायाः कोमलत्वात् कटकस्य श्लेषबलात् कठोरत्वात् च; यथा मृणालस्योपरि बृहतः प्रस्तरस्य निवेशः तथा । अत्र स्थूलादिविशेषणानां साभिप्रायत्वेन परिकरालंकारः, पूर्वार्धे अनुरूपयोः द्वयोः वर्णनात् समालंकारः, उत्तरार्धे तु श्लेषेण अननुरूपयोः संसर्गकथनात् श्लेषमूलको विषमालंकारः, अपि च अत्रैव समर्थ्यसमर्थनभावात् काव्यलिंगं अलंकारः ॥ ९८७ ॥ भंगिविशेषेण तस्याः अपूर्वं नीतिकौशलं प्रकटयति बहलेति । बहलाः 'बहुलाः' इत्यपि रूपं अनेकाः इत्यर्थः, उपायाः साधनानि—जनानां वशीकरणाय विलासकलाकौशलादीनि, यद्वा प्रियप्रसादनाय उपयुक्ताः सामादयः षट्, ते च सामदानभेदोपेक्षाप्रणति—प्रसंगविध्वंस—दण्डाः, सोदाहरणं शृंगारतिलकस्य द्वितीयपरिच्छेदे दर्शिताः; पक्षे शत्रुजयाय प्रयोज्याः सामादयः सप्त, ते च—"साम दानं च भेदश्च दण्डश्चेति चतुष्टयम् । मायोपेक्षेन्द्रजालं च सप्तोपायाः प्रकीर्तिताः ॥" ( १८।३ ) इति कामंदकीये नीतिसारे । तेषां अभिज्ञा ज्ञात्री; तथा सततं सर्वदा, गुणविषये रूपरसादिषु तदुपभोगेषु इति यावत्, यद्वा जनमनोवशीकारपर्याप्तेषु शरीरप्रसाधनसंगीतविलासादिगुणेषु, आहितप्रीतिः कृतानुरागा तत्संपादने इति भावः; पक्षे राजनीतिप्रसिद्धाः षड्गुणाः, ते च—"संधिर्ना विग्रहो यानमासनं द्वैधमाश्रयः । षड्गुणाः" इत्यमरः, तेषां गुणानां विषये आधारे, तादृशगुणवति पुरुषे, जातावेकवचनं पुरुषेषु इत्यर्थः । तादृशी करभोरुः—करभः करिशावकः, गौणीवृत्त्या च तस्य हस्तः ( शुण्डादण्डः ), तद्वत् ऊरू यस्याः सा इति केचित्; अन्ये तु करभः "मणिबंधादाकनिष्ठं करस्य करभो बहिः ।" इत्युक्तत्वात् तदाकारौ तद्वद्वा ऊरू यस्याः सा करभोरुः इति; एतेन मूले स्थूलौ तदधः उत्तरोत्तरं आजानु तनूभूतौ यद्वा यथापूर्वं पीवरौ ऊरू यस्याः इति उपमया उक्तं भवति । अनेन विशिष्टपदेन ऊरुकांडस्पर्शौत्सुक्यं व्यंजितम् । सा मृदुना कोमलेन पक्षे अनुग्रेण, एव इत्यव्ययं अवधारणे पक्षे उग्रादीनां व्यवच्छेदार्थं, विग्रहेण शरीरेण पक्षे युद्धेन, बलिनः सबलान् पुरुषान् पक्षे सैन्ययुक्तान् अर्थात् शत्रून्, वशे स्थापयति वशीकरोति पक्षे स्वाधीनान् करोति ॥ यत् सा मृदुनैव विग्रहेण बलिनोऽपि वशी-

---

९८८ गुणविधये ( गो ) । प्रीति ( गो ) । करभोरू विग्र ( स्तं )

इति तत्स्तुतिमुखरमुखे राजसुते मकरकेतनाकुलिते ।
समुपागता प्रगल्भा मञ्जरिकाचोदिता दूती ॥ ९८९ ॥
सा सप्रणतिः पुरतः सुमनस्ताम्बूलपटलकं निदधे ।°
व्यज्ञापयच्च तदनु स्वावसरे सहचरीकार्यम् ॥ ९९० ॥

करोति तत् तस्याः चातुर्यं अद्भुतत्वं च ॥ अत्र श्लेषोत्थापितः विरोधालंकारः, तेन च व्यतिरेकः व्यंग्यः ॥ ९८८ ॥ इतिशब्दः प्रकारोपसंहारे, मकरकेतनः कामदेवः पूर्वं ( ५९० आ. टी. ) व्याख्यातः, तेन आकुलिते विह्वलीकृते, राजसुते समरभटे, तस्याः स्तुतौ गुणपुरस्कारेण वर्णने वाचालं वदनं यस्य तादृशे सति, मंजरी एव मंजरिका तया चोदिता प्रेषिता, प्रगल्भा प्रौढोक्तिविचक्षणा यद्वा प्रागल्भ्यगुणवती, प्रागल्भ्यं च "निःसाध्वसत्वं प्रागल्भ्यं प्रयोगेष्वपि सर्वतः ।" इत्युक्तरूपं, दूती कामिनोः संघाटिका, समुपागता तस्य सम्यक् उप समीपं आगताऽभूत् ॥ दूतीगुणाश्च प्रोक्ताः आदिपुराणे ( ५।३९–४० ) कामप्रदीपे (२०–२१) च–"सुवेषता, दुःखसहिष्णुता च, सुशीलता, कोमलवाग्मिता ( 'कोमलवाक्यता' ) च । सन्मंत्रिताऽऽच्छादितमंत्रता च, च्छंदानुवर्तित्वमलज्जिता च ॥ प्रोत्साहनं, गुणकथा, कथनं ब('क')लानां, विश्रंभणं बहुलता धनदर्शनं च । गाथा( ढा )नुरागरचनं, वचनस्य सिद्धिः, कर्मेति षोडशविधं कथयंति दूत्याः॥" इति; आदिपुराणे पुनः सप्तविंशतिकर्माण्यपि कथितानि ( ४३–४७ ) ततो ज्ञेयानि ॥ ९८९ ॥ दूत्याः तदनंतरं व्यापारमाह सेति । सा दूती, सप्रणतिः प्रणामैः सह आदौ स्वनिकृष्टताद्योतकान् तदुत्कृष्टताद्योतकान् वा प्रणामान् अवयवसन्निवेशविशेषान् कृत्वा, तस्य राजपुत्रस्य पुरतः अग्रे, सुमनसां पुष्पाणां ताम्बूलानां च पटलकं पुष्पादिधारणपात्रं, "छदिर्नेत्ररुजोः क्लीबे, समूहे पटलं न ना । पुष्पादिभाण्डे, नाऽध्याये ।" इति मंखकोशः; निदधे स्थापयामास । इदं "रिक्तपाणिर्न पश्येत्तु राजानं दैवतं गुरुम् । नैमित्तिकं विशेषेण सुहृदं फलकामुकः ।" इति, तथा "इष्टभार्यां प्रियं मित्रं पुत्रं चापि कनीयसम् । रिक्तपाणिर्न पश्येत्तु तथा नैमित्तिकं प्रभुम् ॥" इति च न्यायेन उपायनं, प्रियाख्यानकं च; अपि च तांबूलवीटिकाविशेषप्रेषणेन तांबूलसंकेतोऽपि, तदुक्तं नागरसर्वस्वे–"तांबूलबीटकाः पञ्च कीर्तिता नरपुंगवैः । कौशलांकुशकंदर्पपर्यंकचतुरस्रकाः ॥ (९।१) । कौशलः स्नेहबाहुल्ये, चाहूतावंकुशस्तथा । मदनार्तौ च

९८९ °सुते मीनकेतुनाऽऽकु° ( गो ) । समुपयाता प्र° ( गो ) [ दुष्टयतिकः पाठः ]
९९० व्यज्ञापयदथ तमनु (प. स्तं)

'मुररिपुनाभिसरोरुहमवतंसीकर्तुमीहते मूढा ।
नक्षत्रराजमण्डलमिच्छति वियतः समादातुम् ॥ ९९१ ॥

---

कन्दर्पः, पर्यंकः संगमाशये ॥ (९१२)।" इति । प्रकृते दूत्युक्त्यनुसारेण कंदर्पपर्यंकौ प्रेषितौ इति बोध्यम् ॥ तदनु पश्चात् , स्वावसरे वक्तुं उचितं समयं आलक्ष्य, सह चरति इति सहचरी सखी अनुरक्तचित्ता, तस्याः मंजर्याः कार्यं प्रयोजनं, व्यज्ञापयत् विज्ञप्तिरूपेण प्रकाशयन्ती अभूत् ॥ ९९० ॥ इतः चत्वारिंशद्भिः मंजर्याः विप्रलंभापरनामकायोगशृंगारवर्णनं, स च–"तत्रायोगोऽनुरागोऽपि नवयोरेकचित्तयोः । पारतंत्र्येण दैवाद्वा विप्रकर्षादसंगमः ॥" इत्युक्तः । "दशावस्थः स तत्रादावभिलाषोऽथ चिन्तनम् । स्मृतिर्गुणकथोद्वेगप्रलापोन्मादसंज्वराः । जडता मरणं चेति दुरवस्थं यथोत्तरम् ॥" इति ॥ तत्र प्रथमं तस्य करुणावृत्तिमुद्दीप्य स्वाभीष्टं साधयितुं विषादगर्भोक्तिः । तत्रादौ "मनोरथानामगतिर्न विद्यते ।" (कुमार० ५।६४) इति न्यायेन राजपुत्रसमागमार्थिनी सा शशशृंगजिघृक्षिणीव दुर्लभप्रार्थना अनुशोच्या च इति सूचयन्ती प्राह मुररिप्विति ॥] 'मुररिप्वित्यादिना साधनपथातीतस्य स्वाधीनीकरणाय प्रवृत्तिः मौग्ध्यादिति प्रतिपाद्यते' [इति टिप्पणी । मूढा याथार्थ्यानवधारिणी जडा, तव दुःसंभाव्यसमागमस्य अर्थितत्वात्, अत्र विशेष्याग्रहणेन अतिमूढत्वं द्योतितं; सा मुराख्यस्य असुरविशेषस्य रिपुः शत्रुः मुररिपुः विष्णुः, तस्य नाभिसरोरुहं नाभेः जातं कमलं ब्रह्मणः जन्मादिस्थलं, अवतंसीकर्तुं कर्णाभरणीकर्तुं, अभूततद्भावे च्विः, ईहते वाञ्छति। वियतः आकाशात् , च, नक्षत्रेषु अश्विन्यादिषु सप्तविंशतिकेषु दक्षप्रजापतेः कन्यात्वेन चंद्रस्य च पत्नीत्वेन कल्पितेषु राजते प्रकाशते इति राजा ईशः नक्षत्रराजः चंद्रः, तस्य मण्डलं संघं, सनक्षत्रं चंद्रं इत्यर्थः, यद्वा मंडलं बिम्बं, "समूहे मण्डलं बिम्बे देशे द्वादशराजके ।" इति शाश्वतः, समादातुं इच्छति जिघृक्षति । यथा विष्णुनाभिजकमलेन कर्णं भूषयितुं समीहा, चंद्रस्य च जिघृक्षा असंभवितार्थविषयिणी, तथा तस्याः तव प्राप्तिः इत्यभिप्रायः। एवमग्रेऽपि ॥ अत्र प्रस्तुता त्वदसंभाव्यप्राप्त्यां इच्छा इति तदसंभवलक्षणे वाक्यार्थे विष्णोः नाभिकमलस्य कर्णाभरणीकरणरूपः असंभवलक्षणः वाक्यार्थः अध्यारोप्यमाणः, विष्णुनाभिकमलस्य तत्कर्णाभरणत्वासंभव इव तस्याः त्वत्समागमासंभवः इति उपमानोपमेयभावत्वं परिकल्पयति इति, "अभवद्वस्तुसंबंध उपमापरिकल्पकः ।" इत्युक्तलक्षणः निदर्शनाऽलंकारः, मतान्तरेण सः अत्र व्यंग्यः, प्रस्तुतस्य शब्दैः अनुपात्तत्वात् काव्यप्रकाशकारादिमतानुसारेण सा च प्रथमा । अस्या एव

निश्चेतनाऽभिकाङ्क्षति पीयूषं त्रिदिवसद्मनामशनम् ।
अभिलषति शयनमुष्णे नवचन्दनपल्लवास्तरणम् ॥ ९९२ ॥
विदधाति पारिजातकसुमनोनिर्यूहधारणश्रद्धाम् ।
दुर्व्यवसिता जिघृक्षति नारायणवक्षसो रत्नम् ॥ ९९३ ॥

---

'वाक्यार्थरूपकं' इत्यपि संज्ञा। कुवलयानंदानुसारेण च ललितालंकारः, "प्रस्तुते वर्ण्यवाक्यार्थप्रतिबिंबस्य वर्णनम् । ललितं" इति लक्षितः; प्रकृते प्रस्तुतं बिंबभूतं भनुक्त्वा तत्प्रतिबिंबभूतस्य वाक्यार्थस्य अभिधानात् ॥ एवमेवाग्रिमार्याद्वयेऽपि ॥९९१॥ एवमेव निश्चेतना व्यपगतबुद्धिः ज्ञानशून्या, त्रिदिवं त्रिदशाः दीव्यंति क्रीडंति अत्र इति त्रिदिवः स्वर्गः, सद्म गृहं येषां तेषां देवानां, अशनं भोजनं, यत् पीयूषं अमृतं, तत् प्राप्तुं इच्छति। तथा उष्णे संतप्ते दाहके पदार्थे, अधिकरणे सप्तमी, नवाः प्रत्यग्राः ये चंदनवृक्षस्य किसलयाः ते आस्तरणं वर्णकम्बलं प्रच्छदपटं इति यावत्, "आस्तरणं शय्यायां वर्णकम्बले ।" इति मंखकोशः, यस्य तादृशं शयनं शय्यां, "शयनं रतशय्ययोः ।" इति मंखकोशः, अभिलषति । तथाहि उष्णपदार्थे शीतलचंदनपल्लवशय्याबुद्धिवत् असंभवी तस्याः अभिलाषः इति भावः ॥ ९९२ ॥ तथा पारिजातकस्य पारिणः अब्धेः जातस्य देवतरुविशेषस्य, तथा च "पञ्चैते देवतरवो- मन्दारः पारिजातकः । संतानः कल्पवृक्षश्च पुंसि वा हरिचंदनम् ॥" इति अमरः, तस्य सुमनसां पुष्पाणां यः निर्यूहः स्तबकः तस्य धारणे वेणीरूपेण मस्तकस्योपरि स्थापने इति भावः, श्रद्धां स्पृहां आदरं वा, विदधाति कुरुते । अपि च, दुर्व्यवसिता दुष्टं व्यवसितं उद्योगः यस्याः सा तादृशी; नारायणः 'नरायणः' इत्यपि शब्दः— नरः ब्रह्म, नरजानां अपां कार्यं नारं ब्रह्माण्डं तत् यस्य अयनं वसतिस्थानं सः नारायणः; यद्वा "आपो नारा इति प्रोक्ता आपो वै नरसूनवः । ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः ॥" ( मनुस्मृतौ १।१० ) इति; यद्वा नराणां समूहः नारं, तस्य अयनं स्थानं इति नारायणः, तस्य विराट्स्वरूपत्वात्; यद्वा नरेण अनाद्यविद्यावता जीवेन स्वकर्मद्वारा सृष्टं नारं शरीरं तदेव अयनं प्रवेशस्थानं यस्य सः, "अंतः प्रविष्टः शास्ता जनानाम् ।" इत्यादिश्रुत्या ।

---

९९२ °शयनमिष्टे नव···णे ( गो ) [ प्रकान्तविशिष्टार्थविरुद्धः पाठः ] । शयनमु ··नव° ( स्तं ) ९९३ निर्व्यूह ( प. स्तं )

स्वनियतपुरुषस्पृश्याः पापा वयमन्यथा क्व हीनकुलाः ।
क्व च यूयमिन्द्रकल्पा अनल्पमनसो गुणाभरणाः ॥ ९९४ ॥
दुष्प्रकृतेः प्रकृतिरियं तस्य तु दग्धात्मजन्मनः काऽपि ।
अगणितयुक्तायुक्तो लगयति चेतो यदस्थाने ॥ ९९५ ॥

---

तस्य वक्षसः, पंचमी षष्ठी वा, रत्नं समुद्रमंथनोत्थचतुर्दशरत्नेषु एकं कौस्तुभाख्यं, जिघृक्षति ग्रहीतुमिच्छति ॥ तथा च क्षेमेन्द्रकृतपद्यकादंबर्यां–"यत्प्राप्यं न मनोरथैर्न वचसा स्वप्नेऽपि दृश्यं न यत्तत्रापि स्मरविप्रलब्धमनसां लाभाभिमानग्रहः । मोहोत्प्रेक्षितशुक्तिकारजतवत् प्रायेण यूनां भ्रमं दत्ते तैमिरिकद्विचंद्रसदृशं खे नूनमाशाकृषिः ॥" इति । एवं त्रिभिः तस्याः अविमृश्यकारिता प्रकाशिता ॥ ९९३ ॥ पूर्वोक्तस्य मंजरीप्सितस्य कथं असंभवित्वं इति चेत्तत् खेदगर्भया उक्त्या स्पष्टयति स्वेति । अन्यथा एवं असंभवो नो चेत् तर्हि, वयं हीनकुलाः नीचकुलजाः कुशीलवत्वात् शूद्राचारत्वात् ( नाट्यशास्त्रे ३६।३४–४१ ), वस्तुतस्तु वेश्यात्वादपि, अत एव पापाः पापसंपन्नाः, ततः किमित्याह स्वेत्यादि, स्वेषां ये नियताः स्वजातीयत्वेन नियमिताः तैरेव पुरुषैः स्पृश्याः अर्थात् विवाहादिसंबंधैः ग्राह्याः, तादृशाः क्व; क्व च यूयं यूयमिति एकत्वेऽपि गौरवात् बहुवचनं, इंद्रकल्पाः देवराजसदृशाः, ईषन्न्यूने कल्पप्प्रत्ययः, अनल्पमनसः उदारान्तःकरणाः, गुणाभरणाः विनीतत्वकुलीनत्वादिनायकगुणैः अलंकृताः । यथोक्तं पूर्वं " अविशुद्धकुलोत्पन्ना···काहं···क्व च भवन्तः श्लाघनीयजन्मगुणाः ।" ( आ. ४५८ ) इति तथा इति भावः । द्वौ क्वौ महदन्तरं सूचयतः । अत्र द्वयोः अननुरूपत्वेऽपि संसर्गाभावत्वात् न विषमालंकारः ॥९९४॥ एवं वैषम्येऽपि तस्याः दुष्प्राप्यप्रेप्सेति कामदेवस्य चेष्टां निर्णयति दुष्प्रकृतेः इति । तुः अवधारणे । तस्य, दग्धस्य धिक्कारपात्रस्य " धिक्कारे दग्धहतकादयः शब्दाः प्रयुज्यंते " इति, आत्मजन्मनः स्वयंभुवः कामदेवस्य, दुष्प्रकृतेः दुः दुष्टाः प्रकृतिः अमात्यादिः कार्यसाधिका वसंतादिरूपा यस्य, यद्वा दुष्टा क्रूरा अदया प्रकृतिः स्वभावः यस्य तस्य, इयं, काऽपि अनिर्वर्णनीया, प्रकृतिः स्वभावः अत एव नित्यः अविकार्यः गुणः स इति सूच्यते, यत्, अगणितयुक्तायुक्तः विवेकरहितः सन्, कामिनां चेतः, मतिविपर्यासेन, अस्थाने इति अयुक्तार्थे अव्ययं, दुष्प्राप्ये अतीववैषम्यवति वा इति भावः, लगयति लग्नं सक्तं रागवंतं करोति, दृढं संबद्धं करोति, 'शरो लग्नः' इति-तत्प्रयोगः । ( अत एव मन्मथस्य 'रागरज्जुः' इति नामान्तरं ( त्रिकांडशेषे ) ।

---

९९४ अनियत (गो) स्वनियत (प.स्तं)

या हसति सरोजवर्तीं रसान्विता सहजरागरक्तेति ।
ध्यानधिय आत्मवृत्तिं निन्दत्येकत्र पुरुष आसक्ताम् ॥ ९९६ ॥

यथाह्युक्तं रतिरहस्ये—"सप्रत्यवायदुर्लभनिषेधविषयश्च यो विपर्यः । कामः स्वभाववामः प्रसरति तत्रैव दुर्वारः ॥" ( १३।१४ ) इति ॥ ९९५ ॥

इतः वाक्यान्तरगर्भितेन एकादशभिः कुलकेन अन्याः प्रेमाभिमानिन्यः उपहसंती सा कामदेवेन दृढं प्रहार्यते इति वदंती पूर्वपंचके नानाविधेषु रागेषु अविवेकदोषं भंगिविशेषेण सूचयति येति । अस्मिन् कुलके 'या' इति कर्तृपदस्य (९९६) 'हसति' इत्यादि 'स्फुरति' (१००४) इत्यन्तैः क्रियापदैः संबंधः, साऽपि (१००६) यतः तेन दुरात्मना हन्तुं प्रारब्धा, ( अतः ) (१००५) ( हे नरनाथ किं ब्रवीमि ) पापकुसुमास्त्रः दुःसाध्य…ग्रहं न उत्सृजति—इति अन्वयः ॥ या मंजरी, रसेन रागेण प्रीत्या अन्विता युता, त्वयि इति शेषः, त्वद्रूपगुणादिभिः त्वयि जातानुरागा इति भावः, इयं प्रीतिश्च 'विषयात्मिका' इति संज्ञिता "प्रत्यक्षा लोकतः सिद्धा या प्रीतिर्विषयात्मिका ।" इति कामसूत्रे ( १।२।२।६ ) लक्षिता अत्र अभिप्रेता, सरोजवर्ती कमलिनीं, 'सरोजवनीं' इति पाठे कमलानां अल्पं वनं इत्यर्थः, हसति सहासं तिरस्कुरुते इति भावः, तत्र हेतुमाह—सा सरोजिनी सहजरागरक्ता सहजेन जन्मतः सिद्धेन रागेण स्नेहेन पक्षे लौहित्येन रक्ता अनुरागवती पक्षे रक्तवर्णा, इतिशब्दः हेतौ । हासहेतुस्तु—स्वा इव यद्यपि सरोजिनी रसान्विता ( रागयुक्ता पक्षे जलयुक्ता ), तथापि तस्याः रागः सहजः न तु स्वस्याः इव विवेकजः इति । एवमग्रेऽपि ॥ तथा या, त्वदेकताना इति भावः, ध्यानधियः ध्याने धीः चेतोवृत्तिः यस्य तस्य, ध्यानलक्षणं च—"ध्येयाकारवृत्तिप्रवाहोऽन्तरान्तराऽन्याकारप्रत्ययाव्यवहितो ध्यानम्" इति भगवद्गीताटीकायां ब्रह्मानंदगिर्याख्यायां, ( यदा स एव प्रवाहः ध्येयस्वभावावेशात् ध्येयाकारशून्यः एकरसः एव भवति तदा समाधिः इति भेदः, ) ध्याने च अयं विशेषः—ध्यानस्य मार्गत्रयं शास्त्रप्रसिद्धं—तत्र एकः पतंजलिनिर्णीतः नानैश्वर्यकामस्य अणिमादिसिद्धिफलकः, अपरः वेदांतनिर्णीतः निदिध्यासनाख्यः ब्रह्मात्मैक्यसाक्षात्कारफलकः, तृतीयस्तु वासिष्ठोक्तः मनोनाशवासनाक्षयहेतुकः जीवन्मुक्तिसुखप्राप्तिफलकः; ग्रंथान्तरे च आलंबनभेदात् ध्यानयोगः चतुर्विधः—तत्र एकः कुंभकप्राणायामेन वायुं स्थिरीकृत्य तदालंबने मनः कुर्यात् इति; अपरस्तु बाह्ये सूर्यचन्द्रादौ रामकृष्णादिप्रतिमादौ वा, आभ्यंतरे च नासिकाग्रजिह्वाग्रहृदयाकाशादौ वा चित्तालंबनं कुर्यात् इति योगशास्त्रोक्तः; तृतीयस्तु षट्चक्रदेवतादिकं आलंब्य चित्तं स्थिरीकुर्यात् इति आगमोक्तः; तुर्यस्तु जाग्रन्निद्रयोः अन्तराले वृत्तिद्वयमध्ये वा यदस्मितामात्रं निर्गुणं

स्निग्धेति नाभिनन्दति जन्मशतेनापि सर्पिषो धाराम् ।
पञ्चाक्षद्यूतगतिं नानर्थकरागसङ्गतां स्तौति ॥ ९९७ ॥
न स्तौति चन्दनलतां भुजङ्गपरिवेष्टितां रसार्द्रेति ।
न शृणोति कीर्त्यमानां स्वप्नेष्वपि मदनमूर्च्छितां मत्सीम् ॥९९८॥

---

शुद्धं रूपं भाति तन्मात्रालंबनः च, केवलाद्वैतवादिषु प्रसिद्धः ॥ आत्मवृत्ति—आत्मा बुद्धिः अंतःकरणं वा तस्य वृत्तिं अवस्थानविशेषं प्रवृत्तिं तत्तद्विषयाकारसमुच्छ्वासं वा, निन्दति । तत्र हेतुगर्भं विशेषणं आह एकत्रेत्यादि । एकत्र एकस्मिन्, पुरुषे पुरि देहे शेते इति पुरुषः अंतर्यामी परिपूर्णो वा, " महतः परमव्यक्तमव्यक्तात् पुरुषः परः । पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः ॥ " ( ३।११ ) इति कठोपनिषदादिषु अधिगंतव्यत्वेन निरूपितः तस्मिन् परमपुरुषे परमात्मनि, आसक्तां संलग्नाम् । अत्र निन्दाकारणं तु ध्यानिनः परमप्राप्यत्वधिया पुरुषे सक्तचित्तत्वं, न तु सुरूपिण्यां स्त्रियां इति, इयं पुरुषे प्रीतिश्च स्वरूपतः कर्माभ्यासलक्षणा ' आभ्यासिकी ' न स्वस्याः इव विवेकपूर्विका इत्यपि ॥ अत्र पंचके पूर्वार्धे काव्यलिंगेन संकीर्णः उत्तरार्धे तु परिकरालंकारेण संकीर्णः श्लेषमूलकः व्यतिरेकालंकारः ॥९९६॥ तथा या स्वयं विवेकपूर्वं त्वयि स्निग्धा इति भावः, स्निग्धां अपि स्नेहमुद्दिश्य स्वसमानधर्मिणीमपि, सर्पिषः घृतस्य, धारां संततिं, न अभिनंदति " तद्गुणप्रशंसार्था हर्षरूपा धीवृत्तिः अभिनंदः " तं न करोति । तत्र हेतुमाह—सा घृतधारा जन्मशतेन अपि स्निग्धा चिक्कणा, अर्थात् जन्मान्तरेषु अपि घृतधारा स्निग्धत्वं न मुञ्चति इति स्नेहः तस्याः स्वभाव एव, तेन अयुक्तेष्वपि सा स्निग्धा इत्येतत् अनभिनंदनीयम् । " स्नेहस्तैलादिकप्रेम्णोः सौहार्दे च " इति मंखकोशः, तया या, सार्थरागवती ( यथार्थरागा ) इति भावः, पंचाक्षैः पंचसंख्याकपाशकैः यत् द्यूतं पाशक्रीडा, ( सा च लोके देशभेदेन एकादिपंचान्तपाशकैः निर्वर्त्यते । ) तस्य गतिं अवस्थां, न स्तौति न प्रशंसति, तत्र हेतुगर्भं विशेषणं अनर्थेति । ] ' अनर्थकः अनर्थकारी द्रव्यविहीनश्च ' [ इति टिप्पणी, तादृशेन रागेण आसक्त्या संगतां युक्तां, तथाहि द्यूतस्य अनर्थकारित्वं नलयुधिष्ठिरादिवृत्तान्तेषु प्रसिद्धं; अनया व्यंग्योक्त्या मंजर्याः अर्थोपायेनाहरणं न दुर्लभं इति सूचितम् ॥९९७॥ किंच, चंदनलतां चंदनस्य वृक्षत्वेऽपि तस्याः

---

९९७ स्निग्धेऽपि ( प ) । पंचाक्ष्य( क्ष ? )यू( द्यू ? )तव( ग ? )तिना नार्थं करणसंगतां ( प ) पञ्चाक्षद्यूतगतिनाऽनर्थं ( स्तं ) । रामस॰ (गो) [ अक्षरभ्रमात्पाठः 'असंगतां' इति पाठश्चापेक्षिकक्लेषरहितः ] रागस॰ ( गो २ )

**विद्वेष्टि करणमध्ये रसनां ताम्बूलरागयुक्तेति ।**
**शंसति मतिं मुमुक्षोरविशिष्टां शशवृषाश्वपुरुषेषु ॥ ९९९ ॥**

---

लतात्वेन उक्तिः कविसमयात् , कीदृशीं, भुजंगैः सर्पैः परिवेष्टितां आवृतां श्लेषबलात् च भुजंगैः षिङ्गैः विदग्धकामुकैः आलिंगितां, अतः स्वयं रसार्द्राऽपि इति भावः, तां चंदनलतां, सा रसार्द्रा जलक्लिन्ना पक्षे रागस्निग्धहृदया, इतिशब्दः प्रकारवाची, न स्तौति, तस्याः एककालावच्छिन्नेन बहुनायकत्वात् इति भावः॥ तथैव या स्वभावेन मदनमदवती इति भावः, मदनमूर्छितां स्मरेण संमोहं प्राप्तां सोच्छ्र्यां सेन्द्रियमनःशक्तिनिरोधवर्ती वा, श्लेषबलात् च मदनेन प्रद्युम्नेन गर्भस्थितेन मूर्छितां व्याप्तां यतः मत्स्याः उदरात् तस्य निर्गमः ( भागवते १०।५५।१३ ), तादृशीं मत्सीं 'माछली' इति प्रसिद्धं क्षुद्रजलचरविशेषं, स्वप्नेषु अपि कीर्त्यमानां मदनमूर्छितेति गीयमानगुणां, न शृणोति, किमु वाच्यं जाग्रदवस्थायां इति भावः। स्वयं मदनमूर्छिता, मत्सी अपि तथा, एवं तुल्यत्वेऽपि तां न्यक्करोति यतः तस्याः सा अवस्था केवलं शब्देष्वेव, न पारमार्थिकी इति, इत्याशयः ॥ अलंकाराः पूर्ववत् ॥ ९९८ ॥ तथा च या स्वभावेनैव रागयुक्ता इति भावः, स्वस्याः करणानां इन्द्रियाणां मध्ये, रसनां रस्यते आस्वाद्यते अनया इति रसना जिह्वा तां, विद्वेष्टि तां प्रति "तन्निन्दार्थममर्षणरूपा धीवृत्तिः द्वेषः" तं कुरुते, यतः साऽपि स्वा इव तांबूलरागयुक्ता इति, समानगुणयोश्च परस्परं स्पर्धा भवति। मंजरी तांबूलस्य राग इव गाढः रागः स्नेहः तेन युक्ता, रसना तु ताम्बूलभक्षणेन ताम्बूलस्य रागेण रक्तवर्णतया युक्ता, स च रागः कृत्रिमः अचिरस्थायी च, मंजर्याश्च तद्विपरीतः इत्यपि विद्वेषे कारणं इति च व्यंजितम्। एवं अन्येषां तिरस्कारकरणेऽपि, या, मुमुक्षोः मुक्तिं संसारे अपुनरावृत्तिं इच्छतः जनस्य, मतिं निश्चयात्मिकां बुद्धिं, प्रशंसति, कीदृशीं, शशाः 'ससला' इति ख्याताः क्षुद्राः चतुष्पादाः, वृषाः वृषभाः 'बलद' 'बेल' इति वा भाषायां प्रसिद्धाः, अश्वाः घोटकाः, पुरुषाः द्विपादाः प्रसिद्धाः, च, इमे अन्येषामपि प्राणिनां उपलक्षणं, तेषु सर्वेषु अविशिष्टां भेदरहितां समां इत्यर्थः, "विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि। शुनि चैव श्वपाके च पंडिताः समदर्शिनः ॥ (५।१८)। इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः।" इति श्रीभगवद्गीतासु उक्तेः। एवंकरणे हेतुस्तु समानशीलत्वं, तथाहि श्लेषबलात् तस्याः अपि मतिः शशवृषाश्वसंज्ञितेषु भिन्नगुणेषु अपि पुरुषेषु कामशास्त्रप्रसिद्धेषु, अविशिष्टा समाना सर्वत्र तुल्यानुरागा एव इति भावः। अनेन तस्याः अतिकामुकीत्वं ध्वनितम्।

नो बहु मनुते रम्भां नलकूबरमभिसृतेति कामार्ता।
गर्हति च देवगणिकामनुरक्तामुर्वशीं पुरूरवसि ॥ १००० ॥

शशादयस्तु—"मृदुचपलसुशील: कोमलांग: सुवेष: सकलगुणनिधानं सत्यवादी शशोऽसौ। वदति मधुरवाणीं नृत्यगीतानुरक्तो द्विजसुरगुरुभक्तो बंधुयुक्तो धनाढ्य: ॥ (१६) ॥ स्त्रीजितो गायनश्चैव नारीसत्त्वपर: सुखी। षडंगुलशरीरश्च श्रीमांश्च शशको मत: ॥ (१७) ॥ (शरीरं मेढ्र:।) उदरकटिकृशास्य: शीघ्रगामी नतांस: कनकरुचिरदेह: कष्टवादी वृषोऽसौ। व्यसनकृपणबुद्धि: स्त्रीवश: स्त्रीविलासो बहुगुणबहुतेजा दीर्घनेत्रोऽभिमानी ॥ (२०) ॥ उपकारपरो नित्यं स्त्रीवश: श्लेष्मलस्तथा। दशांगुलशरीरस्तु मेदस्वी वृषभो मत: ॥ (२१) ॥ उदरकटिकृशास्यो दीर्घकंठाधरोष्ठो दशनवदननेत्रं तस्य दीर्घोऽपि नाभि: ॥ (२२) ॥ लुब्धश्च कृपणश्चैव मिथ्यावादी च निर्भय:। द्वादशांगुललिंगस्तु कुशलोऽपि हयो मत: ॥ (२३) ॥" इति मीननाथकृतस्मरदीपिकायां उक्ता: ॥ ९९९ ॥

पुन: या कामार्ताऽपि इति भाव:, रंभां तन्नाम्नीं अप्सरस:, नो न, बहु मनुते अभिनंदति। तत्र हेतुमाह नलेति। सा रंभा कामार्ता मदनपीडिता सती, नलकूबर: कुबेरपुत्र: सौन्दर्येण लब्धप्रतिष्ठ: तं, अभिसृता लज्जां त्यक्त्वा स्वयमेव अभिसारं स्वीकृतवती इति, तथाहि तस्मिन् बद्धानुरागा रंभा तद्दर्शनाय गच्छंती मध्येमार्गं रावणेन बलादुपरुद्धा इत्यादिकथा रामायणे उत्तरकांडे २६ सर्गे, तत्र च रावणं प्रति रंभावाक्यं—"तमुद्दिश्य तु मे सर्वं विभूषणमिदं कृतम्। यथा तस्य हि नान्यस्य भावो मां प्रति तिष्ठति ॥" (३५) इति। तथा च, देवगणिकां स्वर्वेश्यां, उर्वशी "ऊरूद्भवा नरसखस्य (नारायणस्य) मुने: सुरस्त्री" (विक्रमोर्वशीये १।४) तां, गर्हति निंदति, कीदृशीं तां, पुरूरवसि चंद्रस्य पौत्रे बुधपुत्रे राज्ञि, अनुरक्तां संजातरागाम्। तथा च श्रुति:—"उर्वशी ह अप्सरा: पुरूरवसं ऐडं चकमे।" (शतपथब्राह्मणे ५।१) इति, तथा भागवते (९।१४।१५–१६)—"तत: पुरूरवा जज्ञे इलायां य उदाहृत:। तस्य रूपगुणौदार्यशीलद्रविणविक्रमान् ॥ श्रुत्वोर्वशीन्द्रभवने गीयमानान् सुरर्षिणा। तदन्तिकमुपेयाय देवी स्मरशरार्दिता ॥" इति, तथा मत्स्यपुराणकथानुसारी कालिदासोऽपि विक्रमोर्वशीये तृतीयांकविष्कंभके—"द्वितीय: (भरतशिष्य:)—लक्ष्मीभूमिकया वर्तमाना उर्वशी वारुणीभूमिकया वर्तमानया मेनकया पृष्टा 'समागतास्त्रैलोक्यपुरुषा: सकेशवा लोकपाला:, कतमस्मिंस्ते हृदयाभि-

१००० कामार्तं (प) [प्रकृतार्थविरोधी पाठ:]। गर्हयति देवं (प. स्तं)

हरति मनो नो ह्रियते, रञ्जयति न रज्यते कदाचिदपि ।
गृह्णाति चित्रचरितैरुपकृतिभिर्गृह्यते न बह्वीभिः ॥ १००१ ॥
प्रेममयीवाभाति प्रेम तु नाम्नैव केवलं वेत्ति ।
कण्टकिता भवति रते रतभोगसुखं शृणोति लोकात्तु ॥१००२॥

---

निवेशः' इति ।...तस्याः पुरुषोत्तम इति भणितव्ये पुरूरवसीति निर्गता वाणी ।" इति । (इयं कथा वेदे उषासूर्ययोः रूपकत्वेन सूक्ता इति केषांचित् नव्यविदुषां तर्कः ।) एवं दिव्या उर्वशी कामार्ता भूत्वा निकृष्टं अदिव्यं नायकं कामितवती इति सा मंजर्याः निन्दापात्रं इति भावः । अनया कामुकी अपि सा न निर्लज्जा न वा हीनानुरागिणी इति क्रमेण दलाभ्यां ध्वनितम् ॥ अत्र श्लेषरहितः पूर्ववत् अलंकारः॥१०००॥ इतः त्रिभिः रतिसागरप्रविष्टायाः मंजर्याः अभिलाषशृंगारस्य उद्वेगावस्थां वर्णयति हरतीत्यादिभिः । या मनः हरति अन्येषां स्वसौंदर्येण इति भावः, अपि तु या नो ह्रियते—विषयैः अन्यैः कामुकैः वा त्वयि लग्नमानसत्वात् इति भावः । एवं या रंजयति अन्येषां मनः स्ववाक्चातुर्यादिना इति भावः, अपि तु या कदाचिदपि कस्मिंश्चिदपि समये न रज्यते केनापि पुरुषादिना विषयेण वा रंजिता (प्रसन्ना) भवति—त्वदसमागमात् सर्वदा उद्विग्नचित्तत्वात् । तथा या चित्रचरितैः विचित्राचरणैः सहजविलक्षणविलासैः अपरेषां मनः गृह्णाति वशीकुरुते इति भावः; अपि तु या बह्वीभिः अनेकाभिः उपकृतिभिः उपकारैः अन्यकामुककृतैः तत्सेवार्थदानादिरूपैः इति भावः, न गृह्यते न स्वाधीना स्ववशा वा कर्तुं शक्यते इत्यर्थः ॥ अत्र कुवलयानंदे लक्षितलक्षणानुसारेण समुच्चयालंकारः, स च—"बहूनां युगपद्भावभाजां गुंफः समुच्चयः ।" इति, ('युगपदिति क्रमव्यावृत्त्यर्थं न त्वेकक्षणप्रतिपत्त्यर्थम् ।') अत्र 'हरति मनो नो ह्रियते' इत्यादिविरोधविशिष्टभंग्या स्वाभाविकरूपचातुर्यादिभिः सकललोकस्य चित्तादिहरणं यया क्रियते तस्याः एव चित्तादिहरणं केवलं त्वयैव कृतं इति व्यञ्जितम् ॥१००१॥ अपि च या अन्येषां, प्रेममयी विकारार्थे मयट् तेन मूर्तिमती प्रीतिः इत्यर्थः, इवशब्दः वस्तूत्प्रेक्षायां, आभाति शोभते, प्रेम पूर्वं व्याख्यातं (३७९ आ. टी.), तु परंतु, प्रेम केवलं नाम्नैव अभिधानमात्रेणैव वेत्ति जानाति, न तु प्रेम अद्यापि तस्याः अनुभवारूढं इति भावः । रते लक्षणया रतवार्तायां प्रेमकथायां रमणक्रीडावर्णनायां वा प्रवृत्तायां, कंटकिता रोमाञ्चिता, "कंटकः क्षुद्रशत्रौ च रोमांचेऽपि च दृश्यते ।" इति विश्वः,

---

१००१ नो ह्रयते (स्तं) १००२ [ प. पुस्तके प्रथमपादः गलितः ]। [ इतः क्वचित् क्वचित् श्लोकेषु अक्षरच्युतिः प. पुस्तके । ] नरभोग (प. स्तं)

कुरुते विविक्तचाटून् शिल्पविशेषेण न तु रसावेशात् ।
अनभिज्ञा मदनरुजामाकल्पकवेदनां समावहति ॥ १००३ ॥
बालैवार्जवरहिता स्फुरतीश्वरमेत्य चन्द्रलेखेव ।
हृतधनपतिमाहात्म्या प्रवृत्तिरिव रक्षसां पत्युः ॥ १००४ ॥

---

ते संजाताः अस्याः इति कंटकिता, तारकादित्वात् इतच्, भवति जायते, प्रेम्णोऽयमनुभावः, तु परंतु, रताख्यः भोगः रतभोगः सुरतसेवनं, तत्र यत् सुखं ब्रह्मानंदोपमितं विगलितवेद्यान्तरं यत् मनोवस्थानं, तत्, लोकात् अन्याभ्यः एव शृणोति, न तु स्वयं कदाचिदपि अनुभूतवती "अनास्वादितभोगस्य कुतो भोज्यानुभूतयः ।" इत्युक्तेः (योगवासिष्ठे ।) इति भावः । अनया सा प्रेममूर्तिः प्रेमाकांक्षिणी, रतोत्सुका रमणार्थिनी, परोक्षमन्मथा इत्यादिकं व्यज्यते ॥ १००२ ॥ अपि च या, विविक्तान् पूतान् दोषरहितान् चाटून् प्रियाणि वाक्यानि, शिल्पविशेषेण समस्यापूर्त्यादिवत् कलाभेदेन अर्थात् तत्र स्वस्याः प्रावीण्यस्य दर्शनाय इति भावः, कुरुते; न तु, रसावेशात् चाटुषु रागाभिनिवेशवशात्, तस्याः प्रियाभावात् इति भावः । या च अद्यापि मदनरुजां कामपीडानां अभिलाषादिदशस्मरदशानां कार्श्यजागरमालिन्यचिंतादीनां वा, अनभिज्ञा बालत्वात् अकृतस्नेहत्वात् वा अभिज्ञा न भवतीति अज्ञा इत्यर्थः, आकल्पकानां वितर्काणां कल्पनानां कामावस्थासंबंधिनीनां इति भावः, वेदनां अनुभवं, "वेदनाऽनुभवः पीडा" इति मंखकोशः, समावहति । ] 'आकल्पको वेषः' [ इति टिप्पणी । सोऽर्थोऽत्राप्रकृतः ॥१००३॥ तथा च, बाला आर्जवरहिता चंद्रलेखा इव या, बाला "बालेति गीयते नारी यावत् षोडशवत्सरम् ।" ( नागरसर्वस्वे १६।२ ) इत्युक्तेः न्यूनषोडशवर्षीया, चंद्रलेखापक्षे नूतना नवोदिता; एवशब्दः अवधारणे, आर्जवरहिता ऋजुत्वरहिता विधेयत्ववियुक्ता, पक्षे ऋजोः भावः आर्जवं तेन रहिता वक्रा इत्यर्थः, चंद्रलेखा चंद्रांशः चंद्रकला षोडशकलात्मकस्य चंद्रस्य एकः भागः, इवशब्दः उपमायां, तद्वत् इत्यर्थः, ईश्वरं ईष्टे लोकमनांसि इति ईशः कामदेवः, स्वरूपेण तत्तुल्योऽपि उपचारादीश्वर इत्युच्यते तं त्वां इति यावत्, अपि च धनसंपन्नं इति सूच्यते, "ईश्वरो धनसंपन्ने शिवे व्याधिनि मन्मथे ।" इति विश्वलोचनः, पक्षे ईश्वरं महादेवं चंद्रमौलिं, एत्य प्राप्य, स्फुरति सविलासा भवति पक्षे अधिकं प्रकाशते । यथोक्तं–"एका यस्य शिखंडमंडनमणिर्देवस्य शंभोः कला ।" इति, (यस्य चंद्रस्य ।) अत्र बालेत्यनेन कैतवानभिज्ञा इति व्यज्यते, आर्जवरहिता तु कुटिला कपटकुशला इति

---

१००३ वेदनं (प) । वहति (प. स्तं)

नरनाथ, किं ब्रवीमि, त्रिपुरान्तकनयनदाहदग्धोऽपि ।
दुःसाध्यसाधनग्रहमुत्सृजति न पापकुसुमास्त्रः ॥ १००५ ॥
त्वद्दर्शनावकाशं संप्राप्य यतो दुरात्मना तेन ।
चिरसंभृतकोपेन प्रारब्धा साऽपि हन्तुमिषुधारैः ॥ १००६ ॥
( कुलकम् )

---

विरोधध्वनिः ॥ तथा या, रक्षसां राक्षसानां पत्युः अधिपस्य रावणस्य इत्यर्थः, प्रवृत्तिः उद्योगः, इव, हृतं धनपतीनां लक्ष्मीवतां माहात्म्यं धनरूपं महत्त्वगुणसंबंधं धनस्वामित्वं यया सा तादृशी, पक्षे हृतं तत्पराजयेन नीतं धनपतेः कुबेरस्य माहात्म्यं उत्कर्षभावो यया सा, यतः रावणेन कुबेरं जित्वा तदीया पुष्पकविमानादिसमृद्धिः अपहृता । रामायणे युद्धकाण्डे १२१ सर्गे इदमुक्तम् ॥१००४॥ कुलकान्तःपातिना नरनाथेत्यादिना युग्मेन पर्यायोक्तेन विवक्षितं व्यंजयति । हे नरनाथ प्रजाधिप, किं ब्रवीमि अधिकं किं कथयामि , त्रिपुरान्तकः शिवः–त्रयाणां पुराणां समाहारः त्रिपुरं, पात्रादित्वात् स्त्रीत्वाभावः, तस्य अंतकः नाशकः, त्रीणि पुराणि तु असुररक्षार्थं मायाविना मयदानवेन कांचनरजतायसमयानि निर्मितानि । तानि च महादेवेन नाशितानि । तदुक्तं श्रहिलेन महिम्नःस्तवे– " रथः क्षोणी यंता शतधृतिरगेंद्रो धनुरथो रथांगे चंद्रार्कौ रथचरणपाणिः शर इति । दिधक्षोस्ते कोऽयं त्रिपुरतृणमाडंबरविधिः ।"(१८) इति । एतत्कथाविस्तरः लिंगपुराणभागवतादौ द्रष्टव्यः । आध्यात्मिकपक्षे तु–स्थूल-लिंगकारणाख्यानि त्रीणि पुराणि शरीराणि, तानि भक्तानां अंतयति नाशयति इति त्रिपुरांतकः शिवः । तस्य तृतीयस्य नयनस्य दाहेन तापेन अनलेन दग्धः भस्मीकृतः अपि, अपिः विरोधे, अपिना संयमीश्वरत्र्यंबकसमाधिभंगरूप–दुःसाध्यसाधने प्रवृत्तस्यैव ग्रासदेहभंगरूपदंडोऽपि इति व्यज्यते, तेन च वक्ष्यमाणा तस्य तादृशी अपरा प्रवृत्तिः अत्यन्तमनुचिता इति सूच्यते; पापश्चासौ कुसुमास्त्रः पुष्पेषुः कामदेवः, ' दग्धहतकादिवत् धिक्कारद्योतकः पापशब्दः, ' दुःसाध्यस्य दुःखेन कष्टेन साध्यस्य संपादनीयस्य साधने निर्वर्तने यः ग्रहः निर्बन्धः हठः ' हठ ' इति भाषायां, तं, न उत्सृजति न विमुंचति । कुलादिभिः अन्तरितयोः युवयोः दुःसाध्ये संगमे, एकत्र तस्यां प्रेमोत्पादनेन, तत्सिद्धौ संप्रति प्रवृत्तः कामदेवः इत्याशयः ॥ इदं वाक्यं गर्भितत्वाख्यवाक्यदोषावहं न, प्रत्युत करुणरसवशात् मध्ये प्रविष्टं गुणायैव ॥१००५॥ अनुमिते मदनव्यापारे लिंगं कथयंती प्रकृतं प्रकाशयति त्वदिति । यतः यस्मात् कार-

---

१००५ नयनदहनद ( प. स्तं ) १००६ मिषुवारैः ( प ) । ( ' कुलकं ' इति नास्ति स्तं पुस्तके )

अवहेलयेव भवता संस्पृष्टा येन वेत्रदण्डेन।
जातः स एव तस्या अनन्यभवमार्गणः प्रथमः॥ १००७॥

---

गात्, दुरात्मना पापेन दुष्टेन अबलानां विरहिणां च पीडाजनकत्वात्, तेन पापत्वात् नामाग्रहणयोग्येन मदनेन इत्यर्थः, तव दर्शनं दृग्गोचरीभवनं एव अवकाशं छिद्रं, संप्राप्य लब्ध्वा, साऽपि 'या हसति सरोजवर्ती' इत्यादिना कुलकेन वर्णिता सा तादृशी, इषुधारैः इषूणां संमोहनादिशराणां धारैः सतताभिवर्षणैः "धारस्तु धारासंपातवर्षणे स्याद्दणेऽपि च॥" इति विश्वलोचनः, 'इषुवारैः' इति पाठे इषूणां समूहैः इत्यर्थः, हंतुं प्रारब्धा स्वशराणां लक्ष्यीकृता। कीदृशेन मदनेन इत्याह चिरेति, चिरात् दीर्घकालात् संभृतः उपचितः अत एव तीक्ष्णः कोपः क्रोधः यस्य तेन; तथाहि "या हसति सरोजवर्ती" (आ. ९९६) इत्याद्यासु "रक्षसां पत्युः" (आ. १००४) इत्यंतासु नवस्वार्यासु वर्णितानि यानि कामदेवस्य अनादरसूचकानि मंजरीचेष्टितानि तैः उत्पन्नवैरत्वात्, तादृश्याः संमोहनादिरूपं यत् दुःसाध्यं कर्म तत् साधयितुं अद्यापि अलब्धच्छिद्रत्वात् च, वृद्धिंगतेन क्रोधेन इत्यभिप्रायः॥ क्रोधश्च—"अप्रिये वस्तुनि श्रुते स्मृते दृष्टे च सति मनःक्षोभको यो द्वेषपरिपाकः सः क्रोधः।" इत्युक्तलक्षणः॥ "प्रतिकूलेषु तैक्ष्ण्यस्य प्रबोधः क्रोध उच्यते।" इति च॥ अत्र युग्मे प्रथमायां उक्तस्य साध्यस्य हेतोः द्वितीयायां कथनात् अनुमानालंकारः, सा च त्वद्दर्शनात् प्रभृति कामार्ता इति व्यंग्यस्य भंग्यंतरेण कथनात् पर्यायोक्तं अलंकारः, उभयोश्च संकरः॥ १००६॥ भूतं संस्मार्य तस्मिन् मंजर्याः रागोद्भवं स्पष्टमाह अवेति। अवहेलया अनादरेण इव न तु वास्तवेन अनादरेण अपि तु स्नेहेन इति भावः, येन वेत्रदंडेन सा संस्पृष्टा, यथोक्तं पूर्वं (आ. ८१०), स एव वेत्रदंडः, तस्याः प्रथमः आद्यः मुख्यश्च इत्यपि शब्दशक्त्या ध्वन्यते,] अनन्यभवस्य [स्वयंभुवः] कामस्य, [मार्गणः बाणः, जातः अभूत्। तव वेत्रदंडस्पर्श एव तस्याः कामोत्पादकः अभूत् इति भावः। अपि च अनुस्वानशक्त्या वेत्रदण्डस्पर्शः तस्याः प्रथमः त्वत्कामयाचकः अभूत्, तत्स्पर्शेनैव तया ज्ञातं यत् त्वं तस्याः कामाभिलाषीति इत्यपि अर्थः प्रतीयते। "मार्गणो याचके बाणे, क्लीबमन्वेषणयाच्ञयोः।" इति विश्वलोचनः। अनेन उभयोः अन्योन्यप्राप्तीच्छारूपायाः उत्कंठायाः उदयः व्यंजितः। तस्याः कामोत्पादे प्रसिद्धान् कामशरान् विहाय वेत्रदंडस्पर्श एव तस्य निश्चितया परिसंख्यालंकारः, स चात्र आर्यः॥ १००७॥

---

१००७ अवहेलयैव (प. स्तं)

विज्ञानार्जितदर्पो निभृतं हसितः समानशिल्पाभिः ।
त्वयि सक्तदृशः सख्या विसंष्ठुले नाट्यनिर्माणे ॥ १००८ ॥
अवधीर्याऽऽचार्यरुषं भरतोदितदोषकरणसंभूताम् ।
विस्तारितः प्रयोगस्त्वदवस्थितिवाञ्छया तन्व्या ॥ १००९ ॥
भग्नेऽपि प्रेक्षणके तदनन्तरभूमिकाश्रयावस्थाः ।
गृह एव निरवसानं वितनोति न नाट्यधर्मेण ॥ १०१० ॥

---

एवं प्रस्तुय तस्याः मोहं अवगमयितुं नाट्यकालीनं इतिवृत्तं विज्ञानेति द्वाभ्यां प्रकाशयति । त्वयि राजपुत्रे, सक्तदृशः लग्ननेत्रायाः, अनेन स्तिमितं नाम शृंगारदृष्टिविकारः अनुलक्षितः “ स्वगोचरान्न चाल्येत यत्तत् स्तिमितमुच्यते । ” इति लक्षितः; सख्याः मंजर्याः, तत्कारणात्, ] विसंष्ठुले अव्यवस्थिते असंगते, नाट्यनिर्माणे तत्तदवस्थानुकृतिकरणे, सतिसप्तमी इयं; तस्याः विज्ञानेन “ मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः । ” इति अमरोक्तभेदात् प्रकृते नाट्यकलाकौशलेन इत्यर्थः अर्जितः संप्राप्तः यः गर्वः सर्वाधिकत्वधीः, सः, समानं अभिन्नं शिल्पं कलादिकं कर्म प्रकृते नाट्यं यासां ताभिः नर्तकीभिः इत्यर्थः, निभृतं गूढं परैरलक्ष्यं यथा स्यात्तथा, हसितः हासविषयीकृतः तदीयाभिनयानां असंगत्वात् अस्थाने तस्याः गर्वः इति ॥ १००८ ॥ अपि च, भरतेन नाट्यशास्त्रस्य आद्यप्रवर्तकाचार्येण उदिताः कथिताः ये दोषाः सुचेयतासुगानत्वसुपाठ्यत्वशास्त्रकर्मसमायोगानां विपर्ययाः, तेषां करणेन निर्वृत्त्या संभूतां उत्पन्नां, आचार्यस्य तस्याः नर्तनोपाध्यायस्य रुषं कोपं, अवधीर्य अविगणय्य, तया तन्व्या सुकुमार्या, प्रयोगः नाट्ये अभिनयः, विस्तारितः कारणविशेषात् दोषाणां अपरिहार्यत्वेन प्रयोगसमाप्तिकरणस्य उचितत्वेऽपि तन्न कृत्वा प्रत्युत पल्लवितः । तत्र बीजमाह त्वदिति, तव अवस्थितेः अवस्थानस्य वाञ्छया अभिलाषेण, प्रयोगस्य असमाप्तिं यावत् त्वदवस्थानसंभवात् तस्य दीर्घकालव्याप्यत्वे तवापि मधुरं दर्शनं चिरं भूयात् इत्याशयेन इति भावः ॥ आभ्यां विप्रलंभस्य अभिलाषावस्था व्यंजिता ॥ १००९ ॥ नायकागोचरं स्वगृहे जातं मंजर्याः स्मरदशाभिभवप्रकाशकं वृत्तं एकविंशतिभिः आह भग्नेत्यादिभिः । प्रेक्षणके दृश्ये नाट्ये, भग्ने जातसमाप्तौ विरते, अपि, तस्य प्रकृतस्य प्रथमांकस्य अनंतराः उत्तराः

---

१००८ विज्ञानार्पितदर्पे निभृतं हसितं ( प. स्तं ) १०१० प्रेक्षणिके ( स्तं ) ' वस्थां ( प. स्तं ) । निरवसानां ( प. स्तं )

ध्यायत एकं पुरुषं परमात्मविदः शशंस या न पुरा।
ताननुकुरुते सैव ध्यायन्ती त्वां महापुरुषम् ॥ १०११ ॥
गतमेवमेवमासितमालोकितमेवमेवमालपितम्।
इति विस्मृतान्यकार्या स्मरति कृशाङ्गी त्वदीयलीलानाम् १०१२

द्वितीयांकादिभवा: या भूमिकाश्रया: स्वगृहीतरत्नावलीवेषपरिग्रहं आश्रित्य वर्तमाना: शेषा: अवस्था: स्मरणादिविरहदशा: ता:, गृहे एव स्वगृहे न तु कुत्रापि प्रेक्षास्थाने आस्थाने वा, निरवसानं सततं अविरतं, न तु नाट्यकालवत् परिमितसमयं, वितनोति करोति न तु अनुकुरुते। एवंकरणे नाट्याभ्यासभ्रांतिर्मा जायतामिति स्पष्टमाह न नाट्यधर्मेण न नाट्यस्य इतिकर्तव्यतया इत्यर्थ:। त्वदयोगपरवशा सा तास्ता: विरहदशा अनुभवतीति भाव: ॥ १०१० ॥ तत्रादौ तस्या: स्मृत्याख्यां दशां वर्णयति ध्यायत इति। या मंजरी, पुरा भूतकाले, एकं पुरुषं "तेनेदं पूर्णं पुरुषेण सर्वम्।" (श्वेताश्वतरोपनिषदि ३।९) इत्यादिश्रुत्युक्तं परमात्मानं, ध्यायत: ध्यानविषयं कुर्वत: चिंतयत:, परमात्मविद: "उत्तम: पुरुषस्त्वन्य: परमात्मेत्युदाहृत:। यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वर: ॥" (१५।१७) इति भगवद्गीतासु प्रकाशित:, (अन्य: पूर्वोक्ताभ्यां क्षराक्षरपुरुषाभ्यां भिन्न: निर्गुणं अधिष्ठानभूतं ब्रह्म।) तं विदंति अपरोक्षतया जानंति तान्, न शशंस न शश्लाघे, यथा पूर्वमेवोक्तं–"ध्यानधिय आत्मतृप्तिं निंदत्येकत्र पुरुष आसक्ताम्।" (आ. ९९६) इति; सा निंदाकर्त्री, एव, त्वां समरभटाख्यं, महापुरुषं एव पुरुषोत्तमं हरिं पुरुषश्रेष्ठं च, ध्यायंती 'वियोगे चिंतनात्सुखम्' इति ऐदंपर्येण अनुसंदधाना सती, तान् प्रथमं निंदितान् ध्यानधिय: परमात्मविद:, अनुकुरुते तद्वदेव ध्यानं आचरति इति यावत्। यद्यपि स्वेन निंदित.चारस्य स्वेनैव अनुष्ठानं गर्हितं, तथापि त्वद्विरहेण तया तदपि कार्यते इति भाव:। तव ध्यानमेव तस्या: जीवितालंबनं इति सूचितम्। अनया "इष्टाप्राप्त्यादिजनितं ध्यानं चिन्तेति कथ्यते।" इत्युक्त: चिंताख्यो व्यभिचारिभाव: उक्त: ॥ एतत्समानभावा अन्यस्योक्ति:–"अस्तमितविषयसंगा मुकुलितनयनोत्पला मृदु('बहु')श्वसिता। ध्यायति किमप्यलक्ष्यं बाला योगाभियुक्तेव ॥" इति ॥ विरोधाभासालंकार: ॥ १०११ ॥ तदेव विशिष्टकथनेन विशदयति गतेति। एवं एतत्प्रकारेण, तेन राजपुत्रेण इत्यर्थ:, गतं गमनं कृतं, भावे क्त:।आसितं उपविष्टम्। आलोकितं दृष्टिव्यापार: कृत:, कटाक्षितम्। आलपितं वचनविन्यास: कृत:। इतिशब्द: प्रकाराभिनये। त्वदीयचेष्टादीनां स्मरणं विना त्यक्ता: अन्या:

१०११ ध्यायंत्येकं (प. स्तं)। तामनु (प. स्तं) [ क्रियार्थक: प. स्तं. पाठ:

नलकूबरो वराको, रतिरमणो रमण एव किं तेन ।
अनिरुद्धोऽपि न बुद्धो विदग्धविहितासु सुरतगोष्ठीसु ॥१०१३॥
न जयन्तोऽनन्तगुणो, न कुमारो मारकर्मणोऽबाह्यः ।
केन समतां नयामस्तमिति सखी वहति मानसं क्लेशम् ॥१०१४॥

---

क्रियाः यया तादृशी, कृशाङ्गी तन्वी, अंगस्य कार्श्येन विरहपीडाधिक्यं सूच्यते । त्वदीयलीलानां तावकीनानां गमनादिषु सविलासव्यापाराणां, स्मरति ॥ इयं अनुस्मृतिः नामावस्था "अर्थानामनुभूतानां देशकालानुवर्तिनाम् । सातत्येन परामर्शो मानसः स्यादनुस्मृतिः ॥ तत्रानुभावा निःश्वासः कृत्यनुत्साहचिन्तने ।" इति लक्षणादिलक्षिता । शृंगारतिलकानुसारेण इयं प्रलापावस्था, "बंभ्रमीति मनो यस्मिन् रत्यौत्सुक्यादितस्ततः । वाचः प्रियाश्रिता एव स प्रलापः स्मृतो, यथा ॥" (२।१२) इति तत्र तल्लक्षणात् । वर्णिता चेयं सफला अनुस्मृत्याख्याऽवस्था भवभूतिना माधवोक्तिद्वारा ( मालतीमाधवे अं. ५ )—"मम हि संप्रति सातिशयप्राक्तनोपलंभसंभावितात्मनः संस्कारस्यानवरतप्रबोधात्प्रतायमानस्तद्विसदृशैरतिरस्कृतप्रवाहः प्रियतमास्मृतिप्रत्ययोत्पत्तिसंतानस्तन्मयमिव करोति वृत्तिसारूप्यतश्चैतन्यम् ।" इति । ( तन्मयमिवेत्यादिकं अनुस्मृतेः फलं, तत्पूर्वंगं तस्याः स्वरूपम् । ) ॥ १०१२ ॥ युग्मेन तस्याः तद्रूपगुणादिपक्षपातजां गुणकीर्तनावस्थामाह नलेति । नलकूबरः तदाख्यः कुबेरपुत्रः अतिसुंदरः यं रंभा अचीकमत, स तु वराकः दीनः, यतः नारदशापेन गोकुले अर्जुनवृक्षः जातः इति, एतत्कथा श्रीभागवते दशमे दशमाध्याये द्रष्टव्या । अतः स न राजपुत्रस्य समः इति भावः । एवमुत्तरत्रापि । तथा रत्याः रमणः प्रियः कामदेवः, रमण एव रूढयैव नाम्नैव रमणः न तु योगार्थतः अनंगत्वात् इति भावः, तथा च "पटोलमूले रमणं, रमणस्तु प्रिये स्मरे ।" इति विश्वलोचनः । अतः किं तेन, उपमानानर्हः सः इति भावः । अनिरुद्धः कृष्णस्य पौत्रः प्रद्युम्नस्य पुत्रः बाणासुरपुत्र्याः उषायाः पतिः, अपिः समुच्चये तथा इत्यर्थः, विदग्धैः चतुरैः विहितासु कृतासु, सुरतं संभोगः तस्य गोष्ठीषु पुरावृत्तवर्णनरूपेषु संलापेषु, न बुद्धः न पंडितः, "दोषज्ञे सुगते बुद्धः" इति मंखकोशः, मूढः इत्यर्थः, अतः सोऽपि उपेक्ष्यः इति भावः ॥ १०१३ ॥ अपि च जयंतः इन्द्रपुत्रः, अनंतगुणः बहुगुणवान्, न, यतः सः काकरूपं धृत्वा एकांते स्थितायाः सत्याः

---

१०१३ अनिरुद्धोर ( व ? )बुद्धो ( प ) १०१४ कर्मणो पां ( प ) मारकर्मणोपायः ( स्तं ) । येन समतां ( गो. ) केन समतां नयामस्त्वामिति ( प. स्तं ) [ अधिकमात्रः पाठः ] । मानसक्लेशम् (स्तं.)

आगतमागच्छन्तं पुरतः पार्श्वे प्रसन्नमथ कुपितम् ।
पश्यति भवन्तमेकं सङ्कल्पनिवेशितं बाला ॥ १०१५ ॥

सीतायाः कुचे चंचूप्रहारं कृतवान् इति हीनः, राजपुत्रस्तु न हीनचरितः इति भावः। एवं कुमारः कार्तिकेयः सुब्रह्मण्यः, च, मारकर्मणः कामस्य कर्म मोहनादि तस्य अबाह्यः इति च्छेदः, न–अर्थात् तस्य बाह्यः बहिः, अद्यापि अनूढत्वात् तस्य स्त्रीमात्रद्वेष्टृत्वाच्च । उक्तं च अत्रैव पूर्वं–" वर्ण्यः सद्व्रत एकस्त्रिपुरान्तकनन्दनो महासेनः । हृदयं यस्य स्पृष्टं न मनागपि वामलोचनाप्रेम्णा ॥ " ( आ. ४८६ ) इति । अयं तु न तथाविधः इति भावः । अतः तं मोहकरूपादिगुणवंतं, प्रेम्णा नामाग्रहणपूर्वकसर्वनामप्रयोगेण उक्तिः, केन अपरेण केन रूपगुणादिना महतः पुत्रत्वेन च प्रसिद्धेन कुमारेण ( युवराजेन ), समतां नयामः उपमिनुमः, इतिशब्दः हेतौ, ] सखी मंजरी इत्यर्थः, [ मानसक्लेशं चित्तखेदं, वहति धारयति । तत्तद्धेतुना न कोऽपि राजपुत्रसमः इति तस्य उपमानान्वेषणे प्रयत्नस्य निष्फलत्वात् तस्याः खेदः इति भावः, " परनिन्दा परस्तुतिः " इति न्यायेन तस्याः मनसि त्वं निरुपमः इत्यभिप्रायः ॥ गुणकीर्तनलक्षणं तु–" सौंदर्यहसितालापैर्नास्त्यन्यस्तत्समो युवा । इति वाणी भवेद्यत्र तदित्थं गुणकीर्तनम् ॥ " ( २।१० ) इति शृंगारतिलके ॥ असमालंकारः, " असमस्त्वन्यमात्रस्य सादृश्यस्य तिरस्क्रिया । " ( ८।८४ ) इति साहित्यसारे लक्षणात् ॥ १०१४ ॥ पुनरपि उन्मादविमर्शिनीं स्मरणाख्यां स्मरदशां वर्णयति आगतेति । सा बाला षोडशवर्षवयस्का, स्वस्याः संकल्पे मानसव्यापारे मनसि इत्यर्थः, निवेशितं स्थापितं, भवंतं एकं, आगतं अचिरादागमिष्यन्तं, आदिकर्मणि क्तः कर्तरि । ततः आगच्छन्तं, एवमग्रेऽपि क्रमः बोध्यः । पुरतः अग्रे । पार्श्वे दक्षिणे वामे वा भागे । प्रसन्नं सहर्षम् । कुपितं क्रुद्धम् । अथ अनन्तरम् । सा त्वामेव परिभावयंती त्वामेव नानावस्थासु स्थितं सर्वदा पश्यति, नान्यत् किमपि, इति भावः । अनया तस्याः तन्मयत्वं उक्तम् । एवमन्यत्र नायकावस्थाऽपि वर्णिता यथा मालतीमाधवे–" पश्यामि तामित इतः पुरतश्च पश्चादन्तर्बहिः परित एव विवर्तमानाम् । " ( १।४३ ) इति ॥ तथा–" सौधादुद्विजते, त्यजत्युपवनं, द्वेष्टि प्रभामैन्दवीं, द्वारान्नश्यति चित्रकेलिसदसो, वेषं विषं मन्यते । आस्ते केवलमब्जिनीकिसलयप्रस्तारशय्यातले संकल्पोपनतत्वदाकृतिरसायत्तेन चित्तेन सा ॥ " इति । " एष हि भावनाप्रकर्षस्य महिमा, यच्चिन्त्यमानं रूपं साक्षादेव भावयितुः

रुच्यः कान्तो हृद्यः सुभगः सुखदो मनोहरो रमणः ।
इष्टः स्वामी दयितः प्राणेशः केलिकरणनिपुण इति ॥१०१६ ॥

पुरस्तादुपस्थाप्यत इति भावुकाः । ” इति वासवदत्ताटीकायां विमर्शिन्यां श्रीकृष्णसूरिः ॥ १०१५ ॥ पुनः भंग्यन्तरेण तामेव स्मरणदशां युग्मेनाह रुच्येत्यादिना । रुच्य-इत्यादीनि मंजर्या जप्यमानानि तत्प्रियस्य द्वादशनामानि, उक्तं च भरतमनुसृत्य भावप्रकाशे पंचमाधिकारे—“ प्रणयी दयितः कान्तो नाथः स्वामी प्रियः सुहृत् । नंदनो जीवितेशश्च सुभगो रुचिरस्तथा । इत्थं नायकसंज्ञाः स्युः स्त्रीभिः प्रीतिप्रयोजिताः ॥ ” इति, इमाः अन्यासामप्युपलक्षणम् । रुच्यः—सामान्यतः रुचिरः शोभमानः अभिलषणीयः वा, विशेषेण तु—“ भोग्येषु यत्राभिरुचिस्तद्दानैरभिरोचयन् । रुच्या प्रियां रमयति रुचिरः सोऽभिधीयते ॥ ” इति भावप्रकाशे ॥ कान्तः—सामान्येन रम्यः प्रियो वा, विशेषेण तु—“ कथाभिः कमनीयाभिः काम्यैर्भोगैश्च सर्वदा । उपचारैश्च रमयेद्यः स कान्त इतीरितः ॥ ” इति भावप्रकाशे । एवमग्रेऽपि । हृद्यः—हृदयस्य प्रियः मनोज्ञत्वात् , अतः विशेषेण तु वशकृत् वेदमंत्रविशेषवत् ॥ यद्वा “ यो विप्रियं न कुरुते नाना ( न चा)युक्तं प्रभाषते । तथार्जवसमाचारः प्रिय इत्यभिधीयते ॥” ( २२।२८८ ) इति भरतोक्तः प्रियः ॥ सुभगः—सामान्यतः शोभनैश्वर्यः “ सर्वोन्नतत्वं सौभाग्यं, तद्वान् सुभग उच्यते । ” इति दिवाकरः, यद्वा स्त्रीवल्लभः सर्वजनवल्लभो वा; विशेषतस्तु—“ सपत्नीनखदंतादिचिह्नं यस्य न दृश्यते । विस्मार्यमाणमानेर्ष्यः सुभगः सोऽभिधीयते ॥ ” इति भावप्रकाशः; एतेन तस्य परवेदनाभिज्ञत्वं सूचितम् ॥ सुखदः—सुखदाता, विशेषेण सुरतादिभिः परमानंदप्रदाता ॥ मनोहरः—सामान्यतः सुंदरः, विशेषतस्तु—रूपलावण्यादिना अंतःकरणाकर्षकः ॥ रमणः—रत्युत्पादकः, विशेषेण तु कामशास्त्रोपदिष्टयुक्तिभिः क्रीडकः ॥ इष्टः—प्रियः, विशेषेण तु वाञ्छितः, यद्वा “ कुलीनो धृतिमान्दक्षो दक्षिणो वा विशारदः । श्लाघनीयः सखीमध्ये नन्दनः सोऽभिधीयते ॥ ” ( २२।२९४ ) इति भरतोक्तः नंदनः ॥ स्वामी—सामान्यतः सर्वविषयेषु तस्याः प्रभुः, विशेषतस्तु—“ निवारयन्नकृत्येभ्यः कर्तव्येभ्यः प्ररोचयन् । स्वभावैः( वे? ) स्थापयति यः स स्वामीति निगद्यते ॥ ” इति भावप्रकाशः ॥ दयितः—परमवल्लभः, विशेषतस्तु—“ वासोऽङ्गरागमाल्याद्यैः कृत्यैर्वः प्रेयसीं रहः । प्रसादयन् रमयति दयितः सोऽभिधीयते ॥ ” इति तत्रैव ॥ प्राणेशः—प्राणनाथः ‘ जीवनायकः, ’ विशेषतस्तु—“ भजते यः प्रियामिष्टैः शयनासनभोजनैः ।

१०१६ रुच्यः शान्तो ( गो )

मुक्तान्यसमारम्भा वरतनुरनुपप्लुतेन चित्तेन ।
जपति समीहितसिद्ध्यै त्वद्द्वादशनामकं महास्तोत्रम् ॥१०१७॥
तामेव गच्छ यस्यामासज्य विलम्बितोऽसि गतलज्ज ।
वेलामियतीमलमलमेतैरधुना शठानुनयैः ॥ १०१८ ॥

अभीष्टाभिश्च शोभाभिर्जीवितेश इतीरितः ॥" इति तत्रैव ॥ केलिकरणनिपुणः—केलीनां क्रीडापरीहासादीनां करणे निष्पादने निपुणः नागरः, विशेषेण तु दाक्षिण्यसहितसंभोगसुखसिद्धिमान् ॥ इतिशब्दः समासौ ॥ अभेदो बोध्यः—यत् एक एव प्रियः तत्तद्गुणवैशिष्ट्यात् भिन्नबुद्धिविषयः यथा दंडिकुंडलीत्यादिः-इत्यभिप्रायेण नामावलिः ॥ १०१६ ॥ मुक्तेति । रागदिग्धहृदया सा, मुक्तान्यसमारंभा व्रतिनी इव त्यक्तापरोद्योगा, वरतनुः शोभनाङ्गवती, अनुपप्लुतेन प्रत्ययान्तरैः अविक्षिप्तेन, चित्तेन मनसा, समीहितसिद्ध्यै त्वद्रूपस्य इष्टस्य संप्राप्त्यै, त्वद्द्वादशनामकं तव द्वादशसंख्याकानि नामानि यत्र तादृशं, महास्तोत्रं महास्तवं, निश्चितफलदायकत्वात् महदिति विशेषणं, जपति दीर्घकालं आवृत्त्या पठति । " यदि देवताया अष्टौ दश द्वादश नामानि पठ्यन्ते तदा सा प्रसन्ना भवति । " इति मृच्छकटिकटीकायां ( १।२३ ) पृथ्वीधरः । यथा कश्चित् फलविशेषं प्राप्तुकामः तत्फलदातुः देवताविशेषस्य उपासने तत्प्रसादनाय तन्नामस्तोत्रं ऐकाग्र्येण बहुवारं पठति तथा इयं पूर्वानुरागगतं त्वन्नामस्तोत्रं जपति इति भावः । अनेन त्वमेव तस्याः उपास्यदेवता इति ध्वनितम् ॥ अत्र तत्प्राप्त्याशया जपकरणेन चिंता, तदेकाग्रमानसत्वेन स्मृतिः, तन्नामावलिजपेन गुणकीर्तनं, इति नानावस्थानां संकरः सूचितः ॥ १०१७ ॥ युग्मेन तस्याः संकल्पावस्थागतं एकं प्रकारं वाचिकं उन्मादं प्रकटयति तामित्यादिना । कृतागसि कांते प्राप्ते कुपिता एवं वक्ष्यामि इति संकल्पः । तद्वचनप्रकारमाह तामिति । तामेव तव प्रियां प्रति गमनं कुरु, यस्यां आसक्तो भूत्वा, मत्समीपं आगमने त्वं एतावंतं विलंबं कृतवान् इत्यर्थः। अतः अन्यासक्तिगोपनाशक्तत्वात् गतलज्ज इति संबोधनं, निस्त्रप इत्यर्थः। तस्य लक्षणं भावप्रकाशे—" परुषैरवमानैश्च वार्यमाणो मुहुर्मुहुः । सापराधोऽपि यो गच्छेत् स निर्लज्ज इतीरितः ॥ " इति । अधुना सांप्रतं, एतैः मत्समीपं क्रियमाणैः, अनुनयैः प्रसादनाय चाटुचरणपातादिभिः सान्त्वनकर्मभिः, अलं पर्याप्तं, वीप्सायां द्विरुक्तिः, विरम एतेभ्यः मिथ्याप्रत्ययकारिभ्यः प्रयत्नेभ्यः इति भावः । हे शठ परवंचक कितव, शठश्च—" प्रियं वक्ति पुरोऽन्यत्र विप्रियं कुरुते भृशम् । ज्ञातापराध-

१०१८ गतलज्जः ( स्तं )

वक्ष्यामि सापराधं क्रोधस्फुरदधरमाञ्चितभ्रूकम् ।
इति विदधाति सुमध्या हृदयेन मनोरथावृत्तिम् ॥ १०१९ ॥
( सन्दानितकम् )

उत्सहते न द्रष्टुं प्रतिबिम्बितमाननं, कुतः शशिनम् ।
का संकथा मृणाले क्षिपति भुजौ सर्वतो व्यथिता ॥ १०२० ॥

---

चेष्टश्च कुटिलोऽसौ शठो–यथा ॥ " ( १।२७ ) इति शृंगारतिलके ॥ निर्लज्जेति शठेति च संबोधने क्रोधप्रकाशके, यथोक्तं भरतेन–" दुःशीलोऽथ दुराचारः शठो वामो विकत्थनः । निर्लज्जो निष्ठुरश्चेति प्रियं क्रोधेऽभिनिर्दिशेत् ॥ " ( २२।२८७ ) इति ॥ तथाच शृंगारतिलकाख्यलघुकाव्ये–" किंकिं वक्त्रमुपेत्य चुंबसि बलान्निर्लज्ज लज्जा क ('न') ते, वस्त्रान्तं शठ मुंचमुंच, शपथैः किं धूर्त वाग्बन्धनैः । खिन्नाऽहं तव रात्रिजागरवशात्तामेव याहि प्रियां, निर्माल्योज्झितपुष्पदामनिकरे का षट्पदानां रतिः ॥" ( १० ) इति । ( अत्र पाठभेदाः काव्यानुशासने–" धिङ्मां किं समुपेत्य० धूर्त निर्बाधसे । ० जागरतया तामेव याच० " इति ।) ( वाग्बंधनैः वाक्यरचनैः । ) एवं-वादिनी नायिका मध्या धीरा, तथा च शृंगारतिलके–" सा धीरा वक्ति वक्रोक्त्या प्रियं कोपात्कृतागसम् । " ( १।४१ ) इति, ( सा आरूढयौवना प्रगल्भवचना मध्यासंज्ञिता । ) ॥ १०१८ ॥ एवं, सापराधं अन्यासंगेन कृतविप्रियं, तं मां अनुनयंतं, वक्ष्यामि, कथमिति क्रोधेत्यादिभ्यां द्वाभ्यां क्रियाविशेषणाभ्यां आह, कोपेन स्पंदमानः ओष्ठः यथा स्यात् तथा, तथा अंचितौ भ्रुवौ यथा स्यात् तथा, प्रवेपमानाधरं निकुंचितभ्रूलतं च । इदं द्वयं कोपस्फुरणानुभावः । इतिशब्दस्य सार्धायां आर्यायां उक्तप्रकारेण इत्यर्थः । सुमध्या सुश्रोणिः, मध्याशब्देन च तस्याः मध्यानायिकाभावः सूच्यते, हृदयेन, मनोरथानां संकल्पानां, आवृत्तिं अभ्यासं परिवर्तनं, विदधाति कुरुते; तथाहि कर्पूरमंजरीसट्टके विदूषकोक्तेः ( ३ ) छाया–" भ्रष्टः ठक्कुरः, क्षुधाक्रान्तो ब्राह्मणः, अविनीतहृदया बालरण्डा, विरहितश्च मानुषो, मनोरथमोदकैरात्मानं विडंबयति ॥ " इति । ( ठक्कुरः कतिपयग्रामाधिपतिः, न तु राजा । रण्डा विधवा । विरहितः विरहयुक्तः । ) ॥ १०१९ ॥ ( संदानितकं युग्मम् । ) द्वाभ्यां तस्याः व्याध्याख्यां अष्टमीं स्मरदशां वर्णयति उत्सहते इत्यादिभ्याम् । सा, दर्पणादिषु प्रतिबिंबितं प्रतिफलितं आननं मुखं, स्वस्य इति भावः, द्रष्टुं निरीक्षितुं, न उत्सहते न शक्नोति, तस्य चंद्रभ्रांत्या संतापकारित्वात् इति भावः, " किं शशिनः

---

१०१९ मनोरथावृत्तिः ( सं ) १०२० न च द्रष्टुं ( प. स्तं ) [ अधिकमात्रः पाठः ]

दूरे कदलीदण्डा ऊर्वोरपि न सहते समाश्लेषम् ।
करसम्पर्काद्विमुखी विश्राम्यति पल्लवेष्विति विरुद्धम् ॥१०२१॥
'अयि मञ्जरि, सैव त्वं, विदग्धजनमण्डिता पुरी सैव ।
कुसुमायुधः स एव, व्यसनं कुत एतदायातम् ॥ १०२२ ॥

---

प्रतिबिंबं वदनं, ते किं मुखस्य शशी । " ( काव्यालंकारे ८।६६ ) इत्युक्त्यनुसारेण; सा शशिनं चन्द्रं द्रष्टुं, कुतः इति प्रश्ने कथं इत्यर्थः, उत्सहेत इति शेषः, तस्य विरहिणां संतापकत्वात् इति भावः । अपि च सा व्यथिता विरहेण पीडिता, भुजौ बाहू, सर्वतः शयने सर्वेषु स्थलेषु, क्षिपति, स्वस्थतया न एकत्र स्थापयति, तस्याः, का संकथा किमु वाच्यं इत्यर्थः, मृणाले जातावेकवचनं; तत्संतापापनोदाय शय्यायां स्थापितेषु मृणालेषु पद्मनालस्थतन्तुषु सा भुजौ क्षणमपि स्थापयिष्यति इति कुतः संभावना इति भावः । अनेन मनसो व्यग्रतातिशयः सूचितः । कैमुतिकन्यायेन अर्थसिद्धेः काव्यार्थापत्तिरलंकारः ॥ १०२० ॥ दूर इति । सा स्वस्याः ऊर्वोः, अपिः समुच्चये, समाश्लेषं संसर्गं, न सहते; एवं सति दूरे कदलीदंडाः—कथं सा तापशांत्यै निहितानां कदलीस्तंभखंडानां स्पर्शं सहेत इति भावः; कदली 'केल' इति भाषायां ख्यातः वृक्षविशेषः । ऊर्वोः कदलीस्तंभोपमितत्वात् तस्य च शीतवीर्यत्वात् अत्र कदलीग्रहणं इति बोध्यम् । एवं च स्वकरयोः परस्परं संपर्कात् स्पर्शनात् पराङ्मुखी, तापाधिक्येन अशक्त्या वा तदसहत्वात्, सा, पल्लवेषु कोमलकिसलयेषु आस्तरणभूतेषु, विश्राम्यति विरामं लभते, इति वचनं विरुद्धमेव । 'पल्लवेषु इति तेषां करतुल्यत्वात् तत्र शयनमयुक्तमित्यर्थः', [ इति टिप्पणी । स्वकीयावयवस्पर्शोऽपि यस्या दुःसहः तस्याः स्वभावकोमलानि अंगानि विरहतापदूनानि अपरपदार्थस्पर्शं सोढुं कथं शक्नुयुः इति भावः । प्रवालतल्पे शफरीव स्थले सा परिस्फुरति इत्यभिप्रायः । पूर्ववत् काव्यार्थापत्तिः अलंकारः । व्याधिलक्षणं तु—" विरहादेर्मनस्तापो व्याधिर्मुखशोषादिकृत् । " इति काव्यानुशासने । ( आदिना हस्तांगतागात्रविक्षेपादयः समुच्चिताः । ) ॥ १०२१ ॥ इतः अष्टकेन सख्याः मंजरीं प्रति तां भिन्नरहस्यां कर्तुं अनुतापोक्तिः । अयि इति कोमलामंत्रणे, मंजरि इति नामग्रहणपूर्वकसंबोधनेन स्निग्धत्वं विस्रंभोचितत्वं वक्ष्यमाणे च अवधानदानाय प्रार्थनं सूच्यते । सैवं त्वं न कोऽपि व्यक्तिभेदः न वा ते जन्मान्तरं इति भावः । चतुरनरैः भूषिता इयं नगरी अपि सैव, नापि ते स्थानान्तरं जातं इति भावः । कुसुमायुधः मदनोऽपि ... एव, कुसुमायुधः स एव इत्यनेन सांप्रतं अपि तस्य प्रहरणानि मृदूनि कुसुमान्येव, न तु जीवहराणि लोहप्रस्तरा-

यस्याः कामः कृपणो रागाकृष्टिस्तृणोलपप्रख्या ।
साऽपि गता भूमिमिमां, जीवन्त्या नेक्ष्यते किमिह ॥ १०२३॥
अभियोगशिक्षितानामशिक्षितानां च मदनचेष्टानाम् ।
सुतनु विशेषग्रहणे सामर्थ्यं तद्विदामेव ॥ १०२४ ॥

---

दिमयानि इति व्यंजितम् । एतत् अपरोक्षतया दृश्यमानं विरहसंतापरूपं, व्यसनं अशुभं विपत्तिः वा, कुतः कस्मात् स्थानात्, आयातं संप्राप्तम् । तर्कातीतं ते एतादृश्याः अवस्थायाः कारणं इति भावः ॥ कार्यकारणभावस्य वैचित्र्यव्यंजनात् विभावनालंकारो व्यंग्यः ॥ १०२२ ॥ विरहाभिभूतायां त्वयि असंभवि अपि अनुभूयते इत्याह यस्याः इति । यस्याः कामः मदनः, ] कृपणः अकिंचित्करः, [ अनुरागोत्पादनरूपस्ववीर्यस्य त्वयि नैष्फल्येन दीनः मनोबलरहितः इति भावः । तथा रागेण स्नेहेन अन्यत्र आकृष्टिः मनसः गमनं, तृणानि दूर्वादीनि, ] 'उलपः प्रतानिनी लता' [ इति टिप्पणी । उलपाः बल्वजाख्याः तृणविशेषाः, " उलपस्तृणभेदे स्याद्गुल्मिन्यामुलपं मतम् ।" - इति विश्वलोचनः । 'ब्राह्मणपरिव्राजकवदुलपानां पृथङ्निर्देशः । ' ] तत्प्रख्या तद्वत्तुच्छा इत्यर्थः ॥ [अत्र तस्याः विषये मदनस्य अकिंचित्करत्वं पूर्वं "हरति मनो नो ह्रियते" (१००१) इत्याद्यार्यात्रयेण आविष्कृतं, रागस्य तस्या आकर्षणे असामर्थ्यं च "या हसति सरोजवतीं" (९९६) इत्याद्यार्यापंचकेन च समर्थितं इति बोध्यम् ॥ साऽपि त्वं एतादृशी अपि, अपिः विरोधद्योतकः, इमां प्रत्यक्षां शोच्यां इति भावः, ] भूमिं अवस्थां [ दशां, गता प्राप्ता, इति महादाश्चर्यं इति भावः । विचारेण स्वोक्तं निषेधति जीवंत्येति । जीवंत्या असमाप्तजीवितया सप्राणया, इह अस्मिन् लोके, किं, न ईक्ष्यते नानुभूयते इत्यर्थः ॥ तथा च रावणोक्तिः ( महानाटके ९।२१ ) " जीवद्भिर्न हि दृश्यते किमथवा किं वा न वा श्रूयते ।" इति । (जीवद्भिः चिरशरीरधारणावद्भिः । ) " बत देहे सति का न दुर्दशा ।" इति भावः ॥ अत्र आक्षेपविशेषः अलंकारः, " आक्षेपः स्वयमुक्तस्य प्रतिषेधो विचारणात् । " इति कुवलयानंदसंमतलक्षणानुसारेण, ' जीवंत्या ' इत्याद्यंशे च लोकोक्तिः अलंकारः, " लोकप्रवादानुकृतिर्लोकोक्तिरिह भण्यते । " इति च तत्रैव तल्लक्षणात् । उभयोश्च संकरः ॥ १०२३ ॥ ननु त्वया उपलक्षितं कामवैवश्यं मम नर्तकीत्वात् नाट्यधर्म एव, न तु वास्तवं इति अपह्नवं, मदनचेष्टाभिज्ञानां तद्भेदज्ञानं अनिवार्यमेव इत्युक्त्या निवारयति अभीति । अभियोगेन अत्यंताभिनिवेशेन प्रयत्नेन वा संपादितानां कृत्रिमाणां

---

१०२३ कामकृपणो ( प. सं ) [ दुष्टः पाठः ] १०२४ त्वादृशामेव ( प. सं )

व्यथयन्नपि सच्छायः परिजनचिन्ताकरोऽपि रमणीयः ।
आधत्ते त्वयि लक्ष्मीमभिनवरागाश्रयोऽधिकां क्षोभः ॥१०२५॥

---

इत्यर्थः, अशिक्षितानां स्वाभाविकीनां च, मदनचेष्टानां–संयोगे कटाक्षविक्षेपभ्रूभंगादीनां, वियोगे च संतापजागरकार्श्यादीनां,–तत्तच्छृंगारानुगुणगात्रारंभाणां; विशेषग्रहणे भेदज्ञाने, सामर्थ्यं शक्तिः, तद्विदां अनुभवेन शास्त्रेण वा मदनचेष्टाभेदाभिज्ञानां, एवशब्दः अवधारणे । अतः कपटवचनैराकृतिगोपनं न शक्यं, वयं अविप्रलभ्याः, अस्माकं अनुमितिः च प्रमा, इति भावः ॥ १०२४ ॥ तं विशेषं प्रकाशयति व्यथयन्निति । अभिनवः नूतनः प्रथमजातः रागः स्नेहः आश्रयः यस्य तादृशः, क्षोभः चित्तगात्रादिषु आकुलीभावः, व्यथयन् मदनग्लानिं जनयन्, अपिः विरोधे, ] सच्छायः कान्तिमान्, [ शोभना छाया कान्तिः यस्य तादृशः, अन्यपीडावत् न शरीरकान्तिहरः इति भावः । तथा सख्यादीनां संतापजनकः अपि मनोहरः । एवं विरोधिगुणवान् स्मरजः विक्षेपः, त्वयि कामावस्थानिमित्तकमनीयवर्णान्तरशालिन्यां अधिकां लक्ष्मीं शोभां आधत्ते निवेशयति । यथोक्तं " रम्याणां विकृतिरपि श्रियं तनोति । " (किरात०७।५) इति, यथा चोक्तं पूर्वमनेनैव कविना–""तस्या मदनः कुर्वन्नुपनिन्ये चारुतामवधिम् ॥"(आ. २७४) इति; तथा मालतीमाधवे मालतीविरहावस्थावर्णने–"परिपाण्डुमांसुलकपोलमाननं दधती मनोहरतरत्वमागता । रमणीयजन्मनि जने परिभ्रमंल्लुलितो विधिर्विजयते हि मान्मथः ॥" (२।४) इति । ( विधिः विधानम् । "सहजसौंदर्यशालिनां मन्मथविकारोऽपि शोभातिशयं पुष्णातीत्यर्थः ।" इति तट्टीकायां त्रिपुरारिः । ) तथा च शाकुंतले दुष्यंतोक्ती–" प्रियायाः साबाधं तदपि रमणीयं वपुरिदम् ॥" (३।९) इति, " शोच्या च प्रियदर्शना च मदनक्लिष्टेयमालक्ष्यते, पत्राणामिव शोषणेन मरुता स्पृष्टा लता माधवी ॥" (३।१०) इति च; तथैव तत्र मध्ये प्रियंवदायाः उक्तिः ( छाया )–"अनुदिवसं खलु परिहीयसेऽङ्गैः, केवलं लावण्यमयी छाया त्वां न मुञ्चति ।" इति ॥ तथा–" प्रतीच्छत्याशोकीं किसलयपरावृत्तिमधरः, कपोलः पाण्डुत्वादवतरति तालीपरिणतिम् । परिम्लानप्रायामनुवदति दृष्टिः कमलिनीमितीयं माधुर्यं स्पृशति च तनुत्वं च भजते ॥" इति । तथा ताराशशांककाव्ये–"नवकिसलयतल्पे वक्रितांगं शयाना निभृतकृशशरीरा दुर्निरीक्ष्याऽतिपाण्डुः । नवविकसितसंध्यारंजितांगी द्वितीयाशिशिरकरकलेव प्रेक्षणीया बभूव ॥"(१२२)

---

१०२५ परजनचिन्तां ( स्तं ) । सवरं ( प ) । श्रयो रागः ( गो ) [ असरमणीयः पाठः ]

एकः स एव जातो भुवनेऽस्मिन्नसमसायकस्पर्धी ।
तेन शशिबिम्बफलके सुजन्मना लेखितं निजं नाम ॥१०२६॥
पादस्तेन सलीलं विन्यस्तः सुभगमानिनां मूर्ध्नि ।
सौभाग्ययशःकुसुमं धनपतिसूनोः कदर्थितं तेन ॥ १०२७ ॥
नरवञ्चनपटुबुद्धिः संपादितकपटचाटुसंघटना ।
त्वमपि विलासिनि गमिता गतिमियतीं येन सुभगेन ॥१०२८॥
( अन्तर्विशेषकम् )

---

इति । ( द्वितीयेति द्वितीयायां तिथौ चंद्रलेखा इव । ) ॥ अनया व्याधिः दर्शितः, तदुक्तं रसोदधौ—"व्याधिः स्मरखेदनया समुत्थसंतापदोषतः कृशिमा " इति ॥ कारण-कार्ययोः वैषम्योक्त्या विभावनालंकारः ॥ १०२५ ॥ विशेषकेण मंजरीमनोहरं युवानं श्लाघते एकेत्यादिना । अस्मिन् जगति, असमसायकः बाणानां पंचसंख्याक-त्वात् विषमबाणः कामदेवः तस्य स्पर्धी तत्तुल्य इत्यर्थः, उपमा, स एव एकः अद्वितीयः, जातः जन्म गृहीतवान्, तस्यैव सफलं जनुः इति भावः; तेन सुजन्मना शोभनं जन्म उत्पत्तिः यस्य सः तेन, शशिबिंबफलके चंद्रस्य मंडलं एव फलकं चित्रादिविन्यासपट्टिका तत्र, रूपकं, निजं नाम स्वनामाक्षराणि इत्यर्थः, लेखितं विन्यासेन प्रकाशितं अर्थात् तस्यैव कीर्तिः अतिदूरं गता । कृत्यविशेषैः प्रसिद्धानां पुरुषाणां सर्वं वक्तव्यं फलके लिख्यते इति लोकाचारः । श्वेते चंद्रे शशस्य कृष्णवर्णत्वेन श्वेतफलकस्योपरि मषीलिखिताक्षरवत् दृश्यमानत्वात् अत्र व्यंग्योत्प्रेक्षा ॥१०२६॥ लोकोक्त्याऽपि तदेव प्रथमदले आद्य पाद इति । तेन एव नान्येन केनापि इति भावः, सुभगमानिनां आत्मानं सुभगं मन्यमानानां रूपादिभिः, मूर्ध्नि शिरसि, पादः चरणः, सलीलं अनायासेन, विन्यस्तः स्थापितः, अर्थात् अन्ये सुभगमानिनः पराजिताः, परा-जितस्य मस्तके जेत्रा तिरस्कारप्रदर्शनाय पादो न्यस्यते लोके । अपि च तेन धनपति-सूनोः कुबेरपुत्रस्य नलकूबरस्य, अस्य विशेषःपूर्वमुक्तः (१०१३ आ. टी.), सौभाग्येन सुरूपस्त्रीवल्लभत्वादिना यत् यशः कीर्तिः तदेव कुसुमं पुष्पं रूपकं, तत् कदर्थितं कदर्थोऽस्य संजात इति तारकादित्वादितच्, कुत्सितार्थवत्तया कृतं व्यर्थीकृत-मित्यर्थः, त्वादृश्याः मोहकत्वेन इति भावः ॥ १०२७ ॥ नरेति । येन सुभगेन शोभनैश्वर्यवता, नरवञ्चनपटुबुद्धिः पुरुषाणां प्रतारणे चतुरा धीः यस्याः सा,

---

१०२८ °सिनि नीता ( गो )

तद्वद तस्य स्थानं, यतामहे कार्यसाधनायालम् ।
कुर्वन्त्येव हि यत्नं भिषग्जनाः कृच्छ्रसाध्यरोगेऽपि' ॥१०२९॥

---

तथा संपादिता कृता कपटेन मिथ्याकल्पितसत्यानुकारिणा प्रपंचेन चाटोः लालनवाक्यस्य प्रियवचनस्य वाक्कौशलस्य वा संघटना रचना यया सा, चाटुवचनैः नराणां वशीकारकारिणी इत्यर्थः, वेश्याकुलोत्पन्नत्वात् इति भावः, तदुक्तं–"असत्येनैव जीवंति वेश्याः सत्यविवर्जिताः ।" (४।६) इति, "असत्यसारा गणिकागणश्रीः ।" (४।६९) इति च समयमातृकायां, (असत्यं च मनोनिष्ठं वाङ्निष्ठं क्रियानिष्ठं चेति त्रिविधमपि बोध्यम् ।), एतादृशी कपटनाटकनर्तकी अपि त्वं, इयतीं गतिं एतावतीं दशां विरहेण दुरवस्थां इति भावः, गमिता प्रापिता, येन रूपसंपत्तिशालिना त्वं आक्षिप्तहृदयमाहात्म्या कृता इत्यर्थः । विलासिनि–"तात्कालिको विशेषस्तु विलासोऽङ्गक्रियादिषु ।" ते अस्याः सन्ति इति विलासिनी, तत्संबुद्धिः; एतत्पदौचित्येन तस्याः मनोहारित्वं कामुकवशीकरत्वं च द्योतितम् ॥ १०२८ ॥ प्रीतिगर्भोक्तिः तदिति । तत् तस्मात्, वद स्फुटमाख्याहि । स्थानं निवासस्थलं, इदं तन्नामादेरपि उपलक्षणम् । कार्यस्य तव अभिलषितस्य तत्समागमरूपस्य, साधनाय संपादनाय, अलं अत्यर्थम् । कार्यसिद्धिसंशयेऽपि यत्नः करणीयः एव इति स्वोक्तं अर्थान्तरन्यासालंकारेण पोषयति कुर्वन्तीति । हिशब्दः हेतौ यतः इत्यर्थः, भिषग्जनाः–जनशब्दः बह्वर्थवाची, वैद्याः चिकित्सकाः, कृच्छ्रसाध्यरोगे कष्टेन प्रतिकार्ये गदे, तथा च रोगाः द्विविधाः साध्यः असाध्याश्च, तत्र साध्या अपि द्विविधाः सुखसाध्याः कृच्छ्रसाध्याः च, तत्र कष्टसाध्याः वैद्यैः चिकित्स्यंते "यावत्कण्ठगतप्राणस्तावत्कार्या प्रतिक्रिया ।" इत्युक्तत्वात् । तत्र कष्टसाध्याः अर्शःसंग्रहण्यादयः, तादृशेऽपि रोगे, यत्नः फलप्राप्त्यर्थं सौत्सुक्यो व्यापारः, प्रकृते चिकित्सारूपः औषधप्रदानात्मकः तं; कुर्वन्त्येव न तु रोगं उपेक्षन्ते, "यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ।" "सिद्धिस्तु दैवे स्थिता ।" (अमरुकशतके ९७) इत्यादिन्यायैः इति भावः । तथा च आभाणकः–'किमुपेक्ष्यते केलिकदलिकंदल्यां करिशुण्डादंडावेष्टः ।' (विद्धशा०) इति । अलंकारेण तव विरहज्वरः प्रियसमागमसंपादनरूपभैषज्येनापनेय इति ध्वनिः, अतः ज्वरनिदानं ज्ञातं चेत् प्रतीकारारंभः क्रियेत, अतः तत्स्थानादिकं प्रकाशय इति अभिप्रायः ॥ १०२९॥

---

१०२९ तद्व्रज (प. स्तं) [ नीरसः पाठः । ] । यासम् (गो) । कुर्वत एव (गो)

इति गदिते सख्या सा तदभिमुखं चक्षुषी समुन्मील्य ।
वितरति कृच्छ्रेण चिराद्भावितमक्लिष्टहुंकारम् ॥ १०३० ॥
का पुरुषार्थसमीहा द्योतयतः शर्वरीं शशाङ्कस्य ।
तर्पयतां भुवमखिलां सलिलमुचां कोऽभिकाङ्क्षितो लाभः ॥१०३१॥

विप्रलंभावस्थावर्णनमुपसंहरति इतीति । इति पूर्वोक्ताष्टार्याप्रकारेण, सहचर्या स्वमनोनिर्विशेषया सख्या, निगदिते कथिते सति, सा मंजरी, तस्याः सख्याः अभिमुखं, चिंतानिमीलिते लोचने समुन्मील्य उद्घाट्य, कृच्छ्रेण कष्टेन; चिरात् विलंबेन, न तु श्रवणोत्तरकालमेव, इत्यर्थः, भावितं उत्पादितं, अक्लिष्टं स्पष्टं, हुंकारं–" हुमित्यंगीकारद्योतकमव्यक्तवर्णं नादमात्रं, तदनुकरणत्वेन हुंकारशब्दः ।" इति नागानन्दविमर्शिन्याम्, वितरति, उत्तरे मौनावलंबनं कृत्वा केवलं हुंकारेणैव अनुमतिं दर्शयति इति भावः ॥ इयं जडताख्या नवमी स्मरदशा, यथोक्तं–" अकाण्डे यत्र हुंकारो, दृष्टिः स्तब्धा, गता स्मृतिः । श्वासाः समधिकाः, कार्श्यं, मतेयं जडता,–यथा ॥" (२।१५) इति शृंगारतिलके, " हुंकारः परमेक एव वचनस्थाने स्थितः सांप्रतम् । " इत्यपि तत्रैव जडतोदाहरणे; "प्रतिवाक्यप्रदानादिश्रुत्यालोकविवर्जनम् । तूर्ष्णींभावो विचेतस्त्वं जडतायां भवन्ति हि ॥" इत्यन्यत्र ॥ अनया उपान्त्यदशया सा अमंगलशंकां प्रददातीति व्यज्यते ॥ अस्मिन् प्रकरणे मंजर्याः वाङ्मयतपोरूपमौनस्य (आ. १०३०), शारीरतपोरूपशरीरसंतापस्य (आ. १०२०-१०२१), मानसतपोरूपध्यानस्य (आ. १०११), जपस्य (आ.१०१६-१०१७) च उक्तेः विरहतापदशायां तपोरूपमारोपितं इति चातुर्यम्। तेन यं देवं प्रसादयितुं तया ध्यानादिकं कृतं, तेन त्वया सा न अनादर्तव्या प्रत्युत दयनीया अनुग्रहणीया च इति व्यज्यते ॥१०३०॥ एवं विवक्षितस्य मंजर्यनुरागस्य तन्मूलकविरहावस्थायाश्च कथनेन नायकमनसि प्रीतिमिश्रामनुकंपां समुत्पाद्य, तां शीघ्रं अनुग्राहयितुं सज्जनानां सहजस्वभावं स्मारयति केति द्वाभ्याम् । शर्वरीं रात्रिं, द्योतयतः ज्योत्स्नाभिः शोभां संपादयतः, शशांकस्य–शशः चंद्रलाञ्छनं " मतः शश इति क्वापि शीतांशोरपि लाञ्छने । " इति विश्वलोचने, सः अंकः चिह्नं भूषणं वा यस्य सः शशांकः चन्द्रः तस्य, का पुरुषार्थसमीहा धर्मादिषु चतुर्षु कं साधयितुं इच्छा वर्तते, तत्करणे न कोऽपि तस्य स्वार्थविशेषः केवलं परोपकारधीः इति भावः, तदुक्तं प्रकारान्तरेण–" किं चन्द्रमाः प्रत्युपकारलिप्सया करोति गोभिः

१०३० इति कथिते (प. स्तं)। चिरादाभा····· च्छ्रहुं (प) चिरादाभाषितकृच्छ्रहुङ्कारम् (स्तं) १०३१ कांक्षिते (गो) [प्रमादात् पाठः]

मण्डयितुं वियदुदयति पुरुहूतधनुर्विनैव फलवाञ्छाम् ।
अनपेक्षितात्मकार्यः परहितकरणग्रहः सतां सहजः ॥ १०३२ ॥

---

कुमुदावबोधनम् । स्वभाव एवोन्नतचेतसां सतां परोपकारव्यसनं हि जीवितम् ॥" इति । एवमुत्तरत्रापि आशयः । तथा निखिलां पृथ्वीं, वर्षाभिः जलदानेन, तर्पयतां सौहित्यं आपादयतां पोषयतां वा, सलिलमुचां मेघानां, कः, लाभः संप्राप्तिः, आकांक्षितः इष्टः; कः इति प्रश्नेन न कोऽपि इत्याक्षिप्यते । "स्वभाव एवैष परोपकारिणाम् ।" इति भावः । तथा चोक्तं–"कस्मादिन्दुरसौ धिनोति जगतीं पीयूषगर्भैः करैः, कस्माद्वा जलधारयैष धरणीं धाराधरः सिञ्चति । भ्रामंभ्राममयं च नन्दयति वा कस्मात्त्रिलोकीं रविः, साधूनां हि परोपकारकरणे नोपाध्यपेक्षं मनः ॥" ( भावविलासे २६ ) इति । ( उपाधिः निमित्तम् । ) तथा "दवदहनदग्धमूर्तेः काननलक्ष्म्याः पुनर्नवीकरणम् । उपकर्तुरखिलजगतां घननिकरस्य स्वभाव एवायम् ॥" ( उन्मत्तराघवे ४० ) इति ॥ १०३१ ॥ अपि च पुरुहूतधनुः महेन्द्रचापं 'मेघधनुष' इति भाषायां, तच्च–"सूर्यस्य विविधवर्णाः पवनेन विघट्टिताः कराः साभ्रे । वियति धनुःसंस्थाना ये दृश्यन्ते तदिन्द्रधनुः ॥" ( ३५।१ ) इति बृहत्संहितायाम् । ( "वल्मीकाग्रात्प्रभवति धनुःखंडमाखंडलस्य ।" इति मेघदूते (१५); तत्र "वल्मीकः सातपो मेघः" इति कोशात्, "वल्मीकः सूर्य इत्यपि" इति कोशाच्च सोऽर्थः ग्राह्यः, न तु वामलूरः । ) वियत् आकाशं, मंडयितुं भूषयितुं, उदयति प्रादुर्भवति, विनैव फलवाञ्छां लाभविशेषप्राप्तीच्छारहित एव इति भावः । सार्धया आर्यया उक्तान् त्रीन् विशेषान् सामान्येन अनुवदति अनपेक्षितेति । सतां सत्पुरुषाणां, अनपेक्षितात्मकार्यः अनभिलषितस्वार्थकृत्यः निष्कामः इति यावत्, परेति परेषां स्वस्मात् अन्येषां सर्वेषां हितानि पथ्यानि तेषां करणे संपादने ग्रहः अभिनिवेशः, सहजः शरीरेण सह जातः उत्पन्नः नैसर्गिकः स्वाभाविक इत्यर्थः । तथा चोक्तं क्षेमेन्द्रेण–"ह्लादः शशांकस्य, रवेः प्रकाशस्तापः कृशानोः, पवनस्य वेगः । परोपकारः करुणारतानां महाजनानां सहजः स्वभावः ॥" ( बोधिसत्त्वा० ९६।१ ) इति ॥ तथा–"किमत्र चित्रं यत्संतः परानुग्रहतत्पराः । न हि स्वदेहशैत्यार्थं जायन्ते चंदनद्रुमाः ॥" इति । तथा–"परोपकारशीलत्वं परदुःखासहिष्णुता । दयापरत्वं दाक्षिण्यं सतां स्वाभाविका गुणाः ॥" ( उन्मत्तराघवे ४५ ) इति । ( दाक्षिण्यं अनुवृत्तिः । ) त्वं सज्जनः, अतः प्रार्थनाभंगं न कृत्वा तस्याः स्वीकारपूर्वकं तन्मदनवेदनापाकरणेन परहितं संपादय इति भावः ॥ युग्मे विशेषाणां सामान्येन समर्थनात्

प्रायेण यन्निदानं तत्सेवनमुपशमाय रोगाणाम् ।
स्मरमान्द्यं तु यदुत्थं तदेव खलु भेषजं यतस्तस्य ॥ १०३३ ॥
तेन स्पृहयति सुतनुस्त्वत्पादसरोजरेणुसङ्गतये ।
आशीर्विषयोपेते संभोगसुखोदये तु नाकाङ्क्षा ॥ १०३४ ॥
( सन्दानितकम् )

अर्थान्तरन्यासालंकारः ॥१०३२॥ नायकं सम्यक् आवर्ज्य युग्मेन प्रस्तुतं कार्यं स्पष्टतया निवेदयति प्रायेणेत्यादिना । प्रायेण बाहुल्येन, " प्रायः पुमाननशने मृत्युबाहुल्ययोस्तथा । " इति विश्वलोचनः, रोगाणां यत् निदानं आदिकारणं, तस्यैव सेवनं सेवा उपचारः, तेषां रोगाणां उपशमाय शान्त्यै भवति, "विषस्य विषमौषधम् । " " उष्णमुष्णेन शाम्यति ।" इत्यादिन्यायेभ्यः । यतः प्रसिद्धमिदं यत् इत्यर्थः; स्मरमान्द्यं कामजनिता जडता, मन्मथव्यथालक्षणो व्याधिः, तुशब्दः पादपूरणे, यदुत्थं यस्मात् कारणात् पुरुषविशेषात् उत्थं जातं, तदेव तत्कारणं स पुरुषविशेष एव, खलुशब्दस्य निश्चयेन इत्यर्थः, भेषजं औषधं रोगदूरीकरणकारणं, तस्य स्मरमान्द्यरूपरोगस्य । यथोक्तं दशकुमारचरिते पूर्वपीठिकायां ( उ० ५ ) "लावण्यजितमारो राजकुमार एव अगदंकारो मन्मथज्वरापहरणे ।" इति, ( अगदंकारः भिषग् । ), तथा एवमेव नायिकामुद्दिश्य अभिज्ञानशाकुंतले (३।१२) किंचिद्भेदेन दुष्यन्तोक्तिः–" स्मर एव तापहेतुर्निर्वापयिता स एव मे जातः । दिवस इवाभ्रश्यामस्तपात्यये जीवलोकस्य ॥" इति । तथा "कान्ता ददाति मदनं, मदनः संतापमसममनुपशमम् । संतापो मरणमहो, तथापि शरणं नृणां सैव ॥" (७।६६) इति काव्यालंकारे । एतद्विपर्ययेणापि तत्रैव (९।४७)–" आनंदममंदमिमं कुवलयलोचने ददासि त्वम् । विरहस्त्वयैव जनितस्तापयतितरां शरीरं मे ॥" इति ॥ अत्र मूले पूर्वदलगतस्य सामान्यस्य उत्तरदलस्थविशेषेण समर्थनात् अर्थान्तरन्यासालंकारः, यदेव स्मरमान्द्यकरं तदेव तद्विरुद्धं मान्द्यनाशकं इति विरूपकार्योत्पत्तिकथनात् विषमालंकारश्च ॥ १०३३ ॥ तेनेति । तेन यतः एवं तस्मात् इत्यर्थः, सुतनुः " कार्यकारणयोरभेदेन तनुपदेन तन्ववयवा उच्यंते, तथा च शोभना तनुः तन्ववयवाः यस्याः " ( नारायणकृतविद्धशाल० टीकायां २।४ ) सा सुतनुः अंगना सा मंजरी, तव चरणकमलयोः रेणवः रजांसि तेषां संगतये समागमाय, स्पृहयति इच्छां धारयति; सततं त्वद्दर्शनमात्रप्राप्तये तव दासकर्म अपि स्वीकर्तुं इच्छति इति

१०३३ तदसेवन ( प. स्तं ) १०३४ त्पादयुगाङ्करेणु ( गो ) [ अलङ्कृतिरहितः पाठः ]। आसीर्विषयापेते ( स्तं )

प्रमदमुपैति मयूरी परमं शब्देन वारिवाहस्य ।
अनिमिषविलोकितेन प्राप्नोति झषी कृतार्थतामेव ॥ १०३५ ॥
न वृथास्तुतिमुखरतया न च युष्मल्लोभनाभियोगेन ।
विदधामि तद्गुणाख्यां स्वरूपमात्रप्रसङ्गेन ॥ १०३६ ॥

---

भाव:। एवं लब्धौषध: तस्या रोग: उपशमं गमिष्यति इति अभिप्राय:। तदेव अन्येच्छा-निरासेन द्रढयति आशीरिति। आशी: अन्यकर्तृकं शुभाशंसनं, तस्य विषय: गोचर:, तेन उपेते सर्वेषां आशीर्वादविषयभूते इत्यर्थ:, संभोगसुखोदये संभोगेन सुरतेन यत् सुखं आनंद: तस्य उदये उद्गमे संभन्नै, सुरतसुखं अनुभवितुं इत्यर्थ:, न तु तस्या: आकांक्षा स्पृहा, तु: पूर्वोक्तवैलक्षण्ये . . क्तं पूर्व—" स्थास्यामि संनियुक्ता भवद्गृहे प्रेष्यभावेन ।" (आ. ७३१) इति । इयं कूटोक्ति: " सूचीप्रवेशे मुसलप्रवेश: " इति न्यायेन भिक्षुपादप्रसरणन्यायेन वा प्रथमं स्थानमात्रं लब्ध्वा भविष्ये पादप्रसारिकां कर्तुं इति बोध्यम् ॥ १०३४ ॥ उक्तं दृष्टान्ताभ्यां अवष्टंभयति प्रमदेति । मयूरी—मह्यां रौति शब्दायते इति मयूर:, तस्य स्त्री मयूरी, 'ढेल' इति भाषायां प्रसिद्धा; सा, वारिवाहस्य मेघस्य, शब्देन स्तनितेन, परमं सातिशयं, प्रमदं हर्षं, "प्रमदा तरुणी, ना तु हर्षेऽधिकमदे त्रिषु।"इति मंखकोश:, उपैति प्राप्नोति, यथोक्तं—"स्तनियत्नोर्मयूरीव चकितोत्कण्ठिता स्थिता ।" (उत्तररामचरिते ३।८) इति । तथा झषी मत्सी, अनिमिषविलोकितेन प्रियमुद्दिश्य निष्पंददृष्टिविशेषेण, कृतार्थतां कृतकृत्यतां परमां तृप्तिं इति यावत्, प्राप्नोति, मत्स्यानां निर्निमेषचक्षुष्ट्वं प्रसिद्धं, यथोक्तं पूर्वमनेनैव कविना " अनिमेषं पश्यंती मत्स्यवधूमनुचकार सा तन्वी ।" (आ. २७१) इति । मयूरीवत् तव शब्दश्रवणमात्रेण मत्सीवत् च तव निर्निमेषदर्शनेनैव दूरादेव सा प्रमोदं प्राप्स्यति, न तु तदधिके त्वत्स्पर्शादौ तस्या: लालसा इति भाव: । पूर्वापरसंबंधेन अत्र दृष्टान्तालंकार:, केवलस्थितौ न कोऽपि, वस्तुस्थितिकथनात् ॥ १०३५ ॥ एवं तस्या: दु:स्थितिवर्णनेन ( आ. ९९१-१०३० ) तस्य करुणावृत्तिं उत्पाद्य, तस्य च परोपकारशीलत्वसूचनेन ( आ. १०३१-१०३२ ) अनुग्रहवृत्तिं उत्तेजयित्वा, अभिलाषवृत्तिं वर्धयितुं तस्या: रूपवर्णने अन्यथोक्त्या पदं निधत्ते नेति। अहं इदानीं तस्या गुणानां वक्ष्यमाणानां अनितरसाधारणानां इति भाव:, आख्यां कथनं, विदधामि करोमि । तत्कारणे अन्यान्य-

---

१०३५ प्राप्तेन ( प. स्तं ) । ऋषी ( गो ) [ अत्र 'झ' अक्षरं भ्रमात् 'ऋ' इति वाचयित्वा अर्थलापनार्थं 'ऋषि:' इति कल्पित: पाठ: गो. पुस्तके ] कृषी ( स्तं ) ।
१०३६ न मृषास्तुति ( स्तं ) । लोभताभिं (प) । स्वरूपमात्रं प्रसंगतो वच्मि ( स्तं ) ।

प्रायेण यन्निदानं तत्सेवनमुपशमाय रोगाणाम् ।
स्मरमान्द्यं तु यदुत्थं तदेव खलु भेषजं यतस्तस्य ॥ १०३३ ॥
तेन स्पृहयति सुतनुस्त्वत्पादसरोजरेणुसङ्गतये ।
आशीर्विषयोपेते संभोगसुखोदये तु नाकाङ्क्षा ॥ १०३४ ॥
( सन्दानितकम् )

अर्थान्तरन्यासालंकारः ॥१०३२॥ नायकं सम्यक् आवर्ज्य युग्मेन प्रस्तुतं कार्यं स्पष्टतया निवेदयति प्रायेणेत्यादिना । प्रायेण बाहुल्येन, " प्रायः पुमाननशने मृत्युबाहुल्ययोस्तथा । " इति विश्वलोचनः, रोगाणां यत् निदानं आदिकारणं, तस्यैव सेवनं सेवा उपचारः, तेषां रोगाणां उपशमाय शान्त्यै भवति, "विषस्य विषमौषधम् । " " उष्णमुष्णेन शाम्यति ।" इत्यादिन्यायेभ्यः । यतः प्रसिद्धमिदं यत् इत्यर्थः; स्मरमान्द्यं कामजनिता जडता, मन्मथव्यथालक्षणो व्याधिः, तुशब्दः पादपूरणे, यदुत्थं यस्मात् कारणात् पुरुषविशेषात् उत्थं जातं, तदेव तत्कारणं स पुरुषविशेष एव, खलुशब्दस्य निश्चयेन इत्यर्थः, भेषजं औषधं रोगदूरीकरणकारणं, तस्य स्मरमान्द्यरूपरोगस्य । यथोक्तं दशकुमारचरिते पूर्वपीठिकायां ( उ० ५ ) "लावण्यजितमारो राजकुमार एव अगदंकारो मन्मथज्वरापहरणे ।" इति, ( अगदंकारः भिषग् । ), तथा एवमेव नायिकामुद्दिश्य अभिज्ञानशाकुंतले (३।१२) किंचिद्भेदेन दुष्यन्तोक्तिः–" स्मर एव तापहेतुर्निर्वापयिता स एव मे जातः । दिवस इवाभ्रश्यामस्तपात्यये जीवलोकस्य ॥" इति । तथा "कान्ता ददाति मदनं, मदनः संतापमसममनुपशमम् । संतापो मरणमहो, तथापि शरणं नृणां सैव ॥" (७।६६) इति काव्यालंकारे । एतद्विपर्ययेणापि तत्रैव (९।४७)–" आनंदममंदमिमं कुवलयलोचने ददासि त्वम् । विरहस्त्वयैव जनितस्तापयतितरां शरीरं मे ॥" इति ॥ अत्र मूले पूर्वदलगतस्य सामान्यस्य उत्तरदलस्थविशेषेण समर्थनात् अर्थान्तरन्यासालंकारः, यदेव स्मरमान्द्यकरं तदेव तद्विरुद्धं मान्द्यनाशकं इति विरूपकार्योत्पत्तिकथनात् विषमालंकारश्च ॥ १०३३ ॥ तेनेति । तेन यतः एवं तस्मात् इत्यर्थः, सुतनुः " कार्यकारणयोरभेदेन तनुपदेन तन्ववयवा उच्यंते, तथा च शोभना तनुः तन्ववयवाः यस्याः " ( नारायणकृतविद्धशाल० टीकायां २।४ ) सा सुतनुः अंगना सा मंजरी, तव चरणकमलयोः रेणवः रजांसि तेषां संगतये समागमाय, स्पृहयति इच्छां धारयति; सततं त्वद्दर्शनमात्रप्राप्तये तव दासकर्म अपि स्वीकर्तुं इच्छति इति

१०३३ तदसेवन ( प. स्तं ) १०३४ त्पादयुगाङ्करेणु ( गो ) [ अलङ्कृतिरहितः पाठः ] । आसीर्विषयापेते ( स्तं )

प्रमदमुपैति मयूरी परमं शब्देन वारिवाहस्य ।
अनिमिषविलोकितेन प्राप्नोति झषी कृतार्थतामेव ॥ १०३५ ॥
न वृथास्तुतिमुखरतया न च युष्मल्लोभनाभियोगेन ।
विदधामि तद्गुणाख्यां स्वरूपमात्रप्रसङ्गेन ॥ १०३६ ॥

---

भाव:। एवं लब्धौषध: तस्या रोग: उपशमं गमिष्यति इति अभिप्राय:। तदेव अन्येच्छा-निरासेन द्रढयति आशीरिति। आशी: अन्यकर्तृकं शुभाशंसनं, तस्य विषय: गोचर:, तेन उपेते सर्वेषां आशीर्वादविषयभूते इत्यर्थ:, संभोगसुखोदये संभोगेन सुरतेन यत् सुखं आनंद: तस्य उदये उद्गमे संभव्ये, सुरतसुखं अनुभवितुं इत्यर्थ:, न तु तस्या: आकांक्षा स्पृहा, तु: पूर्वोक्तवैलक्षण्ये . . क्तं पूर्वं–" स्थास्यामि संनियुक्ता भवद्गृहे प्रेष्यभावेन ।" (आ. ७३१) इति । इयं कूटोक्ति: " सूचीप्रवेशे मुसलप्रवेश: " इति न्यायेन भिक्षुनादप्रसरणन्यायेन वा प्रथमं स्थानमात्रं लब्ध्वा भविष्ये पादप्रसारिकां कर्तुं इति बोध्यम् ॥ १०३४ ॥ उक्तं दृष्टान्ताभ्यां अवष्टंभयति प्रमदेति । मयूरी–मह्यां रौति शब्दायते इति मयूर:, तस्य स्त्री मयूरी, 'ढेल' इति भाषायां प्रसिद्धा; सा, वारिवाहस्य मेघस्य, शब्देन स्तनितेन, परमं सातिशयं, प्रमदं हर्षं, "प्रमदा तरुणी, ना तु हर्षेऽधिकमदे त्रिषु।"इति मंखकोश:, उपैति प्राप्नोति, यथोक्तं–"स्तनियत्नोर्मयूरीव चकितोत्कण्ठिता स्थिता ।" (उत्तररामचरिते ३।८) इति । तथा झषी मत्सी, अनिमिषविलोकितेन प्रियमुद्दिश्य निष्पंददृष्टिविशेषेण, कृतार्थतां कृतकृत्यतां परमां तृप्तिं इति यावत्, प्राप्नोति, मत्स्यानां निर्निमेषचक्षुष्ट्वं प्रसिद्धं, यथोक्तं पूर्वमनेनैव कविना " अनिमेषं पश्यंती मत्स्यवधूमनुचकार सा तन्वी ।" (आ. २७१) इति । मयूरीवत् तव शब्दश्रवणमात्रेण मत्सीवत् च तव निर्निमेषदर्शनेनैव दूरादेव सा प्रमोदं प्राप्स्यति, न तु तदधिके त्वत्स्पर्शादौ तस्या: लालसा इति भाव: । पूर्वापरसंबंधेन अत्र दृष्टान्तालंकार:, केवलस्थितौ न कोऽपि, वस्तुस्थितिकथनात् ॥ १०३५ ॥ एवं तस्या: दु:स्थितिवर्णनेन ( आ. ९९१-१०३० ) तस्य करुणावृत्तिं उत्पाद्य, तस्य च परोपकारशीलत्वसूचनेन ( आ. १०३१-१०३२ ) अनुग्रहवृत्तिं उत्तेजयित्वा, अभिलाषवृत्तिं वर्धयितुं तस्या: रूपवर्णने अन्यथोक्त्या पदं निधत्ते नेति। अहं इदानीं तस्या गुणानां वक्ष्यमाणानां अनितरसाधारणानां इति भाव:, आख्यां कथनं, विदधामि करोमि । तत्कारणे अन्यान्य-

---

१०३५ प्रासेन ( प. स्तं )। ऋषी ( गो ) [ अत्र 'झ' अक्षरं भ्रमात् 'ऋ' इति वाचयित्वा अर्थलापनार्थं 'ऋषि:' इति कल्पित: पाठ: गो. पुस्तके ] कृषी ( स्तं )। १०३६ न मृषास्तुति ( स्तं )। लोभताभिं (प)। स्वरूपमात्रं प्रसंगतो वच्मि ( स्तं )।

सद्भावबद्धमूले स्मितदृष्टिभ्रूविलासपल्लविते ।
सेवन्ते हृद्यरसां रागतरोर्मञ्जरीं धन्याः ॥ १०३७ ॥
तिष्ठतु तदङ्गसङ्गो विलोकिता येन झटिति वरगात्री ।
तस्यान्यो युवतिजनः प्रतिभाति मनुष्यरूपेण ॥ १०३८ ॥

---

वितर्के आदावेव निषेधमुखेन निरस्यति नेति । सेवकादिवत् स्वामिनः अविद्यमान-गुणारोपणैः मिथ्याप्रशंसायां वावदूकतया न, नापि दूतीवत् युष्मद्रागं उत्तेजयित्वा कंचित्स्वार्थं साधयितुं च इति भावः । तत्र हेतुं प्रकाशयति स्वेति, यस्याः अहं दूती तस्याः स्वभावादेः निरूपणं अपरिचये सति प्रथमप्रयोगे प्रसक्तं इति कारणेनैव तद्गु-णाख्यानं करोमि इति भावः। इयं कपटोक्तिः ॥ १०? ॥ सद्भावेत्यादिभिः चतुर्भिः तद्गुणाख्यानं करोति, तच्चित्तभेदनाय । इदं च पादसंप्रसारणं तस्य अनुरागातिशयजन-नेन स्वायत्ततासंपादनार्थं बोध्यम् । सद्भावः शोभनः चित्तविकारः रतिः इति यावत्, तेन बद्धमूले मूलत्वेन दृढीभूते सति, स्थिरीकृते इति वा; तथा स्मितं, दृष्टिः अवलो-कनं सस्नेहं इत्यर्थः, भ्रूविलासाः भ्रुवः समुल्लासाः ललिताः क्रियाः च, तैः, पल्लविते किसलयिते वर्धिते वा सति; रागः ' चित्तानुरञ्जकस्नेहप्रकर्षः ' " स एष चेद्गुणद्रव्य-देशकालादिभिर्हृदि । रज्यते दीप्यते चित्ते स राग इति कथ्यते ॥ " इति लक्षणल-क्षितः, ( सः एषः प्रौढस्नेहः । ), स एव तरुः 'पुष्पफलवान्' वृक्षः, तस्य, हृद्यरसां हृद्यः हृदयंगमः मधुरः रसः द्रवः शृंगारादिरसश्च यस्याः तां सुधास्वादां, मंजरीं " नव-पुष्पाढ्यशाखाग्रे वल्लरी मंजरी तथा । " इति राजनिघंटौ, या पृथक्पुष्पभेदप्रतिभासेऽ-पि एकाकारेण अनुभूयते तां, अनुस्वानशक्त्या च उक्तरीत्या अनुगुणनामधारिणीं मंजरीं तन्नाम्नीं गणिकां, धन्याः पुण्यवंतः, सेवंते भोगविषयं कुर्वंति । प्रकृतार्थविषये किंचिद्भेदेन उक्तं-- " इयमंकुरिता प्रेम्णा, मानात् पल्लविता भवेत् । सकोरका प्रण-यतः, स्नेहात्कुसुमिता भवेत् । रागात्फलवती सेयमनुरागेण भुज्यते ॥ " इति । ( इयं रतिलता । ) प्रकृतार्थायां फलं अनुक्त्वा मंजरीत्युक्त्या तस्याः अभुक्तं प्रथमयौवनं ध्वन्यते ॥ सावयवरूपकं अलंकारः, तेन धन्यानां कामुकानां मधुकरत्वं अवसीयते, मंजरीपदेन नायिकानाममुद्रणात् मुद्रालंकारः, हृद्यरसां मंजरीं इत्यत्र पदश्लेषः, धन्याः इत्यनेन अन्येषां निरासेन परिसंख्यालंकारो व्यंग्यश्च; अत्र प्रस्तुते विशेषे तत्सदृशस्य अप्रस्तुतस्य उक्तेः अन्योक्तिश्च, तेन रसमयी मंजरी तु स्वयमेव त्वद्दास्यं प्रार्थयते इति सा अवश्यं स्वीकार्या इति सूचितम् ॥१०३७॥ तद्दर्शनमात्रेण जायमानां अन्येषां अव-

---

१०३७ भ्रूविकार ( प. स्तं. गो२ )। मंजरी धन्या ( स्तं ) १०३८ झगिति ( प. स्तं. गो२ )

सकृदपि यैरनुभूतस्तत्तनुपरिरम्भसुखरसास्वादः ।
विद्धि नराधिप तेषां दूरीभूतं प्रजाकार्यम् ॥ १०३९ ॥
आस्था का खलु तस्या विषयग्रहदुर्बलेषु पुरुषेषु ।
यस्या विलासजालकपतितः शकुनायते कपिलः ॥ १०४० ॥

स्थां आह तिष्ठत्विति । तस्याः अंगस्पर्शस्य वार्ता दूरे, यतः, येन पुरुषेण, सा वरगात्री वराणि श्रेष्ठानि प्रशस्तानि गात्राणि शरीरावयवाः यस्याः सा, झटिति शीघ्रं प्रत्यंगावलोकनपर्याप्तकालाभावेन आपाततः इत्यर्थः, विलोकिता दृष्टा, तस्य, अन्यः तां विहाय शेषः सर्वोऽपि इति भावः, युवतिजनः 'जनशब्देन जातिमात्रग्रहणं' तेन रमणीमात्रं इति अर्थः, मनुष्यरूपेण पुरुषाकारेण, प्रतिभाति भासते; रूपतुलनायां अन्यासु तत्तुल्यरमणीरूपदर्शनाभावात् तत्र पुरुषबुद्धिः जायते इति भावः । अनया दर्शनं वर्णितं, यथोक्तं—"अनिमेषलसद्दृष्ट्या दर्शनं दर्शनं स्मृतम् ॥" (२।३३) इति शृंगारदीपिकायाम् । संबन्धातिशयोक्त्यनुप्राणितः काव्यार्थापत्तिरलंकारः ॥ १०३८ ॥ आक्षिप्तं अंगसंगं तत्फलकथनद्वारा वर्णयति सकृदति । सकृत् एकवारं, अपि, यैः, तस्याः तनोः शरीरस्य परिरंभेण आलिंगनेन भुजबंधनपीडनेन यत् सुखं परमा निर्वृतिः तदेव रसः द्रवद्रव्यं तस्य आस्वादः रसग्रहणं, यैः पुरुषैः, अनुभूतः अपरोक्षानुभूतिगोचरतां नीतः, तेषां, प्रजाकार्यं प्रजया लोकेन कार्यं प्रयोजनं, "प्रजा संतानलोकयोः ।" इति विश्वलोचनः, दूरीभूतं विप्रकृष्टं, लोकव्यवहारः तैः त्यक्तः इति भावः, विद्धि जानीहि । तदाश्लेषसुखहृतचित्ताः उन्मत्ता इव लोकव्यवहारं त्यजंति इति भावः । तथा चोक्तं वराहमिहिरेण—"कामिनीं प्रथमयौवनान्वितां मंदवल्गुमृदुपीडितस्वनाम् । उत्स्तनीं समवलंब्य या रतिः सा न धातृभवनेऽस्ति मे मतिः ॥" (बृहत्संहितायां १३।१८) इति । (उत्स्तनीं उद्भिद्यमानकुचां, समवलंब्य आलिंग्य, रतिः सुखं, प्रजापतिगृहे ब्रह्मलोके ।) नराधिप इति संबोधनं समरभटस्य युवराजत्वात् उपचारेण ॥ अनया स्पर्शनं वर्णितं, तदुक्तं शृंगारदीपिकायां—"आलिंगनादिसंस्कारैः स्पर्शनं परिकीर्तितम् ।" (२।३४) इति, आर्याद्वये प्रसिद्धिर्नाम नाट्यालंकारः, तदुक्तं—"प्रसिद्धिर्लोकविख्यातैर्वाक्यैरर्थप्रसाधनम् ।" इति रसार्णवसुधाकरे ॥ १०३९॥ यस्या इति । यस्याः विलासः "यानस्थानासनादीनां नेत्रपक्ष्मादिकर्मणाम् । उपयात-

१०३९ [ अत्र प. पुस्तके अनर्थदः पंक्तीनां व्यत्ययः त्रुटिश्च । १०३९–१०४० श्लोकयोः व्यत्ययः स्तं. पुस्तके । ] १०४० आस्तां कार्यविचारो विषयग्रहदुर्बलेषु पुरुषेषु (स्तं) । पतगायते कपिलः (स्तं)

दग्धोऽपि पुनर्दग्धो नूनमनङ्गो हरेण, तां तन्वीम् ।
दृष्ट्वाऽपि येन तिष्ठसि निराकुलः स्वस्थवृत्तेन ॥" १०४१ ॥

---

विशेषो यः स विलासो मतो बुधैः ॥" इति भरतलक्षितः, ते विलासाः यानादिषु अग्राम्यललिताः क्रियाः, तेषां जालके समूहे, शब्दशक्त्या च धूर्तकृत्ये इत्यपि सूच्यते, तथा विलासा एव जालकं आनायं पक्ष्यादिबन्धनं, तत्र पतितः, ] कपिलः महामुनिः प्रसिद्धः, [ कर्दमप्रजापतेः देवहूतिगर्भजातः सांख्ययोगप्रचारार्थं भगवदवतारः मुनिविशेषः, " सिद्धानां कपिलो मुनिः ।" ( १०।२६ ) इति भगवद्गीतायां भगवता प्रशस्तः, ( सिद्धस्तु ' जन्मनैव विना प्रयत्नं धर्मज्ञानवैराग्यैश्वर्यातिशयं प्राप्तः अधिगतपरमार्थो वा ।' ) स तादृशो वीतरागोऽपि शकुनायते शकुनवत् पक्षिवत् आचरतीति, आचारार्थे क्विप् । तदुक्तं गुणाकरेण– " आत्मानमन्तःकरणे मुनीन्द्रास्तावत्प्रशस्ताः परिशीलयंति । यावन्मुखेन्दुं सविलासरंगं विलासिनीनां न विलोकयंति ॥" ( कामप्रदीपे ५ ) इति । एवं सति रूपादिपंचविषयासक्तिरूपकारणेन असमर्थेषु रागिषु पुरुषेषु, तस्याः मंजर्याः, का, खलु इति जिज्ञासार्थकं अव्ययं, आस्था आदरः । सिद्धः कपिलोऽपि तद्विलासमुग्धः जालग्रस्तपत्रिवत् व्याकुलो भवति इति अनुभूय सा विषयासक्तान् दुर्बलान् पुरुषान् नैव गणयति इति भावः । तदुक्तं "तावद्विदग्धो वीरश्च नरो भागी शुभस्य च । यावत्पतति नैवासौ रामाविभ्रमभूमिषु ॥" इति । एतादृशीं कामयमानां सुंदरीं संगम्य चरितार्थो भव इति सूचितम् । काव्यार्थापत्तिरलंकारः; अपि च "कपिलो मुनिभेदेऽग्नौ शुनि, पिङ्गे तु वाच्यवत् ।" इति विश्वलोचनात् कपिलः श्वा शकुनायते इति विरोधाभासः, तेन च तस्याः अद्भुतत्वं व्यंजितम् ॥ १०४० ॥ एवं नानाप्रकारैः तत्प्रलोभनादौ कृतेऽपि तं निर्विकारमिव आलक्ष्य किंचिदधिक्षेपपूर्वकं सोपालंभं उपसंहरति दग्ध इति । येन यतः, तां ईदृक्तया वर्णितां, तन्वीं नवयौवनां मंजरीं इत्यर्थः, यथोक्तं–" अप्रसूता भवेच्छ्यामा, तन्वी च नवयौवना ।" इति । ( मेघदूते " तन्वी श्यामा शिखरिदशना·· " ( ७८ ) इत्यत्र तन्वीश्यामाशब्दयोः एवंभेदेन विशिष्टतया अर्थः । ) निराकुलः अच्युतधैर्यः । स्वस्थवृत्तेन अकलुषितचरितेन । अनंगः कामदेवः, हरेण हरति अपनयति संहरति इति हरः, अत्र पदौचित्यं; एकवारं दग्धोऽपि पुनः द्वितीयवारं, दग्धः । अनंगस्य शरीररहितस्य दाहेन हरस्य अद्भुतकर्मत्वं सूचितम् । नूनं इति निश्चयः, विविच्यमानेऽपि हेत्वंतरस्य अनुपलब्धेः अघटितत्वात् वा । " कर्पूर इव दग्धोऽपि शक्तिमान् यो जनेजने । नमोऽ-

---

१०४१ दग्ध्वाऽपि ( गो.प ) । तिष्ठति ( स्तं )

अथ विरतोक्तौ तस्यामुल्लासितमानसे च नृपतौ च।
कश्चिदगायद्गीतिं स्मृतिसङ्गतिमागतां प्रसङ्गेन ॥ १०४२ ॥
'अन्योन्यगाढरागप्रबलीकृतचित्तजन्मनोर्यूनोः।
कालात्ययो मनागपि समागमानन्दविघ्नकरः ॥' १०४३ ॥
श्रुत्वा समरभटस्तां, प्रियाप्रियां प्रीतिमान् स्मितप्रथमम्।
निजगाद'चारुभाषिणि गीतिकया समयसम्मतं कथितम्'।१०४४।

---

स्ववार्यवीर्याय तस्मै मकरकेतवे ॥" ( बालरामायणे ३।११ ) इति प्रसिद्धिः तेन मिथ्याकृता इति भावः। राजपुत्रस्य निराकुलत्वलिंगेन कामस्य पुनर्दाहानुमितेः अनुमानालंकारः ॥१०४१॥ समनंतरवृत्तकथनं उपक्रमते अथेति। विरतोक्तौ समाप्तकथनायाम्। उल्लासितमानसे हृष्टचेतसि। चकारौ अत्र यौगपद्यद्योतकौ। स्मृतीत्यादि- प्रस्तावविशेषेण स्मरणपथं आगताम्। अत्र समाधिरलंकारः, तल्लक्षणं च-" समाधिः कार्यसौकर्यं कारणान्तरसन्निधेः।" इति कुवलयानन्दे ॥ १०४२ ॥ तां गीतिमुदाहरति अन्योन्येति। परस्परं गाढरागेण दृढस्नेहेन प्रबलीकृतः पुष्टिं नीतः चित्तजन्मा स्मरः कामः ययोः तयोः। मनाक् ईषद्, अपि, कालात्ययः विलंबः येनकेनापि कारणेन इति भावः, समागमः मिलनं तेन यः आनंदः हर्षोत्कर्षः, तस्य विघ्नकरः प्रत्यूहजनकः, अतः स्नेहस्मराकुलाभ्यां नायकाभ्यां कथमपि शीघ्रमेव समागमः संपादनीयः इत्युक्तं भवति। सुखोपनते मनोरथे कालहरणं न श्रेयः इति भावः। श्रव्यकाव्येषु एतादृशीभिः प्रसंगोक्तिभिः दृश्यकाव्यगतचूलिकाकार्यं निर्वाह्यते इति बोध्यम्। गीतिः छन्दः ॥१०४३॥ तदुक्त्यनुसारेण जायमानां तस्य प्रवृत्तिं प्रकाशयति श्रुत्वेति। तां गीतिम्। समरभटः सिंहभटपुत्रः राजपुत्र इति व्याहृतः। प्रीतिमान् स्निग्धः, सन्, प्रियाप्रियां स्वस्य प्रिया मनोरमा मंजरी तस्याः प्रियां स्निग्धां सखीं इति यावत्, निजगाद उवाच। तत्किमित्याह चार्वित्यादि। हे चारुभाषिणि मधुरवाणि, स्वस्य प्रियनिवेदकत्वात् तथासंबुद्धिः, अनेन तस्याः कथनं स्वेन अनुमोदितं इति सूचितम्। गीतिकया अनया श्रवणपतितया इति भावः, समयसंमितं अवसरोचितं सिद्धान्तानुकूलं कामिनां आचारैः अनुमोदितं वा, कथितम्। अनेन तया मत्समागमः त्वया शीघ्रं संपादनीयः इति सूचितम् ॥ १०४४ ॥ अभीति। सा दूती, प्रमदावती इति तस्याः नाम, तथेति तथाऽस्तु युवयोः समागमः

---

१०४२ मानसेन ( च ) नृपसूनौ ( स्तं )। गायत गीतिं ( स्तं ) १०४४ श्रुत्वा सिंहटपुत्रः प्रिया० ( स्तं )। समयसम्मितं ( स्तं )

अभिनन्द्य सा तथेति प्रययौ प्रमदावती क्षिप्रं भवनम् ।
अकरोच्च विदितकार्यां युक्तेऽवसरे मनोरमां गणिकाम् ॥१०४५॥
अथ सा कृतसङ्कल्पा सत्वरमादाय रुचिरविच्छित्तिम् ।
आसाद्य नृपनिशान्तं विवेश संचारिकासहिता ॥ १०४६ ॥
विहितनमस्कृतिरासनमधितष्ठौ नायकेन निर्दिष्टम् ।
पृष्टे च देहकुशले विनयान्वितमभ्यधाद्दूती ॥ १०४७ ॥
'श्रीमन्नद्य श्रेयःसम्पन्ना गुरुजनाशिषोऽशेषाः ।
अद्य मदनः प्रसन्नो, भाग्यचयैरद्य परिणतं फलतः ॥१०४८॥'

---

शीघ्रं इति भावः, अभिनंद्य आशास्य । युक्ते अवसरे योग्ये काले विजने एकान्ते इति भावः, मनोरमां हृद्यां, गणिकां तां मंजरीं इत्यर्थः, विदितकार्यां प्रस्तुतकार्यज्ञानवतीं अकरोत् अर्थात् स्वकार्येतिवृत्तं निवेदयामास ॥ १०४५ ॥ अथ अनंतरं, सा मंजरी, कृतसंकल्पा कृतः विहितः संकल्पः 'इदं मयाकर्तव्यमित्येवमाकारो मनसो विकारः' यया सा निश्चितचिकीर्षिता, सत्वरं कालविलंबं परिहृत्य, रुचिरां मनोहरां, ] विच्छित्तिः स्तोका आकल्परचना, "स्तोकाऽप्याकल्परचना विच्छित्तिः कान्तिपोषकृत् ।" इति । [ ( स्तोका स्वल्पा, सा च रूपगर्वात्; आकल्पः वेषः माल्याच्छादनभूषणविलेप्नरूपः । ) तां आदाय सहजकांतिवर्धकं परिमितं भूषणवस्त्रादि निधाय इत्यर्थः, भूषणादीनां बहुत्वे सुरूपाणां अवयवानां पिधानं स्यात् इति तेषां स्तोकत्वं, यथोक्तं राघवानंदेन—" विदूरे केयूरे कुरु, करयुगे रत्नवलयैरलं, गुर्वी ग्रीवाभरणलतिकेयं, किमनया । नवामेकामेकावलिमयि मयि त्वं विरचयेर्न नेपथ्यं पथ्यं बहुतरमनंगोत्सवविधौ ॥" इति । नृपस्य ] निशान्तं गृहं, [ संचारिका संचारयति नायकयोः वार्तां इति संचारिका दूती, प्रकृते प्रमदावतीनाम्नी, तया सहिता समेता, विवेश प्रविष्टा अभूत् ॥१०४६॥ ततः गमनापगमनयोः वंदनं कर्तव्यं इति शिष्टाचारानुरोधेन विनयप्रदर्शनार्थं च आदौ तस्मै प्रणम्य, नायकेन समरभटेन, निर्दिष्टं अंगुल्या प्रदर्शितं, आसनं अधितष्ठौ तत्र उपविवेश । ततः देहस्य शरीरस्य, कुशले अनामये आरोग्ये पृष्टे सति, नायकेन इति भावः, दूती, विनयान्वितं इति क्रियाविशेषणं सविनयं अंजलिं बद्ध्वा इत्यर्थः, अवदत् ॥ १०४७ ॥ तदेव दूतीवचनं पंचकेन अनुवदति, तत्रादौ युग्मेन सा तत्कृतकुशल-

---

१०४५ विदितकार्यं (गो) । [ प्रमादादंतिमकर्णस्य पातो भाति । ] विहितकार्यो (प.) । प्रययौ पद्मावती···कार्यां युक्तावसरे मनो··· [ इत्यवधि स्तं० ग्रंथः ]

अद्य जननी प्रसूता, सौभाग्यगुणोदयोऽद्य निष्णातः ।
त्वयि वितरति सस्नेहं निरामयप्रश्नभारतीं तस्याः ॥ १०४९ ॥
( सन्दानितकम् )

उत्कलिकाकुलमनसामुद्रिक्तरिरंसयाऽभिभूतानाम् ।
औदासीन्यं भजतां समागता भवति नालिका यूनाम् ॥१०५०॥

पृच्छां अभिनंदति श्रीमन्नित्यादिना । श्रीमन् लक्ष्मीधर सुभग । अद्येत्याद्याः पञ्च प्रहर्षगर्भाः उक्तयः । अद्य अस्मिन् दिने, अशेषाः निखिलाः, गुरुजनानां मातृपित्रादिकुलवृद्धानां, आशिषः शुभाशंसनवचनानि प्रसन्नदेवताविषयस्वाभिमताभ्यर्थनामयानि, श्रेयः कल्याणं तत्प्राप्तिरित्यर्थः, तेन संपन्नाः अर्थात् सफलाः जाताः । अद्य भगवान् कामदेवः प्रसन्नः सन्तुष्टः प्रसादसुभगो वा जातः । भाग्यानां शुभकर्मणां चयैः संचितैः समूहैः, अद्य फलतः फलस्वरूपेण इत्यर्थः, परिणतं प्रारब्धक्रियमाणकर्मविलक्षणानां संचितसुकृतानां फलं अद्य प्राप्तं इति भावः ॥ १०४८ ॥ अद्य, जननी जनयति इति जननी माता, प्रसूता यथार्थप्रसववती जाता, प्रसवस्य पुत्र्याः अभ्युदयेन इति तात्पर्यं, इयं च लोकोक्तिः । अद्य च सौभाग्यगुणस्य नानाविधैश्वर्यवत्त्वस्य, उदयः आविर्भावः, निष्णातः संपन्नः । अद्य सुदिनं पुण्याहं उत्सवो वा इत्येषां पञ्चवाक्यानां तात्पर्यम् । कुत एतदित्याह त्वयीति । त्वयि सस्नेहं स्नेहपूर्वकं, तस्याः निरामयं आरोग्यं तस्य प्रश्नः पृच्छा तद्रूपा भारती वाणी तां, वितरति दातरि सति, त्वया तस्याः अनामयप्रश्नेन बहुमानप्रदर्शनात् इति भावः । आशिषां श्रेयःसंपन्नत्वादिभिः तत्कार्यं आनंदो लभ्यते, स च तस्याः विरहज्वररूपस्य तपसः इष्टप्राप्त्या साफल्यात्, तच्च तव अनामयप्रश्नेन अनुमीयते इति भावः ॥ १०४९ ॥ स्वनिर्गमं उपक्रमते उत्कलिकेति । उत्कलिका उत्कण्ठा । उद्रिक्ता स्फुटा स्पष्टा ओष्ठस्फुरणादिलिंगैः, या रिरंसा चुंबनालिंगनादिभिः रन्तुं इच्छा, तया अभिभूतानां व्याकुलमनसां विह्वलानां अतः प्रबलसुरतेच्छावतां, तथापि संनिधौ तृतीयस्य सत्त्वात् औदासीन्यं कर्तव्ये अनुद्योगं भजतां सेवमानानां, यूनां युवत्यश्च युवानश्च यूनः इत्येकशेषः तेषां यूनां, समागता संप्राप्ता, मादृशी इति भावः, नालिका— नल एव नालः तृणविशेषः स भोक्तव्येन अस्ति अस्येति नालिकः महिषः साध्यवसानगौणीलक्षणया च मूर्खः इत्यर्थः, " नालिकः मूर्खः " इति काव्यालंकारटीकायां(१०।६) नमिसाधुः, सः स्त्री नालिका मूर्खा, भवति, यथोक्तं—" न प्रेम नव्यं सहतेऽन्तरायम् " ( विद्धशाल० ३।५ ) इति; ( अन्तरायं विघ्नम् ) । अपि चोक्तं ब्रह्मवैवर्ते गणपतिखंडे ( ६।५५ )—" रहःस्थलनियुक्तश्च न दृश्यः स्त्रीयुतः पुमान् ॥ स्त्रीसंसक्तं च पुरुषं यः

धृतसुमनःशरधनुषा सहायवांस्तिष्ठ दयितया सार्धम् ।
यामो वयं, न राजति विजनस्थितमिथुनसंनिधावपरः ॥१०५१॥
एषा नृत्यश्रान्ता मदनेनायासिताऽतिमुक्कुमारा ।
त्वमपि रतिसमरशूरः, स्वर्गभुवः सन्तु कुशलाय ॥' १०५२ ॥

पश्यति नराधमः । करोति रसभंगं वा कालसूत्रं व्रजेद् ध्रुवम् ॥ " इति । ( कालसूत्रं एकविंशतिसंख्याकनरकेषु एकतमम् । ) अतोऽत्र मदवस्थानं रसभंगकारणं इति तद-स्थाने इति अतः अपसरामि इत्यभिप्रायः ॥ ] ' नालिका भाग्यविहीना ' [ इति टिप्पणी चिंत्या ॥] १०५०॥ शुभाशंसनपूर्वं तौ आपृच्छते धृतेति । धृतानि सुमनांसि पुष्पाणि एव शराः धनुः चापं च येन तादृशा कामदेवेन इत्यर्थः, कामस्य शराः पुष्पाणि इति प्रसिद्धं, तस्य धनुरपि मतभेदेन पुष्पमयं, यथोक्तं–" धनुः पौष्पं, मौर्वी मधुकरमयी, चंचलदृशां दृशां कोणो बाणः··· " इत्यादिकं, अत एव ' पुष्पधन्वा ' इति तस्य नामान्तरं, तेन सहायवान् दत्तहस्तावलंबः, " सहायोऽनुचरः समाः " इत्यमरः, सहायः नर्मसुहृत् क्रीडासचिवः इति भावः, तेन युक्तः सन्, अनेन " सहायसंपत्प्र-भवा हि संपदः । " ( तंत्राख्यायिके ३।२१ ) इति राजनीत्यनुसरणं अपि आशंसितं, अतः भगवान् कामदेव एव ते मतिकर्मसचिवो भवतु, नान्यः कोऽपि प्राकृतो जनः इति भावः, एतादृशः त्वं, दयितया प्रेमभाजनेन मंजर्या, सार्धं सह, तिष्ठ वर्तस्व । वयं यामः औचित्योल्लंघनभीतेः युष्मदंतिकात् आत्मानं पृथक्करोमि निर्गच्छामि इत्यर्थः, उभयोः समागमकारित्वेन आत्मनि गौरवं आरोप्य वयं इति बहुवचननि-र्देशः । तत्र हेतुं व्यनक्ति विजनेति । विजने एकान्ते, स्थितं यत् मिथुनं युग्मं नाय-कनायिकारूपं दंपती वा, " मैथुने रतसंबंधौ, मिथुने युग्मदंपती । " इति मंखकोशः, तस्य संनिधौ समीपे, अपरः अन्यः तृतीयः इति यावत्, न राजति न शोभते, तथा-स्थितस्य मूर्खत्वात् ग्रामीणत्वात् वा । तथा चोक्तं–" खादन्न गच्छामि, हसन्न जल्पे, गतं न शोचामि, कृतं न मन्ये । द्वाभ्यां तृतीयो न भवामि राजन्, किं कारणं येन भवामि मूर्खः ॥" इति, तथा " मंते अत्थालोवे भेसज्जे भोयणे पियागमणे । वुच्चइ सो नागरिओ होइ अणुत्तो वि जो दूरे ॥" (३।६) ( मंत्रे अर्थालोचे भैषज्ये भोजने प्रियागमने । उच्यते सः नागरिकः भवति अनुक्तः अपि यः दूरे ॥ ) ( मंत्रः गुप्त-वादः, अर्थालोचः द्रव्यपरिगणनम् । ) इति रंभामंजरीनाटिकायाम् । तथा अमरु-कशतकेऽपि–" निर्यातः शनकैरलीकवचनोपन्यासमालीजनः । " ( २७ ) इति ॥ १०५१ ॥ गमनसमये स्नेहसूचनविशिष्टप्रार्थनागर्भां आशिषं दत्ते एषेति । एषा

१०५१ साकम् (प) । विजनस्थिति (गो) । स्थितसन्निधा० (प) १०५२ सुरतभुवः (प)

यावद्यावदशक्तिं प्रथयति ललना हि मोहनाक्रान्ता ।
तावत्तावत्पुंसामुत्साहः पल्लवान् समुत्सृजति ॥ १०५३ ॥

पुरोवर्तिनी मंजरी, नृत्यश्रांता नृत्यकरणेन खेदं आपन्ना शिथिलतनुः इति भावः । तत्रापि मदनेन कामेन आयासिता खेदं प्रापिता त्वद्विरहपीडया इति भावः । तथा च प्रकृत्यैव अतिसुकुमारा सौकुमार्याख्यशरीरगुणातिशयवती मृद्वंगी सुकोमलाङ्गी, सौकुमार्यं तु—" यत्स्पर्शासहताऽङ्गेषु कोमलस्यापि वस्तुनः । तत्सौकुमार्यं, त्रेधा स्यान्मुख्यमध्याधमक्रमात् ॥ अंगं पुष्पादिसंस्पर्शासहं येन तदुत्तमम् । न सहेत करस्पर्शं येनाङ्गं मध्यमं हि तत् ॥ येनाङ्गमातपादीनामसहं तदिहाधमम् ॥" ( रसार्णवसुधाकरे १।१८४–१८६ ) इति । प्रकृते अतिना उत्तमत्वं ध्वनितम् । अत्र च आद्यद्वयविशेषणेन आंगतुकं तृतीयेन च स्थायि सहजं सौकुमार्यं उक्तम् ॥ त्वं, अपि अपिः निश्चये, " आक्षेपेच्छानिश्चयेषु वाक्यादिप्रतिवाक्ययोः । गर्हासमुच्चयप्रश्नशंकासंभावनास्वपि ॥" इति मंखकोशः, रतिसमरे सुरतरूपयुद्धे, यथोक्तं—"श्रोणीचारुरथं, पयोधरहयं, भ्रूकार्मुकं, दक्शरं, पीनोरुद्वयमंगरागकवचं,ताम्राधरोष्ठध्वजम् । कांचीनूपुरशंखदुंदुभिरवं, हक्काप्रणादाकुलं, कामिन्या नखदंतशस्त्रमतुलं प्राप्नोतु युद्धं भवान् ॥" इति; द्रौपदीपरिणयचंप्वां च उपमा—" आश्लिष्टकंठमन्योन्यं निरंतरनखक्षति । बभौ तयोः सधर्माभो नियुद्धं स्मरयुद्धवत् ॥" ( १।४४ ) इति । ( तयोः भीमबकासुरयोः, नियुद्धं बाहुयुद्धं 'कुस्ती' इति भाषायाम् ।) शूरः वीरः; रतिप्रियः इति यावत् । अनेन अतिवीर्यवान् प्रगल्भो वा इति व्यंजितं, अतः सा सुरतकाले निर्दयं नो मर्दनीया इति प्रार्थनं सूचितं, एतेनेदमाह सखी—सुकुमारावयवा सा, भवान् पुनः सुरतवीरः, तेन यथा इयं नोद्विजते तथा रंस्यसे, अन्यथा विरक्ता भविष्यतीति ॥ अत्र वक्रभणितिव्यंजनेन विपरीतलक्षणया निःशेषरसाकृष्टये यथेष्टं इयं मर्दितां इत्यपि भावः स्फुरति ॥ एवं प्रार्थयित्वा आशिषं प्रयुंक्ते स्वर्गेति । स्वर्गः भूः स्थानं वासस्य येषां ते ] स्वर्गभुवः देवताः, [वः कुशलाय कल्याणाय, सन्तु, ते युवयोः क्षेमं कुर्वन्तु युवाभ्यां भद्रं ददतु इत्यर्थः ॥ इदं शुभाशंसनं प्रकृतकाव्योपसंहारभागान्तर्गतं सत् " मंगलादीनि मंगलमध्यानि मंगलान्तानि शास्त्राणि प्रथन्ते ।' इति नयानुकूलं अपि बोध्यम् ॥ आशीराख्यः नाट्यालंकारः अत्र ॥ १०५२ ॥ सख्यपगमनान्तरं जातं वृत्तं युग्मेनाह यावदिति । यावद्यावत् यथायथा इत्यर्थः, वीप्सया प्रकारकात्स्न्यं अभिप्रेतं, मोहनेन सुरतेन तद्रसेन इति भावः, आक्रान्ता अभिभूता, ललना लडति ललति कामेन विलासं करोति सा विलासवती कामिनी, " ललना कामिनी-

**इति शून्यीकृतवेश्मनि हरति शनैः सहजमंशुकं तस्मिन् ।**
**दर्शितसाध्वसलज्जा जगाद मे किं करोषीति ॥ १०५४ ॥**

---

नारीभेदजिह्मासु योषिति । " इति विश्वः, अशक्तिं चुंबनादिषु सुरते वा असहनत्वं, प्रथयति वचनादिभिः प्रकाशयति, यथा–" मामा मानद माऽति मामलमिति क्षामाक्षरोल्लापिनी ।" ( अमरुकशतके ४० ) इति, ( मां इत्यतः पीडय इत्यध्याहारः ) तावत्तावत् तथातथा इत्यर्थः, पुंसां पुरुषाणां नायकानां, उत्साहः कार्ये स्थिरः संरंभः " कार्यारंभेषु संरंभः स्थेयानुत्साह इष्यते ।" ( ४।८ ) इति कर्णभूषणे लक्षितः, ( कार्यारंभेषु इति यावत्कार्यफलमित्यस्य उपलक्षणम् । ) प्रकृते बाह्याभ्यंतरे द्विविधे अपि सुरते उत्साहः इत्यर्थः, ] 'पल्लवाः नानाप्रकाराः इत्यर्थः ' [ इति टिप्पणी, पल्लवान् शृंगारान् तद्विलासान् इति यावत्, " पल्लवो विस्तरे खड्गे शृंगारेऽलक्तरागयोः । चलेऽप्यस्त्री तु किसले, विटपेऽपि च पल्लवः ॥" इति विश्वलोचनः, समुत्सृजति उत्पादयति, हि इति अव्ययं निश्चयार्थे ॥ सुरते रमण्या असहिष्णुतादर्शकैः कुट्टमितकिलकिंचिताद्यभावैः चतुरनायकसंरंभः समुल्लासं प्राप्नोति तस्मात् तदशक्तिप्रथने ग्रामीणवत् विरमः नागराणां नोचितः इति प्रसिद्धम् ॥ तथाहि–"रतकलां कलयत्यसुवल्लभे किमपि कुंचिमुखी सुमुखी नवा । हहननेति ममेति वचोमिषान्मदनदीपनमंत्रमिवास्मरत् ॥" ( हम्मीरमहाकाव्ये ७।१११ ) इति । उपदिष्टं च विकटनितंबया–" बाला तन्वी मृदुरियमिति त्यज्यतामत्र शंका, कांचिद्दृष्ट्वा भ्रमरभरतो मंजरीं भज्यमानाम् । तस्मादेषा रहसि भवता निर्दयं पीडनीया, मंदाक्रान्ता विसृजति रसं नेक्षुयष्टिः समग्रम् ॥" इति; ( ' बाला० मृदुतनुरिति० शंका, लोके मत्तभ्रमर० पतनान्मञ्जरी किन्नु भग्ना । मंदा० वितरति०, तस्मा० मर्दनीया ॥' इति अन्यत्र पाठः । ) तथा–" कविता वनिता गीतिः प्रायो नादौ रसप्रदाः । उद्गिरन्ति रसोद्रेकं गाह्यमानाः पुनःपुनः ॥"··· ( हंमीरमहाकाव्ये १४।३७) इति; एवंकृते " स्वप्नेष्वपि न दृश्यन्ते ते भावास्ते च विभ्रमाः । सुरतव्यवहारेषु ये स्युस्तत्क्षणकल्पिताः ॥" ( कामसूत्रे८।२।१।३१ ) ते समुद्भवंति । इदमेव सुरततरोः पल्लविता ॥ १०५३ ॥ इतीति । इतिशब्दः हेतौ, शून्यीकृतवेश्मनि सखीनिर्गमनेन विजनीभूते गृहे गृहैकदेशे रतावासे इत्यर्थः, तस्मिन् नायके समरभटे, तस्याः, सहजं सहजातं अंशुकं वस्त्रं लज्जां व्रीडां इत्यर्थः, यथोक्तं–" स्फुटमभिभूषयति स्त्रियस्त्रपैव ।"(माघ० ७।३८ ) इति, तथा अमरकोशेण–" सहजव्रीडाधनः स्त्रीजनः ।" (८९) इति; व्रीडा च–" व्रीडा धार्ष्ट्याभावस्तमुन्नयेत् । साचीकृतांगावरणवैवर्ण्याधोमुखादिभिः ॥" ( ४।२४ ) इति दशरूपके; तेन उत्तररामचरिते ( १।३९ )–" कालेनावरणात्ययात्

'अयि मुग्धे तत् क्रियते पुरुषार्थचतुष्टयस्य यत् सारम् ।'
इति निगदितसस्मेरः स्मरविधुरित आततान रतिकलहम् १०५५

परिणतं यत्स्नेहसारे स्थितम् ।" इत्यत्र आवरणं लज्जा इत्येवार्थः युक्तः । तत् हरति अपनयति सति, कथमित्याह शनैरिति, तदुक्तं शृंगारतिलके ( १।३७ )– "मुग्धामाव्र्जयत्येष मृदूपायेन सान्त्वयन् । नातिभीतिकरैर्भावैर्निर्बंधैर्बालभीषकैः ॥" इति, तच्च व्याजेन चुंबनालिंगनादिभिः । अत्र सहजं इत्यनेन परिशिष्टं बाह्यमपि अंशुकं सूचितं, तद्ग्रंथेः अनुरागिण्या इव स्वयंविस्रंसनप्राप्त्यभावात् । एतावता मुग्धारतारंभकं नायककृत्यं उक्तम् । दर्शितेति– दर्शिते, साध्वसं साधु शुभं अस्यति क्षिपति इति ] 'साध्वसं भयं' [ इति टिप्पनी, लज्जा व्रीडा अनौचित्यप्रवर्तनात् मनःसंकोचः च यया सा, अनेन तस्याः मुग्धात्वं व्यंजितं, तदुक्तं– "उदयद्यौवना मुग्धा लज्जाविजितमन्मथा ।" इति, दर्शितं इत्यनेन लज्जासाध्वसयोः नायकहृदयाकृष्ट्यै कृत्रिमत्वं द्योतितं; जगाद उवाच । तदेवाह मे इति, अयं ते मां प्रति कीदृशो व्यापारः इति भयमिश्रलज्जोक्तिः॥ 'किं मे करोषि' इति वचोभंग्यां मौग्ध्याख्यः स्वभावजः नायिकालंकारः प्रकटितः । तल्लक्षणं च साहित्यदर्पणे–"अज्ञानादिव या पृच्छा प्रतीतस्यापि वस्तुनः । वल्लभस्य पुरः, प्रोक्तं मौग्ध्यं तत्तत्त्ववेदिभिः॥" ( ३।१०७ ) इति । ॥१०५४॥ अयीति पूर्वार्धे राजपुत्रस्य उत्तरम् । अयीति कोमलामंत्रणे । मुग्धा–"मुग्धः सुंदरमूढयोः" इति यादवः, तेन मुग्धा सुंदरी उद्यद्यौवना, यद्वा नायिकाविशेषः–तल्लक्षणं च–"मुग्धा नववधूस्तत्र नवयौवनभूषिता । नवानङ्गरहस्याऽपि लज्जाप्रायरतिर्यथा ॥" ( १।३५ ) इति शृंगारतिलके, तत्संबुद्धौ मुग्धे, अत्र मूढे इत्यपरार्थेन मदनव्यापारवार्तानभिज्ञे अज्ञातरतिरहस्ये रसानभिज्ञे इति परिहासोऽपि व्यंग्यः । इदं क्रियमाणं, तत् क्रियते निर्वर्त्यते साध्यते इत्यर्थः, यत्, धर्मार्थकाममोक्षाख्यपुरुषार्थानां चतुर्णां मध्ये, सारं श्रेष्ठं उत्कृष्टं अतिशयान्वितम् । ] 'सारं तृतीयपुरुषार्थकामरूपं वस्तु इत्यर्थः ।' [ इति चरमा टिप्पणी ।–कामपुरुषार्थस्य सर्वेषु श्रेष्ठत्वं तु तस्य शरीरजन्मस्थितिहेतुत्वात् , धर्मार्थयोः फलभूतत्वात् , परमानन्दप्राप्तिरूपमोक्षसधर्मत्वाच्च, यथोक्तं अनंगरंगे ( १।८ )–" निःसारे जगति प्रपंचसदृशे सारं कुरंगीदृशामेकं भोगसुखं परात्मपरमानन्देन तुल्यं विदुः ॥" इति, तथा "संसारे पटलान्ततोयतरले सारं यदेकं परं, यस्यायं च समग्र एव विषयग्रामप्रपन्नो जनः । तत्सौख्यं परतत्त्ववेदनमहानंदोपमं,

१०५५" धरित (प)रतिकर्म (प) । इत आसमाप्ति प-पुस्तके पाठो भ्रष्टः, १०५५ श्लोकान्ते एव तत्समाप्तेः । सं (प्रं ?) थार्गं (प्रं) १२९० द्वादशशतानि नव"'१२९० (प) ।

नानासुरतविशेषैराराध्य चकार भुक्तसर्वस्वम् ।
गणिकाऽसौ राजसुतं त्वगस्थिशेषं मुमोच नातिचिरात् ।१०५६।

( मंदधीः को वा निंदति सूक्ष्ममन्मथकलावैचित्र्यमूढो जनः ॥") इति; तथा "धर्मार्थोपरि विलसन्मोक्षादभ्यर्हितः पूर्वः'। सकलजगज्जनिहेतुः पुरुषार्थश्रेष्ठ आत्मभूर्जयति॥" इति कामसूत्रटीकायां भास्करनृसिंहशास्त्री । अपि च अन्येषां शुभादिकर्मणां कालान्तरे न्यूनाधिकतया च फलप्राप्तिः, एकस्यैव सुरतकर्मणस्तु फलं अनुपमपरमानंदप्राप्तिः, साऽपि क्रियासमकालीनैव व्यक्तिद्वयस्य च इति धर्मादिपुरुषार्थचतुष्टये कामस्यैव सर्वोत्कृष्टत्वम् ॥ उक्तं हि हंमीरमहाकाव्ये ( ७।१०४ )–" रतिरसं परमात्मरसाधिकं कथममी कथयंतु न कामिनः । यदि सुखी परमात्मविदेकको रतिविदौ सुखिनौ पुनरप्युभौ ॥ " इति। विवेचितं चेदं भुजंगकविकृते मदनसाम्राज्यभाणे–" इदानीं खलु ब्रह्मवेदान्तिनां च मोक्षविषये संभोगो वाऽन्यो वा मोक्ष इति विप्रतिपत्तौ, संभोगादन्य एव मोक्ष इति ब्रह्मवेदान्तिभिः प्रतिपाद्यमाने पूर्वपक्षे, तत्र अनङ्गसङ्गरतरङ्गोपाध्यायैः संभोगं मोक्षमतिसुखशायित्वं च पक्षसाध्यहेतूकृत्य, यदि स मोक्षो न भवेत्तर्ह्यतिसुखशाय्यपि न भवेदितितर्कसहकृतानुमानेन संभोग एव मोक्ष इति सिद्धान्तितम्। किंच, साक्षादैहिकातिशयसुखदायित्वाल्लक्ष्मीशप्रभृतिभिः सदा सेव्यमानत्वाच्चास्यैव सर्वातिशायित्वान्मोक्षाधिक्यं च प्रत्यपादि । तदपि मन्मथोपासनं विना न घटते । मदनोपासनमप्यङ्गनालिङ्गनादिरूपतत्त्वज्ञानं विना न संपनीपद्यते । तत्त्वज्ञानं च कामिनीकुचकलशरूपपदार्थबोधं विना न संगच्छत इत्यनुवादः कृत इति । " इति । तथा–" अविदितसुखदुःखं निर्गुणं वस्तु किंचिज्जडमतिरिह कश्चिन्मोक्ष इत्याचचक्षे । मम तु मतमनङ्गस्मेरतारुण्यघूर्णन्मदकलमदिराक्षीनीविमोक्षो हि मोक्षः ॥" इति ॥ इति एवंप्रकारेण यत् निगदितं स्वेनोक्तं तेन, सस्मेरः 'स्मेरं ईषद्धसनं' इति मालतीमाधवटीकायां ( १०।६ ) जगद्धरः तेन सहितः, स्मरेण कामेन विधुरितः 'विधुरितः सर्वात्मना शून्यीभूतः' ( इति विद्धशालभंजिकाटीकायां ( ३।१५ ) नारायणः ) व्याकुलः इति यावत्, रतिकलहं सुरतयुद्धं मदनयुद्धं, तदुक्तं वात्स्यायनीये ( ६।२।६।१ )–" कलहरूपं सुरतमाचक्षते विवादात्मकत्वाद्वामशीलत्वाच्च कामस्य ॥ " इति, आततान सविस्तरं चकार ॥ १०५५ ॥ मंजर्याख्यानं उपसंहरन्ती विकराला मंजरीसमरभटयोः समा-

१०५६–९ [ प. पुस्तके न संति ] ॥

॥ इति कुट्टनीमतपाठान्तराणि ॥

गमावसानप्रकारमाह नानेति । नाना विविधाः ये सुरतविशेषाः बाह्यान्तरसुरतभेदाः कामसूत्रादिषु विस्तरेण उपदिष्टाः, तैः शिक्षासिद्धैः, असौ गणिका 'कलाप्रागल्भ्यधौर्त्याभ्यां गणयति कलयति' सा गणिका वेश्या मंजरी, राजसुतं समरभटं, आराध्य सुप्रसन्नं कृत्वा, यथोक्तं शृंगारदीपिकायां–"शय्यावत्समसुरते, तुरगारोहेव पौरुषे भावे। वल्लीव बंधसुरते, या स्यात्सैव विटजनपूज्या ॥" (१।८) इति, (पौरुषभावः विपरीतसुरतं, बंधसुरतं चतुरशीतिकरणानि ।) भुक्तं आत्मसात्कृतं सर्वं सर्वप्रकारकं नाणकरत्नाभरणादिरूपं स्वं धनं यस्य तादृशं चकार; यथोक्तं–"कलावतः संभृतमंडलस्य यया हसंत्यैव हृताऽऽशु लक्ष्मीः । नृणामपांगेन कृतश्च कामस्तस्याः करस्था ननु नालिकश्रीः ॥" (काव्यालंकारे १०।१५) इति । ततश्च नातिचिरात् अल्पेनैव कालेन, त्वगस्थिशेषं शेषितचर्मास्थिकं निःसारं इत्यर्थः, मुमोच अत्यजत्, यथोक्तं प्रस्तुताख्यानावतरणे–"प्रवराचार्यदुहित्रा राजसुतश्चर्वितश्च मुक्तश्च ॥" (आ. ७३६) इति ॥ तथाहि शिशुपालवधे संध्यावर्णने (९।१०) माघः–"अनुरागवन्तमपि लोचनयोर्दधतं वपुः सुखमतापकरम् । निरकाशयद्रविमपेतवसुं वियदालयादपरदिग्गणिका ॥" इति । (अपरा दिक् पश्चिमा, वसु तेजः धनं च ।) तथा कामसूत्रकारेणापि उदाहृतं प्राचीनवचनं–"परीक्ष्य गम्यैः संयोगः संयुक्तस्यानुरंजनम् । रक्तादर्थस्य चादानमन्ते मोक्षश्च वैशिकम् ॥" (६।३) इति, (वैशिकं–'वेशं वेश्याजनोचितमिति, स प्रयोजनमस्येति वैशिकम् ।'); तथा "गम्यं निरूप्य सा स्फुटमनुरक्तेवाभियुज्य रंजयति । आकृष्टसकलसारं क्रमेण निर्वासयत्येनम् ॥" (१२।४०) इति काव्यालंकारे; तथा शृंगारदीपिकायां–"वाग्भिः प्रीतिकरैर्विलोकनशतैः संतर्जनैः सस्मितैः क्रोधैरौषधमंत्रतंत्रमणिभिः कृत्वा वशं नायकम् । हृत्वा तस्य समस्तवस्तुनिचयं, त्यक्त्वा तमन्यं शठं सेवन्ते धनिनं, तथैव सततं वारांगनानां रतिः ॥" (१।६४) इति; तथा मुग्धोपदेशेऽपि (११)–"यद् द्यूतेन युधिष्ठिरस्य विहितं, यद्विष्णुना वा बलेर्यच्छुक्रेण धनाधिपस्य, कलिना राज्ञो नलस्यापि यत् । संभूयापि च यत्सुरासुरबलैरुन्मथ्य पाथोनिधेर्वेश्या पश्यत लीलयैव कुरुते तत्तद्गृहे कामिनाम् ॥" इति । उपदिष्टं चैतत् वैशिकं संक्षेपेण समयमातृकायां क्षेमेन्द्रेण–"तावच्च तूर्णं धनमाहरेत यावत् स रागेण विनष्टसंज्ञः । प्रशान्तरागानलशीतलस्तु स लोहपिण्डीकठिनत्वमेति । (५।७५) ॥ याचेत सर्वं सुरतार्तिकाले तमूरुबंधेन निरुद्धकायम् । प्रायेण तृप्ताय न रोचते हि विनम्रशाखापरिपक्व-

तद्यन्मयोपदिष्टं कामिजनार्थाप्तिकारणं तेन ।
महतीं समृद्धिमेष्यसि कामुकलोकाहृतेन वित्तेन ॥ १०५७ ॥"
इत्युपदेशश्रवणप्रबोधतुष्टा जगाम धाम स्वम् ।
मालत्यपगतमोहा विकरालापादवन्दनां कृत्वा ॥ १०५८ ॥

---

माम्रम् ॥ ( ५।७६ ) । निष्पीतसारं विरतोपकारं क्षुण्णेक्षुशल्कप्रतिमं त्यजेत्तम् । लब्धाधिवासक्षयकारि शुष्कं पुष्पं त्यजत्येव हि केशपाशः ॥" ( ५।७८ ) इति ॥ १०५६ ॥ विकराला स्वोपदेशं उपसंहरति तदिति । तत् तस्मात्, यत्, कामिजनानां कामुकानां रतिरसाविष्टानां अर्थानां द्रव्याणां आप्तिकारणं स्वलाभहेतुभूतं, मया कुट्टन्या, उपदिष्टं आर्याणां द्व्यूनसहस्रेण ( ५९ आर्यामारभ्य १०५६ आर्यां यावत् ) उपदेशविषयीकृतं, उपदेशश्च "इदं कुरु गृहाणेदमुपदेश इति स्मृतः ।" ( २२।५६ ) इति भरतः, अर्थागमोपायः सविस्तरं प्रोक्तः इति भावः, तेन उपदेशेन अर्थात् तदनुसाराचरणैः, त्वमपि मंजरीवत्, कामुकजनेभ्यः अपहृत्य संपादितेन, वित्तेन द्रव्येण, महतीं समृद्धिं बह्वीं धनादिसंपत्तिं, एष्यसि प्राप्स्यसि ॥ तथैव वात्स्यायनीये उदाहृतः श्लोकः— "एवमेतेन कल्पेन स्थिता वेश्या परिग्रहे । नातिसंधीयते गम्यैः करोत्यर्थांश्च पुष्कलान् ॥" ( ६।३ ) इति । एतदेव वेश्यानां परमं साध्यं, तदुक्तं तंत्राख्यायिके— "वेश्यानां धनार्जनमेव हि पुरुषार्थः ।" इति; तथा च क्षेमेन्द्रः— "प्राप्ते कान्ते कथमपि धनादानपात्रे च वित्ते, 'त्वं मे सर्वं, त्वमसि हृदयं, जीवितं च त्वमेव ।' इत्युक्त्वा तं क्षपितविभवं कंचुकाभं भुजंगी त्यक्त्वा, गच्छेत्सधनमपरं, ... समासः ॥" ( ५।८९ ) इति समयमातृकायाम् ॥ तथा "मायाप्रपंचसारश्च वेश्यानां विभवोद्भवः ।" इत्यपि तत्रैव । ( ४।३७ ) ॥ अत्र ४४ आर्याया आरब्धायाः विकरालोक्तेः समाप्तिः ॥१०५७॥ ततः मालतीवृत्तमाह इतीति । इतिशब्दः पूर्वोक्तप्रकारोपसंहारे, उपदेशस्य शिक्षायाः, श्रवणेन अर्थतोऽवधारणेन यः प्रबोधः अज्ञाननिद्रानाशः ज्ञानं तेन तुष्टा तृप्ता, अपगतः विनष्टः मोहः अविवेकः स्तब्धता अज्ञानकृतविपर्ययः प्रकृते लोकानां वेश्याजालपातनोपायसंबद्धः यस्याः सा, मालती, विकरालायाः तदाख्यायाः अनुगुणनाम्न्याः ( विशेषेण शरीरगुणविशेषत्वात् दंतुरायाः वंचकवृत्तप्रवीणत्वात् भीषणायाः वा, "करालो दंतुरे तुंगे भीषणे चाभिधेयवत् ।" इति मेदिनी, ) उपदेष्ट्र्याः कुट्टन्याः, कृतज्ञतया पादयोः चरणयोः वंदनां उपसंग्रहणं

काव्यमिदं यः शृणुते सम्यक् काव्यार्थपालनेनासौ।
नो वञ्च्यते कदाचिद्विटवेश्याधूर्तकुट्टनीभिरिति ॥ १०५९ ॥

इति श्रीकाश्मीरमहामण्डलमहीमण्डनराजजयापीडमन्त्रिप्रवर-
दामोदरगुप्तकविविरचितं कुट्टनीमतं
समाप्तम् ॥

---

कृत्वा, स्वं स्वकीयं, धाम गृहं, जगाम ॥१०५८॥ एवं कुट्टनीमताख्यं काव्यं समाप्य, तत्करणे स्वप्रवृत्तेः उचितविषयतां, तत्र पाठकप्रवृत्तये प्ररोचनां, काव्यप्रयोजनानुसारेण श्रेयस्करत्वं च ध्वनयन् अस्य फलश्रुतिं प्रशस्तिं वा कविरेवाह काव्यमिति। इदं वेश्या-धर्मप्रकाशकं, काव्यं कुट्टनीमताख्यं "लोकोत्तरवर्णनानिपुणस्य कवेः सरसशब्दसंघ-टनात्मकं यत् कर्म तत् काव्यं" (सा.चिं.), यच्च विवक्षितवाच्याद्यनेकविधं रसमेवोपकरोतीति रसधर्मिणो व्यंजकं, तत्, यः सम्यक् बाढं दृढं, शृणुते श्रवणद्वारा अर्थतोऽवधारयते सावधानं उपदेशग्रहणं कुरुते इत्यर्थः, असौ पुरुषः, अस्य काव्यस्य अर्थस्य जातावेकवचनं प्रतिपादितानां विषयविशेषाणां इत्यर्थः, प्रतिपालनेन मतेः अविपर्यासपूर्वकं स्वाचारगोचरीकरणेन, कदाचित् कस्मिंश्चिदपि समये, विटाः--वेश्यानागरकयोः परस्परं संदेशं विटति कथयतीति विटः, कामिनः समीपे विटति वदति स्तौति तस्यास्तस्याः असतः सतश्च गुणानिति वा विटः, ते--"भक्षि-तनिजबहुविभवाः परविभवक्षपणदीक्षिताः पश्चात्। अनिशं वेश्यावेशस्तुतिमुखरमुखा विटाश्चिन्त्याः ॥" (९।२९) इति कलाविलासे क्षेमेन्द्रेण वर्णिताः, यद्वा "संभोग-हीनसंपद्विटस्तु धूर्तः कलैकदेशज्ञः। वेशोपचारकुशलो वाग्मी मधुरोऽथ बहुमतो गोष्ठ्याम् ॥" (३।४१) इति साहित्यदर्पणे लक्षिताः। (संभोगहीना अपकृष्टा। वेशः वेश्यागृहम्। गोष्ठी गावः बहुविधाः वाचः तिष्ठंति अत्र इति गोष्ठी सभा।) तथा वेश्याः--वेश्यावाटः वेशः, तत्र या स्त्री सा वेश्या, यद्वा वेशमर्हति, वेशेन दीव्यति व्यवहरति, वेशेन पण्ययोगेन जीवतीति वा वेश्या, "सामान्या वनिता वेश्या सा वित्तं परमिच्छति। निर्गुणेऽपि न विद्वेषो न रागोऽस्या गुणिन्यपि ॥ (६२)" धनार्थं कृत्रिमैर्भावैर्ग्राम्यं व्यामोहयन्ति ताः ॥ (६५)। लिंगी प्रच्छन्नकामश्च नरंमन्यश्च षण्ढकः। सुखप्राप्तधनो मूर्खः पितृवित्तेन गर्वितः ॥ (६६।) इत्यादि प्रथमं ज्ञात्वा सम्यक्कर्षति तद्धनम्। अपूर्वा इव मुंचन्ति तस्मादेता विषोपमाः ॥ (६७।)" इति शृंगारतिलके प्रथमपरिच्छेदे वर्णिताः, (अपूर्वाः अपरिचिताः।); तथा "तात्रपि वेशयोषाः कुटिलतराः कूटरागहृतलोकाः। कपटचरितेन यासां वैश्रवणः

श्रमणतामेति ॥ (४।१) । (वैश्रवणः कुबेरः। श्रमणतां बौद्धभिक्षुभावम्।) " इत्येवं बहुहृदया बहुजिह्वा बहुकराश्च बहुमायाः। तत्त्वेन सत्यरहिताः को जानाति स्फुटं वेश्याः ॥" (४।३९), तथा " वेश्यालता सरागं पूर्वं, तदनु प्रलीनतनुरागम्। पश्चादपगतरागं, पल्लवमिव दर्शयन्ति निजचरितम् ॥ " (८।१२६) इति समयमातृकायां, तथा " माराहवातिकुशलां, विटमोहदात्रीं, नेत्रान्तपूरितमहागरलां लताङ्गीम् । आपीनसान्द्रलिकुचप्रतिमस्तनीं तां वाराङ्गनामसृजदब्जभवो धरित्र्याम् ॥ (१) । दुर्नीतिदुष्टगुणपूरितकोमलांगीं ··आयुर्बलासुधनमानविनाशहेतुम् । ,संनद्धवंचनचटूक्तिपटुं मनोज्ञां···" इत्यादिभिः कस्मिंश्चिद्वेश्यास्तोत्रे वर्णिताः; एतादृश्यः अर्थशृंगारपराः सामान्या वनिताः याः वारस्त्रियः रूपाजीवाः भंडहासिन्यः पण्यांगनाः भोग्याः भोगिन्यः स्मरवीथिकाः पुरमंडनाः हट्टविलासिन्यः इत्यादिभिः प्रधानगुणद्योतकैः बहुनामभिः प्रसिद्धाः ॥ तथा धूर्ताः वंचकाः विटाः वा । तथा कुट्टन्यः पुरुषेण सह परस्त्रीयोगस्य संपादिकाः । एभिः सर्वैः कपटपंडितैः अर्थापहरणपरायणैः, नो न, वंच्यते विडंब्यते विप्रलभ्यते वा ॥ प्रहसनेषु वेश्याकुट्टनीविटधूर्तानां वृत्तं त्याज्यतया व्युत्पाद्यते, अत्र तु भाणेष्विव तेषामेव परस्य वंचनपरं वृत्तं श्रोतॄणामवंचनीयत्वबोधाय वर्णितमिति बोध्यम् ॥ इतिशब्दः काव्यसमाप्तिद्योतकः ॥—अनया अस्य काव्यकृतेः वंचकविशेषवर्गात् लोकस्य परिरक्षणफलकथनेन वेश्याविलासजालस्य अर्थशृंगारस्य च त्याज्यतया व्युत्पादनेन एतत्कर्तुः स्वस्य पुण्यं, पाठकानां च कपटयंत्रवेश्यापरिवर्तनोत्थाद्यद्वयपुरुषार्थभ्रंशनिरोधकत्वात् श्रेयःप्राप्तिः, ' दृष्टसुखार्थी हि बाहुल्येन लोकः ' इति सर्वजनाभिलषणीयौ अर्थकामाख्यौ पुरुषार्थौ अधिकृत्य प्रकृतकाव्यरचनप्रवृत्तिश्च सूचिता ॥ अपि च, अनेन ग्रंथरत्नेन महामतिना कविना " काव्यं यशसेऽर्थकृते, व्यवहारविदे, शिवेतरक्षतये । सद्यः परनिर्वृतये, कान्तासंमिततयोपदेशयुजे ॥ " (१।२) इति काव्यप्रकाशोक्तानां षण्णामेव ऐहिकफलानां सिद्धिः साधिता । तथाहि अन्यकाव्यविषयादिविलक्षणतया विषयत्वेन वैशिकं नायिकात्वेन च सामान्या अधिकृत्य तल्लीलादिपरालंकारादिशोभमानरसवत्काव्यरचनेन यशः, एतद्रचनादूर्ध्वं राजमंत्रिपदप्राप्त्या धनागमः, वेश्यादीनां अर्थाहरणोपायभूतनानाविधकूटाचारादिनिरूपणेन लोकव्यवहारवेदित्वं, तासामेव समूलार्थनाशहेतुभूतानां हेयतया व्युत्पादनेनानर्थनिवारणं, गुणालंकाररसौचित्यादिभिः 'काव्यपाठादिसमनन्तरमेव विचित्रा(?)रसभावचमत्कारप्रादुर्भावेन अनिर्वचनीयसर्वातिशायिविलक्षणानंदजनकत्वं, एतद्द्वारा च वेश्यासेवननिंदाध्वननात् पाठकानां कान्ताकान्तवचनतुलितसुधामयवचनेन उपदेशदातृत्वं चेति ॥ अपि च कवेः सदुपदेशदानरूपपरोपकारजनितं पुण्यं पारलौ-

किकं फलम् । पाठकानां च निंद्यवेश्यासेवनोपरमात् धर्मत्राणात् अपापं पारलौकिकं फलम् । अत्रेदमपि बोध्यं यत्—प्रवृत्तिधर्मेषु प्राकृता: ऐहिकफलमात्रलुब्धा:, अप्राकृता: पारलौकिकफलप्रवणमतय:, विदग्धास्तु उभयफलसाधका: । तच्च द्विविधं फलं काव्यादिद्वारा सरलतया साध्यते इति कवीनां परमोत्कर्ष: इति । काव्यस्य तु साधुविगर्हितादपथान्निवर्तनं सत्पथे प्रवर्तनं च परमं फलं काव्यस्य ' इत्येतत्साहित्यरहस्यविदां संमतं मुख्यं फलं, तदनया कविना सूचितं, तत: धर्मार्थरक्षे च आनुषंगिके फले इति व्यक्तमेव ॥ १०५९ ॥

इति श्रीत्यादि ग्रन्थसमाप्तौ प्रशस्ति: । इतिशब्द: अत्र एवमर्थक: पूर्वोक्तार्थपरामर्शक । श्रीकाश्मीरमहामंडलं श्रिया लक्ष्म्या धनधान्यादिसमृद्ध्या युतं यत् काश्मीराख्यं महामण्डलम् । काश्मीरदेशश्च—" शारदामठमारभ्य कुंकुमाद्रितटान्तक:। तावत्काश्मीरदेश: स्यात्पंचाशद्योजनात्मक:॥ " (शक्तिसंगमतंत्रे,) इत्युक्त:, तन्नाम्नैव प्रसिद्ध:। मण्डलं देश:,स च समंतात् विंशतियोजनं चत्वारिंशद्योजनं वा इति केचित् । ततोऽपि महान् महामंडल:, तदेव मही पृथ्वी तां मण्डयति भूषयते अलंकुरुते इति महीमंडन:, एतत्पदं राज्ञां विरुदं यथा पृथिवीवल्लभादिकं, य: राजा शासकपालक:, जयापीड: इति तस्य राज्ञो नाम ॥ जयापीड:—अयं कार्कोटवंशे जात: वज्रादित्यापरनामकवप्पियस्य कनीयान् आत्मज: विनयादित्येत्यपरनामा स्वभ्रातु: संग्रामपीडस्य अनन्तरं खिस्तीयवत्सरेषु ( कल्हणानुसारेण ) ७५१–७८२ संख्याकवत्सरेषु (मतान्तरेण खि० व० ७७९–८१३ ) काश्मीरान् परिपालयामास । महावीरोऽयं राजा दिग्विजयाय द्वि: प्रस्थानमकरोत्, महापंडितश्चायं स्वयं कवि: वैयाकरणश्च सन् बहून् महाकवीन् विदुषश्च पोषयामास, तैश्च स्वसभां परं मंडयामास । अनेन स्वनामजयापीडनामाङ्किता: मुद्रा: ( ४।४१६ ), विनयादित्यनामांकिताश्चापि ता: ( ४।५१७ ) उट्टंकिता: । अयं उत्तरकाले लोभवशंवदो भूत्वा विपर्यस्तचरित्र: प्रजाब्राह्मणपीडकोऽभूत्, दुर्दशया चावसानं गत: ॥ अस्य साहित्यव्याकरणयो: रसिकत्वे उक्तं राजतरंगिण्यां—" उत्पत्तिभूमौ देशेऽस्मिन्दूरदूरतिरोहिता । कश्यपेन वितस्तेव तेन विद्याऽवतारिता ॥ देशान्तरादागमय्य व्याचक्षाण: क्षमापति: । प्रावर्तयत विच्छिन्नं महाभाष्यं स्वमंडले ॥ क्षीराभिधाच्छब्दविद्योपाध्यायात्संभृतश्रुत: । बुधै: सह ययौ वृद्धिं स जयापीडपंडित: ॥ " ( ४।४८६–४८८ ) । ( अनेन तेन महाप्रयत्नेन स्वमंडले व्याकरणाध्ययनं पुनरुज्जीवितं इत्युक्तम् । क्षाराख्य: अत्र निर्दिष्ट: महावैयाकरण: एकादशशतके समुद्भूतात् अमरकोशोद्घाटनधातुतरंगिण्यादिकर्तु: क्षीरस्वामिन: भिन्न एव । अयं जयापीड: पंडितेभ्योऽपि महाभाष्यं व्याचख्यौ, तद

तैः स्तुतः सः " नितान्तं कृतकृत्यस्य गुणवृद्धिविधायिनः । श्रीजयापीडदेवस्य पाणिनेश्च किमन्तरम् ॥ " ( राजत० ४।६३५ ) इति ॥ अपि च " विद्वान्दीनारलक्षेण प्रत्यहं कृतवेतनः । भट्टोऽभूदुद्भटस्तस्य भूमिभर्तुः सभापतिः ॥ " ( राजत० ४। ४९४ ) इति तस्य अपूर्वं विद्वत्प्रियत्वं सूचयति । ( उद्भटभट्टस्तु आलंकारिकः कुमारसंभवकाव्यस्य भामहकृतकाव्यालंकारस्य विवरणस्य काव्यालंकारसारसंग्रहस्य च कर्ता, यदुपरि प्रतीहार-इंदुराजेन लघुवृत्तिः राजानकतिलकेन च उद्भटविवेकनाम्नी टीका विरचिता । ) तत्सभालंकारभूतास्तु अपरे-" मनोरथः शंखदत्तश्चटकः संधिमांस्तथा । बभूवुः कवयस्तस्य वामनाद्याश्च मंत्रिणः ॥ " ( ४।४९६ ) इत्यपि तत्रैवोक्तम् । एतेषु वामनः सवृत्तिककाव्यालंकारसूत्र-सवृत्तिकलिंगानुशासनयोः कर्ता प्रसिद्ध एव । अपरेषां विशेषोऽद्यावधि न प्रकाशमुपगतः ॥ एतादृशः कविपंडितसुहृत् राजा स्वयमपि कविरभूत् इति नाश्चर्यम् । तथाहि द्वितीयदिग्विजयसमये नेपालदेशमाक्रामन् सः विधिविलसितत्वात् तद्राज्ञा गृहीत्वा अत्युच्चवेश्मनि क्षिप्तः । तदा " अवस्थावेदकास्तत्र ग्रथिता पृथिवीभुजा । आर्द्रान्तःकरणैः श्लोकाः स्मर्यन्तेऽद्यापि सूरिभिः ॥ " ( ४।५५० ) इति राजतरंगिण्युक्तं तस्य उत्तमकविभावं सूचयति । एतत्समुच्चयस्य नाद्यापि समुपलब्धिः तथापि तेषु अन्यतमः सुभाषितावली उदाहृतः प्रतीयते । स च यथा-" पुरो रेवापारे गिरिरतिदुरारोहशिखरः, सरः सव्ये, वामे दवदहनदाहव्यतिकरः । धनुष्पाणिः पश्चाच्छबरहतको धावतितरां, न यातुं न स्थातुं हरिणशिशुरेष प्रभवति ॥ " ( ६६१ ) इति । तस्य चेदमपरं सूक्तं राजतरंगिण्यां ( ४।४४१ )—" असमाप्तजिगीषस्य स्त्रीचिंता का मनस्विनः । अनाक्रम्य जगत्सर्वं नो संध्यां भजते रविः ॥ " इति । ( अत्र समासोक्तिमूलकः अर्थान्तरन्यासालंकारः । ) उत्तरकाले तस्य चरितविपर्यये तस्य पूर्वोदाहृता नुतिः व्याजस्तुत्या पंडितैः एवं परिवर्तिता-" कृतविप्रोपसर्गस्य भूतनिष्ठाविधायिनः । श्रीजयापीडदेवस्य पाणिनेश्च किमन्तरम् " ( राजत० ४।६३७ ) इति । एतस्य चित्रचरितस्य वीरस्य महापंडितस्य श्रीजयापीडराजस्य विस्तरतो वृत्तं कल्हणविरचितराजतरंगिण्यां चतुर्थे तरंगे ४०२-६५९ श्लोकेषु द्रष्टव्यम् ॥-अस्मिन् शारदादेशापरनाम्नि काश्मीरमंडले अन्ये बहवो राजानः कवयो बभुवुः । ते च गोपादित्यः ( सुभाषितावलौ शार्ङ्गधरपद्धतौ चास्य श्लोकाः समुद्धृताः ), ( प्राकृते )रावणवधापरनामकसेतुबंधाख्यकाव्यकर्ता प्रवरसेनः ( ई. सं. ४३२ ), मुक्तापीडः (सुभा०) ( ई. सं. ५९४ ), तुंजीनापरनामा रणादित्यः ( सुभा०, सुवृत्ततिलके च । ), विग्रहराजः (सुभा०), अवंतिवर्मा ( सुभा० ) ( ई. सं. ८८५), कलशकः (सुभा०,

सु. ति.) (ई. सं. १०८०–१०८८), तत्सूनुः श्रीहर्षश्च (सु. ति.), उत्पलराजदेवश्च (कविकंठाभरणे.) ॥ तस्य जयापीडस्य यः मंत्रिप्रवरः मंत्रिषु अमात्येषु अर्थचिंतनासहायेषु मुख्यः, मंत्री च–" स्थितस्य कार्यस्य समुद्भवार्थमनर्थकार्यप्रतिघातनार्थम् । आगामिनोऽर्थस्य च संग्रहार्थं यो मन्त्रकृत्स्यात् परमः स मंत्री ॥ " इति विक्रमार्कचरित्रे उक्तलक्षणः, वर्णितश्चेत्थं तत्रैव–" स्वामिकार्यार्थमुद्यमः, पापाद्भयं, प्रजानां हितं, परिवाराणां संयोजनं, राज्ञश्चित्तवृत्त्यनुसरणं, समयोचितपरिज्ञानं, अपायकार्याद्राजनिवारणं–एवंविधगुणयुक्तः कुलक्रमागतः कामंदकचाणक्यधौम्यशुक्रवाचस्पत्यादिनीतिशास्त्राभिज्ञो मन्त्रिपदयोग्यो भवति । " इति, तथा–" अदीर्घसूत्रः स्मृतिमान् कृतज्ञो नीतिशास्त्रवित् । धीमानायतिदर्शी च मंत्री राज्ञः सुसंनिधिः ॥" (५।१६) इति चाणक्यराजनीतिशास्त्रे उक्तः ॥ तादृशः यः दामोदरगुप्तकविः दामोदरगुप्तः इति अभिधानं यस्य सः कविः (इति मध्यमपदलोपी समासः), यद्वा दामोदरगुप्तश्चासौ कविश्चेति कर्मधारयः । तथाहि राजतरंगिण्यां–" स दामोदरगुप्ताख्यं कुट्टनीमतकारिणम् । कविं, कविं बलिरिव, धुर्यं धीसचिवं व्यधात् ॥ " (४।४९५) इति । (सः जयापीडः, कविं शुक्रं, धुर्यं धीसचिवं मंत्रिप्रवरम् ।) अनेन अनुमीयते यत् कुट्टनीमतकृतिं आलोक्य श्रीजयापीडेन स मंत्रिप्रवराधिकारे नियुक्तः । परमोचितं चेदं यतः "सत्याऽनृता च, परुषा प्रियवादिनी च, हिंस्रा दयालुरपि, चार्थपरा वदान्या । नित्यव्यया प्रचुरचित्रधनागमा च, वेश्याङ्गनेव नृपनीतिरनेकरूपा ॥" (तंत्राख्यायिके १।१८५) इत्युक्तेः अनया कृत्या प्रकाशितवैशिकतंत्रपारंगतत्वस्य तस्य राजनीतिपारंगतत्वं अर्थात् सिद्धमिति ॥ तेन विरचितं कृतम् ॥–" काव्ये यत्साध्यं तदनुसारेणैव काव्यसंज्ञा कर्तव्या" इति नयात् प्रबंधनामाह कुट्टनीमतमिति । कुट्टनीमतं कुट्टन्याः मतं सम्मतं अभिप्रायः तत् अधिकृत्य विषयीकृत्य कृतः ग्रंथः कुट्टनीमतम्, यद्वा विविधानि तानि अत्र सन्तीति कुट्टनीमतानीत्यस्मात् अर्शआद्यचि विभक्तिलुकि यस्येति चेत्यकारस्य लोपे कुट्टनीमतं इति काव्यनाम, अभिधानाभिधेयलक्षणश्च सामर्थ्यात् संबंधः, यतः कुट्टन्याः मतं इह अभिधेयं, इदं च काव्यं वचनरूपोपन्नं अभिधानं इति । समाप्तं चरमवर्णध्वंसरूपां समाप्तिं प्राप्तम् ॥–अस्याः कृतेः प्रयोजनं च कवेः सत्त्वानुग्रहः, पाठकस्य च तदधिगमेन तदर्थमवधार्य तथाचरणेन चरमार्योक्तफलावाप्तिः (आ. १०५९); परंपरितं प्रयोजनं तु कवेः सद्धर्मोपदेशात् महत्पुण्यं, कुशलानुष्ठानस्य तदेकफलत्वात्, पाठकस्य च ऐहिकपारलौकिकसुखावाप्तिः, इत्यादिकं चरमार्याटीकायां विस्तरेणोक्तम्। वात्स्यायनेन मुनिना कामशास्त्रे षष्ठेऽधिकरणे प्रपंचितं वैशिकमवलंब्य, " यथौषधं स्वादु च रोगहारि च हितं मनोहारि च दुर्लभं वचः । " इति

मनसि च निधाय दामोदरगुप्तकविना इदं काव्यं व्यरचि। तत्रापि "सूक्तीनां प्रतिभानां च मंजरीणां च जृंभितम्। नवमेव मनोहारि नारीणामिव यौवनम्॥" (बोधिसत्त्वा० ९३।११)इत्यत्र दृष्टान्तमिव ददता क्वचित्क्वचित् प्रतिभया नवंनवमुक्तं, तत्तु टीकायां तत्रतत्र प्रदर्शितम्॥—अपि च "चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि। काव्यात्" इत्याद्यभियुक्तोक्तेः धर्मादित्रिविधशृंगारमूलासु स्वीयादित्रिविधनायिकासु अल्पेऽपि धर्मशृंगारपरस्वीयारतादिवर्णने (आ० ४४०-४४२) तस्यैव परमोत्कर्षः कंठत उक्तः। तथा ८१२–८६१ आर्याभिः कामशृंगारपरपरकीयारतिवर्णने उपसंहारे उभयलोकनाशः प्रदर्शितः। अपि च नीतेः धर्मेऽन्तर्भावः। आधुनिकानां मते सा चतुर्विधा—व्यक्तिनीतिः परिवारनीतिः समाजनीतिः राजनीतिश्चेति। तासामप्युपभेदाः। तत्र व्यक्तिनीतौ वेश्यादिधूर्तेभ्योऽर्थरक्षणं प्राधान्येनोपदिष्टं, विनयश्च। परिवारनीतौ हारलतोपाख्याने दांपत्यप्रेम–पितृभक्ति–मित्रभक्त्यादीनामुदाहरणानि। समाजनीतौ क्वचित्क्वचिदौदार्यदयापरोपकारादीनामुपदेशाः। राजनीतौ च मृगयागुणाख्यानं कृतम्। तत्रतत्र च अर्थान्तरन्यासालंकारप्रयोगैः बहूनि नीतिसूत्राणि निबद्धानि। एवमत्र भूयसा धर्मस्य व्युत्पत्तिः॥ तथा प्रबंधव्यापिना सामान्यानायिकानां अर्थाहरणोपायप्रकाराणां प्रदर्शनेन सर्वव्यवहारमूलार्थनाशहेतुभूतानां तासां हेयतासूचनेन अर्थपुरुषार्थरक्षणमुक्तम्॥ तथा तत्रतत्र नानाप्रकारकरमणीरमणीयविलासादिवर्णनैः, तथा अनुरागेंगिताद्यः केचन विषया वेश्या अधिकृत्य निबद्धा अपि ते स्वीयाद्यन्यनायिकासाधारणाः, अर्थार्जनोपाया दरिद्रपरदारसामान्याः, वेश्यारतिवर्णनानि च स्वीयायामपि अतिदेशयितुं शक्यानीत्येतैश्च कामपुरुषार्थस्य काश्चन पदव्यः स्फुटमाविष्कृताः॥ तथा हारलतोपाख्याने प्रियनाशसमुत्थतीव्रवैराग्येण फलतया नायकस्य संन्यासाश्रमस्वीकारकथनेन पुरुषार्थचूडामणेर्मोक्षस्यापि दिशा प्रकटिता॥ इत्येवमत्र कविवर्येण चत्वारोऽपि पुरुषार्थाः निबद्धा ज्ञेयाः॥ अस्य काव्यस्य च अधिकारिणः वेश्यादिदुश्चरितरहस्यजिज्ञासवः, विषयित्वे सति स्त्रीरतिचिक्षिप्सवः, अलौकिककाव्यानंदरसपिपासवो वा॥ अपि चास्य प्रबन्धरत्नस्य विरक्तस्वीया–परदार–वेश्यानां दुश्चरितवर्णनैः विषयेषु प्रबलतमे स्त्रीविषयकानुरागे व्यंग्यतया वैराग्यजनकत्वेन विषयनिवृत्तौ तात्पर्यं, स्त्रीणां दुश्चरितज्ञानेन दृढवैराग्यपुरःसरं कामाख्यं प्रबलतमं हृद्रोगं रिपुं वा पराजित्य परमपुरुषार्थाभिमुखः पुरुषो भवेदिति। तथा शृंगाररसस्य परब्रह्मानन्दसब्रह्मचारित्वात् तद्रसप्रधानस्यैतस्य काव्यस्य तथात्वमिति सर्वं भद्रम्॥

(१) अथास्य काव्यस्य वैशिकाधिकारपरत्वात् वेश्यावर्णनपराः काश्चन सूक्तयः रसिकजनमनोविनोदाय संगृह्यन्ते। तत्रादौ वेश्यायाः राजनीतिसाम्यप्रतिपादिका:— "सत्याऽनृता च, परुषा प्रियवादिनी च, हिंस्रा दयालुरपि, चार्थपरा वदान्या। नित्यव्यया प्रचुरनित्यधनागमा च, वेश्याङ्गनेव नृपनीतिरनेकरूपा॥" (तंत्राख्यायिके १।१८५); "धनप्रधानं जनजीवभूतं लोकेषु तत्रापि विशेषयोगात्। जनाभिसारप्रतिपत्तिभाजां महीभुजां वेशमृगीदृशां च॥" (समयमातृकायाम् ४।८०) इति॥ तस्याः कृपाण्या साम्यदर्शिका—"सश्रीका विस्फुरंती सततपुलकितं दर्शयंती निजांगं, सद्रागा वीर्यभाजां मनसि सरभसं क्षोभमुत्पादयन्ती। आश्लिष्यंती किलान्यं समिति सुविपुले कंठदेशेऽतिगाढं, या वारस्त्रीव सक्ता भवति विजयते साऽस्य जैत्रा कृपाणी॥" इति (खड्गशतके ९१), (समिति संग्रामे सभायां वा।); तस्या राजसभया साम्यदर्शिका— "निर्यान्त्यन्ये विशन्त्यन्ये प्रतीक्षंते बहिः परे। यस्याः सा शोभते वेश्या सभा भूमिपतेरिव॥" (बोधिस० ५०।९१) इति; तस्याः सत्कवितया साम्यदर्शिका:— "गुणवती ललिताऽपि न शोभते तनुतरार्थकदर्थनयाऽन्विता। सुकविसूक्तिरिवार्थवती परं व्रजति वेशवधूः स्पृहणीयताम्॥" (स. मा. ४।१२२); "सालंकारतया विभक्तिरुचिरच्छायाविशेषाश्रया, वक्रा सादरचर्वणा रसवती मुग्धाऽर्थलब्धा परम्। आश्चर्योचितवर्णना नवनवास्वादप्रमोदार्चिता, वेश्या सत्कविभारतीव हरति प्रौढा कलाशालिनी॥" (स. मा. प्रशस्तौ १), (आस्वादः रसः।), इति; वेश्यारसिकस्य कुकविना साम्यदर्शिका—"गणयन्ति नापशब्दं न वृत्तभंगं क्षयं न वाऽर्थस्य। रसिकत्वेनाकुलिता वेश्यापतयः कुकवयश्च॥" इति; भिक्षूणां वेश्यासाम्यदर्शिका—"प्रागर्थं परिहृत्य मोक्षपदवीं ध्यायन्ति निर्मत्सरा, बालप्रौढकुलीनहीनविषये सर्वत्र साधारणाः। रागद्वेषममत्वकर्षितधियो वेश्यासमा भिक्षवस्त्वं जानन्नपि निश्चयादहह किं कामार्णवे मज्जसि॥" (१।३२) इति धूर्तसमागमप्रहसने; प्रकीर्णा च—"तन्वीं रौप्यविभूषणामतिमृदुस्पर्शां मनोहारिणीं गौरांगीं पदबद्धकांस्यवलयां हस्ते गृहीत्वा मुहुः। सोल्लासं व्यचरं मुदा प्रतिदिनं, तां कोऽपि धूर्तोऽहरद्, ब्रह्मंस्ते गणिकाऽस्ति किं, नहिनहि, प्राणप्रिया यष्टिका॥" इति॥

(२) अथ प्रसंगतः वेश्यानां का जातिरिति विचारे—"यत्पुनर्वेश्यानां जात्यन्तरासंभवेन वर्णान्तःपातित्वमनुमानादुक्तं,—वेश्याः वर्णानुलोमाद्यन्तःपातिन्यः मनुष्यजात्याश्रयत्वात् ब्राह्मणादिवदित्यनुमानात्—इति, तन्न, कुण्डगोलकादिभिरनैकान्तिकत्वात्। अतो वेश्याख्या जातिरनादिर्वेश्यायामुत्कृष्टजातेः समानजातेर्वा पुरुषा-

दुत्पन्ना पुरुषसंभोगवृत्तिर्वेश्येति ब्राह्मण्यादिवल्लोकप्रसिद्धिबलादभ्युपगमनीया। न च निर्मूलेयं प्रसिद्धिः। स्मर्यते हि स्कन्दपुराणे—"पंचचूडा नाम काञ्चनाप्सरसः तत्संततिर्वेश्याख्या पंचमी जातिः" इति। अतस्तासां नियतपुरुषपरिणयनविधिविधुरतया समानोत्कृष्टजातिपुरुषाभिगमने नादृष्टदोषो नापि दण्डः। तासु चानवरुद्धासु गच्छतां पुरुषाणां यद्यपि न दण्डः, तथाऽप्यदृष्टदोषोऽस्त्येव, "स्वदारनियतः सदा।" इति नियमात्, "पशुवेश्याभिगमने प्रायश्चित्तं विधीयते।" इति प्रायश्चित्तस्मरणाच्च। याज्ञ० मिताक्षरायां २।२९० श्लोकव्याख्यायां वेश्योत्पत्त्यादिकं वर्णितम्। वेश्याश्च देवालयेषु (नृत्यादि) कार्यविशेषार्थमावश्यका इत्यादिकं स्पष्टतयाऽऽगमग्रथेषूपलभ्यते॥" इति महीशूरराजधर्माधिकारिणः धर्मव्याकरणशास्त्रपारंगताः काशीशेषवेंकटाचलशास्त्रिणः॥

(३) सामान्यासुरततारतम्यादिकं ८१२ आर्याटीकायामुक्तं, तत्र यद्यपि पारदारिकंवत् वेश्यारतमपि क्वचित्तृतीयपुरुषार्थैकदृष्ट्या प्रशंसितं यथा "गाढालिंगनपीडितस्तनतटं स्विद्यत्कपोलस्थलं संदष्टाधरमुक्तसीत्कृतलसद्भ्रूभ्रान्तनृत्यत्करम्। चाटुप्रायवचोविचित्रभणितं घातै रुतैश्चांकितं, वेश्यानां धृतिधाम पुष्पधनुषः प्राप्नोति धन्यो रतम्॥" इति, तथापि धर्मार्थयोरतिशयेन विघातकत्वात् उपदंशादिरोगनिमित्तत्वादतिनिन्द्यमेव॥

(४) बहुमायानि वेश्याचरितानि साहित्ये दत्तकसूत्रे, वात्स्यायनीये कामसूत्रे षष्ठे वैशिकाधिकरणे, दशकुमारचरितस्य द्वितीयोच्छ्वासे, महाकविना क्षेमेन्द्रेण इदमेव काव्यमनुसृत्य विरचितायां अष्टसमयात्मिकायां समयमातृकायां (वि. सं. ११०६), बृहत्कथामंजर्यां च, कथासरित्सागरस्य दशमे शक्तियशोलंभके प्रथमे तरंगे कुट्टन्याः केनचित् धनपतिना स्वपुत्रस्य वेश्याचरितशिक्षाग्राहणे, रामभक्त (?)कृतविटवृत्ते च निबद्धानि। तथा क्षेमेन्द्रेण कलाविलासकाव्यस्य चतुर्थे सर्गे तासां चतुःषष्टिः कला निर्दिष्टाः॥ अपि च रोगधनहानिमनोधःपातादिहेतुभूतास्ताः अमितगतिना (वि.सं. १०५०) सुभाषितरत्नसंदोहे २४ विभागे, काश्मीरिकजह्लणेन (वि.सं. १२०६) च मुग्धोपदेशे परं साक्षान्निंदिताः॥ अपि च विद्यमानेऽप्यस्मिन्प्रबन्धरत्ने ग्रंथकर्तुः स्वामिनः पुत्रो राजा ललितापीडः (वि. सं. ८६९–८८१) एव, विधेः कुटिलविलसितत्वं समर्थयन्निव, गणिकासक्तः सन् वेश्याविटादिसंभुक्तसर्वस्वोऽभूत्। तथाहि राजतरंगिण्यां ४ तरंगे—"बभूव रागिणो राज्ये राज्यकार्याण्यपश्यतः। यस्य वारांगनाभोग्यं राज्यं दुर्नयदूषितम्॥ (६६१)। बंधकीबंधुभावेन प्राप्तराजगृहाश्रयाः। तं पांचालीयविद्यानामन्तरंगं व्यधुर्विटाः॥ (६६२)। योयो वेश्याकथाभिज्ञः योयो नर्मविचक्षणः।

सस तत्प्रियतां भेजे न शूरो न च पंडितः" ॥ (६६३)। इति। (पांचालीयः पंचालदेशोद्भवः बाभ्रव्यः, तेन प्रोक्ता विद्याः कामशास्त्रविषयका उपदेशाः पांचालीयविद्याः।)॥

(५) अथास्य विधिनिषेधावगतिहेतुभूतमहावाक्यस्य काव्यप्रबन्धस्य तद्भेदेषु श्रव्याख्यकाव्यभेदे निदर्शनाख्यविभागान्तःपातित्वं इति प्राचां निर्णयः, यथाऽऽह— "निश्चीयते तिरश्चामतिरश्चां वाऽपि यत्र चेष्टाभिः। कार्यमकार्यं वा तन्निदर्शनं पञ्चतन्त्रादि॥ धूर्तविट—कुट्टनीमत—मयूरमार्जारादिके लोके। कार्याकार्यनिरूपणरूपमिह निदर्शनं तदपि॥" इति। (काव्यानुशासनविवेके हेमचंद्रेणोद्धृतमिदम्।)॥ प्रकारान्तरैस्तु—अस्य वस्तुनः कविप्रतिभयैव उत्पादनात् 'उत्पाद्यवस्तु काव्यं' इदम्॥ यद्वा महाकाव्येषु प्रायः धर्मादीनां पुरुषार्थानां उपदेशः शृंगारादित्रिचतुरा रसाश्च समस्यंते, लघुकाव्येषु तु एकस्यैव कस्यचित्पुरुषार्थस्य रसस्य वाऽवलंबनम्। एतद्दृष्ट्या महाकाव्यलक्षणानुबन्धेन यद्यप्यत्र शृंगारकरुणवीराः रसाः, साक्षात् भक्त्या वा धर्मादीनां पुरुषार्थानां बोधः, तथाऽत्र काशी (आ. ३—१७) पाटलिपुत्र (आ. १७६—१९२) नगरयोर्वर्णनं, अर्बुदशैलस्य वर्णन (आ. २४०—२५३), नायकवंशप्रशंसनं (आ. १९३—२००), वसंत (आ. ६६६—६९१) वर्षा (आ. ५८६—५९८)ख्यत्वोः हृदयंगममालेखनं, दूतीप्रेषणं (आ. १८९ ६०), यूनां क्रीडा (आ. ६६६—६९१), रतोत्सवः (आ.३७५—४०३), विप्रलंभः (आ. २८८—३००,४४६—४६४), कथाविशेषश्च निबद्धाः, इति महाकाव्यगुणानां बाहुल्यं, तथापि तत्तद्वर्णनानामनतिविस्तरत्वात् सर्गच्छेदाभावाच्च, एकस्य कामपुरुषार्थस्य शृंगाररसस्य च प्राधान्येन निबंधनात् इदं लघुकाव्यमेव, यथोक्तं काव्यालंकारे—"ते लघवो विज्ञेया येष्वन्यतमो भवेच्चतुर्वर्गात्। असमग्रानेकरसा, ये च समग्रैकरसयुक्ताः॥" (१६।६) इति। तत्रापि साद्यन्तमेकवृत्तनिबद्धत्वात् खंडकाव्यमिदम्॥ यद्वा, भामहमनुसृत्य क्षेमेन्द्रेण सुवृत्ततिलके तृतीये विन्यासे प्रबंधानां शास्त्रं, काव्यं, शास्त्रकाव्यं, काव्यशास्त्रं, इति चतुर्विधत्वमुक्तम्। तद्दृष्ट्या इदं प्राधान्येन रसवत्तया काव्यं, तत्रापि शृंगाररसानुकूलार्यावृत्तैकनिबद्धत्वात् पद्यकाव्यं, तत्रापि पूर्वोक्तदिशा लघुकाव्यं निदर्शनकाव्यं वा; गौणतया तु वेश्याकर्मोपदेशकत्वात् वैशिकं शास्त्रमपि; एवं काव्यशास्त्रोभयगुणत्वात् इदं भट्टिभौमककाव्यादिवत् काव्यशास्त्रं, काव्यं च शास्त्रं चेति। यद्वा विविधक्रीडावर्णनमयत्वात् भवतु केलिकाव्यमपि ॥ पुनश्च काव्यं द्विविधं बाह्यशरीरान्तर्गुणविभाजकधर्माभ्याम्। तत्राद्यं पद्यं गद्यं गद्यपद्यात्मकं चेति त्रिविधम्। अत्रान्तिमं द्विविध

चम्प्वाख्यं नाटकं चेति । द्वितीयं च त्रिविधं, ध्वनिप्रधानं रसस्यापि व्यंग्यत्वात् रसप्रधानं वा उत्तमं, गुणीभूतव्यंग्यं मध्यमं, तद्रहितत्वे सति शब्दार्थप्रधानं अधमं च । एतद्दृष्ट्या इदं उत्तमं पद्यकाव्यम् ॥

(६) अथ आनन्दस्वरूप एव आत्मा । सर्वव्यापि अपि तेजो यथा भित्त्याद्युपाधिना व्यक्तीभवति, तथा आत्मनः आनंदस्वरूपं कविनिबद्धरसादिभावनया भावुकानां प्रकाशते, अतो रस एवात्मा काव्यस्य, रसप्रधानं च काव्यमुत्तमम् । तादृशं च मनसः एकाग्रताभ्यासापादनेन आनंदाविर्भावकतया च तत्त्वज्ञानयोग्यतां संपादयति ॥ काव्यं च रसात्मकं वाक्यम् । वाक्यं च विशिष्टौ शब्दार्थौ । वैशिष्ट्यं च धर्ममुखेन व्यापारमुखेन व्यंग्यमुखेन वा इति त्रयः पक्षाः । आद्ये अलंकारतो गुणतो वा, द्वितीये भणितिवैचित्र्येण अन्यप्रकारेण वा ॥ अपि च रसा हि काव्यस्य आत्मत्वेन व्यवस्थिताः । शब्दार्थौ च शरीररूपतया । तेन रसाधिष्ठितस्यैव काव्यस्य जीवद्रूपतया व्यपदेशः क्रियते । रसाभिव्यक्तिश्च प्रसादगुणेन सुतरां भवति । यथा च सालंकारा सुरूपाऽपि युवती विना गुणान् रसं न स्वदते, एवं शब्दार्थालंकारप्रधानमपि निर्गुणं काव्यं रसोदयाय न प्रभवति । अपि च भावनिबंधना रसाः, तत्र भावस्य विभावानां चिरकालवर्तित्वे स्थायित्वं, अल्पकालीनत्वे तु व्यभिचारित्वम् । "तददोषौ शब्दार्थौ सगुणाव०" (का.प्र. १।३) इत्यादिकाव्यलक्षणे तु रसस्योत्कर्षापकर्षहेतू गुणदोषौ भक्त्या शब्दार्थयोः उपचर्येते इति ज्ञेयम् । तत्र गुणाः ओजःप्रसादसमताश्लेषादयः शब्दार्थोभयनिष्ठाः । (तत्र ओजः–बंधस्य गाढत्वं, अर्थस्य प्रौढिश्च) तत्र बंधस्य त्रयः प्रकाराः तत्तद्रसानुगुण्येन प्रयोज्याः, प्रौढो मृदुः मध्यश्चेति । (प्रौढत्वं शब्दे समासे च ।) ॥ स च 'रतिप्रकर्षे कोमलः शब्दसंदर्भः, उत्साहे प्रौढः, क्रोधे कठोरः, शोके मृदुः, विस्मये स्फुटः, ' इत्यादिदिशा साहित्यतत्त्वविद्भिर्निर्णीतः ॥ प्रसादः शैथिल्यं अर्थवैमल्यं च ॥ समता शब्दार्थविषयक उत्कर्षः ॥ श्लेषः मसृणत्वं घटनाश्लेषश्च ॥ प्रकृतकाव्ये मधुरत्वमपि प्रबंधव्यापी गुणः, यो महाकविकृतिषु स्फुटमनुभूयते । तल्लक्षणं च–" बहुशो यच्छ्रुतमभिहितं वाक्यमनुद्वेजकं मनसस्तन्मधुरमिति । " इति ॥ अलंकाराश्च–" प्रायः स्वतोऽङ्गद्वारेण ये रसस्योपकारकाः । तेऽलंकाराः समाख्याताः कटकाद्या इवात्मनः ॥" इति साहित्यचिंतामणौ वर्णिताः अनुप्रासोपमाद्याः आरोप्या अपि अंगभूताः शोभाकराः शब्दार्थालंकाराः । अलंकारयोजनप्रयोजनं तु–" कवीनामभिधेयं प्रति त्रयः पन्थानः । एते न्यूनमुत्कर्षंति, अधिकमपकर्षंति, यथार्थं वस्तूपस्थापयन्ति । " इति काव्यानुशासनविवेके (४) । तदुक्तं–" विनोत्कर्षापकर्षाभ्यां स्वदंतेऽर्था न जातुचित् । तदर्थमेव कवयोऽलंकारं पर्युपासते ॥ " इति ॥ अपि च

सुकाव्यनिष्पत्तौ कवेः नैसर्गिकी प्रतिभा, लोकशास्त्राद्यवेक्षणात् वैदग्ध्यं च अपेक्षितं, अन्यथा एकाभावे पंगुत्वं जायेत । प्रतिभा च–“ रसानुगुणशब्दार्थचिन्तास्तिमितचेतसः । क्षणं स्वरूपस्पर्शोत्था प्रज्ञैव प्रतिभा मता ॥ ” इति, ( का. नु. विवेके समुदाहृतम् । ) यद्वा “प्रज्ञां नवनवोन्मेषशालिनीं प्रतिभां विदुः ॥ ” इत्युक्तस्वरूपा॥ एवं सुकवीनां सत्काव्येषु रसस्य कलायाः तत्त्वज्ञानस्य च संनिवेशा लक्ष्यन्ते । प्रकृतकाव्ये च शृंगारादयो रसाः, शृंगारविलासकलानां वैशिकशास्त्रस्य चोपदेशाः, तत्रतत्र च अर्थान्तरन्यासालंकारद्वारा ऐहिकपारलौकिकनीत्युपदेशाश्च स्फुटं गोचरीभवन्ति । तत्र रसादिषु प्रतिभागुणो व्यक्त एव ॥ वैदग्ध्यमूलकः अनेकशास्त्रादिपरिचयः काव्यशोभावर्धकः पाठकानां च अप्रयत्नेन व्युत्पत्त्याधायक इति क्वचित्क्वचित् निबद्धः । तत्र सकलप्रबंधेन वात्स्यायनीये, मंजर्युपाख्याने रत्नावलीनाट्यनिरूपणेन नाट्यशास्त्रे प्राधानिकः परिचयः प्रकटितः । अन्यशास्त्रेष्वस्तु सांख्ये ( आ. ३१८, इ० ) बौद्धमते ( आ. ७८१ ), व्याकरणे ( आ. ३१८, ७८२ ), साहित्ये ( आ. ६२७, ७८३, ७९१, ७९२ ), योगे ( आ. ९९६, १०११ ), आयुर्वेदे ( आ. १०२९, १०३३ ), नीतिशास्त्रे ( आ. ३१८, इ० ), पुराणे (आ. ४८६, ४८७, ८५९–८६१ इ०), धनुर्वेदे ( आ. ९५१–९५७ ), अश्वशास्त्रे (५००), वैद्यके ( आ. १०२५, १०२९, १०३३ ), चित्रशास्त्रे ( आ. ४६८–४७० ), संगीते ( आ.५७६, ९४०–९४४ ), तर्कशास्त्रे च तत्रतत्र अनुमानालंकारप्रयोगेषु दर्शितः । अन्ये च प्रबंधव्यापिगुणाः लालित्य–युक्तियुक्तत्व–विषयवैविध्यास्खलितप्रवाहत्व–शब्दार्थौचित्यादयः सुकवित्वनिर्णायकाः स्फुटा एव ॥–प्रकृतकाव्यस्य रसमीमांसायां तु संभोगविप्रलंभात्मा रसराजः शृंगारः अंगी प्रधानो रस इति व्यक्तमेव । स चात्र अन्यनायिकाविलक्षणतया सामान्यानायिकाश्रितः । “ न विना विप्रलंभेन शृंगारः पुष्टिमश्नुते ।” इति न्यायेन हारलतोपाख्याने आदौ पूर्वानुरागाख्यः अन्ते च कार्यप्रवासाख्यः विप्रलंभभेदः निबद्धः, मंजर्युपाख्याने च पूर्वानुरागाभासः । तयोः संभोगशृंगारश्च । तत्र वेश्यारागस्य प्रायः कृत्रिमत्वात् तच्छृंगारः रसाभासः, तथापि मृच्छकटिके वसंतसेनाया इव प्रकृते हारलतायाः अनुरागस्य अकृत्रिमत्वात् हारलतोपाख्याने शुद्ध एव शृंगाररसः, मालतीमंजर्याश्रयश्च सः कृत्रिमत्वात् रसाभास एव । तथा “ अतिनिरंतरमेकरसोपनिबंधोऽप्युद्वेजको भवति । यथा नाटकादावभिनेयः सान्तरोरनिबंधो रसश्चमत्कारी स्यात्तथैवंविधकाव्येषु श्रव्योऽपीति ।” ( अमरुकशतकटीकारसिकसंजीविन्यां ३६ ) इति सहृदयानुभवानुवादात् प्रकृतकाव्ये मध्येमध्ये अंगभूतरसान्तराणामपि निबन्धनम् । तथाहि–हारलतोपाख्यानान्ते ( आ. ४४९–४९० ) करुणः, ग्रामीणकरतिवर्णने ( आ.

३९७–३९९, ८६५–८७४ ) वर्षाभिसारिकावर्णने ( आ. ५९७–६०३ ) च हास्यः, मृगयावर्णने ( आ. ९५२–९५७ ) वीरः भयानकश्च । बीभत्सरौद्रौ तु परं शृंगारविरोधिनौ इति मात्रयाऽपि न संस्पृष्टौ । शान्तस्तु हारलतोपाख्यानोपसंहारे ( आ. ४९४–४९७ ) । एवं विविधवर्णनात्मकमणिगणगुंफितेऽस्मिन् काव्यहारे हारलतोपाख्यानं नायकायते ॥ केषांचित्तु रसो द्विविधः वाग्रसो वस्तुरसश्च । द्वावपि अत्र व्यक्तौ एव ॥

अत्र नैको नायकः, नैका च नायिका, अस्य निदर्शनकाव्यत्वात् । तत्रादौ भट्टपुत्रः नायकः मालती च नायिका गौणौ, तदवलंबकरसाविकसितत्वात् । मुख्यास्तु शृंगारस्य कृत्रिमाकृत्रिमत्वात् प्रथमे मंजरीसमरभटौ, द्वितीये प्रत्युदाहरणत्वेन उपस्थापितौ हारलतासुंदरसेनौ च । आद्ययोः समागमोऽपि कृत्रिमः, प्रीतिरपि तथैव, फलं च रसाभासः । अपरयोस्तु समागमः प्रकृतिजः दैवकृतः, प्रीतिरपि संप्रत्ययात्मिका ( सहजा ), फलं च शुद्धशृंगाररसः । सर्वेऽपि नायका धीरललिताः, तत्रापि सुंदरसेनः प्रेम्णः स्थैर्यात् अनुकूलोऽपि । नायिकासु हारलता वसन्तसेना इव उत्तमा वेश्या, मंजरी मालती च अधमा वेश्या, यथा दशकुमारचरिते रागमंजरी, कथासरित्सागरे च रूपणिका ॥

(७) अथ कवयश्चतुर्विधाः, ध्वनिकविः रसकविः अलंकारकविः रीतिकविश्चेति । ( तत्र संकीर्णरसोपनिबंधस्तु निकषो रसकवीनामित्यन्यत्र । ) तत्रास्य महाकवित्वात् ध्वन्यादिषु चतुर्ष्वपि अस्मिन् काव्ये सत्सु अस्य रसकवित्वं स्फुटमेव ॥ (२) अपरमते कवयः सत्कविः विदग्धः अरोचकी सतृणाभ्यवहारकः इति चतुर्विधाः; यथोक्तं साहित्यमीमांसायां–" गुणप्रधानां यो रीतिं वैदर्भीं प्रतिपद्यते । विपंचीस्वरसौभाग्यां सत्कविः प्रथमः स्मृतः ॥ यो वक्रोक्तिप्रधानः स्यात्स विदग्ध इतीर्यते । अर्थालंकारनिभूयो(बंध ?) ज्ञातयः (?) कवी रोचकी ॥ यः श्लेषचित्रयमकनिर्बंधस्तोमभूयसीम् । गौडीं च श्लाघते स स्यात् सतृणाभ्यवहारकः ॥ " (१।५–८) इति ॥ एतदनुसारेणायं सत्कविरिति स्पष्टमेव ॥ (३) केचित्तु बुद्धिशक्तिभेदेन महाकविः उत्पादककविर्वा संवर्धककविः परिवर्तककविः आच्छादककविश्चेति तेषां चतुर्विधत्वं मन्यन्ते । तत्र महाकविस्तु–" शब्दार्थोक्तिषु यः पश्येदिह किंचन नूतनम् । उल्लिखेत् किंचन प्राच्यं दृश्यतां स महाकविः ॥ " इत्युक्तः । संवर्धकस्तु परोक्तं रमणीयतया पल्लवयति । परिवर्तकस्तु छायाकविः । आच्छादकस्तु परोक्तं किंचिन्न्यूनतया प्रकटयति । एतद्दृष्ट्याऽयं कविः क्षेमेंद्रादिभिः समयमातृकादिष्वेतत्कृतेः अनुकरणात् उत्पादककविः, वैशिकशास्त्रस्य संवर्धकत्वात् संवर्धककविर्वा ॥

(८) एवं कविकर्मकाव्यपरिशीलनपरमानन्दप्रेप्सवः स्वबुद्धिज्ञानवैभवानुसारेण रसास्वादनपराः रसिका अपि उत्तममध्यमाधमभेदैः त्रिविधाः । ( रसास्वादस्तु अलौकिकचमत्कारात्मा स्मृत्यनुमानलौकिकस्वसंवेदनविलक्षणः । विभावादयश्च तदभिव्यंजकाः । ) तत्र उत्तमास्तु यावद्विवक्षितरसादिग्राहिणो भवंति, सद्यश्च परमानंदमनुभवंति । मध्यमास्तु असमग्ररसादिग्राहिणः संतो विलंबेन रसानंदमनुभवंति ) अधमास्तु ईषत्स्वादितरसाः चिरतरकालेन आनंदलेशमुपभुंजन्ति, 'न हि रत्यादिनवचित्तवृत्तिशून्यः कोऽपि प्राणी भवति' । इति ॥

( ९ ) एवं काव्यभेदादि विचारयितुं ये प्रभवन्ति ते सहृदया अपि त्रिविधाः । गुणदोषविवेचका हंसा इव उत्तमाः, गुणैकदृष्टयः चकोरा इव मध्यमाः, दोषैकदृष्टयः काका इव अधमाश्चेति ॥

( १० ) अथेदं समग्रमपि काव्यं शृंगाररसानुकूलेनैकेनैवार्यावृत्तेन गीत्याद्युपभेदेन निबद्धम् । आर्या च प्राकृते गाथा इति व्यवह्रियते, आर्यागीतिश्च स्कंधक इति । इयं मात्राच्छन्दः । पिंगलाचार्येण आर्याया ८० भेदाः उक्ताः, अर्वाचीनास्तु कतिपयभेदैः संतुष्टाः । आर्यालक्षणमधिकृत्य रागविबोधविवेके ( ११५ )–" अत्रार्याच्छंदसि पूर्वार्धे चतुर्मात्राः सप्त गणाः अंते गुरुरेकः । विषमस्थाने जगणो न । षष्ठे जगणो लघुचतुष्टयं वा भवति । एवमेवोत्तरार्धे, परन्तु षष्ठे लघुरेक एव । एवं सप्तपंचाशन्मात्रात्मिका आर्या ॥ अस्यां पूर्वार्धे षष्ठे लघुचतुष्टये सति द्वितीयलघ्वादिकं पदं भवति, तत्रैवार्धे सप्तमे तु लघुचतुष्टये प्रथमलघुतः पदं भवति । उत्तरार्धे तु पंचमे लघुचतुष्टये प्रथमलघुत एव पदम् ॥ एवं सति दलद्वयेऽपि आद्यासु द्वादशमात्रास्वेव पदपूर्तौ पथ्या भवति । विपुला तु पूर्वार्धे तु अपरार्धे वा दलद्वये वा आद्याद्वादशमात्रोल्लंघनेन पदविच्छेदे भवति ॥ तथा च "स्वरा अर्धं चार्यार्धम् ।" ( पिं. सू.४।१४) इत्यारभ्य " विपुलाऽन्या ।" इत्येतदन्तानि दश पिंगलसूत्राणि ॥" इति ॥ आर्यागानप्रकारस्तु संगीतरत्नाकरे चतुर्थाध्याये (श्लो. २२४) द्रष्टव्यः । अधुना तु सा प्रायः देशरागादिरागैर्गीयते । हरिदासैस्तु आर्यागाने प्रथमचरणं द्विः, चतुर्थं च द्वित्रिवारं गीयते, तदन्ते च ' राम ( ३ ) राम ( ३ ) हरे हरे राम ( ३ )' इति पल्लवश्च निवेश्यते । इति सर्वं श्रीसंपन्नम् ॥

स्वीयेव सेवनरता, परकीयेव स्नेहमयी साक्षात् ।
वेश्येव विलासवती, भार्या सा गुणवती जयति ॥ १ ॥

रत्नगोपालभट्टेनात्राल्पं टिप्पणकं कृतम् ।
असंतुष्टेन तद्दृष्ट्वा मया पल्लवितं बहु ॥ २ ॥

यो लोके सततं परोपकृतिमान्वेदान्तविद्यानिधिः
य: कार्यक्षमराज्यतन्त्रनिपुणः संमानितो भूमिपैः ।
यो ग्रन्थैः सरसैश्च गुर्जरगिरं चक्रे विभूषास्पदं
यश्चासीद्दृढभक्तिमान् सुखकरे रामे तथा शङ्करे ॥ ३ ॥
यस्य चाच्छतमा कीर्तिः प्रससार दिगन्तरम् ।
स मनःसुखरामाख्य आसीद्विप्रः सुधीप्रियः ॥ ४ ॥
तस्यात्मजस्तनुसुखो विदुषां विधेयो
लब्ध्वा पितुस्तनुमनोधनसंपदश्च ।
श्रीकुट्टनीमतकृते रसदीपिकाख्यां
टीकामिमां रसिकचित्तमुदे ततान ॥ ५ ॥
' संन्तो नयन्ति गुणतां खलु दोषजातं'
क्षारं जलं मधुरतामपि वारिवाहाः ।
स्पर्शो मणिः कनकतां च तथाऽश्मसार-
मेवं कृतिं तनुमिमां रसयन्तु तज्ज्ञाः ॥ ६ ॥
रसाब्धिनिधिचंद्राब्दे ( सं. १९७६) विक्रमार्कस्य भूपतेः ।
पूर्णेयं प्रथमा टीका कुट्टनीमतदीपिका ॥ ७ ॥
वृत्तिं माधुकरीं श्रित्वा, रसिकानां सुखेन वै ।
बोधायेमां प्रवृत्तिं मे शोधयन्तु दयालवः ॥ ८ ॥

इति श्रीगुर्जरदेशीयनटपद्रनिवासिना वृद्धनगरीयेण श्रीसौराष्ट्रकच्छादिभूपति-
मतिसचिवश्रीमनःसुखरामशर्मण आत्मजेन त्रिपाठिकुलोत्पन्नेन
तनुसुखरामशर्मणा विरचिता कुट्टनीमतटीका
रसदीपिका समाप्ता ॥

॥ धीश्रीवृद्धिरस्तु ॥

# शोधपत्रम्

## ( मूले— )

| पृष्ठम् | आर्याङ्कः | शुद्धपाठः |
|---|---|---|
| ८ | २२ पू. | ॰मधिरूढा |
| ९ | ३० पू. | ॰प्रसक्तदशम् |
| १० | ३५ उ. | संपद्युपेतः |
| १० | ४१ उ. | प्रसारकेणापि ( ? प्रसारणेनापि ) |
| १३ | ५७ पू. | ह्रेपयति |
| १९ | ८१ पू. | रामणिक्य ( ? रमणीय ) |
| १९ | ८२ उ. | शिङ्गटके का |
| ९५ | ३८३ पू. | अविधेयम० |
| १४५ | ५०४ उ. | रागादयोऽपि तासां |
| १७७ | ५८५ पू. | सुन्दरि |
| २१८ | ६५९ उ. | पूत्कृतमिदमुन्झुजया |
| २४१ | ७०१ उ. | विन्दन्ति तत्र |
| ३९४ | ९७४ पू. | समुच्छ्रायं |
| ४१४ | १००५पू. | दाहदग्धोऽपि । |

---

## ( टीकायाम्— )

आर्या ७–पृष्ठं ३–टीकापंक्ति १२–बिभर्ति ।–इत्यन्तरम्—स्थलकमलानि अन्तः श्वेतानि बहिः रक्तवर्णानि भवन्ति, कानिचिच्च अन्तः रक्तानि बहिः पीतवर्णानि। तानि च उत्तरदेशे भाषायां 'थल' इति, पारसीकभाषायां च 'लालबेगाना' इति प्रसिद्धानि लवपुर( 'लाहोर' )प्रदेशे बहूनि भवन्ति ॥

आ. ९–पृ. ४–टी. पं. ६–मत्तवारणाः । इत्यनन्तरम्—मत्तवारणी इत्यपि शब्दः । "बालापं मत्तवारणम् । सैव मत्तवारणी इति केचित् । 'गजदन्तैः कृता शाला विज्ञेया मत्तवारणी ।' इत्यन्ये । वातायनानामग्रे उपवेशनार्थं दारुभिः पाषाणैर्वा निर्मितं स्थलमित्यपरे ।" इति विद्धशालभंजिकाटीकायां ( २ ) नारायणः ॥

आ. ८२–पृ. १९–टी. पं. १९ ॰कल्पना ॥ इत्यनन्तरम्—[ अत्र 'शिङ्गटके' इति पाठः शुद्धो भवेत् । 'विटखटके' इति पाठस्तु कैश्चित्पंडितंमन्यैरर्थोपलब्ध्यै कल्पितो भाति । तथाहि शिङ्गटकस्तु गेयकाव्येषु एकतमः मसृणोद्धतप्रयोग उद्धतत्वप्रधानः, शिंग इति शिंगक इति शिंगट इति शिङ्गटक इति च व्यवहृतः । ( अस्मादेव शब्दात् महाराष्ट्रभाषायां 'शिंगा' इति होलिकोत्सवस्य नाम जातम् ।) तल्लक्षणं तु–" सख्याः समक्षं पत्युर्यदुद्धतं वृत्तमुच्यते । मसृणं च क्वचिद्धूर्तचरितं शिंगट ('क' )स्तु सः ।" इति हैमे काव्यानुशासनेऽन्यत उदाहृतम् ॥ तथा च दृश्यं काव्यं द्विविधं पाठ्यं गेयं च । तत्र गेये व्युत्पत्त्यभिसंधानं नास्ति, पाठ्ये तु तदेव प्रधानमिति भेदः । तत्र पाठ्यं नाटकादिभेदेन बहुविधं, गेयमपि रूपकं पदार्थाभि-

नयस्वभावं डोम्बिकादिभेदेन अनेकविधम् । तत्रैको भेदः शिंगटकः, यत्र प्रयोगे मसृणेऽपि बहुत्वेन उद्धतं प्रविशति । स च गीयमानरूपकाभिनयप्रधानः ॥ ]

आ. १०२–पृ. २४–टी. पं. ५–शशधर···मणिः । इत्यस्य स्थाने–शशधरकान्तं चन्द्रवत् शीतदायित्वेन दाहशामकत्वेन वा रमणीयं अभिलषणीयं इत्यर्थः । शशधरकान्तो इति पाठो भवेत्तदा चन्द्रमणिरित्यर्थः ।

आ. १४९–पृ. ३३–टी. पं. १६ इति ॥ इत्यनंतरम्–यद्वा कश्मीरेषु भाषायां 'डुपू' इति ख्यातं धूपनिर्मितौ उपयुक्तं प्रधानद्रव्यं, तेन निर्मिता वर्तिःधूपव.तः ॥ १४९ आर्यामारभ्य १६२ आर्यापर्यन्तं प्रघट्टकमवलंब्य बौद्धपण्डितेन पद्मश्रिया स्वकीये नागरसर्वस्वाख्ये कामशास्त्रे वामाचरितप्रकाशो नाम सप्तत्रिंश. परिच्छेदो ग्रथितः, यथोक्तं तत्र तेन–" तत्कुट्टनीमतमुदीक्ष्य वरांगनानां कान्ते विधेयमबलाचरितं प्रदिष्टम् ।" ( ३७ । १६ ) इति ॥

आ. १८०–पृ. ४१–टी. पं. ११ विशेषः, इत्यन्तरम्–[ भूमेरधस्तात् सप्त भूविवराः अतलादयः, तत्र आद्यं अतलं नाम इदं, तथा च श्रीमद्भागवते–" अथातले मयपुत्रोऽसुरो बलो निवसति । ···यस्य च मुखतस्त्रयः स्त्रीगणा उदपद्यन्त स्वैरिण्यः कामिन्यः पुंश्चल्य इति । या वै बिलायनं प्रविष्टं पुरुषं रसेन हाटकाख्येन साधयित्वा स्वविलासावलोकनानुरागस्मितसंलापोपगूहनादिभिः स्वैरं किल रमयन्ति ॥" ( ५ । २४ । १६ ) इति ॥

" पृ. ४२–टी. पं. १ उन्नेयः । इत्यनन्तरम्–तथैव दशकुमारचरिते द्वितीयोच्छ्वासारंभे–" देव, त्वयि तदाऽवतीर्णे द्विजोपकारायासुरविवरं " इत्यत्र ॥

आ. २६१–पृ. ५९–टी. पं. ११–२६० ॥ इत्यनन्तरम्–आलोकयामास सहसा दृष्टवान्, " सहसा दर्शनं यत्तु तदालोकितमुच्यते । " इति भरतवचनात् ॥

आ. ३०७–पृ. ७१–टी. पं. १९ शमनार्थं, इत्यनन्तरम्–यद्वा, मांसरसः मांसेन निर्मितः सूपः, तस्य ग्रहणं च मैथुनान्ते हितमिति, यथोक्तं–" स्नानं सशर्करं क्षीरं भैक्ष्यमैक्षवसंस्कृतम् । वातो मांसरसः स्वप्नो व्यवायान्ते हिता अमी ॥" इति । ( ऐक्षवं भैक्ष्यं मिष्टमित्यर्थः, 'मिठाइ' इति भाषायां प्रसिद्धम् । व्यवायः सुरतम् । )

आ. ३२०–पृ. ७६–टी. पं. २५ शिवरामः ॥ इत्यनन्तरम्–तथा च वासवदत्तागद्यच्छायाभूतं शब्दार्णवस्य कवीन्द्रवचनसमुच्चये समुद्धृतं प्राचीनं पद्यम्– " असावहं लोहमयी, स यस्याः क्रूरः सखि प्रस्तर [ एव ] कान्तः । आकर्षकद्रावकचुम्बकेषु नैकोऽप्यसौ, भ्रामक इत्यवेहि ॥ " इति ॥

" पृ. ७७ टी.पं. ६ भावार्थः । इत्यनन्तरम्—एवमेव अतिदेशन्यायेन कवीनामपि भ्रामकादिभेदाः सन्ति। तथा च काव्यमीमांसायां (अधि० १ अ०१२)– " अमीषां चार्थानामन्वर्था अयस्कान्तवच्चत्वारः कवयः, पञ्चमश्चादृष्टचरार्थदर्शी। तदाहुः–'भ्रामकश्चुंबकः किञ्च कर्षको द्रावकश्च सः। स कविर्लौकिकोऽन्यस्तु चिंतामणिरलौकिकः ॥तन्वानोऽनन्यदृष्टत्वं पुराणस्यापि वस्तुनः। योऽप्रसिद्ध्यादिभिर्भ्राम्यत्यसौ स्याद्भ्रामकः कविः ॥ यश्चुंबति परस्यार्थं वाक्येन स्वेन हारिणा। स्तोकार्पितनवच्छायं चुंबकः स कविर्मतः ॥ परवाक्यार्थमाकृष्य यः स्ववाचि निवेशयेत्। समुल्लेखेन केनापि स स्मृतः कर्षकः कविः ॥ अप्रत्यभिज्ञेयतया स्ववाक्ये नवतां नयेत् । यो द्रावयित्वा मूलार्थं द्रावकः स भवेत्कविः॥" इति ॥

आ. ३२८ पृ. ७९ टी.पं. २७ इति। इत्यनन्तरम्—" तरुणी" इत्याद्यायां (आ.३२६) अत्र च स्वयंग्रहा नायिका। उक्तं च–"सुखं कामिकुलं द्रव्यात्, सुखो वासः सहाम्बया। सुखा युवतिरिच्छन्ती, सुखा वै भगवन् ('मघवन्') गृहाः॥" इति । (गृहाः दाराः।) तथा–" स्वेच्छाप्रवृत्तप्रणयोपनम्राः प्रौढांगना भाग्यवतां भवन्ति ॥" (बोधि० कल्प० ५९।५०) इति ॥

आ. ३३९ पृ. ८२ टी.पं. ५ मात्रागाथाः इत्यनन्तरम्–"गाथाः···इत्यर्थः" इत्यस्य स्थाने–कतिचिन्मात्राच्छंदांसि विशेषसंज्ञाभावात् शास्त्रकारैः छंदोग्रंथेषु नोक्तानि, पुनस्तानि लोके दृश्यन्ते, तानि सर्वाणि गाथाशब्देन व्यवह्रियन्ते। तथा च पिंगलः–"अत्रानुक्तं गाथा।" (८।१) इति। तानि मात्रागाथाः, यथा जयदेवस्य (गीतगोविन्दकाव्ये) सर्वाण्येव गीतानि मात्राबद्धतया गाथाः मात्रागाथाः वा; यथा गीतगोविन्दे प्रथमसर्गे–"प्रलयपयोधिजले धृतवानसि वेदम्।" इति प्रबंधे "आद्यार्धे विंशतिर्मात्राः, दशमेऽन्ते च यतिः, अन्त्यार्धे षोडश मात्राश्च ॥" एतद्विस्तरः श्रीचंद्रमोहनघोषेण संकलिते छन्दःसारसंग्रहे षष्ठोऽध्याये द्रष्टव्यः॥

" " अन्ते–उक्तं चान्यत्र–"गाथाः पठेश्च मधुरं मदनाग्रदूतीः।" इति मंखकोशटीकायां समुदाहृतम्।

" " टी. पं. १५ भाषायाम्। इत्यनन्तरम्–तथा च समयमातृकायां (१।४४)–"प्रविष्टाः कुट्टनीहीनं गृहं क्षीणकटा विटाः। गाथाः पठंति गायन्ति द्रविणव्ययमर्थिताः ॥" इति ॥ (कटः श्रोणिः।)

आ. ३७८ पृ. ९४ टी. पं. १ उक्तम्। इत्यनन्तरम्–यद्वा विगलत् अधरामृतेन आर्द्रं, लोलं उपर्युपरि कृतं च, " धारावाहिकसंचारो यस्य तल्लोलमुच्यते।" इत्युक्तत्वात्।

आ. ३८७ पृ. ९७ टी. पं. २० सूचितम् । इत्यनन्तरम्–अनया क्षीरनीराख्यमालिंगनमपि कटाक्षितं, तल्लक्षणं च–" अंकेऽथ तल्पे पतिसंमुखस्था कान्ता समालिंगति यत्र गाढम् । मिथः प्रवेशं कुरुतो निजांगैः स्यात् क्षीरनीरं परिरंभणं तत् ॥" इति अनंगरंगे ( ९।९ ) ॥

आ. ४७३ पृ. १२३ टी. पं. १ स्वतंत्र इत्यनन्तरम्–प्रिय, जीवितस्य आधारभूत वा, " आधारप्रिययोर्नाथः । " इति रभसः ।

आ. ४७७ पृ. १२७ टी. पं. १७ क्रियते ॥ इत्यनन्तरम्–यद्वा इदानीं " अशरणा गुणाः किं कुर्युरिति प्रलापः । समुदितानां तिष्ठतु, एकैकस्यापि गुणस्येदृश आश्रयो न लभ्यते " इति ( नागानन्दविमर्शिन्युक्तदिशा ) भावः ।

आ. ४७९ पृ. १३१ टी. पं. २२ अस्वामिकं इत्यनन्तरम्–अनाधारं वा ।

आ. ४८२ पृ. १३३ टी. पं. २ बहुवचनं, इत्यनन्तरम्–यद्वा वयमिति निर्वेदात् बहुवचनं, यथा "वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती ॥" (शाकुं० १।१९ ) इत्यत्र ।

आ. ४८९ पृ. १३७ टी. पं. १७ भविष्यत् । इत्यनन्तरम्–मामा इत्यनौचित्यात् वीप्सया अत्यन्तनिषेधः ।

आ. ५६३ पृ. १६८ टी. पं. १–४ " आलयः स्वगः·····मुक्त्वा ' इत्यस्य स्थाने—आलयः मन्दिरं, त्रिदशालयः देवतामन्दिरं, तत्र जीविकां देवदासीत्वेन देवतायाः पुरः गीतनृत्यादिकर्मणा प्राप्तां वृत्तिं जीवनसाधनभूतां, क्रमोपगतां कुलपरंपरया प्राप्तां, मुक्त्वा

आ. ५७८ पृ. १७३ टी. पं. १५ शेषः; इत्यनन्तरं—यद्वा सुरताय उद्योगः चुंबनालिंगनादिरूपः उपक्रमः, तस्य अभावः अकरणं वा सुरतानुद्योगविधिः, तस्मिन् सति, कामदेवस्य, दोहददानं दोहदमत्र दिव्यदोहदं, तस्य दानं, " यद्दीयते तु देवेभ्यो मनोराज्यस्य सिद्धये । उपयाचितकं तत्तु ( 'दिव्य' ) दोहदं संप्रचक्षते ॥" (२१) इति हारावल्यामुक्तेः, कामदेवाय उपयाचितकं दत्तं न भवतीत्यर्थः ॥

आ. ५८७ पृ. १७८ टी. पं. १२ सूचितं, इत्यनन्तरम्—यद्वा प्रग्रीवकं वातायनं, तत्समीपे स्थितं शयनं शय्या प्रग्रीवकशयनं, तथा च विद्धशालभंजिकायां ( ३ ) " सन्निहितः अन्तःपुरद्वारप्रग्रीवे···" इति, तथा " एतत्प्रग्रीवं, तदुपविशतु प्रियवयस्यः । " इति प्रग्रीवशब्दप्रयोगौ, तत्र टीकायां–" प्रग्रीवं वातायनं इति क्षीरस्वामी ( ३।५।३५ ), उपान्तप्रदेश इत्यपि केचित् । " इति नारायणः । " प्रग्रीवं मुखशालेति चाणक्यटीकाकृत्, मत्तवारणाख्यं दारु इत्यरुणदत्तः, गृहादौ वीथ्याद्याकर्षणं प्रग्रीवमिति अन्यः । " इति अमर–टीकासर्वस्वे ॥

आ. ६०६ पृ. १८७ टी. पं. १ अन्ते—काश्मीरप्रसिद्धाः । इमाः मुद्राः प्रथमं राज्ञा द्वितीयप्रवरसेनेन ( ई. सं. ५८० ) तदनन्तरं च कैश्चित् कार्कोटवंशोद्भवैः राजभिः 'किदार' इति शब्दाङ्किता आहताः । किदार इति तु अनार्याणां कुशनवंश्यानां राज्ञां लघुशाखाभेदः, ये (ई. सं. ४२५-४७५) गान्धारदेशं प्रशशासुः, ये च ईस्वीयपंचमशतकात् पश्चिमोत्तरदेशेषु विजितराज्या बभूवुः । तैश्च स्वाभिज्ञापककिदारशब्दः स्वैः आहतासु मुद्रासु प्रथमं उट्टंकितः, स च प्रवरसेनादिभिः कैश्चित् काश्मीरराजैः स्वमुद्रासु तथैव प्रतिकृतितां नीतः इति पुराविदां मतम् । तासु एकतः ऊर्ध्वस्थितो राजा आसीना देवी किदार इति च वंशकृतो नाम, पृष्ठभागे च तत्तद्राज्ञो नाम । एतासां शिल्पं तु अस्वच्छं वर्तते ॥

आ. ६४१ पृ. २०६ टी. पं. ८ त्यज्यत ॥" इत्यनन्तरम्—"पुंसि क्षीणधने न बांधवजनः पूर्वं यथा वर्तते, स्थित्या केवलया स्थितः परिजनः स्वच्छन्दतां गच्छति । लोलत्वं सुहृदश्च यान्ति बहुशः, किं वा परैर्भाषणैः, भार्याया अपि भूतले स्फुटमहो नैवादरस्तादृशः ॥" इति,

आ. ७२३ पृ. २४९ टी. पं. १९ न प्रणयिवशा इत्यनन्तरम्—नञर्थस्य नशब्दस्य "सुप्सुपा" इति समासः,

आ. ७४३ पृ. २५८ टी. पं. १७-१८ इति कस्याश्चित्'' 'यद्वा इत्यस्य स्थाने—राजतरंगिण्यां (४।८०) विशोकावितस्ताख्यनद्योः संगमे स्थितस्य गंभीरस्वामिनाम्नः विष्णुदेवालयस्य कीर्तनं वर्तते । तथा च पूर्वं विष्णुमंदिराणां नामानि स्वामिशब्दान्तानि, शिवमन्दिराणां च ईश्वरशब्दान्तानि प्रथितानि । तेन

आ. ८२४ पृ. ३०४ टी. पं. १९ शेषः । इत्यनन्तरं–तथा च यशस्तिलकचंप्वां पञ्चमे आश्वासे—"द्वादशवर्षा योषा षोडशवर्षोचितस्थितिः पुरुषः । प्रीतिः परा परस्परमनयोः स्वर्गः स्मृतः सद्भिः ॥" इति, तथा एतद्विवरणस्वरूपं तत्रैव पद्ये—"द्वादशवर्षा स्त्री, षोडशवर्षः पुरुषः, तयोरन्योन्यमनन्यसामान्यस्नेहरसोत्सेकप्रादुर्भूतिः प्रीतिः प्रत्यक्षमधिसर्गः स्वर्गो, न पुनरदृष्टः कोऽपीष्टः स्वर्गः समस्ति ।" इति ॥८२४॥

आ. ९३६ पृ. ३७२ टी. पं. १४ टीकायाम् । इत्यनन्तरम्—द्रंगास्तु काश्मीरेषु विविधमार्गेषु करोद्ग्रहणार्थं स्थापितानि स्थानानि, शुल्कस्थानानीत्यर्थः । द्रंगशब्दस्य कश्मीरभाषायां विलंब इत्यर्थः, करग्रहणस्थाने च विलंबस्य भावित्वात् एतत्स्थानानां द्रंग इति संज्ञा जाता इति केषांचिन्मतम् । तन्मंडले इमे गुल्मापरनामरक्षास्थानत्वेनापि उपयुक्ताः । द्रंगाधिकारी च द्रंगिक इति द्रांगिक इति द्रांगी इति च वलभीयदानपत्रेष. द्रंगेशः मार्गेशो वा इति च राजतरंगिण्यां व्यवहृतः ॥

# परिशिष्टानि ।

## ( क )—मुद्रणाधारभूतादर्शपुस्तकानां विवेचनम् ।

( अस्मिन् संस्करणे १०५९ आर्याः, तत्र च ९५१–१०५९ आर्याः मध्ये अन्याश्च २३ संख्यकाः, एवं संहत्य १३२ आर्याः प्रथममेव प्रकाशं प्राप्ताः ॥ )

(१) गो. संज्ञं—यत् श्रीवाराणसी( काशी )निवासिभिः नानाविधप्राचीन-दुर्लभसंस्कृतपुस्तकसंग्राहकैः परोपकारमतिभिः श्रीयुत बाबु गोविन्ददासेति ख्यातैः प्रेषितं स्वीयं सुंदराक्षरैः लेखापितं शुद्धं पुस्तकम् । इदमेव एकं संपूर्ण पुस्तकं प्राप्तम् । इदं च श्रीमहामहोपाध्यायहरप्रसादशास्त्रिणा नेपालदेशात्समानीतस्य कागजोपरि नेवारीलिप्यां लिखितस्य इदानीं वंगीयएश्याटिकसोसायटिसभाभवने वर्तमानस्य पुस्तकस्य प्रतिरूपकं १४४ पृष्ठात्मकम् ॥

अस्मिन्पुस्तके १०५७ आर्याः, प्रकृतसंस्करणे तु १०५९ आर्याः । अत्र आर्याद्वयाधिक्यं तु गो. पुस्तके ४५३ आर्याया उत्तरार्धमारभ्य ४५५ आर्यापूर्वार्धं यावत् पंक्तिचतुष्टयात्मकस्य आर्याद्वयसंमितस्य प्रकरणापेक्षितस्य प. स्तं. पुस्तकयोर्विद्यमानस्य पाठस्य भ्रष्टत्वात् ॥

गो २–इति तु पूर्वस्मिन्नेव पुस्तके पुस्तकान्तरसंवादेन तत्रतत्र पंक्तीनामुपरि लिखितानां पाठभेदानां संज्ञा कृता । एषु पाठेषु केचन का-पुस्तकसमानाः, केचन च प. पुस्तकपाठसमानाः ॥

प. संज्ञं–गुर्जरदेशे अणहिल्लपाटके पत्तने–संघवीपाडा(पुस्तक)भाण्डारे वर्तमानस्य प्राचीनतमस्य तालपत्रेषु लिखितस्य ग्रन्थस्य प्रतिरूपकम् । इदं सद्व्रतेन अस्मन्मित्रवर्येण चिमनलाल डा. दलालइत्यभिधानेन कृपया दत्तम् । अत्र १०३९ आर्यामारभ्य अन्तं यावत् अनेकासु पंक्तिव्यत्ययः शब्दानां भ्रंशः त्रुटिश्च । अस्य अंत्यानि पंचपत्राणि त्रुटितानि, उपान्त्यं पत्रं च सपुष्पिकान्तिमार्याचतुष्टयपाठात्मकं लुप्तमित्यनुमीयते । एतस्मात्पुस्तकाद्बहुषु स्थलेषु समीचीनतराः पाठाः अवगताः ॥

स्तं.संज्ञं–गुर्जरदेशे स्तंभतीर्थवेलाकुले श्रीशान्तिनाथमंदिर(पुस्तक)भाण्डारे विद्यमानस्य, द्वादशे त्रयोदशे वा शतके लिखितस्य तद्भांडारस्वामिना श्रेष्ठी दीपचंद्र नगीनदास इत्यनेन कृपया दत्तस्य तालपत्रपुस्तकस्य अस्मन्मित्रेण शास्त्री भद्रशंकर जयशंकरइत्यनेन मदर्थं निर्वर्तितं प्रतिरूपकम् । अस्य ९३ पत्रात्मकस्य तालपत्रपुस्तकस्य १०४५ आर्याया ऊर्ध्वं पत्राणि नष्टानि, मध्ये च १५-१९, ४७, ५७, ५८ इत्यंकितानि अपि पत्राणि भ्रष्टानि । मंजर्युपाख्याने एकांकमारभ्य आर्यांकविन्यासः । अत्र ५०,३९९ च आर्ये भ्रष्टे । अस्य पाठाः प्रायः प.पुस्तकसमानाः, यत्र तु भिन्नाः ते

